# रामायणम् ।

## युद्धकाण्डम् ।

महर्षिवाल्मीकिप्रणीतम् ।

रामानुज-कृत-टीका-समेतम् ।

श्रीयुक्तद्वारकानाथभञ्जमहानुभावस्याभ्यनुज्ञया

श्रीहेमचन्द्रभट्टाचार्य्येण

संशोधितं, भाषान्तरितं, प्रकाशितञ्च ।

कलिकाताराजधान्यां

वाल्मीकियन्त्रे

श्रीकालीकिङ्कर चक्रवर्त्तिना

मुद्रितम् ।

शकाब्दाः १८०७ ।

# द्वितीयः सर्गः

तं तु शोकपरिद्यूनं रामं दशरथात्मजम्।
उवाच वचनं श्रीमान् सुग्रीवः शोकनाशनम्॥ १॥
किं त्वया तप्यते वीर! यथान्यः प्राकृतस्तथा।
मैवं भूस्त्यज सन्तापं कृतघ्न इव सौहृदम्॥ २॥
सन्तापस्य च ते स्थानं नहि पश्यामि राघव!।
प्रवृत्तावुपलब्धायां ज्ञाते च निलये रिपोः॥ ३॥
मतिमान् शास्त्रवित्प्राज्ञः पण्डितश्चासि राघव!।
त्यजेमां प्राकृतां बुद्धिं कृतात्मेवार्थदूषिणीम्॥ ४॥

शोकपरिद्यूनं शोकसन्तप्तम्॥ १॥

प्राकृतो यथा तप्यति तथा त्वया किं तप्यते इत्यन्वयः। एवं सन्तप्तः। कृतघ्नो यथा सौहृदं त्यजति तथा त्वं सन्तापं त्यज॥ २॥

स्थानं निमित्तम्। प्रवृत्तौ जीवने॥ ३॥

शास्त्रवित् नीत्यादिशास्त्रज्ञः। मतिमान् भाव्यर्थज्ञानयोग्यबुद्धिः। प्राज्ञो विचारकुशलः। पण्डितो विचारपूर्वं सिद्धान्तप्रतिष्ठापनसमर्थः। स त्वमिमां प्राकृतां मत्यादिरहितप्राकृतजनोचितां बुद्धिं दीनबुद्धिं त्यज। कृतात्मा योगी यथा अर्थस्य श्रेष्ठस्य योगस्य दूषिणीं दूषिकां कामादिविषयां बुद्धिं त्यजति तद्वत्त्वं त्यजेत्यर्थः॥ ४॥

समुद्रं लङ्घयित्वा तु महानक्रसमाकुलम्।
लङ्कामारोहयिष्यामो हनिष्यामश्च ते रिपुम्॥ ५॥
निरुत्साहस्य दीनस्य शोकपर्य्याकुलात्मनः।
सर्व्वार्था व्यवसीदन्ति व्यसनञ्चाधिगच्छति॥ ६॥
इमे शूराः समर्थाश्च सर्व्वतो हरियूथपाः।
त्वत्प्रियार्थं कृतोत्साहाः प्रवेष्टुमपि पावकम्॥ ७॥
एषां हर्षेण जानामि तर्कश्चापि दृढ़ो मम॥ ८॥
विक्रमेण समानेष्ये सीतां हत्वा यथा रिपुम्।
रावणं पापकर्म्माणं तथा त्वं कर्त्तुमर्हसि॥ ९॥

समुद्रलङ्घनेऽपि चिन्ता न कार्य्येत्याह,—समुद्रमिति। वक्ष्यमाणोपायेनेति शेषः। आरोहयिष्यामः आरोक्ष्यामः॥ ५॥

निरुत्साहत्वादिगुणको व्यसनदुःखपरम्पराम् अधिगच्छति प्राप्नोति॥६॥

ननु किं बलादस्माकमुत्साहः स्यात्तदाह,—इमे इति। सर्वतः समर्था इत्यन्वयः॥ ७॥

मत्प्रियार्थमिमे कृतोत्साहा इति कथं ज्ञातं तत्राह,—एषामिति। हर्षेण समुद्रतरणप्रसङ्गे जायमानेन तत्कार्य्यमुखविकासादिनानुमितेनेत्यर्थः। ममापि दृढ़स्तर्कः। समुद्रतरणरावणहननादिविषयो दृढ़निश्चय इत्यर्थः। तत्सर्वं ममैवत्करमिति भावः॥ ८॥

यदेवमतः यथा रिपुं हत्वा सीतां विक्रमेण समानेष्ये तथा तदुचितमुत्साहं त्वं कर्त्तुमर्हसीत्यर्थः॥ ९॥

सेतुरत्र यथा बध्येद्यथा पश्येम तां पुरीम्।
तस्य राक्षसराजस्य तथा त्वं कुरु राघव!॥ १०॥
दृष्ट्वा तां हि पुरीं लङ्कां त्रिकूटशिखरस्थिताम्।
हतश्च रावणं युद्धे दर्शनादवधारय॥ ११॥
अबध्वा सागरे सेतुं घोरे च वरुणालये।
लङ्का न मर्दितुं शक्या सेन्द्रैरपि सुरासुरैः॥ १२॥
सेतुबन्धः समुद्रे च यावल्लङ्कासमीपतः।
सर्वं तीर्णञ्च मे सैन्यं जितमित्युपधारय।
तथाहि समरे वीरा हरयः कामरूपिणः॥ १३॥

किं मया कार्य्यं तत्राह,—सेतुरिति। अत्र समुद्रे। यथा तस्य राक्षसराजस्य तां पुरीं पश्येम तथा त्वं कुरु। दिव्यास्त्रालम्बनेनेति शेषः॥ १०॥

त्रिकूटशिखरस्थां तां लङ्कां दृष्ट्वा। दर्शनात्तद्दर्शनसमनन्तरमेव युद्धे रावणं हतं जानीहि॥ ११॥

सेतुबन्धं विना प्रकारान्तरं लङ्काप्राप्तौ नास्ति सोऽपि कृत एवेति निश्चिन्वन्नाह,—अबध्वेति॥ १२॥

लङ्कासमीपतः तत्समीपं यावत्सेतुबन्धः कृत एव सर्वं सैन्यं तीर्णमेवातोऽभिजितमेवेत्युपधारय निश्चिनु। तथा निश्चये हेतुमाह,—तथाहीति। हि यतस्तादृशप्रोद्यंवन्तो हरय इमे दृश्यन्ते। यतस्ते कामरूपिणः॥ १३॥

तदलं विक्लवां बुद्धिं राजन् ! सर्वार्थनाशनीम् ।
पुरुषस्य हि लोकेऽस्मिन् शोकः शौर्य्यापकर्षणः ॥ १४ ॥
यत्तु कार्य्यं मनुष्येण शौटीर्य्यमवलम्ब्यताम् ।
तदलङ्करणायैव कर्त्तुर्भवति सत्वरम् ॥ १५ ॥
अस्मिन् काले महाप्राज्ञ ! सत्वमातिष्ठ तेजसा ।
शूराणां हि मनुष्याणां त्वद्विधानां महात्मनाम् ।
विनष्टे वा प्रनष्टे वा शोकः सर्वार्थनाशनः ॥ १६ ॥
तत्त्वं बुद्धिमतां श्रेष्ठः सर्वशास्त्रार्थकोविदः ।
मद्विधैः सचिवैः सार्द्धमरिं जेतुं समर्हसि ॥ १७ ॥
न हि पश्याम्यहं कञ्चित्त्रिषु लोकेषु राघव ! ।
गृहीतधनुषो यस्ते तिष्ठेदभिमुखो रणे ॥ १८ ॥

तस्माद्विक्लवां सर्वार्थनाशनीं बुद्धिमवलम्ब्राजन् । हि यतः शौर्य्यापकर्षणस्तस्माच्छोकः ॥ १४ ॥

मनुष्येण तु शौर्य्यं तद्युक्तं यत्कार्य्यं कर्त्तुं योग्यं तदेवावलम्ब्यताम् । अवलम्बयितुमुचितमित्यर्थः । यतः सत्वरं क्रियमाणं तत्कर्त्तुरलङ्करणायैव भवति फलसाधनाय समर्थं भवति ॥ १५ ॥

अतो हे महाप्राज्ञ त्वं तेजसा सह सत्त्वं गुणमातिष्ठ । विनष्टे सीतावददर्शनं गते । प्रनष्टे दशरथवत्सर्वथा । अदर्शनं गते ॥ १६ ॥

जयसंहर्त्तासि । अर्हसि ॥ १७ ॥

वानरेषु समासक्तं न ते कार्य्यं विपत्स्यते ।
अचिराद्द्रक्ष्यसे सीतां तीर्त्वा सागरमक्षयम् ॥ १९ ॥
तदलं शोकमालम्ब्य क्रोधमालम्ब भूपते ! ।
निश्चेष्टाः क्षत्रिया मन्दाः सर्वे चण्डस्य बिभ्यति ॥ २० ॥
लङ्घनार्थञ्च घोरस्य समुद्रस्य नदीपतेः ।
सहास्माभिरिहोपेतः सूक्ष्मबुद्धिर्विचारय ॥ २१ ॥
लङ्घिते तत्र तैः सैन्यैर्जितमित्येव निश्चिनु ।
सर्वं तीर्णञ्च मे सैन्यं जितमित्यवधार्य्यताम् ॥ २२ ॥

जयेषु पुष्कलं ते सामर्थ्यमस्तीत्याह,—न हीति । तिष्ठेत् स्थातुं शक्नुयात् ॥ १८ ॥

सहायसम्पत्त्यापि जयं निश्चिन्वित्याह,—वानरेष्विति । वानरेषु महाबलेष्वस्मासु समासक्तं कर्त्तव्यत्वेन सम्बद्धं कार्य्यं न विपत्स्यते न नङ्क्ष्यति ॥ १९ ॥

तदिति । शोकमालम्ब्यालम् । शोकं मालम्बस्वेत्यर्थः । क्रोधमालम्बेति । यथाप्राप्तं शत्रुविषयकमित्यर्थः । अन्वयव्यतिरेकाभ्यां शत्रुविषये कोप आवश्यक इत्याह,—निश्चेष्टा इति । मन्दाः शत्रुविषये क्रोधहीनाः क्षत्रिया निश्चेष्टा भवन्ति । शत्रुहननयत्नादिनेति शेषः । चण्डस्य उचितकोपस्य सर्वे बिभ्यति ॥ २० ॥

अस्माभिः सह नदीपतेर्लङ्घनार्थं उपाये हेतुमस्माभिरुपेतः सन् सूक्ष्मबुद्धिस्त्वं विचारय ॥ २१ ॥

इमे हि हरयः शूराः समरे कामरूपिणः।
तानरीन् विधमिष्यन्ति शिलापादपवृष्टिभिः॥ २३॥
कथञ्चित् परिपश्यामि लङ्घितं वरुणालयम्।
हतमित्येव तं मन्ये युद्धे शत्रुनिबर्हण!॥ २४॥
किमुक्त्वा बहुधा चापि सर्वथा विजयी भवान्।
निमित्तानि च पश्यामि मनो मे सम्प्रहृष्यति॥ २५॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
द्वितीयः सर्गः॥ २॥

सर्वं तीर्णं जितमिति चावधार्यंतामवधारय। तत्र सागरे लङ्घिते सति। तैर्मदीयैः सैन्यैर्जितमिति निश्चिनु। पाठान्तरे समुद्रे लङ्घिते तैर्वानरैस्तस्य रावणस्य सैन्यं जितमिति निश्चिन्वित्यर्थः॥ २२॥

तेषु शौर्यत्वशक्तिमाह,—इमे हीति॥ २३॥

कथञ्चित् केनाप्युपायेन। वरुणालयं लङ्घितमेव पश्यामि॥ २४॥

निमित्तमेवाह,—मन इति॥ २५॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे द्वितीयः सर्गः॥ २॥

---

# तृतीयः सर्गः ।

---

सुग्रीवस्य वचः श्रुत्वा हेतुमत्परमार्थवत् ।
प्रतिजग्राह काकुत्स्थो हनूमन्तमथाब्रवीत् ॥ १ ॥
तपसा सेतुबन्धेन सागरोच्छोषणेन च ।
सर्वथापि समर्थोऽस्मि सागरस्यास्य लङ्घने ॥ २ ॥
कतिदुर्गाणि दुर्गाया लङ्कायास्तत् ब्रवीष्व मे ।
ज्ञातुमिच्छामि तत्सर्वं दर्शनादिव वानर ! ॥ ३ ॥
बलस्य परिमाणञ्च द्वारदुर्गक्रियामपि ।
गुप्तिकर्म च लङ्काया रक्षसां सद्मानि च ॥ ४ ॥

सुग्रीवस्येति । परमार्थवत्परमार्थभूतम् । स्वार्थे वतिः । श्रुत्वा प्रतिजग्राह अङ्गीचकार । अथ तदङ्गीकारानन्तरम् ॥ १ ॥

तपसा तपःकार्य्यसङ्कल्पसिद्ध्या । अतएव सकलपुरवर्त्तिप्राणिनां ब्रह्मलोकनयनं वक्ष्यमाणं सङ्गच्छते । सेतुबन्धनेन गङ्गायां गाङ्गेयेन शरैरिव । सागरोच्छोषणेन । दिव्यास्त्रबलात इति शेषः । सर्वथा सर्वप्रकारस्य लङ्घनोपायस्य विद्यमानत्वादित्याशयः ॥ २ ॥

दुर्गायाः गन्तुमशक्यायाः । कतिदुर्गाणि जलगिरिवनादिनानाप्रकारदुर्गेषु कतिप्रकाराणि दुर्गाणि सन्तीत्यर्थः ॥ ३ ॥

परिमाणं संख्यापरिच्छेदम् । द्वारदुर्गक्रियां द्वाराणां दुष्प्रवेशत्व-

यथासुखं यथावच्च लङ्कायामसि दृष्टवान्।
सर्वमाचक्ष्व तत्त्वेन सर्वथा कुशलोह्यसि॥ ५॥
श्रुत्वा रामस्य वचनं हनूमान् मारुतात्मजः।
वाक्यं वाक्यविदां श्रेष्ठोरामं पुनरथाब्रवीत्॥ ६॥
श्रूयतां सर्वमाख्यास्ये दुर्गकर्मविधानतः।
गुप्ता पुरी यथा लङ्का रक्षिता च यथा बलैः॥ ७॥
राक्षसाश्च यथा स्निग्धा रावणस्य च तेजसा।
परां समृद्धिं लङ्कायाः सागरस्य च भीमताम्॥ ८॥
विभागञ्च बलौघस्य निर्द्देशं वाहनस्य च।
एवमुक्त्वा कपिश्रेष्ठः कथयामास तत्त्ववित्॥ ९॥
हृष्टप्रमुदिता लङ्का मत्तद्विपसमाकुला।

सम्पादनम्। गुप्तिकर्मप्राकारादिषु यन्त्रादिस्थापनरूपम्। गुप्तिक्रमभिति पाठे प्राकारादिभीरक्षाक्रमनित्यर्थः॥ ४॥

यथासुखं यथावद्दृष्टवानसि तत्सर्वं तत्त्वेनाचक्ष्व। सर्वथा कुशलो ह्यसि। यथावद्दृष्टप्रतिपादने इति शेषः॥ ५॥

श्रुत्वाऽथाब्रवीदित्यन्वयः॥ ६॥

दुर्गकर्मविधानतः दुर्गत्वसम्पादककर्मविधानेन। यथा गुप्ता बलैर्यथा रक्षिता,च तथाख्यास्ये॥ ७॥

रावणस्य तेजसा सम्पादितां परां समृद्धिमाख्यास्ये इत्येवं क्रमेणान्वयः॥ ८॥

महती रथसम्पूर्णा रक्षोगणनिषेविता ॥ १० ॥
दृढबद्धकपाटानि महापरिघवन्ति च ।
चत्वारि विपुलान्यस्या द्वाराणि सुमहान्ति च ॥ ११ ॥
तत्रेषूपलयन्त्राणि बलवन्ति महान्ति च ।
आगतं प्रतिसैन्यं तैस्तत्र प्रतिनिवार्य्यते ॥ १२ ॥
द्वारेषु संस्कृता भीमाः कालायसमयाः शिताः ।
शतशो रचिता वीरैः शतघ्न्यो रक्षसां गणैः ॥ १३ ॥
सौवर्णस्तु महांस्तस्याः प्राकारो दुष्प्रधर्षणः ।
मणिविद्रुमवैदूर्य्यमुक्ताविरचितान्तरः ॥ १४ ॥

बलौघस्य पादातसङ्घस्य । वाहनस्य गजाश्वरथलक्षणस्य । निर्देशं संख्यापरिच्छेदम् ॥ ९ ॥ १० ॥

परिघवन्ति अर्गलवन्ति । परिघो योगभेदे स्यान्मुद्गरेऽर्गलघातयो-रिति विश्वः । ईदृशानि द्वाराणि सन्तीत्यन्वयः ॥ ११ ॥

तत्र तेषु द्वारेषु । इषवश्च उपलाश्च तत्प्रक्षेपकयन्त्राणि । तैर्द्वारे-रागतं परसैन्यं तत्र तेषु द्वारेषु प्रतिनिवार्य्यते ॥ १२ ॥

उत्क्षयन्त्रैः संस्कृताः सज्जाः । कालायसमया अयःसारमयाः । शतमेकप्रयोगेण घ्नन्तीति शतघ्न्यः चतुर्हस्तप्रमाणलोहकण्टकयुता मुद्गर-विशेषाः शतघ्न्यः । शतघ्नी च चतुर्हस्ता लोहकण्टकिनी गदेति वैजयन्ती ॥ १३ ॥

प्राकारो रत्नखचित इत्याह,—मणीति ॥ १४ ॥

सर्व्वतश्च महाभीमाः शीततोया महाशुभाः।
अगाधा ग्राहवत्यश्च परिखा मीनसेविताः ॥ १५ ॥
द्वारेषु तासां चत्वारः संक्रमाः परमायताः।
यन्त्रैरुपेता बहुभिर्महद्भिर्गृहपङ्क्तिभिः ॥ १६ ॥
त्रायन्ते संक्रमास्तत्र परसैन्यागते सति।
यन्त्रैस्तैरवकीर्य्यन्ते परिखासु समन्ततः ॥ १७ ॥
एकस्त्वकम्प्यो बलवान् संक्रमः सुमहादृढः।
काञ्चनैर्बहुभिः स्तम्भैर्वेदिकाभिश्च शोभितः ॥ १८ ॥
स्वयं प्रकृतिमापन्नो युयुत्सुराम ! रावणः।

परिखाः पुरोपान्तखाताः ॥ १५ ॥

द्वारेषु चतुर्षु। तासां परिखानां मध्ये संक्रमा मध्यवर्त्म-बद्धाः। परमायताः अतिविस्तृतमार्गाः। गृहपङ्क्तिभिः प्राकारशिरो-गृहपङ्क्तिभिः उपेता इत्यनुकर्षः ॥ १६ ॥

तत्र तेषु संक्रमेषु। परसैन्यागते सति ते संक्रमास्तैर्यन्त्रैः प्राकारो-परिप्रतिष्ठापितयन्त्रैस्त्रायन्ते रक्ष्यन्ते। क्षियन्ते इति पाठे ते संक्रमा-नाश्यन्त इत्यर्थः। तैर्यन्त्रैस्तासु परिखासु तत्समीपं प्राप्तानि परसैन्यानि समन्ततोऽवकीर्य्यन्ते क्षिप्यन्ते ॥ १७ ॥

एको मुख्यः। संक्रमः प्राकारमध्यवर्त्ती साक्षात्पुरप्रवेशसाधनभूतो ऽकम्प्यः दुर्भेद्यः। यत्र हेतुर्बलवान् बहुबलकृतरक्षः। दृढो दृढप्रति-ष्ठानः। तदेव दर्शयति। काञ्चनैरिति ॥ १८ ॥

उत्थितश्चाप्रमत्तश्च बलानामनुदर्शने ॥ १९ ॥
लङ्का पुनर्निरालम्बा देवदुर्गा भयावहा ।
नादेयं पार्वतञ्चान्यं कृत्रिमञ्च चतुर्विधम् ॥ २० ॥
स्थिता पारे समुद्रस्य दूरपारस्य राघव ! ।
नौपथश्चापि नास्त्यत्र निरादेशश्च सर्वशः ॥ २१ ॥
शैलाग्रे रचिता दुर्गा सा पूर्देवपुरोपमा ।
वाजिवारणसम्पूर्णा लङ्का परमदुर्जया ॥ २२ ॥
परिखाश्च शतघ्न्यश्च यन्त्राणि विविधानि च ।
शोभयन्ति पुरीं लङ्कां रावणस्य दुरात्मनः ॥ २३ ॥

एवं पुरस्वरूपमुक्त्वा पुरपतेः स्वरूपमाह,—स्वयमिति । युयुत्सुरपि प्रकृतिमापन्नः अक्षुब्धान्तःकरणोऽतिधीर इति यावत् । बलानामनुदर्शने उत्थित उद्युक्तः । अप्रमत्तः सावधानश्च ॥ १९ ॥

निरालम्बा अतिसमुन्नतमहाचलगिरिशिखरप्रतिष्ठितत्वेनारोहणालम्बनरहिता । देवदुर्गा देवनिर्मितदुर्गरूपिणी । अतएव भयावहा । नादेयं दुर्गम् । तत्पर्वतसम्भूतनद्या चतुर्दिक्स्थावरणात् । पार्वतं त्रिकूटरूपम् । कृत्रिमं प्राकाररूपं चतुःप्राकारवत्त्वेन प्राकाररूपम् । चतुर्विधं दुर्गमस्तीति शेषः ॥ २० ॥

तत्राधिकमप्याह,—स्थितेति । दूरपारस्य दूरे पारं परतीरं यस्य । नौपथो नौमार्गः । अत्र समुद्रे । सर्वशो निरादेशः प्रदेशविभागरहितः । समुद्र इति शेषः । निरादेश इति पाठे निरादेशः सर्वदिक्सञ्चाररहितप्रदेशः ॥ २१ ॥ २२ ॥ २३ ॥

अयुतं रक्षसामत्र पूर्वद्वारं समाश्रितम् ।
शूलहस्ता दुराधर्षाः सर्वे खड्गाग्रयोधिनः ॥ २४ ॥
नियुतं रक्षसामत्र दक्षिणद्वारमाश्रितम् ।
चतुरङ्गेण सैन्येन योधास्तत्राप्यनुत्तमाः ॥ २५ ॥
प्रयुतं रक्षसामत्र पश्चिमद्वारमाश्रितम् ।
चर्मखड्गधराः सर्वे तथा सर्वास्त्रकोविदाः ॥ २६ ॥
न्यर्बुदं रक्षसामत्र उत्तरद्वारमाश्रितम् ।
रथिनश्चाश्ववाहाश्च कुलपुत्राः सुपूजिताः ॥ २७ ॥
शतशोऽथ सहस्राणि मध्यमं स्कन्धमाश्रिताः ।
यातुधाना दुराधर्षाः साग्रकोटिश्च रक्षसाम् ॥ २८ ॥
ते मया संक्रमाः भग्नाः परिखाश्चावपूरिताः ।

शूलहस्ता एव न केवलम् अपि तु खड्गाग्रयोधिनः । खड्गैरग्रे युद्धन्ते तादृशाः ॥ २४ ॥

नियुतं लक्षम् । चतुरङ्गेण सैन्येनोपलक्षिता योधा स्तत्रापि दक्षिणद्वारेऽपि सन्ति । अनुत्तमाः प्रशस्ताः ॥ २५ ॥

प्रयुतं दशलक्षम् ॥ २६ ॥

कुलपुत्राः किङ्कराः । यद्वा । योद्धृसत्कुले प्रसूताः ॥ २७ ॥

मध्यमं स्कन्धं पुरमध्यसेनानिवेशस्थानम् । साग्रा कोटिः सपादकोटिः ॥ २८ ॥

दग्धा च नगरी लङ्का प्राकाराश्चावसादिताः ॥ २९ ॥
येन केन तु मार्गेण तराम वरुणालयम् ।
हतेति नगरी लङ्का वानरैरुपधार्य्यताम् ॥ ३० ॥
अङ्गदो द्विविदो मैन्दो जाम्बवान् पनसो नलः ।
नीलः सेनापतिश्चैव बलशेषेण किं तव ॥ ३१ ॥
प्लवमाना हि गत्वा तां रावणस्य महापुरीम् ।
सपर्वतवनां भित्वा सखातांश्च सतोरणाम् ॥ ३२ ॥
सप्राकारां सभवनामानयिष्यन्ति राघव ! ॥ ३३ ॥
एवमाज्ञापय क्षिप्रं बलानां सर्वसंग्रहम् ।

यद्येवं दुर्गा लङ्का कथमस्मद्बलसाध्येति शङ्कां निराचष्टे । ते मयेति । ते संक्रमाः परिखामार्गा मया भग्नाः । परिखाश्च अवपूरिताः । शिलेष्टकादिभिरिति शेषः । येन बलैकदेशच्छायेऽपि हत इत्यर्थः ॥ २९ ॥

येन केन साम्युपायेषु अन्यतमेन समुद्रं तराम । तत्रैवं सति वानरैः स्वयमेव लङ्का हतेति उपधार्य्यतां निश्चीयताम् ॥ ३० ॥

किञ्चाशेषतरणोपायचिन्तार्थैव । प्रबलैर्वच्यमाणैरेव कार्य्यसिद्धिरित्याह,—अङ्गद इत्यादि । एतेऽङ्गदादय एव लङ्कां भित्वा सीतामानेष्यन्ति किं बलशेषेण तवेत्यन्वयः ॥ ३१ ॥ ३२ ॥ ३३ ॥

एवमिति । एवं प्रधानैरेव कार्य्यसाधनमिच्छेत् क्षिप्रमिदानीमेवानयतेत्याज्ञापय । यदि बलानां सर्वसंग्रहं बलसम्मेलनमुद्दिश्य

मुहूर्त्तेन तु युक्तेन प्रस्थानमभिरोचय ॥ ३४ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे

तृतीयः सर्गः ॥ ३ ॥

बलानामपि पारमयनमित्यं तदा युक्तेन यात्रोचितेन मुहूर्त्तेन प्रस्थानं स्वयात्रामभिरोचय ॥ ३४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके

युद्धकाण्डे तृतीयः सर्गः ॥ ३ ॥

---

## चतुर्थः सर्गः।



श्रुत्वा हनूमतो वाक्यं यथावदनुपूर्वशः।
ततोऽब्रवीन्महातेजा रामः सत्यपराक्रमः॥ १॥
यन्निवेदयसे लङ्कां पुरीं भीमस्य रक्षसः।
क्षिप्रमेनां बधिष्यामि सत्यमेतद्ब्रवीमि ते॥ २॥
अस्मिन्मुहूर्त्ते सुग्रीवप्रयाणमभिरोचय।
युक्तो मुहूर्त्ते विजये प्राप्तो मध्यन्दिवाकरः॥ ३॥

अनुपूर्वशः अनुक्रमेण॥ १॥

तत्राङ्गदादिमुखेन कार्य्यनिर्बन्धमशक्यं मत्वा तत्प्ररोचनाय तदङ्गीकुर्वन्निव सम्मतमाह,—यदिति। रक्षस एनां पुरीं क्षिप्रमेव वधिष्यामीति यन्निवेदयसे तत्त्वमेव तथा ते शक्तिरस्त्येव। तथापि ते तुभ्यं सम्मतं ब्रवीमीत्यर्थः॥ २॥

तदेवाह,—अस्मिन्निति। सुग्रीवप्रयाणमिति षष्ठीतत्पुरुषः। तमेवाह,—यतो मध्यमन्हे दिवाकरः प्राप्तोऽतो विजये विजयप्रदेऽभिजिदाख्ये मुहूर्त्ते युक्तो मे निर्गम इति शेषः। एवञ्चपरम्। अस्मिन् मुहूर्त्ते विजये प्राप्ते मध्यं दिवाकर इत्यर्द्धमधिकं कतकव्याख्यातात्॥ ३॥

सीतां हृत्वा तु तत् यातु क्वासौ यास्यति जीवितः ।
सीता श्रुत्वाभियानं मे आशामेष्यति जीविते ।
जीवितान्तेऽमृतं स्पृष्ट्वा पीत्वामृतमिवातुरः ॥ ४ ॥
उत्तरा फाल्गुनी ह्यद्य श्वस्तु हस्तेन योक्ष्यते ।
अभिप्रयाम सुग्रीव ! सर्वानीकसमावृताः ॥ ५ ॥
निमित्तानि च पश्यामि यानि प्रादुर्भवन्ति वै ।
निहत्य रावणं सीतामानयिष्यामि जानकीम् ॥ ६ ॥

एतन्मुहूर्त्तप्रस्थितस्य ध्रुवो विजय इत्याह,—सीतामिति । तत्तस्मात् सीतां हृत्वा कामं यातु स्वदेशमिति शेषः । अथाप्यसौ जीवितः सन् । कर्त्तरि निष्ठा । जीवन् भूत्वा क्व यास्यति न क्वापि । अविलम्बं यात्राप्रयोजनमाह,—सीतेति । श्रुत्वा सिद्धादिमुखतः । जीविताशाप्राप्तौ दृष्टान्तः । आतुरो जीवितान्ते जीवितनाशप्राप्तौ अमृतम् अमृतत्वसाधनं दिव्यौषधं स्पृष्ट्वा द्रवरूपममृतं पीत्वा च यथा जीविताशामेति तद्वत् । जीवितान्तेऽमृतं स्पृष्ट्वा पीत्वामृतमिवातुर इति पाश्चः पाठः ॥ ४ ॥

मम ताराबलमस्तीत्याहोत्तरेति । योक्ष्यते । चन्द्र इति शेषः । पुनर्वसुजातस्य हस्तो वधतारा । उत्तरा च सीताया जन्मतारा । बद्धस्य जन्मतारायां तन्मोचनार्थयात्रायामवश्यं तन्मुक्तिरिति भावः । अद्य अमान्तमानेन मार्गशीर्षकृष्णाष्टम्यां कृष्णनवम्यां वा । मार्गशीर्षपूर्णिमोत्तरं नवम्यन्तदक्षिणमुत्तराभावात् । अभिप्रयामेति प्रश्ने लोट् ॥ ५ ॥ ६ ॥

उपरिष्टात् हि नयनं स्फुरमाणमिमं मम ।
विजयं समनुप्राप्तं शंसतीव मनोरथम् ॥ ७ ॥
ततो वानरराजेन लक्ष्मणेन सुपूजितः ।
उवाच रामो धर्मात्मा पुनरप्यर्थकोविदः ॥ ८ ॥
अग्रे यातु बलस्यास्य नीलो मार्गमवेक्षितुम् ।
वृतः शतसहस्रेण वानराणान्तरस्विनाम् ॥ ९ ॥
फलमूलवता नील ! शीतकाननवारिणा ।
पथा मधुमता चाशु सेनां सेनापते ! नय ॥ १० ॥
दूषयेयुर्दुरात्मानः पथि मूलफलोदकम् ।
राक्षसाः पथि रक्षेथास्तेभ्यस्त्वं नित्यमुद्यतः ॥ ११ ॥
निम्नेषु वनदुर्गेषु वनेषु च वनौकसः ।
अभिप्लुत्याभिपश्येयुः परेषां निहितं बलम् ॥ १२ ॥
यत्तु फल्गु बलं किञ्चित् तदत्रैवोपपद्यताम् ।

मनोरथं मनोरथविषयं विजयं समनुप्राप्तमिव शंसतीत्यन्वयः ॥ ७ ॥ ८ ॥ ९ ॥

शीतानि काननवारीणि यस्मिन् तादृशेन पथा । सेनापते नील सेनां नयेत्यन्वयः ॥ १० ॥

दूषयेयुर्विषादिनेति शेषः । नित्यमुद्यतः सदा सावधानः सन् ॥ ११ ॥

वनदुर्गेषु वनात्मकेषु दुर्गेषु । वनेषु अदुर्गवनेषु च । निम्नभूमौ निहितं गुप्तप्रहारार्थं लीनतया स्थापितम् ॥ १२ ॥

एतद्धि कृत्यं घोरन्नो विक्रमेण प्रयुज्यताम् ॥ १३ ॥
सागरौघनिभं भीममग्रानीकं महाबलाः ।
कपिसिंहाः प्रकर्षन्तु शतशोऽथ सहस्रशः ॥ १४ ॥
गजश्च गिरिसङ्काशो गवयश्च महाबलः ।
गवाक्षश्चाग्रतो यातु गवां दृप्त इवर्षभः ॥ १५ ॥
यातु वानरवाहिन्या वानरः प्लवतां पतिः ।
पालयन् दक्षिणं पार्श्वमृषभो वानरर्षभः ॥ १६ ॥
गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः ।
यातु वानरवाहिन्याः सव्यं पार्श्वमधिष्ठितः ॥ १७ ॥
यास्यामि बलमध्येऽहं बलौघमभिहर्षयन् ।
अधिरुह्य हनूमन्तमैरावतमिवेश्वरः ॥ १८ ॥
अङ्गदेनैष संयातु लक्ष्मणश्चान्तकोपमः ।
सार्वभौमेन भूतेशो द्रविणाधिपतिर्यथा ॥ १९ ॥

यत्र फल्गु निःसारं बलं बालवृद्धादिलक्षणं युद्धानर्हं तत् अत्रैव किष्किन्धायामेवोपपद्यतां तिष्ठतु । हि यस्मादेतन्नः कार्यं युद्धरूपं घोरमतो विक्रमेण विक्रमोपपन्नबलेन प्रयुज्यताम् । यात्विति शेषः ॥१३॥१४॥

कपिसिंहानेवाह,—गजश्चेति ॥ १५ ॥ १६ ॥

यस्य मदगन्धादन्ये गजाः पलायन्ते स गन्धहस्ती ॥ १७ ॥

ईश्वर इन्द्रः ॥ १८ ॥

जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ।
ऋक्षराजो महाबाहुः कुक्षिं रक्षन्तु ते चमूः ॥ २० ॥

राघवस्य वचः श्रुत्वा सुग्रीवो वाहिनीपतिः ।
व्यादिदेश महावीर्य्यो वानरान् वानरर्षभः ॥ २१ ॥

ते वानरगणाः सर्वे समुत्पत्य महौजसः ।
गुहाभ्यः शिखरेभ्यश्च आशु पुप्लुविरे तदा ॥ २२ ॥

ततो वानरराजेन लक्ष्मणेन च पूजितः ।
जगाम रामो धर्मात्मा ससैन्यो दक्षिणां दिशम् ॥ २३ ॥

शतैः शतसहस्रैश्च कोटिभिश्चायुतैरपि ।
वारणाभैश्च हरिभिर्ययौ परिवृतस्तदा ॥ २४ ॥

तं यान्तमनुयान्ती सा महती हरिवाहिनी ।
हृष्टाः प्रमुदिताः सर्वे सुग्रीवेणाभिपालिताः ॥ २५ ॥

आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
क्ष्वेलन्तो निनदन्तश्च जग्मुर्वै दक्षिणां दिशम् ॥ २६ ॥

अङ्कदेन वाहनभूतेन । सार्वभौमः कुवेरदिग्गजः । भूतेशः कुवेरः । यक्षेशत्वात् ॥ १९ ॥

ऋक्षराजो जाम्बवानित्यन्वयः । कुक्षिं कुक्ष्युपलक्षितं सेनापुच्छभागम् ॥ २० ॥ २१ ॥

गुहाभ्यः शिखरेभ्यः पूर्वस्थितिप्रदेशेभ्यः ॥ २२ ॥ २३ ॥ २४ ॥

हृष्टप्रमोदयोर्बाह्याभ्यन्तरकृतो भेदः ॥ २५ ॥

भक्षयन्तः सुगन्धीनि मधूनि च फलानि च।
उद्वहन्तो महावृक्षान् मञ्जरीपुञ्जधारिणः॥ २७॥
अन्योऽन्यं सहसा दृप्ता निर्वहन्ति क्षिपन्ति च।
पतन्तश्चोत्पतन्त्यन्ये पातयन्त्यपरेऽपरान्॥ २८॥
रावणो नो निहन्तव्यः सर्वे च रजनीचराः।
इति गर्जन्ति हरयो राघवस्य समीपतः॥ २९॥
पुरस्तादृषभो नीलो वीरः कुमुद एव च।
पन्थानं शोधयन्ति स्म वानरैर्बहुभिः सह॥ ३०॥
मध्ये तु राजा सुग्रीवो रामो लक्ष्मण एव च।
बलिभिर्बहुभिर्भीमैर्वृतः शत्रुनिबर्हणः॥ ३१॥

आप्लवन्तः समन्तादक्षणार्थं प्लवमानाः। प्लवन्तः अग्रे शोधनार्थं गच्छन्तः। क्ष्वेला तु सिंहनादः स्यादिति निघण्टुः। गर्जा मेघादिसदृशः शब्दः। निनादः सामान्यशब्दः॥ २६॥

लीलार्थं महावृक्षानुद्वहन्तो मञ्जरीपुञ्जधारिणश्च। जग्मुरित्यनुकर्षः॥ २७॥

निर्वहन्ति विनोदार्थमेकमेके वहन्ति। तथा क्षिपन्ति च समारूढं भूमौ पातयन्ति। पतन्तश्च भवन्ति। केवलं गच्छन्तीत्यर्थः। अन्ये उत्पतन्ति आकाशमार्गे गच्छन्ति। २८॥

नोऽस्माकम्। अस्माभिरिति यावत्। कृत्यानां कर्तरि वेति षष्ठी। २९॥

हरिः शतबलिर्वीरः कोटिभिर्दशभिर्वृतः ।
सर्वामेको ह्यवष्टभ्य ररक्ष हरिवाहिनीम् ॥ २२ ॥
कोटीशतपरीवारः केसरी पनसो गजः ।
अर्कश्च बहुभिः पार्श्वमेकं तस्याभिरक्षति ॥ २३ ॥
सुषेणो जाम्बवांश्चैव ऋक्षैर्बहुभिरावृतौ ।
सुग्रीवं पुरतः कृत्वा जघनं संररक्षतुः ॥ २४ ॥
तेषां सेनापतिर्वीरो नीलो वानरपुङ्गवः ।
संयतश्चरतां श्रेष्ठस्तद्बलं पर्य्यवारयत् ॥ २५ ॥
वलीमुखः प्रजङ्घश्च जम्भोऽथ रभसः कपिः ।

पुरस्तादृषभ इति । अयमृषभो दक्षिणपार्श्वविनियुक्तादन्यो नील-सहकारी ॥ २० ॥ २१ ॥

सर्वां वाहिनीमवष्टभ्यैको ररक्ष । समन्ततो भ्रमन् रक्षति स्मेत्यर्थः ॥ २२ ॥

केसर्य्यादीनां चतुर्णां द्वौ द्वौ तस्य बलस्य दक्षिणं वामञ्चैकैकं पार्श्वमभिरक्षत इत्यर्थ इति कतकः । एष गजः पूर्वभागनियुक्तादन्य इति तीर्थः ॥ २३ ॥

सुषेणजाम्बवन्तौ प्रायः सेनामध्ये वर्त्तमानं सुग्रीवं पुरः कृत्वा जघनं सेनापुच्छभागं संररक्षतुः ॥ २४ ॥

पर्य्यवारयत् नगरादिपीड़ाराहित्यं यथा भवति तथा परिवार्य्यानयदित्यर्थः ॥ २५ ॥

सर्वतश्च ययुर्वीरास्त्वरयन्तः प्लवङ्गमाः ॥ ३६ ॥
एवं ते हरिशार्दूला गच्छन्ति बलदर्पिताः ।
अपश्यन्त गिरिश्रेष्ठं सह्यं गिरिशतायुतम् ॥ ३७ ॥
सरांसि च सुफुल्लानि तटाकानि वराणि च ।
रामस्य शासनं ज्ञात्वा भीमकोपस्य भीतवत् ॥ ३८ ॥
वर्जयन्नगराभ्याशांस्तथा जनपदानपि ।
सागरौघनिभं भीमं तद्वानरबलं महत् ॥ ३९ ॥
निःससर्प महाघोरं भीमघोषमिवार्णवम् ।
तस्य दाशरथेः पार्श्वे शूरास्ते कपिकुञ्जराः ॥ ४० ॥
तूर्णमापुप्लुवुः सर्वे सदश्वा इव चोदिताः ।
कपिभ्यामुह्यमानौ तौ शुशुभाते नरर्षभौ ॥ ४१ ॥
महद्भ्यामिव संस्पृष्टौ ग्रहाभ्यां चन्द्रभास्करौ ।
ततो वानरराजेन लक्ष्मणेन सुपूजितः ॥ ४२ ॥

सर्वतः । वेगातिशयादिति भावः ॥ ३६ ॥

गच्छन्ति । गच्छन्तश्च सह्यमपश्यन्त यह आसीदिति यापयन्त । अत्र प्रथमदिनवास इति ज्ञायते ॥ ३७ ॥

भीतवत् । भीताः सन्त इत्यर्थः ॥ ३८ ॥

वर्जयत् वर्जयित्वा गच्छत् ॥ ३९ ॥

भीमघोषमर्णवमिव । अर्द्धर्चादिरर्णवः । निःससर्प सस्रुतो निःसृतम् ॥ ४० ॥ ४१ ॥

जगाम रामो धर्मात्मा ससैन्यो दक्षिणां दिशम् ।
तमङ्गदगतो रामं लक्ष्मणः शुभया गिरा ॥ ४३ ॥
उवाच परिपूर्णार्थं पूर्णार्थप्रतिभानवान् ।
हृतामवाप्य वैदेहीं क्षिप्रं हत्वा च रावणम् ॥ ४४ ॥
समृद्धार्थः समृद्धार्थामयोध्यां प्रतियास्यसि ।
महान्ति च निमित्तानि दिवि भूमौ च राघव ! ॥ ४५ ॥
शुभानि तव पश्यामि सर्वाण्येवार्थसिद्धये ।
अनुवाति शिवो वायुः सेनां मृदुहितः सुखः ॥ ४६ ॥
पूर्णवल्गुस्वराश्चेमे प्रवदन्ति मृगद्विजाः ।
प्रसन्नाश्च दिशः सर्वा विमलश्च दिवाकरः ॥ ४७ ॥
उशनाश्च प्रसन्नार्चिरनु त्वां भार्गवो गतः ।
ब्रह्मराशिर्विशुद्धश्च शुद्धाश्च परमर्षयः ।

महद्भ्यां ग्रहाभ्यां राहुकेतुभ्यां संसृष्टौ अर्द्धभागे स्पृष्टौ चन्द्रभास्कराविव । महद्भ्यामङ्गसंस्पृष्टाविति पाठान्तरम् ॥ ४२ ॥ ४३ ॥

पूर्णार्थप्रतिभानवान् पूर्णस्य अर्थस्य कार्यस्य शकुनैः प्रतिभानवान् ज्ञानवान् । करिष्यमाणस्य कार्यस्य पूर्णत्वज्ञानवानित्यर्थः । परिपूर्णार्थमिति रामविशेषणम् ॥ ४४ ॥ ४५ ॥

सेनामनुवाति सेनापृष्ठभागेन वाति । मृदुहितसुखपदैः क्रमेण मान्द्यशैत्यसौरभ्ययुक्तानि ॥ ४६ ॥

पूर्णा विच्छेदरहिता वल्गवः श्रोत्रसुखाः स्वरा येषां ते ॥ ४७ ॥

अर्चिष्मन्तः प्रकाशन्ते ध्रुवं सर्वे प्रदक्षिणम् ॥ ४८ ॥
त्रिशङ्कुर्विमलो भाति राजर्षिः सपुरोहितः।
पितामहः पुरोऽस्माकमिक्ष्वाकूणां महात्मनाम् ॥ ४९ ॥
विमले च प्रकाशेते विशाखे निरुपद्रवे।
नक्षत्रं परमस्माकमिक्ष्वाकूणां महात्मनाम् ॥ ५० ॥
नैरृतं नैरृतानाञ्च नक्षत्रमतिपीड्यते।
मूलो मूलवता स्पृष्टो धूप्यते धूमकेतुना॥ ५१ ॥

भार्गवो भृगुपुत्र उशनाः शुक्रोऽपि प्रसन्नार्चिष्मानगतोऽस्ति। शुक्रमौढ्यं नास्तीत्युक्तं भवति। यत्तु पुरःशुक्रभावो ध्वनित इति वक्र दक्षिणोत्तरगन्तॄणां कदापि पुरःशुक्रप्रसक्तेरभावात्। ब्रह्मराशि-र्ध्रुव। ब्रह्मणां सप्तर्षीणां राशिः पुञ्जीभावो यस्मिन् स तथा तस्मा-द्विसृष्टोऽभ्रादिमालिन्यरहितः। तत् पुञ्जीभावमेव दर्शयति। शुद्धा अभ्रादिहीनाः। शुद्धं ध्रुवं प्रदक्षिणं कुर्वाणा अर्चिष्मन्तः प्रशस्तार्चिषो भूत्वा प्रकाशन्ते॥ ४८॥

सपुरोहितः भगवद्विश्वामित्रश्वशुरसमीपवर्त्तिसप्तर्षिमण्डलमध्यवर्त्ति-वसिष्ठसहित इत्यर्थः। इदृशस्त्रिशङ्कुरस्माकं पुरो भाति। तस्य दक्षिणदिक्स्थत्वात्। पितामहः पुरोऽस्माकमिति पाठ्यः पाठ इति कतकः॥ ४९॥

इक्ष्वाकूणां परं नक्षत्रं कुलनक्षत्रम्। विमले धूम्रत्वादिदुष्ट-गृहाक्रमणरहिते॥ ५०॥

सर्वं ह्येतद्विनाशाय राक्षसानामुपस्थितम्।
काले कालगृहीतानां नक्षत्रं ग्रहपीड़ितम् ॥ ५२ ॥
प्रसन्नाः सुरसाश्चापो वनानि फलवन्ति च।
प्रवान्ति नाधिका गन्धा यथर्त्तुकुसुमा द्रुमाः ॥ ५३ ॥
व्यूढ़ानि कपिसैन्यानि प्रकाशन्तेऽधिकं प्रभो !।
देवानामिव सैन्यानि संग्रामे तारकामये।
एवमार्य्य ! समीक्ष्यैतत्प्रीतो भवितुमर्हसि ॥ ५४ ॥

अथ नैर्ऋतनक्षत्रपीड़ामाह,—नैर्ऋतं निर्ऋतिदेवताकम्। मूलः मूलमिति यावत्। आद्यं पुंस्त्वम्। अतिपीड्यते अत्यन्तं पीड्यते। केन तत्राह,—मूलवतेति। मूलवतोर्द्ध्वदण्डाकारतयोत्थितेन धूमकेतुना स्पृष्टो धूप्यते सञ्जाततापो भवति ॥ ५१ ॥

यतः कालेऽन्तकाले। कालगृहीतानां मृत्युगृहीतानाम्। नक्षत्रं ग्रहपीड़ितं प्रत्यङ्गारकराह्वादिग्रहपीड़ितं भवतीति शेषः ॥ ५२ ॥

उपप्रना चेत्याद्येतदन्तं सद्यो किञ्चित्कालं विश्रम्य फलमूलादि भुक्त्वा पुनारावौ गमनकाले लक्ष्मणेन प्रदर्श्यते। अतएव वक्ष्यति साक्षयाति दिवारात्रमिति। सुरसा आपः। [ सरसीष्विति शेषः गन्धाः अजन्लः। गन्धवन्तो वायवोऽधिका न प्रवान्ति। मन्दं वान्तीत्यर्थः। द्रुमाः स्वस्वर्त्तुमनतिक्रम्य जातकुसुमाः ॥ ५३ ॥

आमयशब्देन दुःखत्वाद्वधो लक्ष्यते। तारकस्य तारकासुरस्याम-यो विनाशो यस्मिन् तादृशे संग्रामे देवसेनान्या व्यूढ़ानि देवानां सैन्यानीव प्रकाशन्ते ॥ ५४ ॥

इति भ्रातरमाश्वास्य हृष्टः सौमित्रिरब्रवीत्।
अथावृत्य महीं कृत्स्नां जगाम हरिवाहिनी ॥ ५५ ॥
ऋक्षवानरशार्दूलैर्नखदंष्ट्रायुधैरपि।
कराग्रैश्चरणाग्रैश्च वानरैरुद्धतं रजः ॥ ५६ ॥
भीममन्तर्दधे लोकं निवार्य सवितुः प्रभाम्।
सपर्वतवनाकाशं दक्षिणां हरिवाहिनी ॥ ५७ ॥
छादयन्ती ययौ भीमा द्यामिवाम्बुदसन्ततिः।
उत्तरन्त्याश्च सेनायाः सततं बहुयोजनम् ॥ ५८ ॥
नदीस्रोतांसि सर्वाणि सस्यन्दुर्विपरीतवत्।
सरांसि विमलाम्भांसि द्रुमाकीर्णांश्च पर्वतान् ॥ ५९ ॥
समान् भूमिप्रदेशांश्च वनानि फलवन्ति च।

सौमित्रिः स्वयं निमित्तैराश्वास्य भ्रातुराश्वासाय हृष्टः सन् भ्रातरमब्रवीत्। आश्वास्येति पाठः ॥ ५५ ॥

ऋक्षादयः कर्तारः। कराग्रादीनि करणानि ॥ ५६ ॥

उद्धतं भीमं रजो लोकमन्तर्दधे अन्तर्हितमकरोत्। दक्षिणां दिशमिति शेषः ॥ ५७ ॥ ५८ ॥

सर्वाणि नदीस्रोतांसि। विपरीतवत् वैपरीत्येन सस्यन्दुः। यथाऽभ्रेषु धावत्सु चन्द्रो धावतीव तद्वत्सेनागतिर्नदीप्रवाहेषु भ्रान्त्या भातिस्मेत्यर्थ इति कतकः। वस्तुतो नदीषु वानराणां प्रवाहाभिमुखं तरणैरेराहतानि जलानि विपरीतवहनानीत्यर्थः ॥ ५९ ॥

मध्येन च समन्ताच्च तिर्य्यक् चाधश्च साविशत् ॥ ६० ॥

समावृत्य महीं कृत्स्नां जगाम महती चमूः ।

ते हृष्टवदनाः सर्व्वे जग्मुर्मारुतरंहसः ॥ ६१ ॥

हरयो राघवस्यार्थे समारोपितविक्रमाः ।

हर्षं वीर्य्यं बलोद्रेकान् दर्शयन्तः परस्परम् ॥ ६२ ॥

यौवनोत्सेकजाद्दर्पाद्विविधांश्चक्रुरध्वनि ।

तत्र केचिद्द्रुतं जग्मुरुत्पेतुश्च तथापरे ॥ ६३ ॥

केचित्किलकिलाश्चक्रुर्वानरा वनगोचराः ।

प्रास्फोटयंश्च पुच्छानि सन्निजघ्नुः पदान्यपि ॥ ६४ ॥

भुजान् विक्षिप्य शैलांश्च द्रुमानन्ये बभञ्जिरे ।

आरोहन्तश्च शृङ्गाणि गिरीणां गिरिगोचराः ॥ ६५ ॥

महानादान् प्रमुञ्चन्ति क्ष्वेडामन्ये प्रचक्रिरे ।

साविशत् । अयं द्वितीयो वास इति प्रतीयते ॥ ६० ॥

पुनर्यात्रामाह,—समावृत्येति ॥ ६१ ॥

समारोपितविक्रमाः । एवमेव मया कर्त्तव्यमित्यसाध्येऽप्यर्थे चित्त-संक्रमितविक्रमप्रकाराः ॥ ६२ ॥

विविधान् प्रकारान् । तानेवाह,—तत्रेति ॥ ६३ ॥

वानराणां हर्षादिजनितशब्दः किलकिला । प्रास्फोटयन् पुच्छानि भूमावताडयन् ॥ ६४ ॥

विक्षिप्य प्रसार्य्य ॥ ६५ ॥

ऊरुवेगैश्च ममृदुर्लताजालान्यनेकशः ॥ ६६ ॥
जृम्भमाणाश्च विक्रान्ता विचिक्रीडुः शिलाद्रुमैः
ततः शतसहस्रैश्च कोटिभिश्च सहस्रशः ॥ ६७ ॥
वानराणां सुघोराणां श्रीमत् परिवृता मही ।
सा स्म याति दिवारात्रं महती हरिवाहिनी ॥ ६८ ॥
प्रहृष्टमुदिताः सर्वे सुग्रीवेणाभिपालिताः ।
वानरास्त्वरिता यान्ति सर्वे युद्धाभिनन्दिनः ।
प्रमोचयिषवः सीतां मुहूर्त्तं क्वापि नावसन् ॥ ६९ ॥
ततः पादपसम्बाधं नानावनसमायुतम् ।
सह्यपर्वतमासाद्य वानरास्ते समारुहन् ॥ ७० ॥
काननानि विचित्राणि नदीप्रस्रवणानि च ।
पश्यन्नपि ययौ रामः सह्यस्य मलयस्य च ॥ ७१ ॥

ममर्दुः मर्दितवन्तः ॥ ६६ ॥ ६७ ॥

श्रीमत् । लुप्ततृतीयान्तम् । श्रीमद्भिरित्यर्थः । क्वचं तृतीयो वासः । दिवारात्रं मध्यरात्रे एव याममात्रं वास इत्याशयः ॥ ६८ ॥

प्रमोचयिषवः । मोक्षशब्दात्तत्करोतीति णौ सन्यभ्यासस्येत्वे उपधायाश्च ह्रस्वः । प्रमोचयितुमिच्छन्त इत्यर्थः । नावसन् दिवेति शेषः ॥ ६९ ॥

सह्यपर्वतं तत्पर्वतदक्षिणभागं समासाद्य ते वानराः समारुरुहुः क्षिप्रमारोहन्निति शेषः ॥ ७० ॥

चम्पकांस्तिलकांश्चूतान् प्रसेकान् सिन्दुवारकान्।
तिनिशान् करवीरांश्च भञ्जन्ति स्म प्लवङ्गमाः॥ ७२॥
अशोकांश्च करञ्जांश्च प्लक्षन्यग्रोधपादपान्।
जम्बुकामलकान्नागान् भञ्जन्ति स्म प्लवङ्गमाः॥ ७३॥
प्रस्तरेषु च रम्येषु विविधाः काननद्रुमाः।
वायुवेगप्रचलिताः पुष्पैरवकिरन्ति तान्॥ ७४॥
मारुतः सुखसंस्पर्शो वाति चन्दनशीतलः।
षट्पदैरनुकूजद्भिर्वनेषु मधुगन्धिषु॥ ७५॥
अधिकं शैलराजस्तु धातुभिस्तु विभूषितः।
धातुभ्यः प्रसृतो रेणुर्वायुवेगेन घट्टितः॥ ७६॥
सुमहद्वानरानीकं छादयामास सर्वतः।
गिरिप्रस्थेषु रम्येषु सर्वतः सम्प्रपुष्पिताः॥ ७७॥
केतक्यः सिन्दुवाराश्च वासन्त्यश्च मनोरमाः।
माधव्यो गन्धपूर्णाश्च कुन्दगुल्माश्च पुष्पिताः॥ ७८॥

सह्यपर्वतमासेदुर्मलयञ्च महीधरमिति पाठान्तरम् तीर्थसम्मतम्॥ ७१॥ ७२॥ ७३॥

प्रस्तरेषु ग्रावाग्रेषु स्थितानिति शेषः॥ ७४॥

षट्पदैरनुकूजद्भिरुपलक्षितो मारुतो वाति॥ ७५॥

धातुभ्यः गैरिकादिभ्यः॥ ७६॥ ७७॥

चिरिबिल्वामधूकाश्च वञ्जुला वकुलास्तथा।
रञ्जकास्तिलकाश्चैव नागवृक्षाश्च पुष्पिताः॥ ७९॥
चूताः पाटलिकाश्चैव कोविदाराश्च पुष्पिताः।
मुचलिन्दार्जुनाश्चैव शिंशपाः कुटजास्तथा॥ ८०॥
हिन्तालास्तिनिशाश्चैव चूर्णका नीपकास्तथा।
नीलाशोकाश्च सरला अङ्कोलाः पद्मकास्तथा॥ ८१॥
प्रीयमाणैः प्लवङ्गैस्तु सर्वे पर्य्याकुलीकृताः।
वाप्यस्तस्मिन् गिरौ रम्याः पल्वलानि तथैव च॥ ८२॥
चक्रवाकानुचरिताः कारण्डवनिषेविताः।
प्लवैः क्रौञ्चैश्च सङ्कीर्णा वराहमृगसेविताः॥ ८३॥
ऋक्षैस्तरक्षुभिः सिंहैः शार्दूलैश्च भयावहैः।
व्यालैश्च बहुभिर्भीमैः सेव्यमानाः समन्ततः॥ ८४॥
पद्मैः सौगन्धिकैः फुल्लैः कुमुदैश्चोत्पलैस्तथा।
वारिजैर्विविधैः पुष्पै रम्यास्तत्र जलाशयाः॥ ८५॥

के पुष्पितास्तत्राह,—केतक्य इत्यादि। गन्धपूर्णा गन्धाढ्याः। इदं सर्गविशेषणम्। कुन्दगुल्माः कुन्दानां गुल्माः॥ ७८॥

वञ्जुलो वानीरः॥ ७९॥

कोविदारः पीतकुरवटकः॥ ८०॥ ८१॥

प्रीयमाणैः। उत्कृष्पुष्पदर्शनेनेति शेषः॥ ८२॥ ८३॥ ८४॥

तत्र ऋष्यमूकगिरिप्रान्ते॥ ८५॥

तस्य सानुषु कूजन्ति नानाद्विजगणास्तथा।
स्नात्वा पीत्वोदकान्यत्र जले क्रीडन्ति वानराः॥ ८६॥
अन्योऽन्यं प्लावयन्ति स्म शैलमारुह्य वानराः।
फलान्यमृतगन्धीनि मूलानि कुसुमानि च॥ ८७॥
बभञ्जुर्वानरास्तत्र पादपानां मदोत्कटाः।
द्रोणमात्रप्रमाणानि लम्बमानानि वानराः॥ ८८॥
ययुः पिबन्तः स्वस्थास्ते मधूनि मधुपिङ्गलाः।
पादपानवभञ्जन्तो विकर्षन्तस्तथा लताः॥ ८९॥
विधमन्तो गिरिवरान् प्रययुः प्लवगर्षभाः।
वृक्षेभ्योऽन्ये तु कपयो नर्दन्तो मधुदर्पिताः॥ ९०॥
अन्यान् वृक्षान् प्रपद्यन्ते प्रपिबन्त्यपि चापरे।
बभूव वसुधा तैस्तु सम्पूर्णा हरिपुङ्गवैः।
यथा कलमकेदारैः पक्वैरिव वसुन्धरा॥ ९१॥
महेन्द्रमथ सम्प्राप्य रामो राजीवलोचनः।
आरुरोह महाबाहुः शिखरं द्रुममूषितम्॥ ९२॥
ततः शिखरमारुह्य रामो दशरथात्मजः।

तस्य सह्यस्य मलयस्य च॥ ८६॥

अमृतगन्धीनि अमृतोपमानि। अयं चतुर्थो वासः॥ ८७॥ ८८॥
८९॥ ९०॥

पीतमधुभिर्हरिभिरावृता भुव उपमा। यथेति। पक्वैः पक्वफलैः

कूर्ममीनसमाकीर्णमपश्यत् सलिलाकुलम् ॥ ८३ ॥
ते सह्यं समतिक्रम्य मलयञ्च महागिरिम्।
आसेदुरानुपूर्व्येण समुद्रं भीमनिःस्वनम् ॥ ८४ ॥
अवरुह्य जगामाशु वेलावनमनुत्तमम्।
रामो रमयतां श्रेष्ठः ससुग्रीवः सलक्ष्मणः ॥ ८५ ॥
अथ धौतोपलतलां तोयौघैः सहसोत्थितैः।
वेलामासाद्य विपुलां रामो वचनमब्रवीत् ॥ ८६ ॥
एते वयमनुप्राप्ताः सुग्रीव! वरुणालयम्।
इहेदानीं विचिन्ता सा या नः पूर्वमुपस्थिता ॥ ८७ ॥
अतःपरमतीरोऽयं सागरः सरिताम्पतिः।
न चायमनुपायेन शक्यस्तरितुमर्णवः ॥ ८८ ॥

कलमकेदारैर्व्रीहिक्षेत्रैर्यथा भाति इव शब्दस्तथार्थे। तथा तैः पूर्णा वसुधा बभूव ॥ ८१ ॥ ८२ ॥ ८३ ॥

तत्रानुक्रममपि वासत्रयमन्यद्बोध्यम्। आग्निवेश्योक्तेः। ते सर्वे वानरा आनुपूर्व्या सेनासन्निवेशक्रमेण ॥ ८४ ॥

अवरुह्य महेन्द्रादित्यर्थः ॥ ८५ ॥

सहसोत्थितैर्महरीरूपेणागतैस्तोयौघैर्धौतं क्षालितमुपलतलं यस्यां ताम् ॥ ८६ ॥

या पूर्वमुपस्थिता चिन्ता तद्विषया सेदानीमपि प्रवर्त्तत इति शेषः ॥ ८७ ॥

तदिहैव निवेशोऽस्तु मन्त्रः प्रस्तूयतामिह ।
यथेदं वानरबलं परं पारमवाप्नुयात् ॥ ९९ ॥
इतीव स महाबाहुः सीताहरणकर्शितः ।
रामः सागरमासाद्य वासमाज्ञापयत्तदा ॥ १०० ॥
सर्वाः सेना निवेश्यन्तां वेलायां हरिपुङ्गव ! ।
सम्प्राप्तो मन्त्रकालो नः सागरस्येह लङ्घने ॥ १०१ ॥
स्वां स्वां सेनां समुत्सृज्य मा च कश्चित् कुतो व्रजेत् ।
गच्छन्तु वानराः शूरा ज्ञेयं छन्नं भयञ्च नः ॥ १०२ ॥
रामस्य वचनं श्रुत्वा सुग्रीवः सहलक्ष्मणः ।
सेनां निवेशयत्तीरे सागरस्य द्रुमायुते ॥ १०३ ॥
विरराज समीपस्थं सागरस्य च तद्बलम् ।
मधुपाण्डुजलः श्रीमान् द्वितीय इव सागरः ॥ १०४ ॥
वेलावनमुपागम्य ततस्ते हरिपुङ्गवाः ।

अतीरः अलभ्यपरतीरः । अनुपायेन उपायरूपालम्बनहीनेन ॥९८॥
मन्त्रो विचारः ॥ ९९ ॥ १०० ॥ १०१ ॥

स्वां स्वां सेनां समुत्सृज्य कश्चिदपि कुतोऽपि हेतोर्मा व्रजेत्। यतो ऽस्माकं छन्नं रक्षोमायाकृतत्वात् गूढं भयमस्तीति ज्ञेयम्। सावधानतया स्थेयमिति बोधितम्। अतोऽद्य शूराः सर्वे वानराः सेनारक्षार्थं गच्छन्तु। सेनायाश्चतुर्दिक्षु गत्वा तत्र स्थित्वा तां रक्षन्त्वित्यर्थः ॥ १०२ ॥ १०३ ॥

निविष्टाश्च परं पारं काङ्क्षमाणा महोदधेः ॥ १०५ ॥
तेषां निविश्यमानानां सैन्यसन्नाहनिःस्वनः ।
अन्तर्धाय महानादमर्णवस्य प्रशुश्रुवे ॥ १०६ ॥
सा वानराणां ध्वजिनी सुग्रीवेणाभिपालिता ।
त्रिधा निविष्टा महती रामस्यार्थपराऽभवत् ॥ १०७ ॥
सा महार्णवमासाद्य हृष्टा वानरवाहिनी ।
वायुवेगसमाधूतं पश्यमाना महार्णवम् ॥ १०८ ॥
दूरपारमसम्बाधं रक्षोगणनिषेवितम् ।
पश्यन्तो वरुणावासं निषेदुर्हरियूथपाः ॥ १०९ ॥
चण्डनक्रग्राहघोरं क्षपादौ दिवसक्षये ।

मधुपाण्डुको मधुपिङ्गला वानरा एव जलं यस्य सः। मधुशब्द-समभिव्याहारात् पाण्डुशब्दः पिङ्गलवर्णवाची ज्ञेयः ॥ १०४ ॥ १०५ ॥

समुद्रशब्दमन्तर्धाय, सैन्यसन्नाहस्य सैन्यसञ्चारस्य शब्दः शुश्रुवे ॥ १०६ ॥

त्रिधा निविष्टा ऋक्षगोलाङ्गूलवानररूपत्रियूथभेदेन। ऋक्ष-गोलाङ्गूलानामपि वानरावान्तरजातित्वात् सर्वेषां वानरत्वेनाप्युक्ति-र्नासङ्गता। त्रिधा निविष्टा त्रिवलया निविष्टेत्यन्ये ॥ १०७ ॥

पश्यमाना पश्यन्ती हृष्टाभूदिति शेषः ॥ ८ ॥

असम्बाधं मध्ये गिर्य्याद्याश्रयरहितम्। वक्ष्यमाणसकलविशेषणम्। वरुणावासं पश्यन्तो निषेदुरित्यन्वयः ॥ ९ ॥

हसन्तमिव फेनौघैर्नृत्यन्तमिव चोर्मिभिः ॥ ११० ॥
चन्द्रोदये समुद्धूतं प्रतिचन्द्रसमाकुलम्।
चण्डानिलमहाग्राहैः कीर्णन्तिमितिमिङ्गिलैः ॥ १११ ॥
दीप्तभोगैरिवाकीर्णं भुजङ्गैर्वरुणालयम्।
अवगाढं महासत्त्वैर्नानाशैलसमाकुलम् ॥ ११२ ॥
सुदुर्गं दुर्गमार्गं तमगाधमसुरालयम्।
मकरैर्नागभोगैश्च विगाढा वातलोलिताः ॥ ११३ ॥
उत्पेतुश्च निपेतुश्च प्रहृष्टा जलराशयः।
अग्निचूर्णमिवाविद्धं भास्वराम्बुमहोरगम्।
सुरारिनिलयं घोरं पातालविषयं सदा ॥ ११४ ॥

चण्डनक्ररूपैर्ग्राहैर्महाघोरम्। क्षपादौ दिवसक्षये। तेन प्रदोषकाले चन्द्रोदये प्रवृद्धफेनौघैर्हसन्तमिव स्थितम्। उपलक्षणमिदम्। ऊर्मिभिर्नृत्यन्तमिव स्थितम् ॥ ११० ॥

समुद्धूतं वृद्धम्। ऊर्मिस्थप्रतिचन्द्रैः समाकुलं व्याप्तम्। चण्डानिलतुल्यवेगैर्जलचरैर्महाग्राहैः। तिमिः। अस्तिमत्स्यस्तिमिर्नाम शतयोजनमायत इति लक्षितः। तिमिङ्गिलस्तन्निगरणशक्तः। तैः कीर्णं व्याप्तम् ॥ १११ ॥

दीप्तभोगैरुज्ज्वलदेहैर्भुजङ्गैराकीर्णं वरुणालयं पातालमिव ॥ ११२ ॥

सुदुर्गं शोभनानि लङ्कादीनि दुर्गाणि यस्मिन्। दुर्गमार्गं दुष्प्रापमार्गम्। दुष्प्रापपरपारप्राप्त्युपायमित्यर्थः ॥ ११३ ॥

जलराशय ऊर्मिरूपाः। भास्वराः फणामणिभिर्भासमाना अम्बु-

सागरञ्चाम्बरप्रख्यमम्बरं सागरोपमम्।
सागरञ्चाम्बरञ्चेति निर्विशेषमदृश्यत ॥ ११५ ॥
सम्पृक्तं नभसाप्यम्भः सम्पृक्तञ्च नभोऽम्भसा।
तादृग्रूपे स्म दृश्येते तारारत्नसमाकुले ॥ ११६ ॥
समुत्पतितमेघस्य वीचिमालाकुलस्य च।
विशेषो न द्वयोरासीत्सागरस्याम्बरस्य च ॥ ११७ ॥
अन्योऽन्यैराहताः सक्ताः ससनुर्भीमनिःस्वनाः।
ऊर्मयः सिन्धुराजस्य महाभेर्य्य इवाम्बरे ॥ ११८ ॥

महोरगा जलसर्पा यस्मिंस्तम्। अतएवाग्निचूर्णं विस्फुलिङ्गरूपमाविद्धं क्षिप्तमिवात्र दृश्यत इति शेषः। सदा पातालविषयं पातालगोचरं सागरम् ॥ ११४ ॥

अम्बरप्रख्यं वैपुल्यात्तत्तुल्यैः। तैरेव चाम्बरं सागरोपमम्। उपमेयोपमालङ्कारः। एवं सति यत् फलति तदाह,—निर्विशेषं परस्परातिरिक्तसदृशग्रहितम् ॥ ११५ ॥

तयोरेव समानधर्मान्तरमाह,—सम्पृक्तमिति। संपृक्तं तुल्यमित्यर्थः। नभोऽम्भसोस्तुल्यरूपत्वात्ताराऽरत्नसमाकुले मुक्ताश्रेष्ठैर्नक्षत्रश्रेष्ठैश्च समाकुले समुद्रनभसी तादृग्रूपे परस्परसदृशरूपे दृश्येते ॥ ११६ ॥

समुत्पतितमेघस्याम्बरस्य वीचिमालाकुलस्य सागरस्य चेत्यन्वयः ॥ ११७ ॥

सक्ताः निरन्तराः ॥ ११८ ॥

रत्नौघजलसन्नादं विषक्तमिव वायुना ।
उत्पतन्तमिव क्रुद्धं यादोगणसमाकुलम् ॥ ११९ ॥
ददृशुस्ते महात्मानो वाताहतजलाशयम् ।
अनिलोद्धूतमाकाशे प्रलपन्तमिवोर्मिभिः ॥ १२० ॥
ततो विस्मयमापन्ना हरयो ददृशुः स्थिताः ।
भ्रान्तोर्मिजालसन्नादं प्रलोलमिव सागरम् ॥ १२१ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
चतुर्थः सर्गः ॥ ४ ॥

वायुना विषक्तं सम्बद्धम् । अतएव रत्नौघक्षेपकोर्मिमयजलसन्नाद-वन्तम् । अतएव क्रुद्धमुत्पतन्तमिव स्थितम् ॥ ११९ ॥

जलाशयः समुद्रः ॥ १२० ॥

भ्रान्तानां घूर्णतामूर्मिजालानां सन्नादो यत्र तम् । अतएव प्रलोलं प्रचलमिव स्थितम् ॥ १२१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे चतुर्थः सर्गः ॥ ४ ॥

---

## पञ्चमः सर्गः ।

सा तु नीलेन विधिवत् स्वारक्षा सुसमाहिता ।
सागरस्योत्तरे तीरे साधु सा विनिवेशिता ॥ १ ॥
मैन्दश्च द्विविदश्चोभौ तत्र वानरपुङ्गवौ ।
विचेरतुश्च तां सेनां रक्षार्थं सर्वतो दिशम् ॥ २ ॥
निविष्टायान्तु सेनायां तीरे नदनदीपतेः ।
पार्श्वस्थं लक्ष्मणं दृष्ट्वा रामो वचनमब्रवीत् ॥ ३ ॥
शोकश्च किल कालेन गच्छता ह्यपगच्छति ।
मम चापश्यतः कान्तामहन्यहनि वर्द्धते ॥ ४ ॥
न मे दुःखं प्रिया दूरे न मे दुःखं हृतेति च ।
एतदेवानुशोचामि वयोऽस्या ह्यतिवर्त्तते ॥ ५ ॥

स्वारक्षा सुष्ठुतमासमन्तादरक्षा यस्याः सा । सुसमाहिता सम्यग्रचिता ॥ १ ॥ २ ॥ ३ ॥

अथ समुद्रवेलावनाद्युद्दीपकदर्शनात् पत्नीरक्षसीतास्मृत्या शोचति । शोकश्चेति । गच्छता कालेन इष्टान्तरवियोगजः शोकोऽपि गच्छतीति प्रसिद्धिर्मम प्रियाविरहजे शोके तु विपरीतमित्याह,—मम चेति । चस्त्वर्थे ॥ ४ ॥

नन्वचिरात्प्रत्याहरिष्यामः किं शोकेनेत्यत्र नत्रैव विघ्नचिन्तया

वाहि वात! यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश।
त्वयि मे गात्रसंस्पर्शश्चन्द्रे दृष्टिसमागमः॥ ६॥
तन्मे दहति गात्राणि विषं पीतमिवाशये।
हा! नाथेति प्रिया सा मां ह्रियमाणा यदब्रवीत्॥ ७॥
तद्वियोगेन्धनवता तच्चिन्ताविमलार्चिषा।
रात्रिन्दिवं शरीरं मे दह्यते मदनाग्निना॥ ८॥
अवगाह्यार्णवं स्वप्स्ये सौमित्रे! भवता विना।

दुःखमित्याह,—न मे इति। प्रिया दूरे स्थितेति मे दुःखं नास्ति। स्त्रीधर्मदिवसवत्। तथा हृतेत्यपि न दुःखम्। प्रबलदुष्कर्मवशं प्राप्तत्वात्। अपि तु अस्या वयः प्राणावस्थितिकालोऽतिवर्त्तते। मासद्वयमात्रं जीवनमित्युक्तेः। तत्रापि बहुदिवसात्ययात्। यद्वा। वयो-यौवनमिति प्राकृतवद्वादः॥ ५॥

यतो यस्यां दिशि कान्ता तद्दिशि वाहि गच्छ। तत्र स्थितां तां स्पृष्ट्वा मामपि स्पृश। किमेतावता तवेत्यत्राह,—त्वयीति। कान्तास्पर्शवति त्वयि मे गात्रसंस्पर्शो निदाघतप्तदृष्टेश्चन्द्रे समागमो यथाऽखिलदृष्टितापशामक एवं त्वत्स्पर्शो गात्रीयाखिलतापशामक इत्यर्थः। निदर्शनालङ्कारः॥ ६॥

अथ हेत्वन्तरेण श्लोकः। तन्मे इति। ह्रियमाणा सा हा! नाथेति यदब्रवीत्तदेव अनुमानेन मे आशये चित्ते स्थितमिति शेषः। पीतं विषमिव मे गात्राणि दहति॥ ७॥

रात्रिन्दिवमिति निपातः॥ ८॥

एवञ्च प्रज्वलन् कामो न मां सुप्तं जले दहेत् ॥ ९ ॥
बह्वेतत्कामयानस्य शक्यमेतेन जीवितुम्।
यदहं सा च वामोरूरेकां धरणिमाश्रितौ ॥ १० ॥
केदारस्येव केदारः सोदकस्य निरूदकः।
उपस्नेहेन जीवामि जीवन्तीं यच्छृणोमि ताम् ॥ ११ ॥
कदा नु खलु सुश्रोणीं शतपत्रायतेक्षणाम्।
विजित्य शत्रून् द्रक्ष्यामि सीतां स्फीतामिव श्रियम् ॥ १२ ॥
कदा सुचारुदन्तोष्ठं तस्याः पद्ममिवाननम्।
ईषदुन्नाम्य पास्यामि रसायनमिवातुरः ॥ १३ ॥

सौमित्रे त्वमत्रैव तिष्ठेति शेषः। भवता विनाहमेक एवाशव-मवगाह्य स्वप्स्ये। एवं सति प्रज्वलन् कामो जले सुप्तं न दहेत्। जलस्याग्निविरोधित्वात्। मनोमूलकामस्य सुप्तौ मन उपरमेणोप-रमाच्चेति भावः। भवता विनेत्युद्दीपकत्वेन निद्राप्राप्त्यै ॥ ९ ॥

यद्यस्मात् अहं सा च वामोरूरेकां धरणिमाश्रितौ। एतत्कामय-मानस्य बह्व। एतेन जीवितुं शक्यं कामुक एव शय्यासनेन यथा जीवति तथा एतेनापि जीवितुं शक्यम्। एकभुवोऽऽक्यतत्वेन लाभ-सम्भवसत्त्वादिति भावः ॥ १० ॥

यथा सोदकस्य केदारस्योपस्नेहेन सम्बन्धेन निरुदकोऽपि केदार-स्तस्थं धान्यं जीवति न शुष्यति तद्वत्तस्याः जीवनवार्त्ताश्रवणेनाहमपि जीवामि ॥ ११ ॥

स्फीतां श्रियमिव समृद्धां राज्यलक्ष्मीमिव ॥ १२ ॥

तौ तस्याः संहितौ पीनौ स्तनौ तालफलोपमौ ।
कदा नु खलु सोत्कम्पौ हसन्त्या मां भजिष्यतः ॥ १४ ॥
सा नूनमसितापाङ्गी रक्षोमध्यगता सती ।
मन्नाथा नाथहीनेव त्रातारं नाधिगच्छति ॥ १५ ॥
कथं जनकराजस्य दुहिता मम च प्रिया ।
राक्षसीमध्यगा शेते स्नुषा दशरथस्य च ॥ १६ ॥
अविक्षोभ्याणि रक्षांसि सा विधूयोत्पतिष्यति ।
विधूय जलदान्नीलान् शशिलेखा शरत्स्विव ॥ १७ ॥
स्वभावतनुका नूनं शोकेनानशनेन च ।
भूयस्तनुतरा सीता देशकालविपर्य्ययात् ॥ १८ ॥
कदा नु राक्षसेन्द्रस्य निधायोरसि सायकान् ।
शोकं प्रत्याहरिष्यामि शोकमुत्सृज्य मानसम् ॥ १९ ॥
कदा नु खलु मे साध्वी सीताऽमरसुतोपमा ।

रसायनं पारदादि ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

अविक्षोभ्याणि दुराधर्षाणि रक्षांसि विधूय मद्द्वारा तेषां विधूननं कृत्वोत्पतिष्यतीति सम्बन्धः ॥ १७ ॥

स्वभावतनुका प्रकृत्या कृशशरीरा। देशकालविपर्य्ययात्प्राचीनदुष्कर्मवशप्राप्तदुःखसाधनदेशकालसम्बन्धात् ॥ १८ ॥

प्रत्याहरिष्यामि जानक्या इति शेषः। मानसं मनसि वर्त्तमानम्। प्रत्याहरणसम्भावनया प्रागपि शोकोत्सर्गात् क्त्वः साधुत्वम् ॥ १९ ॥

सोत्कण्ठा कण्ठमालम्ब्य मोच्यत्यानन्दजं जलम् ॥ २० ॥
कदा शोकमिमं घोरं मैथिलीविप्रयोगजम्।
सहसा विप्रमोच्यामि वासः शुक्लेतरं यथा ॥ २१ ॥
एवं विलपतस्तस्य तत्र रामस्य धीमतः।
दिनक्षयान्मन्दवपुर्भास्करोऽस्तमुपागतः ॥ २२ ॥
आश्वासितो लक्ष्मणेन रामः सन्ध्यामुपासत।
स्मरन् कमलपत्राक्षीं सीतां शोकाकुलीकृतः ॥ २३ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
पञ्चमः सर्गः ॥ ५ ॥

मे कण्ठमालम्ब्येत्यन्वयः ॥ २० ॥
शुक्लेतरं मलिनम् ॥ २१ ॥
विलपतो रामस्य विलापं श्रुत्वेत्यर्थः ॥ २२ ॥
सीतां स्मरन्। हेतौ शतृप्रत्ययः। तत् स्मरणाद्धेतोः। शोकाकुलीकृतो रामो लक्ष्मणेनाश्वासितः ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे पञ्चमः सर्गः ॥ ५ ॥

---

## षष्ठः सर्गः ।



लङ्कायान्तु कृतं कर्म घोरं दृष्ट्वा भयावहम् ।
राक्षसेन्द्रो हनुमता शक्रेणेव महात्मना ।
अब्रवीद्राक्षसान् सर्वान् ह्रिया किञ्चिदवाङ्मुखः ॥ १ ॥
धर्षिता च प्रविष्टा च लङ्का दुष्प्रसहा पुरी ।
तेन वानरमात्रेण दृष्टा सीता च जानकी ॥ २ ॥
प्रासादो धर्षितश्चैत्यः प्रवरा राक्षसा हताः ।
आविला च पुरी लङ्का सर्वा हनुमता कृता ॥ ३ ॥
किं करिष्यामि भद्रं वः किं वो युक्तमनन्तरम् ।
उच्यतां नः समर्थं यत् कृतञ्च सुकृतं भवेत् ॥ ४ ॥

अथ कविना हनूमत्प्रतिनिवृत्तिं समुद्रतीरे रामानयनपर्य्यन्तामुपवर्ण्य तन्निवृत्त्यनन्तरकालिकः सभयरावणव्यापार उपवर्ण्यते । वाचः क्रमवृत्तित्वात् । लङ्कायामिति । हनुमता शक्रेणेव कृतं घोरं कर्म दृष्ट्वा राक्षसानब्रवीत् ॥ १ ॥

श्री बीजमाह,—धर्षितेति । आक्रान्तेत्यर्थः । वानरमात्रेण एकेन निरायुधेन चेत्यर्थः ॥ २ ॥

आविला क्षुभिता ॥ ३ ॥

वो भद्रमस्तु । किं करिष्यामि । अनन्तरं वो युष्माकं किं युक्तं

मन्त्रमूलञ्च विजयं प्रवदन्ति मनस्विनः।
तस्माद्वै रोचये मन्त्रं रामं प्रति महाबलाः! ॥ ५ ॥
त्रिविधाः पुरुषा लोके उत्तमाधममध्यमाः।
तेषान्तु समवेतानां गुणदोषौ वदाम्यहम् ॥ ६ ॥
मन्त्रस्त्रिभिर्हि संयुक्तः समर्थैर्मन्त्रनिर्णये।
मित्रैर्वापि समानार्थैर्बान्धवैरपि वाधिकैः ॥ ७ ॥
सहितो मन्त्रयित्वा यः कर्मारम्भान् प्रवर्त्तयेत्।
दैवे च कुरुते यत्नं तमाहुः पुरुषोत्तमम् ॥ ८ ॥
एकोऽर्थं विमृशेदेको धर्मे प्रकुरुते मनः।

योग्यानुष्ठानं किं रोचत इति शेषः। यत्कर्मानुष्ठितं तन्नः समर्थं भवेत्। यच्च कृतं सुकृतं सम्यगनुष्ठितं श्लाघनीयं भवेतदुच्यताम् ॥ ४ ॥

सर्वतः समर्थस्य तव को विचार इत्यत्र राजनीतिरियमित्याह,— मन्त्रमूलमिति। मनस्विनः सुराः ॥ ५ ॥

स्वस्योत्तमप्रभुत्वप्रख्यापनशेषतया मन्त्रत्रैविध्यात् प्रभुत्रैविध्यमाह,— त्रिविधा इति। पुरुषाः मन्त्रापेक्षिणः प्रभुपुरुषाः। समवेतानां सङ्कीर्णरूपाणां लक्षणज्ञानं विना विवेक्तुमशक्यानाम्। गुणदोषौ। उत्तमानां गुणः मध्यमानां गुणदोषौ अधमानां दोषश्चेति विवेकः ॥ ६ ॥

यस्य मन्त्र उच्यमानलक्षणैस्त्रिभिः संयुक्तो भवति। यो वा मित्रादिभिस्त्रिभ्योऽधिकैरपि सहितो मन्त्रयित्वा कर्मारम्भान् प्रवर्त्तयेत्। दैवे दैवसहाये च यत्नं कुरुते तमुत्तमं पुरुषमाहुः ॥ ७ ॥ ८ ॥

एकः कार्य्याणि कुरुते तमाहुर्मध्यमं नरम् ॥ ९ ॥
गुणदोषौ न निश्चित्य त्यक्त्वा दैवव्यपाश्रयम् ।
करिष्यामीति यः कार्य्यमुपेक्षेत् स नराधमः ॥ १० ॥
यथेमे पुरुषा नित्यमुत्तमाधममध्यमाः ।
एवं मन्त्रोऽपि विज्ञेय उत्तमाधममध्यमः ॥ ११ ॥
ऐकमत्यमुपागम्य शास्त्रदृष्टेन चक्षुषा ।
मन्त्रिणो यत्र निरतास्तमाहुर्मन्त्रमुत्तमम् ॥ १२ ॥
बह्वीरपि मतीर्गत्वा मन्त्रिणामर्थनिर्णयः ।
पुनर्यत्रैकतां प्राप्तः स मन्त्रो मध्यमः स्मृतः ॥ १३ ॥

एकोऽर्थमिति । विचारोऽस्य गुणः । इतरनिरपेक्षतादोषः ॥ ९ ॥

गुणदोषौ युक्तायुक्तत्वहिताहितादिकमिष्टैः सह न निश्चित्य दैवव्यपाश्रयं त्यक्त्वा दैवापेक्षां कृत्वा कार्य्यं करिष्यामीत्युपक्रम्य तदप्यन्ते उपेक्षेत् निवर्त्तयेत् स नराधमः ॥ १० ॥

यद्वद्यात् प्रभुत्रैविध्यमुक्तं तस्य मन्त्रस्यापीदानीं त्रैविध्यमाह,—यथेति ॥ ११ ॥

तानेव मन्त्रप्रकारानाह,—ऐकमत्यमिति । शास्त्रदृष्टेन नीतिशास्त्रप्रतिपादितेन चक्षुषा मन्त्रिणो यत्र मन्त्रे ऐकमत्यमुपागम्य निरताः प्रतिष्ठितास्तं मन्त्रमुत्तममाहुः ॥ १२ ॥

बह्वीर्मतीर्गत्वा । बहुविरुद्धमतिविषयतां प्राप्येत्यर्थः । पुनर्वैमत्यानन्तरं राजभीत्याद्युपाधितो यत्र मन्त्रे एकतामैकमत्यं प्राप्तः स मन्त्रो मध्यमः ॥ १३ ॥

अन्योन्यमतिमास्थाय यत्र सम्प्रतिभाष्यते।
न चैकमत्ये श्रेयोऽस्ति मन्त्रः सोऽधम उच्यते ॥ १४ ॥
तस्मात् सुमन्त्रितं साधु भवन्तो मतिसत्तमाः।
कार्य्यं सम्प्रतिपद्यन्तामेतत् कृत्यं मतं मम ॥ १५ ॥
वानराणां हि धीराणां सहस्रैः परिवारितः।
रामोऽभ्येति पुरीं लङ्कामस्माकमुपरोधकः ॥ १६ ॥
तरिष्यति च सुव्यक्तं राघवः सागरं सुखम्।
तरसा युक्तरूपेण सानुजः सबलानुगः ॥ १७ ॥

अन्योऽन्यमतिं भिन्नभिन्नमतिमास्थाय यत्र मन्त्रे समन्तात् प्रतिस्पर्द्धया भाष्यते। कथञ्चित्काष्ठेनैकमत्येऽपि श्रेयश्च नास्ति स मन्त्रोऽधमः ॥ १४ ॥

उपसंहरति। तस्मादिति। यत्कार्य्यं सुमन्त्रितं भवति तदेव साधु भवति। भवन्तश्च मन्त्रे मत्या सत्तमाः श्रेष्ठा अतो यत्कार्य्यं सुमन्त्रितं साधु भवति तत्कार्य्यं प्रतिपद्यन्ताम् ऐकमत्येन निश्चिन्वन्तु। यदेव भवद्भिर्निश्चितं तदेव मम कृत्यं कर्त्तुं योग्यं मतमिष्टम् ॥ १५ ॥

विचारप्रयोजिका प्रभुभीतिश्च निश्चितास्माकमित्याह,—वानराणा-मिति। अभ्येतीति वर्त्तमानसामीप्ये लट्। अचिरादागमिष्यत्येवे-त्यर्थः ॥ १६ ॥

ननु कथं दुस्तरे सागरे स्थिते रामागमनशङ्केत्यत आह,—तरिष्य-तीति। सुव्यक्तं सुखं तरिष्यति। प्रथमान्तपाठे सगरस्य गोत्रापत्यं सागर इति रामविशेषणम्। तदा सागरमिति द्वितीयान्तमन्यत्पद-

समुद्रमुच्छोषयति वीर्य्येणान्यत् करोति वा ।
तस्मिन्नेवंविधे कार्य्ये विरुद्धे वानरैः सह ।
हितं पुरे च सैन्ये च सर्वं सम्मन्त्र्यतां मम ॥ १८ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
षष्ठः सर्गः ॥ ६ ॥

मध्याहार्य्यम् । को वा तरणोपायस्तस्येत्यत्राह,—तरसेति । बलेन तपोबलसहजबलदिव्यास्त्राणामन्यतमेनेत्यर्थः । बलैर्वानरबलैरनुगैः सुग्रीवादिभिश्च सहितः ॥ १७ ॥

तदेवाह,—समुद्रमिति । अन्यत्सेतुबन्धनम् । तस्मिन्नेकस्मिन् वानरे एवंविधे एवंविधव्यापारे सति बहुभिर्वानरैः सह रामे विरुद्धे कार्य्यं विरुद्धं कर्त्तुमुद्यते सति यन्मम पुरे सैन्ये च हितं तत्सर्वं संमन्त्र्यताम् ॥ १८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे षष्ठः सर्गः ॥ ६ ॥

---

## सप्तमः सर्गः



इत्युक्ता राक्षसेन्द्रेण राक्षसास्ते महाबलाः ।
ऊचुः प्राञ्जलयः सर्वे रावणं राक्षसेश्वरम् ॥ १ ॥
द्विषत्पक्षमविज्ञाय नीतिबाह्यास्त्वबुद्धयः ।
राजन् ! परिघशक्त्यृष्टिशूलपट्टिशकुन्तलम् ॥ २ ॥
सुमहन्नो बलं कस्माद्विषादं भजते भवान् ।
त्वया भोगवतीं गत्वा निर्जिताः पन्नगा युधि ॥ ३ ॥
कैलासशिखरावासी यक्षैर्बहुभिरावृतः ।
सुमहत्कदनं कृत्वा वश्यस्ते धनदः कृतः ॥ ४ ॥

तथादौ दुर्मन्त्रिणां दुर्मन्त्रमाह,—इत्युक्ता इति । यतो नीतिबाह्या अतएवाबुद्धयस्ते राक्षसा द्विषत्पक्षस्य रामसुग्रीवादेर्बलमविज्ञाय ज्ञात्वापि मोहादविगणय्य वा प्राञ्जलयः सन्तो रावणमूचुः । तदेवाह,—राजन्निति । ऋष्टिरसिः ॥ १ ॥ २ ॥ ३ ॥

उच्यमानगुणो धनदस्ते त्वया सुमहत्कदनं युद्धं कृत्वा वश्यः कृतः ॥ ४ ॥

स महेश्वरसख्येन श्लाघमानस्त्वया विभो !।
निर्जितः समरे रोषाल्लोकपालो महाबलः ॥ ५ ॥
विनिपात्य च यक्षौघान् विक्षोभ्य विनिगृह्य च।
त्वया कैलासशिखराद्विमानमिदमाहृतम् ॥ ६ ॥
मयेन दानवेन्द्रेण त्वद्भयात्सख्यमिच्छता।
दुहिता तव भार्य्यार्थे दत्ता राक्षसपुङ्गव ! ॥ ७ ॥
दानवेन्द्रो महाबाहो ! वीर्य्योत्सिक्तो दुरासदः।
विगृह्य वशमानीतः कुम्भीनस्याः सुखावहः ॥ ८ ॥
निर्जितास्ते महाबाहो ! नागा गत्वा रसातलम्।
वासुकिस्तक्षकः शङ्खो जटी च वशमाहृताः ॥ ९ ॥
अक्षया बलवन्तश्च शूरा लब्धवराः पुनः।

तदेव प्रपञ्चयते। स इति। स धनदः महेश्वरसख्येन हेतुना स्वयं श्लाघमानोऽपि लोकपालोऽपि त्वया समरे रोषान्निर्जितः ॥ ५ ॥

न जयमात्रमपि तु सर्वस्वापहारोऽपीत्याह,—विनिपात्येति। इदं विमानं पुष्पकम् ॥ ६ ॥

मयदुहिता मन्दोदरी ॥ ७ ॥

कुम्भीनसी रावणस्वसेति बोध्यः। तस्याः सुखावहो भर्त्तृत्वार्थः ॥ ८ ॥

जटी नागविशेषः ॥ ९ ॥

त्वया संवत्सरं युद्धा समरे दानवा विभो ! ॥ १० ॥
स्ववलं समुपाश्रित्य नीता वशमरिन्दम ! ।
मायाश्चाधिगतास्तत्र बह्व्यो वै राक्षसाधिप ! ॥ ११ ॥
शूराश्च बलवन्तश्च वरुणस्य सुता रणे ।
निर्जितास्ते महाभाग ! चतुर्विधबलानुगाः ॥ १२ ॥
मृत्युदण्डमहाग्राहं शाल्मलीद्रुममण्डितम् ।
कालपाशमहावीचिं यमकिङ्करपन्नगम् ॥ १३ ॥
महाज्वरेण दुर्द्धर्षं यमलोकमहार्णवम् ।
अवगाह्य त्वया राजन् ! यमस्य बलसागरम् ॥ १४ ॥
जयश्च विपुलः प्राप्तो मृत्युश्च प्रतिषेधितः ।
सुयुद्धेन च ते सर्वे लोकास्तत्र सुतोषिताः ॥ १५ ॥

दानवाः कालकेयाः। तत्र तैः सह वासान्मायाश्चाधिगताः प्राप्ताः ॥ १० ॥ ११ ॥

चतुर्विधबलं रथगजतुरगपादातरूपम् ॥ १२ ॥

मृत्युदण्डरूपो महाग्राहो यस्मिंस्तं बलसागरम्। शाल्मलीद्रुमैर्यातनावृक्षैर्मण्डितम्। सागरोऽपि द्वीपेषु वृक्षमण्डितो भवति। कालपाश एव महत्यो वीचयो यस्य तम् ॥ १३ ॥ १४ ॥

प्रतिषेधितः पराङ्मुखः कृतः। ते त्वया सर्वे लोकाः सर्वे राक्षसाः सुतोषिताः प्रीणिताः ॥ १५ ॥

क्षत्रियैर्बहुभिर्वीरैः शक्रतुल्यपराक्रमैः ।
आसीद्वसुमती पूर्णा महद्भिरिव पादपैः ॥ १६ ॥
तेषां वीर्य्यगुणोत्साहैर्न समो राघवो रणे ।
प्रसह्य ते त्वया राजन् ! हताः समरदुर्जयाः ॥ १७ ॥
तिष्ठ वा किं महाराज ! श्रमेण तव वानरान् ।
अयमेको महाराज ! इन्द्रजित् क्षपयिष्यति ॥ १८ ॥
अनेन च महाराज ! माहेश्वरमनुत्तमम् ।
इष्ट्वा यज्ञं वरो लब्धो लोके परमदुर्लभः ॥ १९ ॥
शक्तितोमरमीनस्य विनिकीर्णान्त्रशैवलम् ।
गजकच्छपसम्बाधमश्वमण्डूकसङ्कुलम् ॥ २० ॥

एवं दिव्यं जयमुक्त्वा भौमं जयमाहुः । क्षत्रियैरिति । उच्यमानगुणैः क्षत्रियैर्वसुमती पूर्णासीत् ॥ १६ ॥

तेऽपि प्रसह्य त्वया हताः । राघवस्तु रणे तेषां वीर्य्यादिभिर्न समोऽतस्तद्बधे का चिन्तेति भावः ॥ १७ ॥

एवं रावणं प्रशस्य तत्पुत्रं स्तुवन्ति । तिष्ठ वेति । हे महाराज तव मनुष्यो वध्यः किं तस्मात्त्वं तूष्णीमेव तिष्ठ तव श्रमेण किं फलम् । वानरानेकएवेन्द्रजित् क्षपयिष्यति । महाराजेति त्रिरुक्तिरादरात् ॥ १८ ॥

कथमस्यैवं सामर्थ्यं तत्राहुः । अनेन चेति । माहेश्वरं महेश्वरप्रीतिकरम् । इष्ट्वा कृत्वा ॥ १९ ॥

रुद्रादित्यमहाग्राहं मरुद्वसुमहोरगम्।
रथाश्वगजतोयौघं पदातिपुलिनं महत्॥ २१॥
अनेन हि समासाद्य देवानां बलसागरम्।
गृहीतो दैवतपतिर्लङ्कां चापि प्रवेशितः॥ २२॥
पितामहनियोगाच्च मुक्तः शम्बरवृत्रहा।
गतस्त्रिविष्टपं राजन्! सर्वदेवनमस्कृतः॥ २३॥
तमेव त्वं महाराज! विसृजेन्द्रजितं सुतम्।
यावद्वानरसेनां तां सरामां नयति क्षयम्॥ २४॥
राजन्! नापदयुक्तेयमागता प्राकृताज्जनात्।

देवबलं सागरत्वेन रूपयति। रुद्रेत्यादि। विनिकीर्णानि व्याप्तानि॥ २०॥

महत् महान्तम्॥ २१॥ २२॥

पितामहस्य चतुर्मुखस्य रुद्रस्य। यद्विज्ञातो लब्धवरस्तन्नियोगात्तदाज्ञया। सर्वस्य जगतः प्रजापतिः पिता भगवांश्चतुर्मुखरुद्रः पितामहः भगवान् हिरण्यगर्भः प्रपितामहः। अतएवादित्यरुद्रवसुप्रधानाः सर्वश्राद्धदेवताः सर्वयज्ञदेवताः ससुरासुरसर्वप्रजोपास्यस्य सर्वस्वभूतास्येति कतकः। शम्बरं वृत्रं हन्ति सः॥ २३॥

क्षयं यावन्नयति नेष्यतीत्यर्थः॥ २४॥

प्राकृतान्नरवानररूपाज्जनात्। आगता सम्भाविताऽऽगमना इय-

हृदि नैव त्वया कार्य्या त्वं बधिष्यसि राघवम् ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
सप्तमः सर्गः ॥ ७ ॥

मापद्विपत्तिचिन्ता ते अयुक्ता कर्त्तुमयोग्या। सर्वथैषा चिन्ता त्वया हृदि नैव कार्य्या । यतस्त्वं राघवं बधिष्यस्येव ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे सप्तमः सर्गः ॥ ७ ॥

---

# अष्टमः सर्गः ।



ततो नीलाम्बुदप्रख्यः प्रहस्तो नाम राक्षसः ।
अब्रवीत् प्राञ्जलिर्वाक्यं शूरः सेनापतिस्तदा ॥ १ ॥
देवदानवगन्धर्वाः पिशाचपतगोरगाः ।
सर्वे धर्षयितुं शक्याः किं पुनर्मानवौ रणे ॥ २ ॥
सर्वे प्रमत्ता विश्वस्ता वञ्चिताः स्म हनूमता ।
न हि मे जीवतो गच्छेज्जीवन् स वनगोचरः ॥ ३ ॥
सर्वां सागरपर्य्यन्तां सशैलवनकाननाम् ।
करोम्यवानरां भूमिमाज्ञापयतु मां भवान् ॥ ४ ॥

तत इति ॥ १ ॥ २ ॥

नन्विदानीमेव वानरेणैकेनैव धर्षणे कृते कथं धर्षयितुं शक्या इति वचोऽत आह,—सर्वे इति । प्रमत्ता भोगादिपरवशाः । विश्वस्ताः शत्रुधर्षणासम्भवबुद्ध्या निःशङ्कतया स्थिताः । अतएव हनूमता वञ्चिताः स्म । आर्षो विसर्गलोप इति कतकः । प्रामादिकः परिभवो न न्यूनतायै इति भावः । मे जीवत इति आर्षी षष्ठी । प्रमादाद्य भावविशिष्टजीवनवति मयि प्रहस्ते सति स जीवन्नगच्छेदित्यर्थः ॥ ३ ॥

करोमि करिष्यामि ॥ ४ ॥

रक्षाश्चैव विधास्यामि वानराद्रजनीचर ! ।
नागमिष्यति ते दुःखं किञ्चिदात्मापराधजम् ॥ ५ ॥
अब्रवीत्तमसंक्रुद्धो दुर्मुखो नाम राक्षसः ।
इदं न क्षमणीयं हि सर्वेषां नः प्रधर्षणम् ॥ ६ ॥
अयं परिभवो भूयः पुरस्यान्तःपुरस्य च ।
श्रीमतो राक्षसेन्द्रस्य वानरेन्द्रप्रधर्षणम् ॥ ७ ॥
अस्मिन् मुहूर्त्ते गत्वैको निवर्त्तिष्यामि वानरान् ।
प्रविष्टान् सागरं भीममम्बरं वा रसातलम् ॥ ८ ॥
ततोऽब्रवीत् सुसंक्रुद्धो वज्रदंष्ट्रो महाबलः ।
प्रगृह्य परिघं घोरं मांसशोणितदूषितम् ॥ ९ ॥
किं नो हनूमता कार्य्यं कृपणेन तपस्विना ।
रामे तिष्ठति दुर्द्धर्षे सुग्रीवेऽपि सलक्ष्मणे ॥ १० ॥

आत्मापराधजं सीतापहरणापराधजम् ॥ ५ ॥

न क्षमणीयं क्षमितुं न युक्तम् । प्रतिक्रियैव कर्त्तव्येति भावः । इदं पदार्थमाह,—सर्वेषामिति ॥ ६ ॥

भूयः पुनः । पुरस्यान्तःपुरस्य चायं परिभवो दारुणो न क्षमणीय इत्यनुषङ्गः । वानरेन्द्रप्रधर्षणा तज्जं राक्षसेन्द्रस्य दुःखम् अहमेक एव गत्वा भीत्या सागरादीनपि प्रविष्टान् वानरान् हत्वा निवर्त्तयिष्यामि प्रधर्षणादुःखं निवर्त्तयिष्यामि ॥ ७ ॥ ८ ॥

मांसशोणिताभ्यां स्वसम्बद्धाभ्यां दूषितं भयजनकम् ॥ ९ ॥

अद्य रामं ससुग्रीवं परिघेण सलक्ष्मणम्।
आगमिष्यामि हत्वैको विक्षोभ्य हरिवाहिनीम्॥ ११॥
इदं ममापरं वाक्यं शृणु राजन्! यदिच्छसि।
उपायकुशलो ह्येव जयेच्छत्रूनतन्द्रितः॥ १२॥
कामरूपधराः शूराः सुभीमा भीमदर्शनाः।
राक्षसानां सहस्राणि राक्षसाधिपनिश्चिताः॥ १३॥
काकुत्स्थमुपसङ्क्रम्य बिभ्रतं मानुषं वपुः।
सर्वे ह्यसम्भ्रमा भूत्वा ब्रुवन्तु रघुसत्तमम्॥ १४॥
प्रेषिता भरतेनैव भ्रात्रा तव यवीयसा।
स हि सेनां समुत्थाप्य क्षिप्रमेवोपयास्यति॥ १५॥

कृपणेन दीनेन। प्रकाशसञ्चारे भयाद्भावेन कृतकार्य्येण वा। तपस्विना शोच्येन हनूमता किम्। अलक्ष्यस्य तस्य हननेन न प्रयोजनमिति भावः। कृपणादिशब्दानां पारुष्यमात्रे तात्पर्य्यं नत्वर्थे। मातृगाम्यादिगालिदानवत्। तर्हि को हन्तव्यस्तत्राह,—रामे तिष्ठति अहते तिष्ठति सति किमनेन हतेनेत्यर्थः॥ १०॥

यदेवमतोऽद्य राममिति॥ ११॥

इदं पदार्थमाह,—उपायेति॥ १२॥

ततः किं तत्राह,—कामेति। कामरूपेत्यादिषु पुंस्त्वमार्षत्वम्॥ १३॥

ततोऽपि किं तत्राह,—काकुत्स्थमिति। विवृतं स्पष्टम्। वपुः धृत्वेति शेषः॥ १४॥

ततो वयमितस्तूर्णं शूलशक्तिगदाधराः।
चापबाणासिहस्ताश्च त्वरितास्तत्र याम हि॥ १६॥
आकाशे गणशः स्थित्वा हत्वा तां हरिवाहिनीम्।
अश्मशस्त्रमहावृष्ट्या प्रापयाम यमक्षयम्॥ १७॥
एवञ्चेदुपसर्पेतामनयं रामलक्ष्मणौ।
अवश्यमपनीतेन जहतामेव जीवितम्॥ १८॥
कौम्भकर्णिस्ततो वीरो निकुम्भो नाम वीर्य्यवान्।
अब्रवीत् परमक्रुद्धो रावणं लोकरावणम्॥ १९॥
सर्वे भवन्तस्तिष्ठन्तु महाराजेन सङ्गताः।
अहमेको हनिष्यामि राघवं सहलक्ष्मणम्॥ २०॥
सुग्रीवं सहनूमन्तं सर्वांश्चैवात्र वानरान्।

भरतप्रेषितत्वकथनेनापि किं तत्राह,—स इति। सेनां वानरसेनां समुत्थाप्य युक्त्या स्वीयबुद्ध्या क्षिप्रमेवोपयास्यत्यस्मानिति शेषः॥ १५॥

ततः किमिति प्रश्ने मध्ये मार्गे प्रहरामेति वक्रवज्रदंष्ट्रमन्त्रमाह,—तत इति। यामेति लोडुत्तमः॥ १६॥ १७॥

उक्तमन्त्रात् कार्य्यसिद्धिमाह,—एवञ्चेदिति। एवमस्मदुक्तमुपश्रुत्य यद्येषोऽनुजानाति तदा सर्वथास्मदीयमनयं कैतवमुपसर्पेतां प्राप्नुयातां ततश्चापनीतेन कैतवकृतप्रहारेणावश्यमेव जीवितं जहतां जहेतामिति यावत्॥ १८॥

कौम्भकर्णिः कुम्भकर्णापत्यम्॥ १९॥ २०॥

ततो वज्रहनुर्नाम राक्षसः पर्वतोपमः ॥ २१ ॥
क्रुद्धः परिलिहन् सृक्कां जिह्वया वाक्यमब्रवीत् ।
स्वैरं कुर्वन्तु कार्याणि भवन्तो विगतज्वराः ॥ २२ ॥
एकोऽहं भक्षयिष्यामि तां सर्वां हरिवाहिनीम् ।
स्वस्थाः क्रीड़न्तु निश्चिन्ताः पिबन्तु मधु वारुणम् ॥ २३ ॥
अहमेको वधिष्यामि सुग्रीवं सहलक्ष्मणम् ।
साङ्गदञ्च हनूमन्तं सर्वांश्चैवात्र वानरान् ॥ २४ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
अष्टमः सर्गः ॥ ८ ॥

अत्र वानरान् । अस्यां सेनायां स्थितान् वानरानित्यर्थः ॥ २१ ॥
सृक्काम् ओष्ठप्रान्तम् ॥ २२ ॥
वारुणं मधु मद्यम् । एतेन चौद्यावृत्तिः ॥ २३ ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे अष्टमः सर्गः ॥ ८ ॥

---

# नवमः सर्गः ।



ततो निकुम्भो रभसः सूर्य्यशत्रुर्महाबलः ।
सुप्तघ्नो यज्ञकोपश्च महापार्श्वमहोदरौ ॥ १ ॥
अग्निकेतुश्च दुर्द्धर्षो रश्मिकेतुश्च राक्षसः ।
इन्द्रशत्रुश्च बलवांस्ततो वै रावणात्मजः ॥ २ ॥
प्रहस्तोऽथ विरूपाक्षो वज्रदंष्ट्रो महाबलः ।
धूम्राक्षोऽथ निकुम्भश्च दुर्मुखश्चैव राक्षसः ॥ ३ ॥
परिघान् पट्टिशाञ्छूलान् प्रासान् शक्तिपरश्वधान् ।
चापानि च सुबाणानि खड्गांश्च विपुलाम्बुभान् ॥ ४ ॥
प्रगृह्य परमक्रुद्धाः समुत्पत्य च राक्षसाः ।
अब्रुवन् रावणं सर्वे प्रदीप्ता इव तेजसा ॥ ५ ॥
अद्य रामं वधिष्यामः सुग्रीवञ्च सलक्ष्मणम् ।

तत्करीत्यात्र सर्गाविच्छेदः । तत इति । कौम्भकर्णिरेवायं निकुम्भः परैः सहितस्तं पुनराह ॥ १ ॥ २ ॥ ३ ॥

सुबाणानीति बहुव्रीहिः । विपुलाम्बुभान् विमलजलकान्तीन् ॥ ४ ॥

समुत्पत्योत्थाय ॥ ५ ॥

कृपणञ्च हनूमन्तं लङ्का येन प्रधर्षिता॥ ६॥
तान् गृहीतायुधान् सर्वान् वारयित्वा विभीषणः।
अब्रवीत् प्राञ्जलिर्वाक्यं पुनः प्रत्युपवेश्य तान्॥ ७॥
अप्युपायैस्त्रिभिस्तात! योऽर्थः प्राप्तुं न शक्यते।
तस्य विक्रमकालांस्तान्युक्तानाहुर्मनीषिणः॥ ८॥
प्रमत्तेष्वभियुक्तेषु दैवेन प्रहतेषु च।
विक्रमास्तात! सिद्ध्यन्ति परीक्ष्य विधिना कृताः॥ ९॥
अप्रमत्तं कथं तन्तु विजिगीषुं बले स्थितम्।
जितरोषं दुराधर्षं तं धर्षयितुमिच्छथ॥ १०॥

किमब्रुवंस्तदाह,—अथेति॥ ६॥

विभीषणस्तान् सर्वान् वारयित्वा पुनः प्रत्युपवेश्य स्थापयित्वा रावणं प्रति प्राञ्जलिर्भूत्वा वाक्यमब्रवीत्॥ ७॥

त्रिभिरुपायैः सामदानभेदरूपैः। तस्यार्थस्य प्राप्त्यर्थमिति शेषः। तान्नीतिशास्त्रोक्तान् विक्रमकालानाहुः। मनीषिणः नीतिशास्त्रज्ञाः॥ ८॥

तानेव कालानाह,—प्रमत्तेषु असावधानेषु। अभियुक्तेषु शत्रुन्तराक्रान्तेषु। दैवेन प्रहतेषु महारोगादिनेति शेषः। परीक्ष्य उक्तविक्रमप्रवृत्तिनिमित्तसत्तां परीक्ष्येत्यर्थः॥ ९॥

प्रकृते विक्रमानर्ह एव काल इत्याह,—अप्रमत्तमिति। विजिगीषुम्। अनेन शत्रुन्तरराहित्यम्। बले दैवबले स्थितम्। जितरोषमित्यनेन मौर्ख्यराहित्यम्। दुराधर्षत्वेन दिव्यास्त्रसम्पदुक्ता॥ १०॥

समुद्रं लङ्घयित्वा तु घोरं नदनदीपतिम्।
गतिं हनूमतो लोके को विद्यात्तर्कयेत वा॥ ११॥
बलान्यपरिमेयानि वीर्य्याणि च निशाचराः!।
परेषां सहसावज्ञा न कर्त्तव्या कथञ्चन॥ १२॥
किञ्च राक्षसराजस्य रामेणापकृतं पुरा।
आजहार जनस्थानाद्यस्य भार्य्यां यशस्विनः॥ १३॥
खरो यद्यतिवृत्तस्तु स रामेण हतो रणे।
अवश्यं प्राणिना प्राणा रक्षितव्या यथाबलम्॥ १४॥
एतन्निमित्तं वैदेहीभयं नः सुमहद्भवेत्।

को विद्यात् मनसापि कः प्राप्नुयात्। तर्कयेत हनूमति एवञ्चेष्टां सम्भावयेत्॥ ११॥

एवमेव हनूमदादेर्बलान्यपरिमेयानि वीर्य्याणि पराक्रमाश्च सर्वलोकातिगा इति जानीयेति शेषः। अतो हे निशाचराः परेषां सहसा झागवज्ञा न कार्य्या॥ १२॥

किञ्चास्माकेवान्यायो न रामे इत्याह,—किञ्चेति। यशस्विनो यस्य भार्य्यां जनस्थानादाजहार तेन रामेण राक्षसराजस्य पुरा पूर्वं किमपकृतं कोऽपकारः कृतो न कोऽपि॥ १३॥

ननु खरादिहननरूपोऽपकारः कृत इति चेत्तत्राह,—खर इति। खरो रामेण निहत इति यदुच्यते तदा शृणु। अतिवृत्तस्तु स इति। सङ्ग्राममतिक्रम्य तद्देशं गत्वा तत्पीड़ायै प्रवृत्त इति तेन स हतः। तादृशस्य हननञ्च न्याय्यमेवेत्याह,—अवश्यमिति॥ १४॥

आहृता सा परित्याज्या कलहार्थे कृते नु किम्॥ १५॥
न तु चमं वीर्य्यवता तेन धर्मानुवर्त्तिना।
वैरं निरर्थकं कर्त्तुं दीयतामस्य मैथिली॥ १६॥
यावन्न सगजां साश्वां बहुरत्नसमाकुलाम्।
पुरीं दारयते बाणैर्दीयतामस्य मैथिली॥ १७॥
यावत्सुघोरा महती दुर्द्धर्षा हरिवाहिनी।
नावस्कन्दति नो लङ्कां तावत्सीता प्रदीयताम्॥ १८॥
विनश्येद्धि पुरी लङ्का शूराः सर्वे च राक्षसाः।
रामस्य दीयतां पत्नी न स्वयं यदि दीयते॥ १९॥
प्रसादये त्वां बन्धुत्वात् कुरुष्व वचनं मम।
हितं तथ्यं त्वहं ब्रूमि दीयतामस्य मैथिली॥ २०॥
पुरा शरत्सूर्य्यमरीचिसन्निभान्
नवाग्रपुङ्खान् सुदृढान् नृपात्मजः।

एतन्निमित्तं खरादिवधनिमित्तम् आहृतवैदेही यदि तदा एतन्निमित्तमेव वैदेह्याहरणनिमित्तमेव नः सुमहद्भयं भवेद्भावि। एतन्निमित्तमित्यत्र तन्त्रम्। अतो भयहेतुः सा परित्याज्या। कलहार्थे कलहफलके कस्मिंश्चित्कर्मणि कृते किं नु फलमिति शेषः। अनर्थ एवेत्यर्थः॥ १५॥ १६॥ १७॥ १८॥ १९॥

बन्धुत्वात् भ्रातृत्वात्॥ २०॥

नवाग्रपुङ्खान् नवान्युज्ज्वलानि अग्राणि फलभागाः पुङ्खभागाश्च

सृजत्यमोघान् विशिखान् वधाय ते
प्रदीयतां दाशरथाय मैथिली ॥ २१ ॥
त्यजाशु कोपं सुखधर्मनाशनं
भजस्व धर्मं रतिकीर्त्तिवर्द्धनम्।
प्रसीद जीवेम सपुत्रबान्धवाः
प्रदीयतां दाशरथाय मैथिली ॥ २२ ॥
विभीषणवचः श्रुत्वा रावणो राक्षसेश्वरः।
विसर्जयित्वा तान् सर्वान् प्रविवेश स्वकं गृहम् ॥ २३ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
नवमः सर्गः ॥ ९ ॥

येषाम्। पुरा सृजति सक्ष्यति। ततः पुरा प्राङ्मैथिली दीयताम् ॥ २१ ॥ २२ ॥

तान् सर्वान् प्रहस्तादिदुर्मन्त्रिणो विभीषणाद्य ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे नवमः सर्गः ॥ ९ ॥

---

## दशमः सर्गः ।



ततः प्रत्यूषसि प्राप्ते प्राप्तधर्मार्थनिश्चयः ।
राक्षसाधिपतेर्वेश्म भीमकर्मा विभीषणः ॥ १ ॥

शैलाग्रचयसङ्काशं शैलशृङ्गमिवोन्नतम् ।
सुविभक्तमहाकक्षं महाजनपरिग्रहम् ॥ २ ॥

मतिमद्भिर्महामात्रैरनुरक्तैरधिष्ठितम् ।
राक्षसैराप्तपर्य्याप्तैः सर्वतः परिरक्षितम् ॥ ३ ॥

मत्तमातङ्गनिःश्वासैर्व्याकुलीकृतमारुतम् ।
शङ्खघोषमहाघोषं तूर्य्यसम्बाधनादितम् ॥ ४ ॥

प्रत्युषसि प्रातःकाले प्राप्ते । प्राप्तो धर्मार्थयोर्निश्चयो येन स विभीषणो राक्षसाधिपते रावणस्य वेश्म वासभूतं वक्ष्यमाणविशेषणम् अग्रजस्यालयं प्रविवेशेति सप्तमश्लोकस्थेनान्वयः । भीमकर्मा रावणसमीपे सीता देयेति दुष्करवचनवक्ता ॥ १ ॥

शैलाग्राणां शैलशृङ्गाणाञ्च यः समूहस्तत्सङ्काशम् । बहुप्रासादवत्त्वादेवं वादः ॥ २ ॥

अनुष्ठितमिति पाठेऽप्यधिष्ठितमित्येवार्थः । आप्तैर्हितैः । पर्य्याप्तैः कार्य्यनिर्वहणसमर्थैः ॥ ३ ॥

प्रमदाजनसम्बाधं प्रजल्पितमहापथम् ।
तप्तकाञ्चननिर्यूहं भूषणोत्तमभूषितम् ॥ ५ ॥
गन्धर्वाणामिवावासमालयं मरुतामिव ।
रत्नसञ्चयसम्बाधं भवनं भोगिनामिव ॥ ६ ॥
तं महाभ्रमिवादित्यस्तेजोविस्तृतरश्मिवान् ।
अग्रजस्यालयं वीरः प्रविवेश महाद्युतिः ॥ ७ ॥
पुण्यान् पुण्याहघोषांश्च वेदविद्भिरुदाहृतान् ।
शुश्राव सुमहातेजा भ्रातुर्विजयसंश्रितान् ॥ ८ ॥
पूजितान् दधिपात्रैश्च सर्पिर्भिः सुमनोक्षतैः ।
मन्त्रवेदविदो विप्रान् ददर्श स महाबलः ॥ ९ ॥
स पूज्यमानो रक्षोभिर्दीप्यमानं स्वतेजसा ।
आसनस्थं महाबाहुर्ववन्दे धनदानुजम् ॥ १० ॥
स राजदृष्टिसम्पन्नमासनं हेमभूषितम् ।

व्याकुलीकृतमारुतं मिश्रीकरणेन वात्यारूपमापादितो वायु-मारुतो यत्र तम् । तूर्य्याणां सम्बाधो नैविध्यन्तेन नादितम् ॥ ४ ॥

प्रजल्पितमहापथम् । आदिकर्मणि क्तः । प्रातःकालत्वात् प्रारब्ध-जल्पमहामार्गम् । निर्यूहः शिखरे द्वारे इति विश्वः ॥ ५ ॥ ६ ॥

तेजोभिर्विस्तृतारश्मयो येषां सन्ति तादृशमणिमानित्यर्थः ॥ ७ ॥ ८ ॥

सुमनोक्षतैः पुष्पाक्षतैः पूजितान् । दधिपात्रैः सर्पिर्भिश्च युक्ता-हस्तानिति शेषः । मन्त्रान् वेदं ब्राह्मणं विदन्ति तान् ॥ ९ ॥ १० ॥

जगाम समुदाचारं प्रयुज्याचारकोविदः ॥ ११ ॥
स रावणं महात्मानं विजने मन्त्रिसन्निधौ।
उवाच हितमत्यर्थं वचनं हेतुनिश्चितम् ॥ १२ ॥
प्रसाद्य भ्रातरं ज्येष्ठं सान्त्वेनोपस्थितक्रमः।
देशकालार्थसंवादि दृष्टलोकपरावरः ॥ १३ ॥
यदा प्रभृति वैदेही सम्प्राप्तेह परन्तप!।
तदा प्रभृति दृश्यन्ते निमित्तान्यशुभानि नः ॥ १४ ॥
सस्फुलिङ्गः सधूमार्चिः सधूमकलुषोदयः।
मन्त्रसन्धुक्षितोप्यग्निर्न सम्यगभिवर्द्धते ॥ १५ ॥

राजदृष्टिसम्पन्नं पुरःप्रदेशवर्त्तिराजदृष्ट्याबोधितपरिग्रहञ्च आसनं जगाम प्राप। तत्रोपविवेशेति यावत्। समुदाचारं विजयी भवेदित्यादिविजयप्रयोगादिविनयप्रकाशकमाचारं प्रयुज्य कृत्वा ॥ ११ ॥

विजने मन्त्रिव्यतिरिक्तजनरहिते। हेतुनिश्चितं युक्तिभिर्निश्चितार्थम् ॥ १२ ॥

सान्त्वेन भ्रातरं प्रसाद्य। उपस्थितक्रमः अनुष्ठितवन्दनादिक्रियाक्रमः। दृष्टं लोकपरावरं भावप्राधान्यात्श्रैष्ठ्याश्रैष्ठ्यं येन सः। देशकालार्थसंवादीति देशकालोचिततदर्थानुसारीत्यर्थकं वचनविशेषणम् ॥ १३ ॥

तदेव वचनमाह,—यदेति ॥ १४ ॥

तानि निमित्तान्याह,—सस्फुलिङ्ग इति। अग्निर्मथनादिनोत्पत्ति-

अग्निष्टेष्वग्निशालासु तथा ब्रह्मस्थलीषु च ।
सरीसृपाणि दृश्यन्ते हव्येषु च पिपीलिकाः ॥ १६ ॥
गवां पयांसि स्कन्नानि विमदा वरकुञ्जराः ।
दीनमश्वाः प्रहेषन्ते नवग्रासाभिनन्दिनः ॥ १७ ॥
खरोष्ट्राश्वतरा राजन् ! भिन्नरोमाः स्रवन्ति च ।
न स्वभावेऽवतिष्ठन्ते विधानैरपि चिन्तिताः ॥ १८ ॥
वायसाः सङ्घशः क्रूरा व्याहरन्ति समन्ततः ।
समवेताश्च दृश्यन्ते विमानाग्रेषु सङ्घशः ॥ १९ ॥
गृध्राश्च परिलीयन्ते पुरीमुपरि पीड़िताः ।
उपपन्नाश्च सन्ध्ये द्वे व्याहरन्त्यशिवं शिवाः ॥ २० ॥

काले सधूमकलुषोदयः धूमकलुषो य उदयस्तत्सहितः । उत्पत्त्यनन्तरं प्रणयनकाले सस्फुलिङ्गः सधूमार्चिः ॥ १५ ॥

अग्निष्टेषु महानसादिषु । अग्निशालासु अग्निहोत्रगृहेषु । ब्रह्मस्थलीषु वेदाध्ययनस्थानेषु । सरीसृपाणि सर्पाः । लिङ्गव्यत्यय आर्षः ॥ १६ ॥

स्कन्नानि शुष्काणि । स्कन्दिर्गतिशोषणयोः । नवग्रासाभिनन्दिनः । अनेन क्षतभोजना अपि बुभुक्षिता इति सूच्यते ॥ १७ ॥

भिन्नरोमाः ऊर्द्ध्वरोमाणः । अदन्तत्वमार्षम् । स्रवन्ति च । अश्रूणीति शेषः । विधानैश्चिकित्साकर्मभिश्चिन्तिताः पर्य्यालोच्यमाना अपि स्वभावे प्रकृतौ नावतिष्ठन्ते ॥ १८ ॥ १९ ॥

क्रव्यादानां मृगाणाञ्च पुरीद्वारेषु सङ्घशः ।

श्रूयन्ते विपुला घोषाः सविस्फूर्जितनिःस्वनाः ॥ २१ ॥

तदेवं प्रस्तुते कार्य्ये प्रायश्चित्तमिदं क्षमम् ।

रोचये वीर ! वैदेही राघवाय प्रदीयताम् ॥ २२ ॥

इदञ्च यदि वा मोहाल्लोभाद्वा व्याहृतं मया ।

तत्रापि च महाराज ! न दोषं कर्त्तुमर्हसि ॥ २३ ॥

अयं हि दोषः सर्वस्य जनस्यास्योपलक्ष्यते ।

रक्षसां राक्षसीनाञ्च पुरस्यान्तःपुरस्य च ॥ २४ ॥

पुरीमुपरि पुर्य्या उपरि । द्वे सन्ध्ये द्वयोः सन्ध्ययोः । उपपन्नाः समीपं प्राप्ताः ॥ २० ॥

क्रव्यादाम्मृगा वृकादयः । चकारार्थे । सविस्फूर्जितनिःस्वनाः विस्फूर्जितसदृशनिःस्वनाः ॥ २१ ॥

प्रस्तुते कार्य्ये अवश्यकर्त्तव्यदुर्निमित्तशान्तिविधौ प्रायश्चित्तं दुर्निमित्तसूचितपापशोधनम् ॥ २२ ॥

रावणस्यातिक्रूरत्वादक्रुद्धो ऽपि तस्यापि तेनानिष्टवत् शङ्कासम्भवात् कथं क्षमापयति । इदञ्चेति । मोहः कार्य्यतत्त्वापरिज्ञानम् । लोभाज्जीवनलोभात् न दोषं मयि दुष्टत्वबुद्धिम् ॥ २३ ॥

अयं दोषः सीतापहाररूपः तज्जन्यदुर्निमित्तदोषश्चेत्यर्थः । सर्वस्य जनस्येत्यादिकर्त्तरि षष्ठी । सर्वेण जनेन रक्ष आदिरूपेणोपलक्ष्यते दृश्यते । यद्वा । सर्वस्य राक्षसादिरूपस्यैतद्दुर्निमित्तफलम् उपलक्ष्यत इत्यर्थः ॥ २४ ॥

प्रापणे चास्य मन्त्रस्य निवृत्ताः सर्वमन्त्रिणः।
अवश्यन्तु मया वाच्यं यत् दृष्टमथवा श्रुतम्।
संविधाय यथान्यायं तद्भवान् कर्त्तुमर्हति॥ २५॥
इति स्वमन्त्रिणां मध्ये भ्राता भ्रातरमूचिवान्।
रावणं रक्षसां श्रेष्ठं पथ्यमेतद्विभीषणः॥ २६॥

हितं महार्थं मृदुहेतुसंहितं
व्यतीतकालायति सम्प्रति क्षमम्।
निशम्य तद्वाक्यमुपस्थितज्वरः
प्रसङ्गवानुत्तरमेतदब्रवीत्॥ २७॥
भयं न पश्यामि कुतश्चिदप्यहं
न राघवः प्राप्स्यति जातु मैथिलीम्।

ननु त्वदतिरिक्तः कोऽपीमं मन्त्रं न वदति त्वमेव कथं ब्रवीषी-त्यत आह,—प्रापणे इति। अस्य मन्त्रस्य प्रापणे यद्यपि त्वद्भयात् सर्वे मन्त्रिणो निवृत्तास्तथापि मया भ्रात्रा यत् दृष्टं श्रुतं वा तत् सर्वं हितमवश्यं वाच्यमेव। समानसुखभागित्वात्॥ २५॥

स्वमन्त्रिणां स्वभ्रातृमन्त्रिणाम्॥ २६॥

व्यतीतकाले आयतौ उत्तरकाले सम्प्रति वर्त्तमानकाले च क्षमं हितम्। उपस्थितज्वरः प्राप्तक्रोधः। प्रसङ्गवान् सीताविषयकाम-प्रसङ्गवान्॥ २७॥

सुरैः महेन्द्रैरपि सङ्गरे कथं
ममायतः स्थास्यति लक्ष्मणाग्रजः ॥ २८ ॥
इत्येवमुक्त्वा सुरसैन्यनाशनो
महाबलः संयति चण्डविक्रमः ।
दशाननो भ्रातरमाप्तवादिनं
विसर्जयामास तदा विभीषणम् ॥ २९ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
दशमः सर्गः ॥ १० ॥

कुतश्चिद्दुर्निमित्तात् तत् सद्य प्रत्तोक्षेत्यर्थः ॥ २८ ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे दशमः सर्गः ॥ १० ॥

---

## एकादशः सर्गः

स बभूव कृशो राजा मैथिलीकाममोहितः ।
असम्मानाच्च सुहृदां पापः पापेन कर्मणा ॥ १ ॥
अतीव कामसम्पन्नो वैदेहीमनुचिन्तयन् ।
अतीतसमये काले तस्मिन् वै युधि रावणः ।
अमात्यैश्च सुहृद्भिश्च प्राप्तकालममन्यत ॥ २ ॥
स हेमजालविततं मणिविद्रुमभूषितम् ।
उपगम्य विनीताश्वमारुरोह महारथम् ॥ ३ ॥
तमास्थाय रथश्रेष्ठं महामेघसमस्वनम् ।
प्रययौ रक्षसां श्रेष्ठो दशग्रीवः सभाम्प्रति ॥ ४ ॥

कृशत्वे हेतुर्मैथिलीकाममोहित इति । मैथिलीविषयकामेन मोहितः । हेत्वन्तरम् । सुहृदां विभीषणादीनाम् असम्मानाज्जुगुप्सनात् । पापत्वे हेतुः । पापेन कर्मणेति । तच्च परदारापहाररूपम् ॥ १ ॥

तस्मिन् काले रावणो युधि युद्धेऽतीतसमयेऽपि विभीषणोक्तरीत्याऽनवसरदुष्टेऽपि अमात्यादिभिर्विभीषणातिरिक्तैः सह युद्धमेव प्राप्तकालं काममोहितत्वादमन्यत ॥ २ ॥

असिचर्मधरा योधाः सर्वायुधधरास्ततः।
राक्षसा राक्षसेन्द्रस्य पुरस्तात् सम्प्रतस्थिरे ॥ ५ ॥
नानाविकृतवेषाश्च नानाभूषणभूषिताः।
पार्श्वतः पृष्ठतश्चैनं परिवार्य्य ययुस्तदा ॥ ६ ॥
रथैश्चातिरथाः शीघ्रं मत्तैश्च वरवारणैः।
अनूत्पेतुर्दशग्रीवमाक्रीड़द्भिश्च वाजिभिः ॥ ७ ॥
गदापरिघहस्ताश्च शक्तितोमरपाणयः।
ततस्तूर्य्यसहस्राणां सञ्जज्ञे निःस्वनो महान् ॥ ८ ॥
तुमुलः शङ्खशब्दश्च सभां गच्छति रावणे।
स नेमिघोषेण महान् सहसाभिनिनादयन् ॥ ९ ॥
राजमार्गं श्रिया जुष्टं प्रतिपेदे महारथः।
विमलञ्चातपत्रञ्च प्रगृहीतमशोभत ॥ १० ॥
पाण्डुरं राक्षसेन्द्रस्य पूर्णस्ताराधिपो यथा।
हेममञ्जरिगर्भं च शुद्धस्फटिकविग्रहं ॥ ११ ॥

अस्यैव निश्चयाय सभाप्रस्थानम्। स हेमेत्यादि ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥
आक्रीड़द्भिः गतिभेदेन क्रीड़ां कुर्वद्भिः ॥ ७ ॥
ततः प्रस्थानान्तरम् ॥ ८ ॥ ९ ॥
आतपत्रं छत्रम् ॥ १० ॥
अलङ्काराय हेमनिर्मितामञ्जर्य्यो गर्भे यथोक्ते। शुद्धस्फटिकविग्रहे तेनातिशुक्ले ॥ ११ ॥

चामरव्यजने तस्य रेजतुः सव्यदक्षिणे ।
ते कृताञ्जलयः सर्वे रथस्थं पृथिवीस्थिताः ॥ १२ ॥
राक्षसा राक्षसश्रेष्ठं शिरोभिस्तं ववन्दिरे ।
राक्षसैः स्तूयमानः सन् जयाशीर्भिररिन्दमः ॥ १३ ॥
आससाद महातेजाः सभां विरचितां तदा ।
सुवर्णरजतास्तीर्णां विशुद्धस्फटिकान्तराम् ॥ १४ ॥
विराजमानो वपुषा रुक्मपट्टोत्तरच्छदाम् ।
तां पिशाचशतैः षड्भिरभिगुप्तां सदाप्रभाम् ॥ १५ ॥
प्रविवेश महातेजाः सुकृतां विश्वकर्मणा ।
तस्याः स वैदूर्य्यमयं प्रियकाजिनसंवृतम् ॥ १६ ॥

सव्यदक्षिणे । समाहारद्वन्द्वः । सव्यदक्षिणपार्श्वयोरित्यर्थः ॥ १२ ॥

॥ १३ ॥

विरचिताम् । विश्वकर्मणेति शेषः । सुवर्णरजतास्तीर्णां तैः कृतकुट्टिमामित्यर्थः । विशुद्धाः स्फटिका अन्तरे मध्ये शोभार्थं यस्याः सा ॥ १४ ॥

विराजमानो वपुषेति प्रवेष्टृरावणविशेषणम् । रुक्मालङ्कृतपट्टवस्त्रमुत्तरच्छदो यस्यास्ताम् । षड्भिः पिशाचशतैः षट्शतपिशाचैरभिगुप्तां रक्षिताम् । सदाप्रभां रत्नप्रभयेति शेषः ॥ १५ ॥

तस्याः सभायामध्ये रावणो वैदूर्य्यमयं वैदूर्य्यरत्ननिर्मितं प्रियकाख्यमृगसम्बन्धिना परममृदुनाजिनेन संवृतम् ॥ १६ ॥

महत्सोपाश्रयं भेजे रावणः परमासनम्।
ततः शशासेश्वरवद्दूतान् लघुपराक्रमान्॥ १७॥
समानयत मे चिप्रमिहैतान् राचसानिति।
कृत्यमस्ति महज्जाने कर्त्तव्यमिति शत्रुभिः॥ १८॥
राचसा तद्वचः श्रुत्वा लङ्कायां परिचक्रमुः।
अनुगेहमवस्थाय विहारशयनेषु च।
उद्यानेषु च रचांसि चोदयन्तो ह्यभीतवत्॥ १९॥
ते रथान्तचरा एके दृप्तानेके दृढ़ान् हयान्।
नागानेकेऽधिरुरुहुर्जग्मुश्चैके पदातयः॥ २०॥
सा पुरी परमाकीर्णा रथकुञ्जरवाजिभिः।
सम्पतद्भिर्विरुरुचे गरुत्मद्भिरिवाम्बरम्॥ २१॥
ते वाहनान्यवस्थाय यानानि विविधानि च।

सोपाश्रयं सोपधानम्। ईश्वरवत् ईश्वरार्हम्॥ १७॥

शत्रुभिर्महत् कृत्यं कर्त्तव्यमस्ति इति जाने। अतो राचसान् समानयेति शशास॥ १८॥

राचसा दूतरूपाः। अनुगेहमवस्थाय प्रविश्य विहारादिषु व्यासक्तान्यपि रचांसि रावणाज्ञया अभीतवत्तदर्थं चोदयन्तः सन्तो लङ्कायां परिचक्रमुः॥ १९॥

ते आहूता राचसाः। रथान्तचराः रथश्रेष्ठसञ्चारिणः। जग्मुरिति शेषः। हयानित्यत्राधिरुरुहुरित्यपकर्षः॥ २०॥

सभां पद्भिः प्रविविशुः सिंहा गिरिगुहामिव ॥ २२ ॥
राज्ञः पादौ गृहीत्वा तु राज्ञा ते प्रतिपूजिताः ।
पीठेष्वन्ये वृसीष्वन्ये भूमौ केचिदुपाविशन् ॥ २३ ॥
ते समेत्य सभायां वै राक्षसा राजशासनात् ।
यथार्हमुपतस्थुस्ते रावणं राक्षसाधिपम् ॥ २४ ॥
मन्त्रिणश्च यथामुख्या निश्चितार्थेषु पण्डिताः ।
अमात्याश्च गुणोपेताः सर्वज्ञा बुद्धिदर्शनाः ॥ २५ ॥
समीयुस्तत्र शतशः शूराश्च बहवस्तथा ।
सभायां हेमवर्णायां सर्वार्थस्य सुखाय वै ॥ २६ ॥
ततो महात्मा विपुलं सुयुग्यं
रथं वरं हेमविचित्रिताङ्गम् ।
शुभं समास्थाय ययौ यशस्वी
विभीषणः संसदमग्रजस्य ॥ २७ ॥

परम् आकाशम् ॥ २१ ॥ २२ ॥

वृसी वृत्तासनम् ॥ २३ ॥ २४ ॥

यथामुख्याः यथायोगं तत्तन्मन्त्रविषये मुख्याः । निश्चितार्थेषु भाविनिष्ठा । आहितात्मग्रादिः । अर्थनिश्चयेष्वित्यर्थः । अमात्या उपमन्त्रिणः । सर्वज्ञाः सर्वशास्त्रज्ञाः । बुद्धिर्दर्शनं चक्षुर्येषां ते ॥ २५ ॥

सर्वार्थस्य निश्चयायेति शेषः । सुखाय क्षेमाय क्षेमं विचारयितुम् ॥ २६ ॥

स पूर्वजायावरजः प्रशंस
नामाथ पश्चाच्चरणौ ववन्दे ।
शुकः प्रहस्तश्च तथैव तेभ्यो
ददौ यथार्हं पृथगासनानि च ॥ २८ ॥
सुवर्णनानामणिभूषणानां
सुवाससां संसदि राक्षसानाम् ।
तेषां पराद्ध्यागुरुचन्दनानां
स्रजश्च गन्धाः प्रववुः समन्तात् ॥ २९ ॥
न चुक्रुशुर्नानृतमाह कश्चित्
सभासदो नापि जजल्पुरुच्चैः ।
संसिद्धार्थाः सर्व्व एवोग्रवीर्य्या
भर्त्तुः सर्व्वे ददृशुश्चाननं ते ॥ ३० ॥

सुयुग्यं शोभना युग्या अश्वा यस्मिंस्तम् । संसदं सभाम् ॥ २७ ॥

नामग्रहणपूर्व्वकं नमस्कारः कार्य्य इति सदाचारः । व्यग्रचित्ततया राज्ञः स्वागमनज्ञापनाय वा । तेभ्यः सभामागतेभ्यः सर्व्वेभ्यः पृथक् ददौ तत्तदासनस्थानं बोधितवान् ॥ २८ ॥

तेषां राक्षसानां यानि पराद्ध्यागुरुचन्दनानि स्रजश्च तेषां गन्धा वायुसम्बन्धात् प्रववुः ॥ २९ ॥

संसिद्धार्थाः सम्पूर्णमनोरथाः ॥ ३० ॥

स रावणः शस्त्रभृतां मनस्विनां
महाबलानां समितौ मनस्वी।
तस्यां सभायां प्रभया चकाशे
मध्ये वसूनामिव वज्रहस्तः॥ ३१॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
एकादशः सर्गः॥ ११॥

समितौ समागमे। समितिः सागरे साम्ये सभायामपि सङ्गमे॥ ३१॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे एकादशः सर्गः॥ ११॥

# द्वादशः सर्गः

स तां परिषदं कृत्स्नां समीक्ष्य समितिञ्जयः ।
प्रबोधयामास तदा प्रहस्तं वाहिनीपतिम् ॥ १ ॥

सेनापते ! यथा ते स्युः कृतविद्याश्चतुर्विधाः ।
योधा नगररक्षायां तथा व्यादेष्टुमर्हसि ॥ २ ॥

स प्रहस्तः प्रणीतात्मा चिकीर्षन् राजशासनम् ।
विनिश्चित्य बलं सर्वं बहिरभ्यन्तरे मन्दिरे ॥ ३ ॥

ततो विनिश्चित्य बलं सर्वं नगरगुप्तये ।
प्रहस्तः प्रमुखे राज्ञो निषसाद जगाद च ॥ ४ ॥

स इति ॥ १ ॥

कृतविद्याः शिक्षितास्त्रशस्त्रविद्याः । चतुर्विधाः रथिहस्त्यश्वादि-पदातिरूपेण चतुर्विधाः ये योधा वसन्ति ते यथा नगररक्षायां साव-धानाः स्युस्तथा तान् व्यादेष्टुमर्हसि । अनेन समुद्रतीरे रामागमन-वार्त्तामुखेन ज्ञातवानिति गम्यते ॥ २ ॥

प्रणीतात्मा सावधानचित्तः । मन्दिरे पुरे ॥ ३ ॥

तदेवाह,—नगरगुप्तये इति ॥ ४ ॥

विहितं बहिरन्तश्च बलं बलवतस्तव ।
कुरुष्वाविमनाः क्षिप्रं यदभिप्रेतमस्ति ते ॥ ५ ॥
प्रहस्तस्य वचः श्रुत्वा राजा राज्यहितैषिणः ।
सुखेप्सुः सुहृदां मध्ये व्याजहार स रावणः ॥ ६ ॥
प्रियाप्रिये सुखे दुःखे लाभालाभौ हिताहिते ।
धर्मकामार्थकृच्छ्रेषु यूयमर्हथ वेदितुम् ॥ ७ ॥
सर्वकृत्यानि युष्माभिः समारब्धानि सर्वदा ।
मन्त्रकर्मनियुक्तानि न जातु विफलानि मे ॥ ८ ॥
स सोमग्रहनक्षत्रैर्मरुद्भिरिव वासवः ।
भवद्भिरहमत्यर्थं वृतः श्रियमवाप्नुयाम् ॥ ९ ॥
अहन्तु खलु सर्वान् वः समर्थयितुमुद्यतः ।
कुम्भकर्णस्य तु स्वप्नान्नेममर्थमचोदयम् ॥ १० ॥

अविमना अव्याकुलचित्तः ॥ ५ ॥

राज्यहितैषिणः प्रहस्तस्येत्यन्वयः ॥ ६ ॥

प्रियादिविषये धर्मादिविषयकृच्छ्रेषु सङ्कटेषु च यूयं वेदितुमर्हथ । कर्त्तव्याकृत्यमिति शेषः ॥ ७ ॥

मन्त्रकर्मनियुक्तानि मन्त्रकरणपूर्वं नियुक्तानि प्रेरितानि युष्माभिः समारब्धानि मे सर्वकृत्यानि सर्वदा सफलान्येव । जातु कदाचिदपि विफलानि न ॥ ८ ॥ ९ ॥

अयं हि सुप्तः षण्मासान् कुम्भकर्णो महाबलः।
सर्वशस्त्रभृतां मुख्यः स इदानीं समुत्थितः॥ ११॥
इयञ्च दण्डकारण्याद्रामस्य महिषी प्रिया।
रक्षोभिश्चरितोद्देशादानीता जनकात्मजा॥ १२॥
सा मे न शय्यामारोढुमिच्छत्यलसगामिनी।
त्रिषु लोकेषु चान्या मे न सीतासदृशी तथा॥ १३॥
तनुमध्या पृथुश्रोणी शरदिन्दुनिभानना।
हेमबिम्बनिभा सौम्या मायेव मयनिर्मिता॥ १४॥
सुलोहिततलौ श्लक्ष्णौ चरणौ सुप्रतिष्ठितौ।
दृष्ट्वा ताम्रनखौ तस्याः दीप्यते मे शरीरजः॥ १५॥

समर्थयितुं सर्वाभिमते मां नियोजयितुं तत्र मां नियोजयन्त्विति बोधयितुमुद्यतः पूर्वोक्तमप्यर्थं पुनरुक्तवानित्यर्थः। किञ्च। कुम्भकर्णस्य स्वप्नात् स्वापाद्धेतोरिममर्थं नाचोदयं नावेदयम्। इदानीमुपस्थितस्य तस्यापि बोधनार्थं पुनरुक्तिरित्यर्थः॥ १०॥ ११॥

सीतासमर्पणं विना राघवजयोपायो विचार्य्यतामिति बोधयितुं तस्या दुस्त्यजत्वमाह,--इयञ्चेति। रक्षोभिश्चरितः सेवितो य उद्देशो देशो जनस्थानलक्षणस्तस्मात्॥ १२॥

सीतासदृशी अन्या मे न तथा। न मनोहरेत्यर्थः॥ १३॥

हेम्ना निर्मितं यद्‌बिम्बं प्रतिमा तन्निभा। मायेवेति। प्रतिक्षणमपूर्वाश्चर्य्यावहो वस्तुविशेषो माया॥ १४॥ १५॥

कृताग्निरर्चि:सङ्काशामेनां सौरीमिव प्रभाम्।
उन्नसं विमलं वल्गुवदनञ्चारुलोचनम्॥ १६॥
पश्यंस्तदवशस्तस्याः कामस्य वशमेयिवान्।
क्रोधहर्षसमानेन दुर्वर्णकरणेन च॥ १७॥
शोकसन्तापनित्येन कामेन कलुषीकृतः।
सा तु संवत्सरं कालं मामयाचत भामिनी॥ १८॥
प्रतीक्षमाणा भर्त्तारं राममायतलोचना।
तन्मया चारुनेत्रायाः प्रतिज्ञातं वचः शुभम्॥ १९॥

कृताग्निरर्चिःसङ्काशामित्यर्धेऽपि दृष्ट्वा दीप्यते मे शरीरज इत्यनुषज्यते। उन्नता नासिका यस्मिंस्तत्॥ १६॥

अवशोऽस्वाधीन एव तस्यावदनं पश्यन्। एयिवान् प्राप्तवान्। यत्किञ्चिद्विषयनिमित्तकक्रोधहर्षकालयोरपि समानेन तावप्यभिभूयान्तःप्रवृत्तेन दुर्वर्णकरणेन कान्तिनाशकेन। तदप्राप्तिजयोः शोकसन्तापयोर्नित्येन नित्यप्रवर्त्तकेन। ननु स्वनगरे स्थितायां तस्यां किमित्येवं दुःखभोगोऽत आह,—सा तु संवत्सरं कालं तत्समाप्तिपर्य्यन्तं रामं प्रतीक्षमाणा ममास्पर्शमयाचत। मयापि तथास्त्विति प्रतिज्ञातम्। बलात्कारे शापात् मरणभिया स्वेनैव कृतं समयन्तद्याचितत्वेन कृत इति अत्र वस्तुतत्त्वं न हि सीता एवं याचितुमर्हतीति। अतएव पूर्वं सा मे न शय्यामारोढुमिच्छत्यलसगामिनीति सामान्येनैवोक्तम्॥ १७॥ १८॥ १९॥

श्रान्तोऽहं सततं कामाद्यातो हय इवाध्वनि।
कथं सागरमक्षोभ्यं तरिष्यन्ति वनौकसः॥ २०॥
बहुसत्त्वझषाकीर्णं तौ वा दशरथात्मजौ।
अथवा कपिनैकेन कृतं नः कदनं महत्॥ २१॥
दुर्ज्ञयाः कार्य्यगतयो ब्रूत यस्य यथामति।
मानुषान्नो भयं नास्ति तथापि तु विमृश्यताम्॥ २२॥
तदा देवासुरे युद्धे युष्माभिः सहितोऽजयम्।
ते मे भवन्तश्च तथा सुग्रीवप्रमुखान् हरीन्॥ २३॥
परे पारे समुद्रस्य पुरस्कृत्य नृपात्मजौ।

नन्वेवं संवत्सरानन्तरं त्वद्वशे भविष्यत्येव रामस्त्वितराप्रसक्ति-रेवेति का ते चिन्तेत्याशङ्क्याल्पोऽपि रिपुर्नापेक्ष्य इति नीतिशास्त्रपर्य्या-लोचनया मन्त्रे प्रेरयामीत्याह,—कथमिति। न कथमपीत्यर्थः॥ २०॥

अथापि सम्भावनास्तीत्याह,—अथवेति। एकेनापि कपिना-महत्कदनं कृतम्॥ २१॥

अतः कार्य्यगतयो दुर्ज्ञयास्तस्माद्यस्य यथामति यद्भाति तद्ब्रूत। नन्वेककपिनो भयं तस्य रामादधिकमेव ते भयमिति भयहेतुः सीता-त्यज्यतामित्याशङ्क्य भयाभावमाह,—मानुषादिति॥ २२॥

भयाभावहेतुमाह,—तदेति। यैर्युष्माभिः सहितो देवानजयन्ते भवन्तो मे तथाच तथैव सन्ति। अतो मानुषान्न भयं यद्यपि तथापि विमृश्यतां विचार्य्यतामिति पूर्वश्लोकेनान्वयः। विमर्शे हेतुमाह,—

सीतायाः पदवीं प्राप्य सम्प्राप्तौ वरुणालयम् ॥ २४ ॥
अदेया च यथा सीता बध्यौ दशरथात्मजौ ।
भवद्भिर्मन्त्र्यतां मन्त्रः सुनीतश्चाभिधीयताम् ॥ २५ ॥
न हि शक्तिं प्रपश्यामि जगत्यन्यस्य कस्यचित् ।
सागरं वानरैस्तीर्त्वा निश्चयेन जयो मम ॥ २६ ॥
तस्य कामपरीतस्य निशम्य परिदेवितम् ।
कुम्भकर्णः प्रचुक्रोध वचनञ्चेदमब्रवीत् ॥ २७ ॥

सुग्रीवेति । नृपात्मजौ दूतेन वरुणालयमतिक्रम्य सीतायाः पदवीं प्राप्य अन्विष्य सुग्रीवप्रमुखान् हरीन् पुरस्कृत्य समुद्रस्य परं पारं सम्प्राप्ताविति श्रुतम् ॥ २३ ॥ २४ ॥

अतःपरं यथा सीता अदेया यथा च दशरथात्मजौ बध्यौ तथैव मन्त्रो भवद्भिर्मन्त्र्यताम् । अथ सुनीतं सुनिश्चितं मन्त्रतत्त्वमभिधीयताम् ॥ २५ ॥

निश्चितप्राय एव शत्रुजय इत्याह,—न हीति । जगति लोके कस्यचिदिन्द्रादेरप्यस्मज्जये शक्तिं न पश्यामि । अन्यस्य मनुष्यरूपशत्रोर्वानरैः सह सागरं तीर्त्वाऽस्मज्जये शक्तिप्रसङ्गमपि न पश्यामि । अतो निश्चयेन सर्वथा ममैव जय इति योजना ॥ २६ ॥

अथ कुम्भकर्णो भ्रातुरन्यायमूलानर्थप्राप्तिदर्शनात् क्रुद्ध आहेत्याह,—तस्येति । परिदेवितं कामशोकप्रलापम् । प्रचुक्रोध । महाराजः सम्प्रोदृशं सभायां प्रलपतीति क्रोधः ॥ २७ ॥

यदा तु रामस्य स लक्ष्मणस्य
प्रसह्य सीता खलु सा इहाहृता।
सकृत्समीक्ष्यैव सुनिश्चितं तदा
भजेत चित्तं यमुनेव यामुनम् ॥ २८ ॥

सर्वमेतन्महाराज! कृतमप्रतिमं तव।
विधीयेत सहास्माभिरादावेवास्य कर्मणः ॥ २९ ॥

न्यायेन राजकार्य्याणि यः करोति दशानन!।
न स सन्तप्यते पश्चान्निश्चितार्थमतिर्नृपः ॥ ३० ॥

तदेव वचनमाह,—यदा त्विति। यदा सलक्ष्मणस्य रामस्य सीता सकृत्समीक्ष्यैव तात्कालिकापातविचारं कृत्वैव प्रसह्य हृता तदैव ते चित्तं यमुना यामुनं ह्रदमिव सुनिश्चितं भजेत निश्चयभजनार्हम्। यथा यमुना पृथिव्यामवतारसमये एव स्वह्रदं पूरयति कालान्तरे तु समुद्रं गतत्वात्तज्जलस्य तत्पूरणासम्भव एवमस्माभिः सह विचारस्य स एव काल इदानीं त्वनर्थनिश्चयः जात एवेति विचारो निष्फल इति काभजा वक्रोक्तिः ॥ २८ ॥

वक्रोक्तमेव साक्षादप्याह,—सर्वमिति। यदेतद्दक्षनापर्वं प्रसह्य परदारहरणादि कृतम् एतत्सर्वं महाराज तवाप्रतिममनुचितम्। इदानीं विचारोऽपि निष्फल इत्याह,—विधीयतेति। अस्य कर्मणः करणमुद्दिश्य पर्यालोचना एव यदस्माभिः सह मन्त्रयेत तदा विधीयेतास्माभिरस्य निवारणमिति शेषः। इदानीं क्रियमाणो विचारस्तु गतजलसेतुबन्धनवत् इति भावः ॥ २९ ॥

अनुपायेन कर्माणि विपरीतानि यानि च।
क्रियमाणानि दुष्यन्ति हवींष्यप्रयतेष्विव ॥ ३१ ॥
यः पश्चात् पूर्वकार्य्याणि कर्माण्यभिचिकीर्षति।
पूर्वञ्चापरकार्य्याणि स न वेद नयानयौ ॥ ३२ ॥
चपलस्य तु कृत्येषु प्रसमीच्याधिकं बलम्।

अथ मन्त्रिभिरसमन्त्र्य कृतं निन्द्यकर्म पश्चात्परितापाय भवतीत्याह.—न्यायेनेति। प्रथमं मन्त्रिभिः सह निश्चितार्थमतिर्भूत्वा यो नृपतिर्न्यायेन राजकार्य्याणि करोति स तत्कार्य्यं कृत्वा पश्चान्न सन्तप्यते ॥ ३० ॥

अन्वया व्यतिरेकमप्याह.—अनुपायेनेति। मन्त्रिभिः सह सामाद्युपायविचारानालम्बनेन मोहात् स्वयमेव यानि विपरीतान्यन्यायकृत्यानि करोति तानि तथा क्रियमाणानि दुष्यन्ति कश्मलं प्रापयन्ति। अप्रयतेषु अभिचारत्वादपिविचेषु यागेषु कृतानि हवींषीव। तानि तु प्रत्यगेनमभिचारस्तेणुते इति कर्त्तारं कश्मलं प्रापयन्त्येव। तद्वदिदं कर्मापाततः सुखमिव भासमानमपि परिणामे दुःखायैवेति भावः ॥ ३१ ॥

यथाकालं यस्य कर्मानारम्भः स मूर्ख इत्याह,—य इति। पूर्वकार्य्याणि प्रथमकर्त्तव्यानि कर्माणि पश्चादभिचिकीर्षति। एवं पश्चात्कर्त्तव्यानि पूर्वं करोति। स नयानयौ न वेद। सामि प्रथमं प्रयोक्तव्येनि दण्डं दण्डे पश्चात्प्रयोक्तव्ये सामचेत्यर्थः। यद्वा। विचारानन्तरं कर्मकरणमुचितं तद्वैपरीत्यं कुर्वन्तु नीत्यनीत्यज्ञानीत्यर्थः ॥ ३२ ॥

छिद्रमन्ये प्रपद्यन्ते क्रौञ्चस्य खमिव द्विजाः॥ ३३॥
त्वयेदं महदारब्धं कार्य्यमप्रतिचिन्तितम्।
दिष्ट्या त्वां नावधीद्रामो विषमिश्रमिवामिषम्॥ ३४॥
तस्मात्त्वया समारब्धं कर्म ह्यप्रतिमं परैः।
अहं समीकरिष्यामि हत्वा शत्रूंस्तवानघ!॥ ३५॥
अहमुत्सादयिष्यामि शत्रूंस्तव निशाचर!।

विषयचपलस्य बलमप्यप्रयोजनमित्याह,—चपलस्येति। अन्ये शत्रवः परस्याधिकं बलं प्रसमीक्ष्यापि कार्येषु चपलस्य तस्य निग्रहाय क्षिप्रं रन्ध्रं प्रपद्यन्ते। द्विजा हंसा अलङ्घ्यस्यापि क्रौञ्चपर्वतस्य लङ्घनाय कुमारशक्तिकृतं खं रन्ध्रमिव॥ ३३॥

एवं कर्म कृतवतस्तवैतावत्कालं जीवनमतिभाग्यवशादित्याह,—त्वयेति। येन त्वयाऽप्रतिचिन्तितं भाविफलचिन्तारहितं यदिदं महत्कार्य्यं प्रबलदारहरणरूपमारब्धं तं त्वां रामोऽतिप्रबलोऽपि दिष्ट्या नावधीत्। विषमिश्रमामिषं भोज्यं वस्तु भोक्तारं यथा हन्ति तद्वदित्यर्थः॥ ३४॥

एवं गते स्वकर्त्तव्यमाह,—तस्मादिति। यस्मात्त्वया परैः प्रबलशत्रुभिरप्रतिममनुचितं कर्मारब्धं यतश्च सामदानेनेच्छसि। मारीचेनेवास्माभिरपि राजत्वात्ते चित्तमनुसर्त्तव्यमेव। तस्मादहं तव शत्रून् हत्वा तव कार्य्यं समीकरिष्यामि सम्पादयिष्यामि। यद्वा। त्वया समीकरिष्यामि त्वं यथा युद्धं करिष्यसि तथाहमपि परैर्यातयिष्यामि न तु विभीषणवत्त्वां त्यक्ष्यामीति व्यङ्ग्यम्॥ ३५॥

यदि शक्रविवस्वन्तौ यदि पावकमारुतौ ।
तावहं योधयिष्यामि कुबेरवरुणावपि ॥ ३६ ॥
गिरिमात्रशरीरस्य महापरिघयोधिनः ।
नर्दतस्तीक्ष्णदंष्ट्रस्य बिभीयाद्वै पुरन्दरः ॥ ३७ ॥
पुनर्मां स द्वितीयेन शरेण निहनिष्यति ।
ततोऽहं तस्य पास्यामि रुधिरं काममाश्वस ॥ ३८ ॥

वधेन वै दाशरथेः सुखावहं
जयं तवाहर्त्तुमहं यतिष्ये ।
हत्वा च रामं सह लक्ष्मणेन
खादामि सर्वान् हरियूथमुख्यान् ॥ ३९ ॥
रमस्व कामं पिव चाग्र्यवारुणीं
कुरुष्व कार्य्याणि हितानि विज्वरः ।

उक्तमेव राज्ञः प्रीतयेऽभ्यस्यति सत्यत्वप्रत्यायनाय । अहमिति । यदि शक्रविवस्वन्तौ तत्तद्देवतारूपौ स्यातां तथापि तावहं योधयिष्यामीत्यन्वयः ॥ ३६ ॥

गिरिमात्रशरीरस्य गिरिप्रमाणदेहस्य ॥ ३७ ॥

पुनरिति । यदि मां स राम एकेन शरेणाहत्य पुनर्द्वितीयेन शरेण निहनिष्यति यावत् ततः पूर्वमेव तस्य रुधिरं पास्यामि काममाश्वस ॥ ३८ ॥

मया तु रामे गमिते यमक्षयं
चिराय सीता वशगा भविष्यति ॥ ४० ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
द्वादशः सर्गः ॥ १२ ॥

ते सुखावह जयं दाशरथेर्बधेन तवाहमाहर्त्तुं कर्त्तुं यतिष्ये। फलन्तु दैवायत्तमिति भावः। खादामि खादिष्ये ॥ ३९ ॥ ४० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे द्वादशः सर्गः ॥ १२ ॥

# त्रयोदशः सर्गः ।

रावणं क्रुद्धमाज्ञाय महापार्श्वो महाबलः ।
मुहूर्त्तमनुसञ्चिन्त्य प्राञ्जलिर्वाक्यमब्रवीत् ॥ १ ॥
यः खल्वपि वनं प्राप्य मृगव्यालनिषेवितम् ।
न पिबेन्मधु सम्प्राप्य स नरो बालिशो भवेत् ॥ २ ॥
ईश्वरस्येश्वरः कोऽस्ति तव शत्रुनिबर्हण ! ।
रमस्व सह वैदेह्या शत्रूनाक्रम्य मूर्द्धसु ॥ ३ ॥

क्रुद्धमाज्ञाय । अप्रतिमं कर्म कृतमिति कुम्भकर्णवचः श्रवणेनेति शेषः । मुहूर्त्तमनुसञ्चिन्त्य न्याय्ये भ्रातुर्वचस्यपि मनोऽननुकूलतयैवं कोपश्चेदस्माकं तथोक्तौ शिरश्छेद एव स्यादिति मनोऽनुकूलमेव वाच्यमिति सञ्चिन्त्य ॥ १ ॥

यः खलु पुरुषो मृगव्यालनिषेवितं दुष्प्रवेशं वनं प्राप्य तत्र च मधु सम्प्राप्य तन्मधु न पिबेत् स बालिशो मूर्खः । एतेन प्रथमं रामश्रमो दुरासदस्तं प्राप्य तत्र तत्स्त्रियञ्च प्राप्य तद्भोगाभावो न युक्त इति सूचितम् ॥ २ ॥

ननु बलात् परदारभोगोऽधर्मत्वादीश्वराज्ञाविरोधीत्यत्राह,—ईश्वरस्येति । धर्मफलप्रवर्त्तकानां यमादीनामपि त्वमीश्वरोऽतस्तेयं विचारोऽनुचित इत्यर्थः ॥ ३ ॥

बलात् कुक्कुटवृत्तेन प्रवर्तस्व महाबल ! ।
आक्रम्याक्रम्य सीतां वै तां भुङ्क्ष्व च रमस्व च ॥ ४ ॥
लब्धकामस्य ते पश्चादागमिष्यति किं भयम् ।
प्राप्तमप्राप्तकालं वा सर्वं प्रतिविधास्यसे ॥ ५ ॥
कुम्भकर्णः सहास्माभिरिन्द्रजिच्च महाबलः ।
प्रतिषेधयितुं शक्तौ सवज्रमपि वज्रिणम् ॥ ६ ॥
उपप्रदानं सान्त्वं वा भेदं वा कुशलैः कृतम् ।
समतिक्रम्य दण्डेन सिद्धिमर्थेषु रोचये ॥ ७ ॥
इह प्राप्तान् वयं सर्वाञ्छत्रूंस्तव महाबल ! ।
वशं शस्त्रप्रतापेन करिष्यामो न संशयः ॥ ८ ॥

अननुकूल्ये कथं भोगस्तत्राह,—बलादिति । कुक्कुटवृत्तेन । कुक्कुटीनां कामिकुक्कुटसंयोग क्रोधो जातिधर्म इति वात्स्यायनः । अथापि संक्रुद्धाः कुक्कुटीरनुभुज्य कुक्कुटा यथा सुखिनस्तद्वत् त्वमपि भवेत्यर्थः । तदेव दर्शयति । आक्रम्येति ॥ ४ ॥

अथ त्वाभिलषिते सिद्धे प्रथमतो भयमेव न । महातेजस्त्वात् । अथापि तन्निमित्तं भयं प्राप्नुयात्तदापि तत् सुप्रतिविधेयमेव त्वयेत्याह,—लब्धकामस्येति । प्राप्तं प्राप्तकालं सावधानदशाप्राप्तकालम् । अप्राप्तकालं वा कामभोगाद्यसावधानदशां प्राप्तं वा ॥ ५ ॥

कथमेवं बलं नस्तत्राह,—कुम्भकर्ण इति ॥ ६ ॥

एवमस्माकमेव प्राबल्यात् चतुर्थोपाय एवास्माभिरादरणीय

एवमुक्तस्तदा राजा महापार्श्वेन रावणः ।
तस्य सम्पूजयन् वाक्यमिदं वचनमब्रवीत् ॥ ९ ॥
महापार्श्व ! प्रवक्ष्यतो रहस्यं किञ्चिदात्मनः ।
चिरवृत्तं तदाख्यास्ये यदवाप्तं पुरा मया ॥ १० ॥
पितामहस्य भवनं गच्छन्तीं पुञ्जिकस्थलाम् ।
चञ्चूर्य्यमाणामद्राक्षमाकाशेऽग्निशिखामिव ॥ ११ ॥
सा प्रसह्य मया भुक्ता कृता विवसना ततः ।
स्वयम्भूभवनं प्राप्ता लोलिता नलिनी यथा ॥ १२ ॥
तच्च तस्य तथा मन्ये ज्ञातमासीन्महात्मनः ।
अथ संकुपितो वेधा मामिदं वाक्यमब्रवीत् ॥ १३ ॥

इत्याह,—उपप्रदानमिति। कुशलैर्नीतिकुशलैः। कृतं विषयविशेष इति शेषः ॥ ७ ॥ ८ ॥ ९ ॥

रहस्यं प्रमुदितत्रयवद्गुप्तम्। चिरवृत्तं यन्मया पुरावाप्तं बलादुपभोगस्याप्रकाशकरखतानिमित्तम् आत्मनः किञ्चिदस्तु तदाख्यास्ये ॥ १० ॥

तदेवाह,—पितामहस्येति चञ्चूर्य्यमाणां मद्दर्शनभीतिवशान्निलीयगतिमतीम् ॥ ११ ॥

ततो दर्शनोत्तरं प्रसह्य विवसना कृता सा मया भुक्ता। लोलिता गजेनेति शेषः ॥ १२ ॥

तच्च मम चरितं महात्मनस्तस्य मन्ये निश्चितं ज्ञातमासीत्। मन्ये

अद्यप्रभृति यामन्यां बलान्नारीं गमिष्यसि ।
तदा ते शतधा मूर्द्धा फलिष्यति न संशयः ॥ १४ ॥
इत्यहं तस्य शापस्य भीतः प्रसभमेव ताम् ।
नारोहये बलात् सीतां वैदेहीं शयने शुभे ॥ १५ ॥
सागरस्येव मे वेगो मारुतस्येव मे गतिः ।
नैतद्दाशरथिर्वेद ह्यासादयति तेन माम् ॥ १६ ॥
को हि सिंहमिवासीनं सुप्तं गिरिगुहाशये ।
क्रुद्धं मृत्युमिवासीनं सम्बोधयितुमिच्छति ॥ १७ ॥
न मत्तो निर्गतान् बाणान् द्विजिह्वान् पन्नगानिव ।

इति तिङन्तप्रतिरूपकमव्ययम् । मन्ये शङ्के ध्रुवं प्रायो निश्चयार्था अमी-मता इति कतकः ॥ १३ ॥

फलिष्यति विशीर्णो भविष्यति । क्वचिदेवमेव कुवेरपुत्रनलकूबर-शापोऽपि रम्भानिबन्धनः श्रूयते । तत्रोपपत्तिश्चिन्त्या । अस्य प्रथ-मत्वे तस्यां बलात्कारासम्भवात् । तस्य प्रथमत्वेऽस्यां बलात्कारासम्भवा-दिति केचित् । नलकूबरशापस्य तपोबलेनाकिञ्चित्करत्वादयमेव शापो ब्रह्मास्त्रवदप्रतिबन्धः पाश्चात्य इत्यन्ये ॥ १४ ॥ १५ ॥

अथ महापार्श्वो रावणात्मानमेव श्लाघते । सागरस्येत्यादि । दाश-रथिर्हि यस्मादेतन्मे बलं न वेद । तेन मामासादयति ॥ १६ ॥

को हि । ज्ञातमद्बल इति शेषः । गिरिगुहारूपे आशये निवासे आसीनमिव सुप्तं सिंहमिव ॥ १७ ॥

रामः पश्यति संग्रामे तेन मामभिगच्छति ॥ १८ ॥

क्षिप्रं वज्रसमैर्बाणैः शतधा कार्मुकच्युतैः ।

राममादीपयिष्यामि उल्काभिरिव कुञ्जरम् ॥ १९ ॥

तच्चास्य बलमादास्ये बलेन महता वृतः ।

उदितः सविता काले नक्षत्राणां प्रभामिव ॥ २० ॥

न वासवेनापि सहस्रचक्षुषा

युधास्मि शक्यो वरुणेन वा पुनः ।

मया त्वियं बाहुबलेन निर्जिता

पुरा पुरी वैश्रवणेन पालिता ॥ २१ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
त्रयोदशः सर्गः ॥ १३ ॥

न पश्यति न पश्यति स्म ॥ १८ ॥

आदीपयिष्यामि धक्ष्यामि ॥ १९ ॥ २० ॥

युधा संग्रामेण । न शक्यो जेतुमिति शेषः । वैश्रवणेन पालितेत्यनेन पुष्पकवल्लङ्कापि भगवता कुबेराय दत्तेति सूचितम् ॥ २१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

---

# चतुर्दशः सर्गः।



निशाचरेन्द्रस्य निशम्य वाक्यं
स कुम्भकर्णस्य च गर्जितानि।
विभीषणो राक्षसराजमुख्य-
मुवाच वाक्यं हितमर्थयुक्तम् ॥ १ ॥

वृतो हि बाह्वन्तरभोगराशि-
श्चिन्ताविषः सुस्मिततीक्ष्णदंष्ट्रः।
पञ्चाङ्गुलीपञ्चशिरोऽतिकायः
सीतामहाहिः स्तवकेन राजन्! ॥ २ ॥

अथ विभीषणः प्रहस्तादिवचोऽतिदुर्मन्त्र इत्याह,—निशाचरेन्द्रस्येति। वाक्यं रावणस्य। गर्जितानि कुम्भकर्णस्य। अर्थयुक्तं वास्तवार्थम् ॥ १ ॥

वृत इति। अहिमध्यदेहोऽत्र भोगः। बाह्वन्तरं हृदयभाग एव भोगराशिः शरीरपरिणाहो यस्य सः। चिन्तैव विषं यस्य। शोभनं स्मितमेव तीक्ष्णदंष्ट्रा यस्य। अनुचितकृत्यदर्शनादिजं स्मितम्। तस्याः पञ्चाङ्गुल्य एव शिरांसि यस्य स चासावतिकायश्च। एवम्भूतः सीतामहाहिः स्तवकेन वृतो बद्धः। कण्ठे इति शेषः। यद्वा। केन हेतुना वृतो गृहीत इत्यर्थः ॥ २ ॥

यावन्न लङ्कां समभिद्रवन्ति
वलीमुखाः पर्वतकूटमात्राः ।
दंष्ट्रायुधाश्चैव नखायुधाश्च
प्रदीयतां दाशरथाय मैथिली ॥ ३ ॥

यावन्न गृह्णन्ति शिरांसि बाणा
रामेरिता राक्षसपुङ्गवानाम् ।
वज्रोपमा वायुसमानवेगाः
प्रदीयतां दाशरथाय मैथिली ॥ ४ ॥

न कुम्भकर्णेन्द्रजितौ च राजं-
स्तथा महापार्श्वमहोदरौ वा ।
निकुम्भकुम्भौ च तथातिकायः
स्थातुं समर्था युधि राघवस्य ॥ ५ ॥

जीवंस्तु रामस्य न मोक्ष्यसे त्वं
गुप्तः सवित्राप्यथवा मरुद्भिः ।
न वासवस्याङ्कगतो न मृत्यो-
र्नभो न पातालमनुप्रविष्टः ॥ ६ ॥

वलीमुखेति वानरनाम। पर्वतकूटमात्राः पर्वतशिखरप्रमाणाः ॥ ३ ॥ ४ ॥ ५ ॥

जीवंस्तु रामस्य न मोक्ष्यसे। सन्निधिं प्राप्येति शेषः ॥ ६ ॥

निशम्य वाक्यन्तु विभीषणस्य
ततः प्रहस्तो वचनं बभाषे।
न नोभयं विद्म न दैवतेभ्यो
न दानवेभ्योऽप्यथवा कदाचित्॥ ७॥
न यक्षगन्धर्वमहोरगेभ्यो
भयं न संख्ये पतगोरगेभ्यः।
कथं नु रामाद्भविता भयं नो
नरेन्द्रपुत्रात् समरे कदाचित्॥ ८॥
प्रहस्तवाक्यं त्वहितं निशम्य
विभीषणो राजहितानुकाङ्क्षी।
ततो महार्थं वचनं बभाषे
धर्मार्थकामेषु निविष्टबुद्धिः॥ ९॥
प्रहस्त! राजा च महोदरश्च
त्वं कुम्भकर्णश्च यथार्थजातम्।
ब्रवीत रामं प्रति तन्न शक्यं
यथागतिः स्वर्गमधर्मबुद्धेः॥ १०॥

दैवतेभ्यो नोऽस्माकं भयमिति वयं न विद्म॥ ७॥

संख्ये युद्धे॥ ८॥ ९॥

प्रहस्तेति। यथा यादृशमर्थजातं रामं प्रति यूयं ब्रवीत ब्रूत तन्न शक्यं कर्त्तुमिति शेषः। यथाऽधर्मबुद्धेः स्वर्गमुद्दिश्य गतिरशक्या॥ १०॥

बधस्तु रामस्य मया त्वया च
प्रहस्त ! सर्वैरपि राक्षसैर्वा ।
कथं भवेदर्थविशारदस्य
महार्णवं तर्त्तुमिवाप्लवस्य ॥ ११ ॥
धर्मप्रधानस्य महारथस्य
इक्ष्वाकुवंशप्रभवस्य राज्ञः ।
पुरोऽस्य देवाश्च तथाविधस्य
कृत्येषु शक्तस्य भवन्ति मूढ़ाः ॥ १२ ॥
तीक्ष्णा न तावत्तव कङ्कपत्रा
दुरासदा राघवविप्रमुक्ताः ।
भित्वा शरीरं प्रविशन्ति बाणाः
प्रहस्त ! तेनैव विकत्थसे त्वम् ॥ १३ ॥
भित्वा न तावत् प्रविशन्ति कायं
प्राणान्तिकास्तेऽशनितुल्यवेगाः ।

तर्त्तुं शक्तिरिति शेषः ॥ ११ ॥

तथाविधस्य उक्तस्वभावस्य । कृत्येषु रणमुखस्थसकललोकसंहार-कृत्येषु शक्तस्य पुरो युधि देवाश्च देवा अपि विमूढ़ा भवन्ति ॥ १२ ॥

यावत्ते कायं भित्वा बाणाः पुनस्त्वदिषुधिं न प्रविशन्ति तेनैव हेतुना तावत् हे प्रहस्त त्वं विकत्थसे वृथात्मश्लाघां करोषि । रावणस्य पुरस्तादिति शेषः ॥ १३ ॥

शिताः शरा राघवविप्रमुक्ताः
प्रहस्त ! तेनैव विकत्थसे त्वम् ॥ १४ ॥
न रावणो नातिबलस्त्रिशीर्षो
न कुम्भकर्णस्य सुतो निकुम्भः।
न चेन्द्रजिद्दाशरथिं प्रवोढुं
त्वं वा रणे शक्रसमं समर्थाः ॥ १५ ॥
देवान्तको वापि नरान्तको वा
तथातिकायोऽतिरथो महात्मा।
अकम्पनश्चापि समानसारः
स्थातुं न शक्ता युधि राघवस्य ॥ १६ ॥
अयञ्च राजा व्यसनाभिभूतो
मित्रैरमित्रप्रतिमैर्भवद्भिः।
अन्वास्यते राक्षसनाशनार्थे
तीक्ष्णः प्रकृत्या ह्यसमीक्ष्यकारी ॥ १७ ॥

प्राणान्तिकाः प्राणान्तपीड़ाकरास्ते कायं भित्वा यावन्न प्रविशन्ति तावधि तावद्विकत्थसे ॥ १४ ॥

त्रिशीर्षस्त्रिशिराः। त्वं वेति प्रहस्तनिर्देशः ॥ १५ ॥ १६ ॥

व्यसनैः कामव्यसनैरभिभूतः। अमित्रप्रतिमैः शत्रुतुल्यैः। राक्षसनाशनार्थे राक्षसकुलनाशनिमित्तमन्वास्यसे सेव्यते ॥ १७ ॥

अनन्तभोगेन सहस्रमूर्द्ध्ना
नागेन भीमेन महाबलेन ।
बलात् परिक्षिप्तमिमं भवन्तो
राजानमुत्क्षिप्य विमोचयन्तु ॥ १८ ॥

यावद्धि केशग्रहणात् सुहृद्भिः
समेत्य सर्वैः परिपूर्णकामैः ।
निगृह्य राजा परिरक्षितव्यो
भूतैर्यथा भीमबलैर्गृहीतः ॥ १९ ॥

सुवारिणा राघवसागरेण
प्रच्छाद्यमानस्तरसा भवद्भिः ।
युक्तस्त्वयं तारयितुं समेत्य
काकुत्स्थपातालमुखे पतन् सः ॥ २० ॥

अनन्तभोगेन अपरिच्छिन्नदेहबलेन । परिक्षिप्तं पाशेनेव वेष्टितम् । रघुनाथेन वैरकरणं महासर्पवेष्टनमिवेति निदर्शनालङ्कारोऽत्र व्यङ्ग्यः । १८ ॥

यावदिति वाक्यालङ्कारे । केशग्रहणात् केशग्रहणपर्य्यन्तमप्यनुचितं कृत्वा निगृह्य राजा रक्षितव्यः । भूतैर्गृहीतः पुमांस्तदाप्तैरिव । १९ ॥

सुवारिणा सुचरितरूपवारिमता राघवसागरेण प्रच्छाद्यमानो निमज्ज्यमानः पुनश्च काकुत्स्थरूपपातालमुखे पतन् सोऽयं राजा भवद्भिः समेत्य तारयितुं युक्तः । २० ॥

इदं पुरस्यास्य सराक्षसस्य
राज्ञश्च पथ्यं ससुहृज्जनस्य।
सम्यक् हि वाक्यं स्वमतं ब्रवीमि
नरेन्द्रपुत्राय ददातु मैथिलीम् ॥ २१ ॥
परस्य वीर्यं स्वबलञ्च बुद्ध्वा
स्थानं क्षयञ्चैव तथैव वृद्धिम्।
तथा स्वपक्षेऽप्यनुमृश्य बुद्ध्या
वदेत् क्षमं स्वामिहितं स मन्त्री ॥ २२ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
चतुर्दशः सर्गः ॥ १४ ॥

मैथिलीं रावण इति शेषः ॥ २१ ॥

स्थानं बलादेर्यथा पूर्वमुपचयापचयराहित्येन स्थितिः। तदपेक्षयापचयः क्षयः। तत उपचयो वृद्धिः। प्रकृते हि परस्य वानरसहायतया समन्त्युपचयो वर्त्तते अस्माकन्तु स्वरनाशलङ्कादाहादिकृतोऽपचयः। एतत्सर्वं बुद्ध्यानुमृश्य स्वामिहितं वदेत् स मन्त्री न यूयमित्यर्थः ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

---

## पञ्चदशः सर्गः ।



बृहस्पतेस्तुल्यमतेर्वचस्त-
न्निशम्य यत्नेन विभीषणस्य ।
ततो महात्मा वचनं बभाषे
तत्रेन्द्रजिन्नैर्ऋतयूथमुख्यः ॥ १ ॥

किं नाम ते तात ! कनिष्ठवाक्य-
मनर्थकं वै बहु भीतवच्च ।
अस्मिन् कुले योपि भवेन्न जातः
सोऽपीदृशं नैव वदेन्न कुर्य्यात् ॥ २ ॥

सत्त्वेन वीर्य्येण पराक्रमेण
धैर्य्येण शौर्य्येण च तेजसा च ।

बृहस्पतेर्गुरुणेत्यर्थः । यत्नेन निशम्य दुःखेन श्रुत्वा । महात्मा महामनाः ॥ १ ॥

तात कनिष्ठेत्यसमस्तम् । भीतवद्भीतस्येव अनर्थकमनुपादेयं वाक्यं किं नाम कस्मादुच्यते । अस्मिन् कुले पौलस्त्यकुले यो जातो न भवेदपि तु सहजदुर्बलत्वादिमति मनुष्यादिकुले सोऽपीदृशं वचो न वदेत् । ईदृशञ्च न कुर्य्यात् । करोतेः क्रियासामान्यवचनत्वान्न चिन्तयेदित्यर्थः । एवञ्च हीनजातेरपि हीनस्तव व्यापार इति भावः ॥ २ ॥

एकः कुलेऽस्मिन् पुरुषो विमुक्तो
विभीषणस्तातकनिष्ठ एषः ॥ ३ ॥
किं नाम तौ मानुषराजपुत्रा-
वस्माकमेकेन हि राक्षसेन ।
सुप्राकृतेनापि निहन्तुमेतौ
शक्यौ कुतो भीषयसे स्म भीरो ॥ ४ ॥
त्रिलोकनाथो ननु देवराजः
शक्रो मया भूमितले निविष्टः ।
भयार्पिताश्चापि दिशः प्रपन्नाः
सर्वे तदा देवगणाः समग्राः ॥ ५ ॥
ऐरावतो निःस्वनमुन्नदन् स
निपातितो भूमितले मया तु ।

तदेवाह,—सत्त्वेनेति। सत्त्वं बलम्। वीर्य्यं पराक्रमशक्तिः। पराक्रमस्तत्कार्य्यम्। शौर्य्यं रणादपराङ्मुखत्वम्। धैर्य्यं तत्कारणं स्थैर्य्यम्। तेजः सत्ता भयङ्करत्वम्। एतैर्गुणैरेको विभीषण एव तातस्य कनिष्ठोऽस्मिन् कुले मुक्तः ॥ ३ ॥

हे भीरो प्राकृतेनैकेनापि राक्षसेन रणे तौ राजपुत्रौ हि यतो निहन्तुं शक्यौ अतस्तौ किं नाम गृहीत्वाऽस्मान् कुतो भीषयसे अर्थं-मेन। न तावता बिभीम इत्यर्थः ॥ ४ ॥

तदेवाह,—त्रिलोकेति। भूमितले निविष्टः स्वर्गात् प्रच्याव्य भूमौ

विकृष्य दन्तौ तु मया प्रसह्य
विचासिता देवगणा: समग्रा: ॥ ६ ॥
सोऽहं सुराणामपि दर्पहन्ता
दैत्योत्तमानामपि शोककर्त्ता ।
कथं नरेन्द्रात्मजयोर्न शक्तो
मनुष्ययो: प्राकृतयो: सुवीर्य्य: ॥ ७ ॥
अथेन्द्रकल्पस्य दुरासदस्य
महौजसस्तद्वचनं निशम्य ।
ततो महार्थं वचनं बभाषे
विभीषण: शस्त्रभृतां वरिष्ठ: ॥ ८ ॥
न तात मन्त्रे तव निश्चयोऽस्ति
बालस्त्वमद्याप्यविपक्वबुद्धि: ।
तस्मात्त्वयाप्यात्मविनाशनाय
वचोऽर्थहीनं बहु विप्रलप्तम् ॥ ९ ॥

बन्दीकृत्य स्थापितः। भयार्पिता भयम् अर्पितं येषु ते मदत्तभयाः। सर्वे देवगणाः। दिशः प्रपन्नाः प्राप्ताः ॥ ५ ॥ ६ ॥

कथं न शक्तो नियन्तुं इति शेषः ॥ ७ ॥ ८ ॥

हे तात पुत्र तव मन्त्रे निश्चयो नास्ति कृत्याकृत्यविचारनिश्चय-सामर्थ्यं नास्ति। यतस्त्वमद्याप्यविपक्वबुद्धिः अप्राप्तज्ञानपरिपाकचित्तो

पुत्रप्रवादेन तु रावणस्य
त्वमिन्द्रजिन्मित्रमुखोऽसि शत्रुः।
यस्येदृशं राघवतो विनाशं
निशम्य मोहादनुमन्यसे त्वम्॥ १०॥

त्वमेव वध्यश्च सुदुर्मतिश्च
स चापि वध्यो य इहानयत्त्वाम्।
बालं दृढं साहसिकश्च योऽद्य
प्रावेशयन्मन्त्रकृतां समीपम्॥ ११॥

मूढोऽप्रगल्भोऽविनयोपपन्न-
स्तीक्ष्णस्वभावोऽल्पमतिर्दुरात्मा।
मूर्खस्त्वमत्यन्तसुदुर्मतिश्च
त्वमिन्द्रजिद्बालतया ब्रवीषि॥ १२॥

बाल एव। तस्मात्त्वयाऽर्थहीनमनुपादेयमात्मविनाशनाय बहु विप्रलप्तम् एकेनापि हन्तुं शक्य इति वृथा प्रलपितम्॥ ९॥

हे इन्द्रजित् पुत्रप्रवादेन पुत्रशब्देनोपलक्षितस्त्वं मित्रमुखो मित्रवदवभासमानो वस्तुतः शत्रुरेवासि। तदेवाह,—यस्य रावणस्य राघवत ईदृशं निशम्यापि मोहात्तमनुमन्यसे न वारयसि॥ १०॥

तस्मात्त्वमेव वध्यः पुत्रोऽपि सन्। यश्च वृद्धानां मन्त्रकृतां समीपं प्रावेशयत् यश्चानयत् आगमनार्थं प्रेरितवान् सोऽपि वध्यः॥ ११॥

मूढः कृत्याकृत्यविवेकहीनः। अतएवाप्रगल्भो मतिप्रागल्भ्य-

को ब्रह्मदण्डप्रतिमप्रकाशा-
नर्चिष्मतः कालनिकाशरूपान् ।
सहेत बाणान् यमदण्डकल्पान्
समक्षमुक्तान् युधि राघवेण ॥ १३ ॥

धनानि रत्नानि सुभूषणानि
वासांसि दिव्यानि मणींश्च चित्रान् ।
सीताञ्च रामाय निवेद्य देवीं
वसेम राजन्निह वीतशोकाः ॥ १४ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
पञ्चदशः सर्गः ॥ १५ ॥

हीनः । अविनयेनोपपन्नो युक्तः । अल्पमतिर्दीर्घदर्शनानर्हबुद्धिः । दुरात्मा कामादिदुष्टान्तःकरणः । मूर्खः साहसप्रवृत्तिपरः । उक्तरीत्याऽत्यन्तसुदुर्मतिश्च ॥ १२ ॥

ब्रह्मदण्डेन चतुर्मुखकरगृहीतेन प्रतिमा अमोघानर्गलसंहारशक्त्या समानास्तत्समप्रकाशाश्च तान् । तस्यैव विवरणमर्चिष्मत इति । कालनिकाशरूपान् कालाग्नितुल्यरूपान् ॥ १३ ॥

रत्नानि श्रेष्ठवस्तूनि । निवेद्य समर्प्य ॥ १४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

# षोड़शः सर्गः ।

सुनिविष्टं हितं वाक्यमुक्तवन्तं विभीषणम् ।
अब्रवीत् परुषं वाक्यं रावणः कालचोदितः ॥ १ ॥
वसेत् सह सपत्नेन क्रुद्धेनाशीविषेण च ।
न तु मित्रप्रवादेन संवसेच्छत्रुसेविना ॥ २ ॥
जानामि शीलं ज्ञातीनां सर्वलोकेषु राक्षस ! ।
हृष्यन्ति व्यसनेष्वेते ज्ञातीनां ज्ञातयः सदा ॥ ३ ॥
प्रधानं साधकं वैद्यं धर्मशीलञ्च राक्षस ! ।
ज्ञातयोऽप्यवमन्यन्ते शूरं परिभवन्ति च ॥ ४ ॥

सुनिविष्टं सुनिविष्टार्थतत्त्वम् ॥ १ ॥

सपत्नेनापि सह वसेत् । न तु मित्रप्रवादेन मित्रपदव्यपदेश्येन शत्रुसेविना शत्रुपक्षपातिना वसेत् । सपत्ने चित्तस्य द्वेषकोट्यैव प्रतिष्ठा मित्रप्रवादे तु द्वेष्यत्वेन स्निग्धत्वेन चेति परमदुःखमिति तत्सहवासनिषेधः । शत्रुसेविनेत्यनेनास्य भगवद्भक्तत्वं सूचितम् ॥ २ ॥

शीलं स्वभावं जानामि । तदेव विवृणोति । हृष्यन्तीति ॥ ३ ॥

प्रधानं ज्येष्ठत्वादिना प्राप्तराज्यम् । साधकं राज्यरक्षादेरिति शेषः । वैद्यं विद्यावन्तम् । अवमन्यन्ते गुणवत्त्वेऽपि गुणान्न गृह्णन्ति । शूरं परिभवन्ति च । रन्ध्रमन्विष्येति शेषः ॥ ४ ॥

नित्यमन्योऽन्यसंहृष्टा व्यसनेष्वाततायिनः ।
प्रच्छन्नहृदया घोरा ज्ञातयस्तु भयावहाः ॥ ५ ॥
श्रूयन्ते हस्तिभिर्गीताः श्लोकाः पद्मवने पुरा ।
पाशहस्तान्नरान् दृष्ट्वा शृणुष्व गदतो मम ॥ ६ ॥
नाग्निर्नान्यानि शस्त्राणि न नः पाशा भयावहाः ।
घोराः स्वार्थप्रयुक्तास्तु ज्ञातयो नो भयावहाः ॥ ७ ॥
उपायमेते वक्ष्यन्ति ग्रहणे नात्र संशयः ।
कृत्स्नाद्भयाज्ज्ञातिभयं सुकष्टं विदितञ्च नः ॥ ८ ॥

ज्ञातयो ज्ञातिरूपाः । आततायिनः । अग्निदो गदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते आततायिनः । ते प्रच्छन्नहृदयाः प्रच्छन्नं तत्कार्य्यं प्रवृत्ता अतएव घोरा अन्योऽन्यं व्यसनेष्वापत्सु संहृष्टा भवन्ति । अतएव ता ज्ञातयो भयावहाः ॥ ५ ॥

ज्ञातिभीतिं हस्तिगीतेन स्पष्टयति । श्रूयन्त इति । हस्तिभिः पद्मवनवर्त्तिदिव्यवनगजैः । स्वबन्धनाय प्रवृत्तान् पाशहस्तान् दृष्ट्वा पुरा पूर्वं हस्तिभिर्गीता ये श्लोकाः श्रूयन्ते तान् गदतो मम वक्त्रात् शृणु ॥ ६ ॥

स्वार्थप्रयुक्ताः स्वार्थपराः । हस्तिपकाद्याश्राकरणे उत्तमभोजनलाभादिस्वार्थपराः ॥ ७ ॥

एते मज्ज्ञातिभूताः पूर्वगृहीता गजाः । वक्ष्यन्ति करिष्यन्तीत्यर्थः । नो विदितञ्च श्रुतमोऽनुभूतञ्चेत्यर्थः ॥ ८ ॥

विद्यते गोषु सम्पन्नं विद्यते ज्ञातितो भयम्।
विद्यते स्त्रीषु चापल्यं विद्यते ब्राह्मणे तपः॥ ९॥
ततो नेष्टमिदं सौम्य! यदहं लोकसत्कृतः।
ऐश्वर्य्यमभिजातश्च रिपूणां मूर्द्धि च स्थितः॥ १०॥
यथा पुष्करपत्रेषु पतितास्तोयबिन्दवः।
न श्लेषमधिगच्छन्ति तथानार्य्येषु सौहृदम्॥ ११॥
यथा शरदि मेघानां सिञ्चतामपि गर्जताम्।
न भवत्यम्बुसंक्लेदस्तथानार्य्येषु सौहृदम्॥ १२॥
यथा मधुकरस्तर्षाद्रसं विन्दन्न तिष्ठति।
तथा त्वमपि तत्रैव तथानार्य्येषु सौहृदम्॥ १३॥

सम्पन्नं हव्यकव्यसाधनसम्पत्॥ ९॥

तत इति रावणवाक्यम्। अहं लोकसत्कृत इति यत् तत् ते नेष्टं न प्रियमिति मन्ये। तथैश्वर्य्यप्राप्त्यादिकमपि॥ १०॥

अनार्य्येषु क्रूरस्वभावेषु॥ ११॥

यथा गर्जतां सिञ्चतामपि मेघानां सम्बन्धे पृथिव्या अम्बुसंक्लेदोऽन्व्याप्तता न भवति तथानार्य्येषु सौहृदं निष्फलमिति भावः। यद्वा। वर्षासु गर्जतां सिञ्चतामपि मेघानां शरदि नाम्बुसंक्लेदस्तथा अनार्य्येषु सौहृदमल्पकालमात्रस्थायीत्यर्थः॥ १२॥

यथा मधुकरस्तर्षादभिलाषाद्रसं पुष्परसं विन्दन्नपि तत्रैव न

यथा मधुकरस्तर्षात् काशपुष्पं पिबन्नपि।
रसमत्र न विन्देत तथानार्य्येषु सौहृदम्॥ १४॥
यथा पूर्वं गजः स्नात्वा गृह्य हस्तेन वै रजः।
दूषयत्यात्मनो देहं तथानार्य्येषु सौहृदम्॥ १५॥
योऽन्यस्त्वेवंविधं ब्रूयाद्वाक्यमेतन्निशाचर!।
अस्मिन् मुहूर्त्ते न भवेत् त्वान्तु धिक् कुलपांसन!॥ १६॥
इत्युक्तः परुषं वाक्यं न्यायवादी विभीषणः।
उत्पपात गदापाणिश्चतुर्भिः सह राक्षसैः॥ १७॥

तिष्ठति। तथानार्य्येषु सौहृदमपि न तिष्ठति। त्वमपि तथा तादृशः अनार्य्योऽसीत्यर्थः॥ १३॥

काशपुष्पं पिबतोऽपि रसालाभस्तथाऽनार्य्येषु सौहृदं कुर्वतः फलालाभ इति भावः॥ १४॥

यथा गजः पूर्वं स्नात्वा हस्तेन रजो गृहीत्वा यथात्मनो देहं दूषयति स्नानकृतनैर्मल्यं नाशयति। तथाऽनार्य्याः पूर्वं कृतं स्नेहं स्वयमेव नाशयन्तीत्यर्थः॥ १५॥

त्वत्तोऽन्यो यद्येवं ब्रूयात्तदा तस्मिन् मुहूर्त्ते न भवेन्न जीवेत्। त्वान्तु धिक् सोदरत्वेन बधानर्हत्वाद्धि धिक्कृतिरेव ते दण्ड इति भावः॥ १६॥

परुषं वाक्यं पूर्वोक्तम्। अत्रावस्थानेऽपि एतैः सह नाशस्य दुर्वार-

अब्रवीच्च तदा वाक्यं जातक्रोधो विभीषणः ।
अन्तरिक्षगतः श्रीमान् भ्राता वै राक्षसाधिपम् ॥ १८ ॥
स त्वं भ्रान्तोऽसि मे राजन् ! ब्रूहि मां यद्यदिच्छसि ।
ज्येष्ठो मान्यः पितृसमो न च धर्मपथे स्थितः ।
इदं हि परुषं वाक्यं न क्षमाम्यग्रजस्य ते ॥ १९ ॥
सुनीतं हितकामेन वाक्यमुक्तं दशानन ! ।
न गृह्णन्त्यकृतात्मानः कालस्य वशमागताः ॥ २० ॥

त्यात् ज्येष्ठोऽप्यसावुत्पथप्रतिपन्नस्य कार्य्याकार्य्यमजानतः । गुरोरप्यव-लिप्तस्य परित्यागो विधीयते इति शास्त्रबलात् सर्वथा परित्याज्य एवे-त्यालोच्य तत्सभां हित्वा खमुत्पपात चतुर्भिर्मन्त्रिभिः ॥ १७ ॥ १८ ॥

अथ सभासदां ज्येष्ठत्यागेनाधर्मोऽयमिति शङ्कानिरासार्थमाह,— स त्वं भ्रान्त इत्यादि । ज्येष्ठत्वादिगुणकोऽपि न धर्मपथे स्थितः । परदाराहरणादिरूपानेकाधर्मशालित्वात् । पतितैः सह संव्यवहारो न विद्यते इति स्मृतेः । पतितमाचार्य्यं ज्ञातिं वा द्रष्टुं न गच्छेत् । न चास्मादुपयुञ्जीत यदृच्छासन्निपाते । उपसंगृह्य तूष्णीं व्रजेदिति स्मृतेश्चाग्रजस्यापि ते इदं परुषं वाक्यं न क्षमामि । अतःपरमिह स्थित्वेति शेषः ॥ १९ ॥

सुनीतं सुनिश्चितागामिफलबोधकं वाक्यं हितकामेनोक्तम् । तत्तु त्वया न गृहीतमिति शेषः । तादृश्येव लोकस्थितिरित्याह,—न गृह्ण-न्तीति । सुनीतवाक्यार्थमिति शेषः । २० ।

पुरुषाः सुलभा राजन् ! सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ २१ ॥
बद्धं कालस्य पाशेन सर्वभूतापहारिणा ।
न नश्यन्तमुपेक्षे त्वां प्रदीप्तं शरणं यथा ॥ २२ ॥
दीप्तपावकसङ्काशैः शितैः काञ्चनभूषणैः ।
न त्वामिच्छाम्यहं द्रष्टुं रामेण निहतं शरैः ॥ २३ ॥
शूराश्च बलवन्तश्च कृतास्त्राश्च नरा रणे ।
कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः ॥ २४ ॥
तन्मर्षयतु यच्चोक्तं गुरुत्वाद्धितमिच्छता ।
आत्मानं सर्वथा रक्ष पुरीञ्चेमां सराक्षसाम् ।
स्वस्ति तेऽस्तु गमिष्यामि सुखीभव मया विना ॥ २५ ॥
निवार्य्यमाणस्य मया हितैषिणा
न रोचते ते वचनं निशाचर ! ।

उक्तमेवार्थं पुनर्मारीचोक्तस्मरणेनाह,—सुलभा इति ॥ २१ ॥

सर्वभूतापहारिकालपाशेन बद्धं नश्यन्तं त्वां नोपेक्षे। अतो मया किञ्चिद्धितमुक्तमिति शेषः ॥ २२ ॥

निहतं त्वां द्रष्टुं नेच्छामि। अतएवोक्तमिति शेषः ॥ २३ ॥

कालाभिपन्नाः अधर्मतः कालपाशबद्धाः ॥ २४ ॥

यदुक्तमप्रियमिव हितं तद्भवान् मर्षयतु क्षमताम् ॥ २५ ॥

परान्तकाले हि गतायुषो नरा
हितं न गृह्णन्ति सुहृद्भिरीरितम् ॥ २६ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
षोड़शः सर्गः ॥ १६ ॥

मया विना सुखीभवेति व्यङ्ग्योक्तिः ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे षोड़शः सर्गः ॥ १६ ॥

## सप्तदशः सर्गः ।



इत्युक्त्वा परुषं वाक्यं रावणं रावणानुजः ।
आजगाम मुहूर्त्तेन यत्र रामः सलक्ष्मणः ॥ १ ॥
तं मेरुशिखराकारं दीप्तामिव शतह्रदाम् ।
गगनस्थं महीस्थास्ते ददृशुर्वानराधिपाः ॥ २ ॥
ये चाप्यनुचरास्तस्य चत्वारो भीमविक्रमाः ।
तेऽपि वर्मायुधोपेता भूषणोत्तमभूषिताः ॥ ३ ॥
स च मेघाचलप्रख्यो वज्रायुधसमप्रभः ।
वरायुधधरो वीरो दिव्याभरणभूषितः ॥ ४ ॥

अथ विभीषणस्य रामसमीपगमनम् । इतीति । परुषम् आत्मानं सर्वथेत्यादिरूपम् । रावणानुजो विभीषणः । यत्र सलक्ष्मणो रामस्तत्राजगाम । उत्पथप्रतिपन्नत्वाद्देहसम्बन्धेन गुरुं रावणं परित्यज्य जगद्गुरुं स्मरणमात्रेण सकलपापहरं गुरुं रामं प्रत्याजगामेत्याशयः ॥ १ ॥

मेरुशिखराकारम् उन्नतत्वपीवरत्वरत्नबहुलत्वैस्तदाकारम् । दीप्तत्वगगनस्थत्वाभ्यां शतह्रदासाम्यम् ॥ २ ॥ ३ ॥ ४ ॥

तमात्मपञ्चमं दृष्ट्वा सुग्रीवो वानराधिपः।
वानरैः सह दुर्द्धर्षश्चिन्तयामास बुद्धिमान् ॥ ५ ॥
चिन्तयित्वा मुहूर्त्तन्तु वानरांस्तानुवाच ह।
हनुमत्प्रमुखान् सर्व्वानिदं वचनमुत्तमम् ॥ ६ ॥
एष सर्व्वायुधोपेतश्चतुर्भिः सह राक्षसैः।
राक्षसोऽभ्येति पश्यध्वमस्मान् हन्तुं न संशयः ॥ ७ ॥
सुग्रीवस्य वचः श्रुत्वा सर्व्वे ते वानरोत्तमाः।
शालानुद्यम्य शैलांश्च इदं वचनमब्रुवन् ॥ ८ ॥
शीघ्रं व्यादिश नो राजन्! बधायैषां दुरात्मनाम्।
निपतन्ति हता यावद्धरण्यामल्पचेतनाः ॥ ९ ॥
तेषां सम्भाषमाणानामन्योऽन्यं स विभीषणः।
उत्तरं तीरमासाद्य खस्थ एव व्यतिष्ठत ॥ १० ॥

आत्मपञ्चमम् आत्मपञ्चमो यस्य तम्। मन्त्रिचतुष्टयसहितं तमिति यावत् ॥ ५ ॥ ६ ॥ ७ ॥

शालान् शालवृक्षान् ॥ ८ ॥

यावद्धतानि पतन्ति। निपतिष्यन्तीत्यर्थः ॥ ९ ॥

तेषामित्यनादरे षष्ठी। तानन्योऽन्यं सम्भाषमाणाननादृत्य रामस्य भगवतः परमदयालुत्वभावनया तेषामनादरः। खस्थ एव व्यतिष्ठतेति तिष्ठतेर्द्विःप्रयोगो निर्भयत्वेनावस्थानसूचनाय ॥ १० ॥

स उवाच महाप्राज्ञः स्वरेण महता महान्।
सुग्रीवं तांश्च सम्प्रेक्ष्य खस्थ एव विभीषणः ॥ ११ ॥
रावणो नाम दुर्वृत्तो राक्षसो राक्षसेश्वरः।
तस्याहमनुजो भ्राता विभीषण इति श्रुतः ॥ १२ ॥
तेन सीता जनस्थानात् हृता हत्वा जटायुषम्।
रुद्धा च विवशा दीना राक्षसीभिः सुरक्षिता ॥ १३ ॥

महाप्राज्ञः सर्वदोषाकररावणत्यागात् निर्दुष्टसर्वगुणाकररामाश्रयणाच्च महाप्राज्ञत्वम्। अतएव महान् महता स्वरेण सर्वलोकशरण्यस्यार्त्तरवश्रवणाय स्वरमहत्त्वम्। धीरगम्भीरत्वं वा स्वरे महत्त्वम्। तेन निर्भयत्वप्रकाशः ॥ ११ ॥

रावणो नामेत्यादिना स्वस्य रामानुकूल्य तत्प्रातिकूल्यराहित्यादिरूपशरणागत्यङ्गबोधनम्। आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम्। रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा। आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिरित्युक्ते रावणत्वेन सर्वलोकपीडकत्वं दुर्वृत्तत्वेनाकृत्यकर्तृत्वं राक्षसत्वेन जातिक्रौर्य्यं राक्षसेश्वर इत्यनेन अत्यक्रौर्य्यं तद्भ्रातृत्वेन स्वस्यापि दोषवत्त्वकथनादूर्वंहानिरूपकार्पण्यमुक्तम् ॥ १२ ॥

दुर्वृत्तमेवाह,—तेनेति। राक्षसीभिः सुरक्षितेत्यनेन सीतापातिव्रत्याहानिः सूचिता। तद्धानौ क्षिताभीरक्षणानुपयोग इति भावः ॥ १३ ॥

तमहं हेतुभिर्वाक्यैर्विविधैश्च न्यदर्शयम् ।
साधु निर्यात्यतां सीता रामायेति पुनः पुनः ॥ १४ ॥
स च न प्रतिजग्राह रावणः कालचोदितः ।
उच्यमानं हितं वाक्यं विपरीत इवौषधम् ॥ १५ ॥
सोऽहं परुषितस्तेन दासवच्चावमानितः ।
त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः ॥ १६ ॥
निवेदयत मां क्षिप्रं राघवाय महात्मने ।
सर्वलोकशरण्याय विभीषणमुपस्थितम् ॥ १७ ॥

हेतुभिर्हेतुमद्भिः । निर्यात्यतां दीयतामिति हेतुमद्भिर्वाक्यैः पुनः पुनः साधु न्यदर्शयमित्यन्वयः । अनेन भगवदानुकूल्यसङ्कल्पः प्रातिकूल्याभावश्च दर्शितः ॥ १४ ॥

विपरीतो मुमूर्षुः ॥ १५ ॥

दासवदवमानितः । भ्रातापि सन्निति शेषः । शरणं गत इत्यनेनात्मनिक्षेपरूपमङ्गं दर्शितम् ॥ १६ ॥

सर्वलोकशरण्याय मम वंशानुरूपश्च धर्मात्मा च भविष्यतीति कैकस्यै ब्रह्मपुत्रेण विश्रवसा वरदानात् सात्त्विकत्वेन प्रथमतस्तथैव लब्धवरत्वेन च विभीषणस्य सर्वलोकस्रष्टुः सर्वलोकान्तर्यामिणश्चायमवतार इति ज्ञानात् सर्वलोकशरण्यत्वमहात्मत्वज्ञानं रामविषये बोध्यम् । राघवाय किन्त्वर्थिनामर्थितदानदीक्षाकृतव्रतस्लाघ्यमिदं कुलं न इत्यादिवचनैः प्रसिद्धवैभवे रघुवंशेऽवतीर्णाय । अनेनार्थिप्रार्थितवैफल्याभावो

एतत्तु वचनं श्रुत्वा सुग्रीवो लघुविक्रमः ।
लक्ष्मणस्याग्रतो रामं संरब्धमिदमब्रवीत् ॥ १८ ॥
प्रविष्टः शत्रुसैन्यं हि प्राप्तः शत्रुरतर्कितः ।
निहन्यादन्तरं लब्ध्वा उलूको वायसानिव ॥ १९ ॥
मन्त्रे व्यूहे नये चारे युक्तो भवितुमर्हसि ।
वानराणाञ्च भद्रं ते परेषाञ्च परन्तप ! ॥ २० ॥

र्पितः। क्षिप्रमित्यनेन शीतलसुरभिसलिलं प्राप्य तृषितस्येव विलम्बासहत्वम्। उपस्थितं शरणत्वेन प्राप्तं निवेदयत शरणागत इति ज्ञापयत। अनेन गोप्तृत्ववरणं रक्षित्वव्यवस्थामेवेति विश्वासश्च दर्शितः ॥ १७ ॥

एतद्विभीषणोक्तम्। अथ लोकदृष्ट्या शत्रुपक्षो न विश्वसनीय इति मत्वा राममपि तथैव बोधयतीत्याह,—लक्ष्मणस्येति। संरब्धं संरम्भोपेतमिति क्रियाविशेषणम् ॥ १८ ॥

इदं पदार्थमाह,—प्रविष्ट इति। कश्चिदस्मच्छत्रू राक्षसत्वात्-पूर्वं शत्रो रावणस्य सैन्यं प्रविष्ट इदानीमतर्कितागमन एव सन्नस्मत् सैन्यं प्राप्तः सो ऽवान्तरं लब्ध्वा उलूको वायसानिव नो हन्यात् ॥ १९ ॥

यदेवमतो मन्त्र इति। वानराणाञ्च परेषाञ्च क्रमादनुग्रहनिग्रहार्थं त्वं मन्त्रे कार्य्याकार्य्यविचारे। व्यूहे सेनासन्निवेशे। नये सैन्यनयने यद्वा विचार्य्य निश्चितानामुपायानां तत्तद्विषयप्रयोगे। चारे परबलवृत्तान्तज्ञानफलके चारपुरुषप्रवर्त्तने। युक्तः सावधानो भवितुमर्हसि। एवं सति ते भद्रमित्यर्थः ॥ २० ॥

अन्तर्द्धानगता ह्येते राक्षसाः कामरूपिणः।
शूराश्च निकृतिज्ञाश्च तेषां जातु न विश्वसेत् ॥ २१ ॥
प्रणिधी राक्षसेन्द्रस्य रावणस्य भवेदयम्।
अनुप्रविश्य सोऽस्मासु भेदं कुर्य्यान्न संशयः ॥ २२ ॥
अथवा स्वयमेवैष छिद्रमासाद्य बुद्धिमान्।
अनुप्रविश्य विश्वस्ते कदाचित् प्रहरेदपि ॥ २३ ॥
मित्राटविबलञ्चैव मौलभृत्यबलं तथा।
सर्व्वमेतद्बलं ग्राह्यं वर्जयित्वा द्विषद्बलम् ॥ २४ ॥
प्रकृत्या राक्षसो ह्येष भ्राताऽमित्रस्य वै प्रभो!।
आगतश्च रिपुः साक्षात् कथमस्मिंश्च विश्वसेत् ॥ २५ ॥

उक्तमेवैतदित्याह,—अन्तरिति। अन्तर्द्धानगताः अदृश्यसञ्चार-स्वभावाः। निकृतिज्ञाः कपटोपायेन गूढ़विप्रियकरणाभिज्ञाः ॥ २१ ॥

किञ्च। योऽयमागतः स रावणस्य प्रणिधिश्चार एव भवेत्। अस्तु किं ततस्तत्राह,—अन्विति। भेदम् अङ्गदादिविषये ॥ २२ ॥

विश्वस्ते प्राप्तविश्वासेऽस्मद्बल इति शेषः ॥ २३ ॥

अन्यनेनाप्यागते नास्माकमधिकं बलमेव भविष्यतीत्याशङ्क्येने-त्याह,—मित्रेति। मित्रेण आटविकेनारण्यकेन च प्रेषितं बलं मित्रा-टविबलम्। मौलम् आप्तबन्धुप्रहितं बलम्। मूलं वंश्योक्तौ लोके इति कोशः। भृत्यबलं तत्कालभृतिदानसम्पादितबलम्। मौलभृत्य-बलमिति समाहारद्वन्द्वः। द्विषत्प्रेषितं बलं द्विषद्बलम् ॥ २४ ॥

रावणस्यानुजो भ्राता विभीषण इति श्रुतः ।
चतुर्भिः सह रक्षोभिर्भवन्तं शरणं गतः ॥ २६ ॥
रावणेन प्रणीतं हि तमवेहि विभीषणम् ।
तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ! ॥ २७ ॥
राक्षसो जिह्मया बुद्ध्या सन्दिष्टोऽयमिहागतः ।
प्रहर्त्तुं मायया छन्नो विश्वस्ते त्वयि चानघ ! ॥ २८ ॥
वध्यतामेष तीव्रेण दण्डेन सचिवैः सह ।
रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः ॥ २९ ॥
एवमुक्त्वा तु तं रामं संरब्धो वाहिनीपतिः ।
वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत् ॥ ३० ॥

अस्य द्विषद्बलत्वमेव दर्शयति । प्रकृत्येति । अमित्रस्य रावणस्य ॥ २५ ॥

अमित्रभ्रातृत्वं तद्वचनादेव निश्चितमित्याह,—रावणस्येति । इति तन्मुखादेव श्रुतमित्यर्थः ॥ २६ ॥

इदमपि वचो नवास्तवमित्याह,—रावणेनेति । प्रणीतं प्रेषितम् अवेहि । अतस्तस्य निग्रहं क्षमं मन्ये । क्षमवतां युक्तव्यापारवताम् । क्षमावतां वा । क्षम आर्षः ॥ २७ ॥

त्वयि प्रहर्त्तुं रावणेन सन्दिष्टः सन्निहागतः ॥ २८ ॥

अत एव वध्यताम् ॥ २९ ॥

वाक्यकुशलं राममित्यन्वयः ॥ ३० ॥

सुग्रीवस्य तु तद्वाक्यं श्रुत्वा रामो महाबलः ।
समीपस्थानुवाचेदं हनुमत्प्रमुखान् कपीन् ॥ २१ ॥
यदुक्तं कपिराजेन रावणावरजं प्रति ।
वाक्यं हेतुमदत्यर्थं भवद्भिरपि च श्रुतम् ॥ २२ ॥
सुहृदामर्थकृच्छ्रेषु युक्तं बुद्धिमता सदा ।
समर्थेनोपसन्देष्टुं शाश्वतीं भूतिमिच्छता ॥ २३ ॥
इत्येवं परिपृष्टास्ते स्वं स्वं मतमतन्द्रिताः ।
सोपचारं तदा राममूचुः प्रियचिकीर्षवः ॥ २४ ॥
अज्ञातं नास्ति ते किञ्चित् त्रिषु लोकेषु राघव ! ।
आत्मानं पूजयन् राम ! पृच्छस्यस्मान् सुहृत्तया ॥ २५ ॥

अथ रामः शरणागतं श्रुत्वा आनिनीषुरपि प्रागेव सुग्रीववाक्य-भङ्गस्यायुक्तत्वमालोच्य विचारं प्रस्तावयति । सुग्रीवस्येति ॥ २१ ॥

सुग्रीवस्य सुमतितां स्वहितैषित्वञ्च मन्त्रिभ्य आह,—यदुक्तमिति । मन्त्रे व्यूहे इत्यादिनेति शेषः । अत्यर्थं हेतुमत् भृशं युक्तिमत् ॥ २२ ॥

तस्य युक्तत्वमाह,—सुहृदामिति । सुहृदां शाश्वतीं भूतिमिच्छता बुद्धिमता प्रशस्तबुद्धिना समर्थेन विचारसमर्थेन सदार्थकृच्छ्रेषु कृत्या-कृत्यसन्देहेषु उपसन्देष्टुं सम्यगुपदेष्टुं युक्तम् । उपदेशकरणमुचित-मिति भावः ॥ २३ ॥

इत्येवमिति । मित्रैर्मित्रेभ्य उपदेष्टव्यमेवेति यतोऽतो यूयमपि स्वं स्वं मतं ब्रूतेत्येवं पृष्टा इत्यर्थः स्वं स्वं मतमूचुरित्यन्वयः ॥ २४ ॥

त्वं हि सत्यव्रतः शूरो धार्मिको दृढविक्रमः ।
परीक्ष्यकारी स्मृतिमान्निसृष्टात्मा सुहृत्सु च ॥ ३६ ॥
तस्मादेकैकशस्तावत् ब्रुवन्तु सचिवास्तव ।
हेतुतो मतिसम्पन्नाः समर्थाश्च पुनस्तथा ॥ ३७ ॥
इत्युक्ते राघवायाथ मतिमानङ्गदोऽग्रतः ।
विभीषणपरीक्षार्थमुवाच वचनं हरिः ॥ ३८ ॥
शत्रोः सकाशात् सम्प्राप्तः सर्वथा तर्क्य एव हि ।
विश्वासनीयः सहसा न कर्त्तव्यो विभीषणः ॥ ३९ ॥

सोपचारमूचुरित्युक्तं तत्रोपचारं दर्शयति । श्लाघतमिति । आत्मानम् अस्माकमात्मानम् । सुहृत्तया सुहृद्भावप्रकाशेन पूजयन्नित्यर्थः । यद्वा । एवं वानरेश्वरोऽप्ययं सुहृदित्यात्मनः कीर्त्तिं प्रथयन्नित्यर्थः ॥ ३५ ॥

सुहृत्सु निसृष्टात्मा कृतविश्वासः । सत्यव्रतः रक्षःस्वपि शरणागतरक्षणव्रतपालकः ॥ ३६ ॥

तव सचिवा हेतुतो हेतुयुक्तं ब्रुवन्त्विति विधिः ॥ ३७ ॥

इत्युक्ते इति । हनूमदादिमन्त्रिभिरिति शेषः । विभीषणपरीक्षार्थं तत्परीक्षाफलकं वचनं राघवायाङ्गदो युवराजत्वादग्रत उवाच ॥ ३८ ॥

तर्क्य एव शङ्क्य एव । विश्वासनीयः विश्वासप्रयुक्तव्यवहारार्हः । सहसा न कर्त्तव्योऽपि तु शनैरित्यर्थः ॥ ३९ ॥

छादयित्वात्मभावं हि चरन्ति शठबुद्धयः।
प्रहरन्ति च रन्ध्रेषु सोऽनर्थः सुमहान् भवेत् ॥ ४० ॥
अर्थानर्थौ विनिश्चित्य व्यवसायं भजेत ह।
गुणतः संग्रहं कुर्य्याद्दोषतस्तु विवर्जयेत् ॥ ४१ ॥
यदि दोषो महांस्तस्मिंस्त्यज्यतामविशङ्कितम्।
गुणान् वापि बहून् ज्ञात्वा संग्रहः क्रियतां नृप ! ॥ ४२ ॥
शरभस्त्वथ निश्चित्य सार्थं वचनमब्रवीत्।
क्षिप्रमस्मिन्नरव्याघ्र ! चारः प्रतिविधीयताम् ॥ ४३ ॥
प्रणिधाय हि चारेण यथावत् सूक्ष्मबुद्धिना।
परीक्ष्य च ततः कार्य्यो यथान्यायं परिग्रहः ॥ ४४ ॥
जाम्बवांस्त्वथ संप्रेक्ष्य शास्त्रबुद्ध्या विचक्षणः।
वाक्यं विज्ञापयामास गुणवद्दोषवर्जितम् ॥ ४५ ॥

तत्र हेतुमाह,—छादयित्वेति। भावमान्तरम् ॥ ४० ॥

तस्य तस्य गुणदोषपरीक्षणेनार्थानर्थौ हिताहितत्वे निश्चित्य तदनुरूपं व्यवसायमुद्योगं भजेतेतिह प्रसिद्धम्। कस्मिन् सति कीदृशो व्यवसायस्तत्राह,—गुण इति। गुणभूयस्त्वेनेत्यर्थः ॥ ४१ ॥

तदेव विवृणोति। यदि दोष इति ॥ ४२ ॥

सार्थं सोपपत्तिकम्। चारो दूतः। प्रतिविधीयतां प्रेष्यताम् ॥ ४३ ॥

प्रणिधाय चारं प्रेषयित्वा सूक्ष्मबुद्धिना चारेण च यथान्यायं परीक्ष्य ततः संग्रहः कार्य्यः ॥ ४४ ॥ ४५ ॥

बद्धवैराच्च पापाच्च राक्षसेन्द्राद्विभीषणः ।
अदेशकाले सम्प्राप्तः सर्वथा शङ्क्यतामयम् ॥ ४६ ॥
ततो मैन्दस्तु संप्रेक्ष्य नयापनयकोविदः ।
वाक्यं वचनसम्पन्नो बभाषे हेतुमत्तरम् ॥ ४७ ॥
अनुजो नाम तस्यैष रावणस्य विभीषणः ।
पृच्छ्यतां मधुरेणायं शनैर्नरपतीश्वर: ॥ ४८ ॥
भावमस्य तु विज्ञाय तत्त्वतस्त्वं करिष्यसि ।
यदि दुष्टो न दुष्टो वा बुद्धिपूर्वं नरर्षभ ! ॥ ४९ ॥
अथ संस्कारसम्पन्नो हनूमान् सचिवोत्तमः ।
उवाच वचनं श्लक्ष्णमर्थवन् मधुरं लघु ॥ ५० ॥

अदेशकाले स्वामिसन्देशं विहाय रिपुदेशागमनेनानुचितदेशप्राप्तत्वम् । स्वामिनः सङ्कटकाले तत्परित्यागानौचित्यादनुचितकालप्राप्तोऽतः शङ्क्यताम् । सर्वथा शङ्काविषयत्वेन त्यागार्ह एवायमिति भावः ॥ ४६ ॥

हेतुमत्तरम् अतिशयेन हेतुमत् ॥ ४७ ॥

अनुजो नामेति । नामेति प्रसिद्धौ । अतोऽयं मधुरेण सौम्यभावेनैव पृच्छ्यताम् । गूढदूतमुखेन रावणस्य वृत्तान्तमिति शेषः ॥ ४८ ॥

अस्य बुद्धिपूर्वकदुष्टत्वादुष्टत्वान्यतरत्वतो निर्णीय ततस्त्वं तत्तदुचितकृत्यं करिष्यसि ॥ ४९ ॥

अथ हनूमान् सुग्रीवोक्तं वध्यत्वं राजवचनत्वादत्यन्ताविचार-

न भवन्तं मतिश्रेष्ठं समर्थं वदतां वरम्।
अतिशाययितुं शक्तो बृहस्पतिरपि ब्रुवन्॥ ५१॥
न वादान्नापि सङ्घर्षान्नाधिक्यान्न च कामतः।
वक्ष्यामि वचनं राजन्! यथार्थं रामगौरवात्॥ ५२॥
अर्थानर्थनिमित्तं हि यदुक्तं सचिवैस्तव।
तत्र दोषं प्रपश्यामि क्रिया न ह्युपपद्यते॥ ५३॥

मूलकमित्युपेक्ष्य गुणादिपरिचया परिग्रहत्यागरूपमङ्गदादिवचोऽनुवादपूर्वकं दूषयन्निदानीमेव दोषाभावनिर्णयस्य सुकरत्वादविलम्बेन परिग्रह एव युक्त इत्याह,—अथेति। संस्कारसम्पन्नः सकलशास्त्रज्ञानजसंस्कारयुक्तः। श्लक्ष्णां श्लक्ष्णसन्दर्भाम्। अर्थवत् प्रकटार्थवत्। लघु मितशब्दं मधुरं श्रवणमात्रेण सुखकरम्॥ ५०॥

समर्थं सकलशास्त्रार्थतत्त्वनिरूपणसमर्थम्। अतिशाययितुम् अभिभवितुम्॥ ५१॥

वादात् तर्ककुशलत्वप्रकटनाद्धेतोः। सङ्घर्षात् सचिवान्तरस्पर्द्धावशात्। आधिक्यात् अधिकबुद्धिमत्त्वाभिमानात्। कामतः वचनेच्छातः। यद्देवमतो यथार्थमेव वक्ष्यामि। गौरवात् कार्यगौरवानुरोधेनेत्यर्थः॥ ५२॥

तत्रादावङ्गदमतं दूषयति। अर्थेत्यादि। अर्थानर्थनिमित्तं गुणदोषनिश्चयनिमित्तं तव सचिवैरङ्गदादिभिर्यदुक्तं तत्र दोषमंशेन वैगुण्यं पश्यामि। शङ्कितव्यः परीक्षणीयश्चेति यदुक्तं तद्युक्त-

ऋते नियोगात् सामर्थ्यमवबोद्धुं न शक्यते ।
सहसा विनियोगोऽपि दोषवान् प्रतिभाति मे ॥ ५४ ॥
चारप्रणिहितं युक्तं यदुक्तं सचिवैस्तव ।
अर्थस्यासम्भवात्तत्र कारणं नोपपद्यते ॥ ५५ ॥

मेव । किन्त्वेवं निश्चय इत्यनुक्तेरिदमनुत्तरम् । तदेवाह,—क्रिया न ह्युपपद्यते । क्रिया उत्तररूपा । यद्वा । परीक्षणरूपा क्रियेदानीं नोपपद्यत इत्यर्थः ॥ ५३ ॥

तदेवाह,—ऋते इति । नियोगादृते तमाहूय तस्मै वृत्तान्त निवेदनरूपनियोगं विना सामर्थ्यं ज्ञानोपादानौचित्यं बोद्धुं न शक्यते । तर्हि शीघ्रमानयेति चेत्तत्राह,—सहसा हठाद्विनियोगोऽपि राजसन्निधिप्रापणपूर्वं वृत्तान्तप्रतिपादनानुज्ञादानरूपनियोगोऽपि दोषवानेव प्रतिभाति । तस्मात् समर्थद्वारा तदीयवृत्तान्तं ज्ञात्वा भवत्समीपानयनमुचितमिति भावः ॥ ५४ ॥

तर्हि शरभमतमेव तवापि किमित्याशङ्क्य तन्मतं दूषयति । चारेति । प्रणिहितमिति भावे निष्ठा । चारप्रेषणं युक्तमिति यदुक्तं तव सचिवैः शरभादिभिस्तदपि नोपपद्यते इति शेषः । यतस्तत्र चारप्रेषणे कारणं नोपपद्यते तत्प्रयोजनं नास्ति । कुतः । अर्थस्यासम्भवादेव तत्साध्यप्रयोजनासम्भवादेव । अयं भावः । असन्निहितेऽप्रकटवृत्तान्ते तज्ज्ञानाय तत् प्रेषणं न तु प्रत्यक्षे प्रकटतया स्ववृत्तान्तवेदक इति ॥ ५५ ॥

अदेशकाले सम्प्राप्त इत्ययं यद्विभीषणः।
विवक्षा तत्र मेऽस्तीयं तां निबोध यथामति॥ ५६॥
एष देशस्य कालस्य भवतीह यथा तथा।
पुरुषात् पुरुषं प्राप्य तथा दोषगुणावपि॥ ५७॥
दौरात्म्यं रावणे दृष्ट्वा विक्रमस्य तथा त्वयि।
युक्तमागमनं ह्यत्र सदृशं तस्य बुद्धितः॥ ५८॥
अज्ञातरूपैः पुरुषैः स राजन्! पृच्छ्यतामिति।
यदुक्तमत्र मे प्रेक्षा काचिदस्ति समीक्षिता॥ ५९॥

अथ जाम्बवदुक्तमदेशकालप्राप्तिरूपं शङ्कास्पदं स्वरूपासिद्ध्या दूषयति। अदेशेति। अयं विभीषणोऽदेशकाले सम्प्राप्त इति यज्जाम्बवतोक्तं तत्र तद्विषये एष देशः कालश्च यथा भवति तथेयं मे विवक्षास्तीत्यन्वयः॥ ५६॥

तं विवक्षाविषयमाह,—पुरुषादिति। पापात् पुरुषाद्रावणादुत्तमं पुरुषं त्वां प्राप्य बुद्ध्या निश्चित्य तथा द्वयोस्तयोर्दोषगुणावपि प्राप्य बुद्ध्या निश्चित्य यदत्र युक्तं कालोचितमागमनं तत् तस्यैव बुद्धितः सदृशम्। पुरुषादित्यर्धोक्तस्यैव विवरणम्। दौरात्म्यमिति। परदारापहरणाद्रावणे दौरात्म्यम्। त्वयि विक्रमश्च कक्षपुटे रावणं कृत्वा चतुःसागरीं प्रदक्षिणां कृतवतो वालिन एकेनैव बाणेन त्वया हननात् दृष्ट्वेत्यर्थः॥ ५७॥ ५८॥

अथैनमाकार्य्य तद्वचन तद्भावदर्शनाभ्यामेव तद्दोषगुणदोषावव-

पृच्छ्यमानो विशङ्केत सहसा बुद्धिमान् वचः ।
तत्र मित्रं प्रदुष्येत मिथ्या पृष्टं सुखागतम् ॥ ६० ॥
अशक्यं सहसा राजन् ! भावो बोद्धुं परस्य वै ।
अन्तरेण स्वरैर्भिन्नैर्नैपुण्यं पश्यतां भृशम् ॥ ६१ ॥

गन्तव्याविति स्वमतं स्थिरीकर्त्तुं चारप्रेषणपक्षे दोषान्तरमाहाज्ञातेति ; अज्ञातकुलशीलप्रयोजनैः पुरुषैश्चारैः स विभीषणः पृच्छ्यतामिति यन्मन्दैनोक्तमत्र मे मया समीक्षिता सम्यक् परीक्षिता काचित् प्रेक्षा धीरस्ति ॥ ५९ ॥

का सेत्यत्राह,—पृच्छ्यमान इति । अज्ञातपुरुषैः को भवान् कुत आगत इति किमर्थमागत इत्यादि पृच्छ्यमानः प्रष्टृस्वरूपज्ञानरहितो बुद्धिमान् पुरुषस्तद्वचः सहसा द्राक् विशङ्केत । नेमं जानामि केनायं प्रेषितः किमर्थं पृच्छतीति शङ्काकुल एव भवति केवलं न तु उत्तरयति किञ्चित् । यदि तु प्रष्टुः शनैर्ज्ञानं भवति तदा सुखागतं सुखार्थमागतं मित्रन्तत्तदा मिथ्या पृष्टं वृथा पुनः पृष्टं सत् मित्रभावात् प्रदुष्येत भिद्येत किमर्थमेवं विचारयति पुरुषमुखेनेति सत्यस्नेहं भवति । एवञ्च मित्रहानिरिति भावः ॥ ६० ॥

किञ्च तस्य शत्रुत्वे तदभिप्रायश्चारैरपि दुर्ज्ञेय इत्याह,—अशक्यमिति । परस्य शत्रोर्भावश्चारेण सहसा द्राक् प्रश्नमात्रेण वेत्तुं ज्ञातुमशक्य एव अज्ञातेन पृष्टे उत्तरस्यैवादानात् । शत्रुप्रहितत्वेन ज्ञाते प्रत्युत दण्डस्यापि प्रसङ्गात् । नन्वेवं जगति चारप्रेषणनैष्फल्यप्रसङ्ग

न त्वस्य ब्रुवतो जातु लक्ष्यते दुष्टभावता।
प्रसन्नं वदनञ्चापि तस्मान् मे नास्ति संशयः॥ ६२॥
अशङ्कितमतिः स्वस्थो न शठः परिसर्पति।
न चास्य दुष्टवागस्ति तस्मान् मे नास्ति संशयः॥ ६३॥

इति चेन्न। बहुकालं तत्र स्थितौ तद्वचनैस्तद्व्यवहारैस्तत्प्रसङ्गे हर्षा-मर्षादिभिश्च तस्य शत्रुमित्रत्वज्ञानाय तत्परीक्षणासम्भवात्। यद्वेवमतोऽ-न्तरेणेति। अन्तरेण स्वरैर्भिन्नैर्नैपुण्यं पश्यतां भृशमिति प्राचीनः पाठः। अन्तरेण व्यवहारमध्ये भिन्नैः स्वरैर्विलक्षणस्वरैः कण्ठध्वनिभि-र्नैपुण्यं सदसदन्यतरत्वनिश्चयं पश्यतां कुर्वतां भवानिति शेषः। तत्र बाष्पकण्ठत्वे भीत्या पूर्वापरासङ्गतकथने चासन्नन्यथा सन्निति निश्ची-यतामित्याशयः। अन्तःस्वभावैर्गीतैस्तैर्नैपुण्यं पश्यता भृशमिति पाठे भृशमत्यर्थं स्वस्मिन्नैपुण्यं पश्यता जानतापि शक्या अन्तःस्वभावैरापाततः प्रसन्नार्थत्वेऽपि गूढाभिप्रायैर्गीतैर्भाषितैः परस्वभावोऽभिप्रायः सहसा वेत्तुं न शक्य इत्यर्थः॥ ६१॥

ननु त्वयैव प्रथमं परीक्ष्यतामिति चेन्मया परीक्षित एवेत्याह,—न त्वस्येति। दुष्टभावता वचनचेष्टादिभिर्दुष्टान्तःकरणता न लक्ष्यते प्रसन्नवदनता च दृश्यते॥ ६२॥

उक्तार्थस्यैव स्थैर्यायाभ्यासः। अशङ्कितेति। अशङ्कितमतिर्नि-श्चितशरणागमनमतिः रामशरणागमनमेव ममेष्टसाधनमिति सुप्रति-ष्ठितचित्तः। अतएव स्वस्थः सुस्वभाव एव भूत्वाऽयं परिसर्पति। न शठो गूढविप्रियधीर्भूत्वा। दुष्टवाक् दुष्टशब्दार्थदोषवती॥ ६३॥

आकारश्छाद्यमानोऽपि न शक्यो विनिगूहितुम् ।
बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम् ॥ ६४ ॥
देशकालोपपन्नञ्च कार्य्यं कार्य्यविदां वर ! ।
सफलं कुरुते चिप्रं प्रयोगेणाभिसंहितम् ॥ ६५ ॥
उद्योगं तव सम्प्रेच्य मिथ्यावृत्तञ्च रावणम् ।
वालिनश्च हतं श्रुत्वा सुग्रीवञ्चाभिषेचितम् ॥ ६६ ॥
राज्यं प्रार्थयमानस्तु बुद्धिपूर्व्वमिहागतः ।
एतावत्तु पुरस्कृत्य विद्यते तस्य संग्रहः ॥ ६७ ॥

ननु शठोऽप्येवं वच्यतीत्याशङ्क्याहाकार इति। आकार आन्तरो भावो यावच्छक्यं छाद्यमानोऽपि न सर्व्वात्मना निगूहितुं शक्यः। कुतस्तत्राह,—बलादिति। भावं शठभावं साधुभावञ्च विवृणोत्येव। अन्तर्य्यामिदेवतेति शेषः। सा हि तथा वचनादिप्रेरणया तं प्रकटीकरोतीत्यर्थः। अस्य चिरकालपवादान्निर्दुष्टत्वं निर्णीतं इति भावः॥ ६४ ॥

नन्वदुष्टस्यास्यां वेलायामत्रागमने किं प्रयोजकमित्याशङ्कायां देशकालौचित्यज्ञानमेवेत्याह,—देशेति। हे कार्य्यविदां वर अस्येदम् अत्रागमनरूपं कार्य्यं देशकालोपपन्नमेव उक्तरीत्या। किञ्चेदृशं कार्य्यं प्रयोगेणाभिसंहितमनुष्ठानेन सम्पादितम् आत्मानं चिप्रं सफलं कुरुते इत्यर्थः॥ ६५ ॥

एतदेव विवृणोति। उद्योगमिति। उद्योगं रावणवधविषयम्।

यथा शक्तिमयोक्तन्तु राक्षसस्यार्जवं प्रति।
प्रमाणं त्वं हि शेषस्य श्रुत्वा बुद्धिमतां वर! ॥ ६८ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
सप्तदशः सर्गः ॥ १७ ॥

मिथ्यावृत्तं मिथ्याबलगर्वितं पापवृत्तञ्च दृष्ट्वा। रावणादप्यधिकबलं वालिनं हतं श्रुत्वा। बुद्धिपूर्वं वालिवदेव रावणं हनिष्यति सुग्रीववदेव मह्यं राज्यं दास्यति शरणागतवत्सलः सर्वथा मां रक्षिष्यति इति बुद्धिपूर्वम्। उपसंहरति। एतावदिति ॥ ६६ ॥ ६७ ॥

मया राक्षसस्यार्जवमुद्दिश्य त्वां प्रति यथाशक्त्युक्तम्। अधिकं वक्तुन्तु न युज्यते। श्रुत्वा शेषस्य कृत्यस्य निर्णये तु त्वमेव प्रमाणम् ॥ ६८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे सप्तदशः सर्गः ॥ १७ ॥

---

# अष्टादशः सर्गः ।



अथ रामः प्रसन्नात्मा श्रुत्वा वायुसुतस्य ह ।
प्रत्यभाषत दुर्द्धर्षः श्रुतवानात्मनि स्थितम् ॥ १ ॥
ममापि च विवक्षास्ति काचित प्रति विभीषणम् ।
श्रोतुमिच्छामि तत् सर्वं भवद्भिः श्रेयसि स्थितैः ॥ २ ॥
मित्रभावेन सम्प्राप्तं न त्यजेयं कथञ्चन ।

वायुसुतस्य वचनमिति शेषः । श्रुतवान् सकलशास्त्रश्रवणवान् । आत्मनि स्वचित्ते स्थितं स्वचित्तस्थितार्थप्रतिपादकमिति यावत् ॥ १ ॥

ममापि भवदुक्तेभ्यो विलक्षणं विभीषणं प्रति काचिद्विवक्षास्ति तत्सर्वं मद्विवक्षितं मम श्रेयसि स्थितैर्भवद्भिः श्रोतुं श्रवणसन्निहितं कर्त्तुमिच्छामि । इयमुक्तिः सर्वमतप्रतिक्षेपकस्वमतश्रवणेन सुग्रीवादीनां व्याकुलचित्ततामाभूदिति तेषामुपलालनाय ॥ २ ॥

तत्रान्यैर्दोषोक्तिपूर्वमग्राह्यत्वमुक्तम् । हनुमता निर्दोषत्वोक्तिपूर्वं ग्राह्यत्वमुक्तम् । भगवांस्तु प्रौढ्या सुग्रीवाद्युक्तं रन्ध्रप्रहारित्वमङ्गीकृत्यापि परिग्राह्यत्वं स्थापयति । मित्रेति । राघवं शरणं गत इति प्रसन्नवचनानुमितमित्रभावेन मित्रत्वेन सम्प्राप्तं पत्नीस्निग्धभावेन प्राप्तं पतिमिव कथञ्चन सर्वदेशकालावस्थास्वपि न त्यजेयम् । भवदुक्त-

दोषो यद्यपि तस्य स्यात् सतामेतदगर्हितम् ॥ ३ ॥
सुग्रीवस्त्वथ तद्वाक्यमाभाष्य च विमृश्य च ।
ततः शुभतरं वाक्यमुवाच हरिपुङ्गवः ॥ ४ ॥
स दुष्टो वाप्यदुष्टो वा किमेष रजनीचरः ।
ईदृशं व्यसनं प्राप्तं भ्रातरं यः परित्यजेत् ॥ ५ ॥

बन्धुप्रहारमिथ्याविभीषिकाभीतः सन्निति शेषः । ननु शत्रुपक्षत्वेन दुष्टं कथं न त्यजसीत्यत्राह,—दोष इति । वस्तुतस्तत्र दोष एव नास्ति । शत्रुपक्षत्वेऽपि ततो भीततया शरणागतत्वात् । यद्यपि तस्य दोषो भवदुक्तच्छन्दतिरिक्तस्य स्यात्तथापि तं न त्यजेयमिति सम्बन्धः । यद्यपि दुष्टजनपरिग्रहः शिष्टगर्हितस्तथापि वध्यं प्रपन्नं न प्रतिप्रयच्छन्तीत्येवमादिशास्त्रात् शरणागतदुष्टपरिग्रहणं सतामगर्हितं पूजितमित्यर्थः ॥ ३ ॥

गर्हितत्वमेव ज्ञापयितुं सुग्रीवः प्रागुक्तादधिकं स्वविवक्षितं दोषं विभीषणे कथयति । सुग्रीव इति । आभाष्य अनूद्य । ततो विमर्शानन्तरम् । शुभतरं प्रागुक्तदोषादप्यधिको यः समर्थतरापरिग्राह्यत्वे हेतुभूतो दोषस्तत्प्रतिपादकम् ॥ ४ ॥

स एष रजनीचरः दुष्टो वा प्रागुक्तदोषयुक्तो वा । अदुष्टो वा तद्रहितो वा । तथापि असौ ग्राह्यः किं नैव ग्राह्यः कृतघ्नत्वादित्याह,—ईदृशमिति । प्रबलशत्रुग्रासरूपं व्यसनं प्राप्तं भ्रातरं यः परित्यजेदत्यजत ॥ ५ ॥

को नाम स भवेत्तस्य यमेष न परित्यजेत् ।
वानराधिपतेर्वाक्यं श्रुत्वा सर्वानुदीक्ष्य तु ॥ ६ ॥
ईषदुत्स्मयमानस्तु लक्ष्मणं पुण्यलक्षणम् ।
इति होवाच काकुत्स्थो वाक्यं सत्यपराक्रमः ॥ ७ ॥
अनधीत्य च शास्त्राणि वृद्धाननुपसेव्य च ।
न शक्यमीदृशं वक्तुं यदुवाच हरीश्वरः ॥ ८ ॥
अस्ति सूक्ष्मतरं किञ्चिद्यथात्र प्रतिभाति मा ।
प्रत्यक्षं लौकिकञ्चापि वर्त्तते सर्वराजसु ॥ ९ ॥

तस्यास्य को नाम स भवेत । यमेष सङ्कटे न परित्यजेत् । तस्मा-
दस्मानपि सङ्कटे त्यक्ष्यत्येव । विश्वासघातिकृतघ्नत्वादित्यर्थः । सर्वान-
दीक्ष्य सुग्रीवस्योत्तरकक्ष्याचालनसामर्थ्यं सर्वहरीननुभाव्य । तथा
लक्ष्मणमुदीक्ष्येषदुत्स्मयमानो बालत्वेन मद्वृत्तापरिज्ञानात्तवाप्येत-
देव सम्मतमितीषद्धासं कुर्वन् इति होवाच ॥ ६ ॥ ७ ॥

सुग्रीववैमनस्यपरिहाराय तद्वाक्यं प्रशस्योत्तरमाह,—अनधी-
त्येति । हरीश्वरो यदुवाचेदृशं वृद्धसेवारहितेन शास्त्राध्ययनरहितेन
च न वक्तुं शक्यम् ॥ ८ ॥

अथैतदुपर्य्यपि मम किञ्चिद्भातीत्याह,—अस्तीति । अत्र भ्रातृ-
परित्यागरूपदोषोद्भावनेऽपि सर्वराजसु प्रत्यक्षं प्रत्यक्षसिद्धं लौकिक-
मन्ततः सर्वलोकप्रसिद्धं विद्यते । मा मां प्रतिभाति च तत् सूक्ष्मतरं
किञ्चिदर्थरूपमस्ति ॥ ९ ॥

अमित्रास्तत् कुलीनाश्च प्रातिदेश्याश्च कीर्त्तिताः।
व्यसनेषु प्रहर्त्तारस्तस्मादयमिहागतः॥ १०॥
अपापास्ततकुलीनाश्च मानयन्ति स्वकान् हितान्।
एष प्रायो नरेन्द्राणां शङ्कनीयस्तु शोभनः॥ ११॥

तदर्थरूपं प्रतिपादयितुं तदुपयुक्तां लोकस्थितिमाह,—अमित्रा इति। राज्ञामभित्राः शत्रवो द्विधा कीर्त्तिताः। ततकुलीना ज्ञातयः प्रातिदेश्या आसन्नदेशवासिनश्चेति। ते द्विविधा अपि स्वविरोधिज्ञातेः स्वविरोधिन आसन्नदेशवर्त्तिनश्च व्यसनेषु आध्यात्मिकादित्रिप्रकारकष्टेषु तस्य प्रहर्त्तारो भवन्तीति प्रसिद्धम्। अस्तु किं तत इत्यत्राह,—तस्मादिति। नानाप्रकारस्वपीड़ाप्रवृत्तज्ञातिभयात् स्वत्राणार्थमिहागतः। यद्वा। तस्माद्व्यसनप्रहर्त्तृज्ञातित्वाद्व्यसनिनं रावणं प्रहर्त्तुमयं विभीषण इहागत इत्यर्थः॥ १०॥

अथ शत्रुताप्रयोजकमपि न ज्ञातित्वमात्रं किन्तु परस्परानिष्टचिन्तायुक्तत्वमाह,—अपापा इति। अपापाः परस्परानिष्टचिन्तारहिताः। धर्ममार्गेण परस्परहितैषिणश्च ततकुलीना ज्ञातयो ये ते स्वकान् हितान् मानयन्ति। एष उक्तोऽर्थः प्रायो बाहुल्येन लोके उपलभ्यते। नरेन्द्राणान्तु शोभनोऽपि हितैष्यपि ज्ञातिः शङ्कनीय एव। महत्तरराज्यैश्वर्य्यलोभसम्भवात्। उपजापवशादनिष्टचिन्ताया भरतमात्रादौ दृष्टत्वाच्च। एवञ्च स्वस्माच्छङ्कितरावणतोऽनिष्टं सम्भाव्य तं त्यक्त्वाऽयमागतः। किञ्च। यो हिंसार्थमभिक्रान्तं हन्ति मन्युरेव

यस्तु दोषस्त्वया प्रोक्तो ह्यादानेऽरिबलस्य च।
तत्र ते कीर्त्तयिष्यामि यथाशास्त्रमिदं शृणु॥ १२॥
न वयं तत्कुलीनाश्च राज्यकाङ्क्षी च राक्षसः।
पण्डिता हि भविष्यन्ति तस्मात् ग्राह्यो विभीषणः॥ १३॥
अव्यग्राश्च प्रहृष्टाश्च ते भविष्यन्ति सङ्गताः।

मन्युं स्पृशति न तस्मिन् दोष इत्यापस्तम्बोक्तेः रावणनाशार्थमागमनेऽप्यस्य न दोष इत्याशयः॥ ११॥

एवं भ्रातृत्यागदोषं परिहृत्य यः पूर्वं परिग्रहे रन्ध्रप्रहारदोष उक्तस्तमनूद्य परिहरति। य इति। अरिबलस्य शत्रुपक्षस्यादाने परिग्रहे यो दोषो रन्ध्रप्रहाररूपो दोष उक्तस्तद्विषयं यथाशास्त्रं यथान्यायमुत्तरं कीर्त्तयिष्यामि तच्छृणु॥ १२॥

तदेवाह,—नेति। वयं न तत्कुलीनाः ज्ञातयः। चात्प्रातिदेश्याश्च न भवामः। अतोऽस्मद्राज्यजिघृक्षाभावान्नास्मासु प्रहारोऽनेन कार्य्यः किन्तु निजराज्यमेव स्वज्ञातिनिरासमस्मन्मुखेन सम्पाद्य काङ्क्षति। तदाह,—राज्यकाङ्क्षीति। अतो नोपजीव्यविरोधं करिष्यति। ननु सर्वैस्तमःप्रधानत्वाद्राक्षसैः कथमेवं विचारकरणमत आह,—पण्डिता इति। पर्य्यालोचनपूर्वमनुष्ठेयनिश्चयसमर्थाः पण्डितास्ते सर्वत्र भविष्यन्त्येव। एवञ्चैकजन्यत्वेऽपि यथा कुम्भकर्णोऽतितामसो रावणस्तु अतिराजस एवमयमतिसात्त्विकतयैवं विचारशील इति भावः। उप संहरति। तस्मादिति॥ १३॥

प्रणादश्च महानेषोऽन्योऽन्यस्य भयमागतम्।
इति भेदं गमिष्यन्ति तस्मात् प्राप्तो विभीषणः॥ १४॥
न सर्वे भ्रातरस्तात! भवन्ति भरतोपमाः।
मद्विधा वा पितुः पुत्राः सुहृदो वा भवद्विधाः॥ १५॥

उक्तहेत्वनुवादपूर्वं ग्राह्यत्वमुपसंहरति। अव्यग्रा इति सार्द्धेन। ते ज्ञातयोऽव्यग्रा अनाकुला निश्चयवन्त इति यावत्। प्रहृष्टाः अन्योऽन्यं सन्तुष्टाश्च साम्राज्यात् सङ्गताः परस्परमिलिता भविष्यन्तीति सर्वलोकप्रसिद्धम्। तेभ्योऽन्ये तु उक्तविपरीताः। इति प्रागुक्तरीत्या पापमूलराज्यलोभादिना भेदं गमिष्यन्ति। ततोऽनन्तरमस्य ज्ञातिवर्गस्य एष लोकप्रसिद्धः प्रणादो युद्धरूपकोलाहलो भवति। अन्योऽन्यस्यान्योऽन्यतो भयञ्चागतं भवतीति लोकस्थितिर्यतस्तस्मादयमेतावत्कालमनपगतसौभ्रात्रोऽपि केनचिन्निमित्तेनाद्यप्राप्तवैरः शरणमागतो ग्राह्य एवेति कतकव्याख्या। तीर्थस्तु नेष ततोऽस्येति पठित्वा अस्य भीतस्यैवैष महान् प्रणादः श्रूयतेऽतस्ततो बलवतो रावणादस्य विभीषणस्य भयमागतमित्यात्मत्राणार्थमागतः परिग्राह्य एवेत्यर्थः। इतरत्तु प्रागुक्तदेव व्याख्येयमित्याह॥ १४॥

ननु भरतादिष्वेतद्दोषादर्शनाद्भ्रातॄणामीदृग्भेदासम्भवोऽत आह,—न सर्वे इति। राज्यादीच्छया प्राप्तसौभ्रात्रत्यागस्याभावो भरतादन्येन परमदुष्करः। तेन पितृदत्तराज्यत्यागात्। लक्ष्मणादेस्तु तदप्रसक्त्या न तदुक्तिः। मद्विधा वा पुत्राः सुखलिप्सया पितृवाक्यलङ्घनरहिताः। सुहृदो वा भवद्विधाः। त्यक्तापि सर्वसौख्यं सर्वा-

एवमुक्तस्तु रामेण सुग्रीवः सहलक्ष्मणः ।
उत्थायेदं महाप्राज्ञः प्रणतो वाक्यमब्रवीत् ॥ १६ ॥
रावणेन प्रणिहितं तमवेहि निशाचरम् ।
तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ! ॥ १७ ॥
राक्षसो जिह्मया बुद्ध्या सन्दिष्टोऽयमिहागतः ।
प्रहर्त्तुं त्वयि विश्वस्ते विश्वस्ते मयि वानघ ! ॥ १८ ॥
लक्ष्मणे वा महाबाहो स वध्यः सचिवैः सह ।
रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः ॥ १९ ॥

कारेण सर्वबलेन सर्वयत्नेन च मित्रकार्य्यसाधकः सुहृत् परमदुर्लभ इति भावः। अत्र भूतार्थकथनरूपत्वान्नात्मप्रशंसादोषो भगवतः। स्वगुणाविष्क्रियादोषो नास्ति भूतार्थशंसन इति दण्ड्युक्तेः ॥ १५ ॥

एवं न्यायतो विभीषणस्य ग्राह्यत्वे प्रतिपादितेऽपि प्रीत्यतिशयेनानिष्टसम्भावनया स्वमतमेव सम्यगित्याशयेनाह,—एवमिति। सह लक्ष्मणा इत्यनेनोभयोरैकमत्यं दर्शितम्। उत्थाय प्रणत इत्यन्वयः ॥ १६ ॥

प्रणिहितमवेहि न तु वैरस्यादागतमित्यर्थः। तद्वाक्यमविश्वास्यमित्याशयः ॥ १७ ॥

उक्तमेवाह,—जिह्मयेति। कुटिलयेत्यर्थः। विश्वस्ते मयीत्युक्तिः स्वव्यसनादपि स्वाश्रितव्यसनमसह्यतुदमिति मत्वेति बोध्यम् ॥ १८ ॥

ताहच्छलबुद्धित्व हेतू रावणभ्रातृत्वम् ॥ १९ ॥

एवमुक्त्वा रघुश्रेष्ठं सुग्रीवो वाहिनीपतिः।
वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत् ॥ २० ॥
स सुग्रीवस्य तद्वाक्यं रामः श्रुत्वा विमृश्य च।
ततः शुभतरं वाक्यमुवाच हरिपुङ्गवम् ॥ २१ ॥
स दुष्टो वाप्यदुष्टो वा किमेष रजनीचरः।
सूक्ष्ममप्यहितं कर्त्तुं मम शक्तः कथञ्चन ॥ २२ ॥
पिशाचान् दानवान् यक्षान् पृथिव्याञ्चैव राक्षसान्।
अङ्गुल्यग्रेण तान् हन्यामिच्छन् हरिगणेश्वर ! ॥ २३ ॥

मौनमुपागमत। त्वित्वाचोक्तमतोऽधिकं प्रभौ न वक्तुं युक्तमित्या-शयेनेति शेषः ॥ २० ॥

विमृश्य च रन्ध्रप्रहारदोषे सति सम्भवेऽप्यस्मास्वकिञ्चित्कर इति विचार्य्य ॥ २१ ॥

तमेव निश्चयं दर्शयति। स दुष्ट इति। स एष दुष्टोऽदुष्टो वा यथा कथञ्चिदस्तु। अथापि मम सूक्ष्ममपि अहितं कर्त्तुं कथञ्चन कथमपि शक्तः किम्। न कथमपि शक्य इत्यर्थः ॥ २२ ॥

कुत इत्यत्रापरिमेयनिजशक्तिं तच्छक्तिप्रतिहन्तृत्वमाह,—पिशाचा-निति। अङ्गुल्यग्रेण एकाङ्गुल्या अग्रमात्रेणापि। अनेन सङ्कल्पसिद्धि-रैश्वर्यं चिह्नमुक्तम्। यद्येवमस्मदादिसंग्रहो व्यर्थस्तत्राहेच्छन्निति। स्वस्य निरतिशयमहिमानं तात्त्विकं ब्रह्मभावं प्रकटीकर्त्तुमिच्छन् यदि

श्रूयते हि कपोतेन शत्रुः शरणमागतः ।
अर्चितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ॥ २४ ॥
स हि तं प्रतिजग्राह भार्य्याहर्त्तारमागतम् ।
कपोतो वानरश्रेष्ठ ! किं पुनर्मद्विधो जनः ॥ २५ ॥
ऋषेः कण्वस्य पुत्रेण कण्डुना परमर्षिणा ।

स्यां तदा तथैव कुर्य्याम् । सम्प्रति तु देवभावोपेतनिजविलासेरणात्मे-रवध्यत्वमस्य मयैव दत्तमिति तत्परिपालनाय स्वदिव्यभावं स्वयमाच्छाद्य मानुषमर्य्यादायां स्थितः । तद्भावप्रकटनायैव सीतावियोगप्रयुक्तरोदनवद्धवानरसहायमेलनम् । वस्तुतो न स्वातिरिक्तसहायापेक्षा मम । मनुष्याणां संसारमर्य्यादाज्ञापनं तदनुवर्त्तनफलमिति भावः ॥ २३ ॥

एवं रन्ध्रप्रहारभीतिं दूरीकृत्य शरणागतरक्षणं परमो धर्म इति कपोताख्यानेन दर्शयति । श्रूयते इति । भार्य्याहर्त्तृत्वात् कपोतशत्रु-र्व्याधः शरणं गृहं स्वनिवासभूतं वृक्षमागतो यथान्यायमर्चितोऽग्न्यानयनशीतनिवारणाद्युपचारैर्यथोचितं पूजितः । स्वमांसैर्निमन्त्रितो भोजनाय प्रार्थितः ॥ २४ ॥

एवं रीत्या स हि सोऽपि तिर्य्यक्जन्तुरपि भार्य्याहर्त्तारं शरणागतं प्रतिजग्राह नोपेक्षितवानिति श्रूयते किं पुनर्मद्विधो जनः सकलधर्मरहस्यवेत्ता क्षत्रियो भूत्वाऽकृतापकारं शरणागतं न प्रतिगृह्णीयादित्यर्थः । शरणागतं कायवाग्व्यापारैरसन्दिग्धमेवेत्या-शयः ॥ २५ ॥

श्रूयते गाथा पुरा गीता धर्मिष्ठा सत्यवादिना ॥ २६ ॥
बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम्।
न हन्यादानृशंस्यार्थमपि शत्रुं परन्तप! ॥ २७ ॥
आर्त्तो वा यदि वा दृप्तः परेषां शरणं गतः।
अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना ॥ २८ ॥
स चेद्भयाद्वा मोहाद्वा कामाद्वापि न रक्षति।
स्वया शक्त्या यथान्यायं तत्पापं लोकगर्हितम् ॥ २९ ॥

नन्वत्र विध्यदर्शनाद्धर्मानधिकृतकपोतचेष्टा कथं धर्मे प्रमाणं स्यादतो विधिमपि दर्शयति। श्रूयत इति। तद्गीतगाथायां प्रामाण्यप्रदर्शनाय सत्यवादिनेत्यन्तानि ऋषिविशेषणान्युक्तानि। सत्यवादिना अबाधितार्थप्रतिपादनव्रतेन। अतएव तद्गीतगाथा या धर्मिष्ठा धर्मपरेत्यर्थः ॥ २६ ॥

तां गाथामाह,—बद्धामिति। याचन्तं शरणमित्यर्थः। आनृशंस्यार्थमघातुकत्वसिद्ध्यर्थम् आश्रितरक्षणरूपपरमधर्मपालनार्थं वा ॥ २७ ॥

आर्त्तो वा दृप्तो वेति गुणदोषौदासीन्यपरं वचनम्। परेषां शत्रूणां भयाच्छरणागतोऽरिरपि पूर्वं कृतवैरोऽपि कृतात्मना धर्मशास्त्रशिक्षितचित्तेन प्राणान् परित्यज्यापि रक्षणीयः ॥ २८ ॥

तथाऽकरणे पापमाह,—तस्य धर्मस्य नित्यत्वबोधनाय। स चेदिति। केनापि शरणतयाश्रित इत्यर्थः भयात्तद्रक्षणे तच्छत्रोः सकाशात्तस्माद्वा भयमुत्प्रेक्ष्य। ततो हेतोः मोहात् कार्यान्तरपारवश्यजनितविस्मृतेः। कामाद्वा तच्छत्रोः सकाशतः किञ्चित् फल-

विनष्टः पश्यतस्तस्य रक्षिणः शरणं गतः ।
आदाय सुकृतं तस्य सर्वं गच्छेदरक्षितः ॥ ३० ॥
एवं दोषो महानत्र प्रपन्नानामरक्षणे ।
अस्वर्ग्यञ्चायशस्यञ्च बलवीर्य्यविनाशनम् ॥ ३१ ॥
करिष्यामि यथार्थन्तु कण्डोर्वचनमुत्तमम् ।

लोभेन वा । स्वया शक्त्या स्वसामर्थ्येन सहायसम्पादनेन स्वद्रव्यदानादिना वा । यथान्यायं न रक्षति चेच्छरणागतमिति शेषः । तदा तत्पापम् अरक्षितस्य शरणागतस्य पापम् प्राप्नोतीति शेषः । तथा लोकगर्हितम् । भावे निष्ठा । लोकनिन्दाञ्च प्राप्नोति ॥ २९ ॥

न केवलमेतावदेव स्वकृतसर्वसुकृतापहारञ्च प्राप्नोतीत्याह,—विनष्ट इति । यः शरणागतोऽरक्षितो विनष्टः स्यात् स पश्यतस्तस्य रक्षिणः रक्षार्थं वृतस्य समक्षमेव तस्य रक्षिणः सर्वं सुकृतमादाय गच्छेत् ॥ ३० ॥

एतदन्ताः कण्डुगाथाः । अथ रामवाक्यम् । एवमिति । अतस्तदरक्षणम् अस्वर्ग्यं स्वर्गप्रतिबन्धकम् । बलवीर्य्यविनाशनं तपोबलजं यद्वीर्य्यं निग्रहानुग्रहसामर्थ्यं तद्विनाशकमित्यर्थः ॥ ३१ ॥

यदेवमतः करिष्यामीत्यादिवचनं शरणागतरक्षणपरम् । धर्मिष्ठं जनतासम्बन्धेनातिशयितधर्मवत् । फलोदयकाले स्वर्ग्यं स्वर्गजनकम् ॥ ३२ ॥

किञ्च परमकारुणिकस्य मम सर्वभूताभयदानरूपः कश्चित् सङ्कल्पोऽस्तीत्याह,—सकृदिति । सर्वभूतेभ्य इति पञ्चमी चतुर्थी च । भय-

धर्मिष्ठञ्च यशस्यञ्च स्वर्ग्यं स्यात्तु फलोदये॥ ३२॥
सकृदेव प्रपन्नाय तवास्मीति च याचते।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम॥ ३३॥

प्रपन्नमिमं [illegible] अभयं ददामि। अत्र वर्त्तमानप्रयोगेण नित्यसत्त्वसहज-स्वभावत्वमभयदानस्य द्योत्यते। तदेवाह,—एतन्मम व्रतमिति। नित्य-परिग्रहीतो नित्यनिजप्रतिज्ञितोऽस्मद्धर्म इत्यर्थः। अत्र तात्कालिक आत्यन्तिकञ्चेत्युभयविधमप्यभयदानं प्रतिज्ञायते। तत्रात्यन्तिकं संसार-भयनिवृत्तिरूपम्। द्वितीयन्तु रावणादित उत्थितं मृत्युभयनिवृत्ति-रूपम्। इदं [illegible]निमित्तकाभयदानस्याप्युपलक्षणम्। नन्वेवं सर्वस्यापि तव निर्निमित्ताभयदातृत्वे वैषम्यनैर्घृण्यादिदोषप्रसङ्ग-[illegible] मतमिति। अनेनाभयविधाभयदानस्य साधनमुपदिश्यते। सकृत् [illegible] प्रपन्नाय; प्रतिगृहीत्यर्थः। प्रकृष्टप्रतिपत्तिमते [illegible] निरन्तरत्वम्; सा च तन्मस्यादिवाक्यजन्या मम-[illegible] प्रतिपत्तिः; ज्ञानी त्वात्मैव मे मत इति गीतोक्तेः। [illegible]काभयदानपात्रम्। द्वितीयाभयदानसाधनमाह,—तवा-स्मीति च याचते इति। औपाधिकभेदमवलम्ब्य तवाहं सेवकस्त्वं मे स्वामी, [illegible] शिष्यस्त्वं गुरुरहं रक्ष्यस्त्वं रक्षक इत्येवमुपासनां कुर्वतो द्वितीयाद्वै भयं भवतीति न्यायेनानन्यं प्राप्तभयस्य सर्वभूतेभ्यो यथा भयं न भवति तथा भवामीति मे व्रतमित्यर्थः। अतथाभूतेभ्यस्तु न ददामीति न नैर्घृण्यादिदोषप्रसङ्ग इति भावः॥ ३३॥

[illegible]परिग्राह्यतावादिनं सुग्रीवमेव बलात् परिग्राह्यताङ्गीकारं कारयित्वा तमेव तदानयनाय प्रेषयति। आनयेति। अस्य वाक्या-

आनयैनं हरिश्रेष्ठ ! दत्तमस्याभयं मया ।
विभीषणो वा सुग्रीव ! यदि वा रावणः स्वयम् ॥ ३४ ॥
रामस्य तु वचः श्रुत्वा सुग्रीवः प्लवगेश्वरः ।
प्रत्यभाषत काकुत्स्थं सौहार्द्देनाभिपूरितः ॥ ३५ ॥
किमत्र चित्रं धर्मज्ञ ! लोकनाथशिखामणे ! ।
यत्त्वमार्य्यं प्रभाषेथाः सत्त्ववान् सत्पथे स्थितः ॥ ३६ ॥
मम चाप्यन्तरात्मायं शुद्धं वेत्ति विभीषणम् ।
अनुमानाच्च भावाच्च सर्व्वतः सुपरीक्षितः ॥ ३७ ॥
तस्मात् क्षिप्रं सहस्माभिस्तुल्यो भवतु राघव ! ।
विभीषणो महाप्राज्ञः सखित्वञ्चाभ्युपैतु नः ॥ ३८ ॥
ततस्तु सुग्रीववचो निशम्य तत्
हरीश्वरेणाभिहितं नरेश्वरः ।

याभ्यां सुस्पष्टं शरणागतस्य । यदि वा रावण इति । कामरूपतयाकारान्तरावष्टम्भवानिति शेषः ॥ ३४ ॥ ३५ ॥

अथ सुग्रीवो विस्मयपरवश आह,—किमत्रेति । धर्मज्ञशरणागतरक्षणधर्मरहस्यज्ञ । लोकनाथानां राज्ञां शिखामणे । सत्त्ववान् सत्त्वैकनिष्ठस्त्वमार्य्यं कल्याणं प्रभाषेथा इति यत्तत्र किं चित्रम् ॥ ३६ ॥

ममान्तरात्मापि विभीषणं शुद्धं वेत्ति । त्वद्वाक्यश्रवणादिति भावः । किञ्च । परमचतुरेण हनूमताभावरूपादनुमानाच्च सर्व्वतः सुपरीक्षितस्त्वायं तस्मात् ॥ ३७ ॥ ३८ ॥

विभीषणेनाशु जगाम सङ्गमं
पतत्त्रिराजेन यथा पुरन्दरः ॥ ३९ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
अष्टादशः सर्गः ॥ १८ ॥

हरीश्वरेणाभिहितं तमानीयायं विभीषण इति बोधितम्। पतत्त्रिराजेन तदानीतेनोपेन्द्रेणेत्यर्थः ॥ ३९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे अष्टादशः सर्गः ॥ १८ ॥

---

# एकोनविंशः सर्गः।



राघवेणाभये दत्ते सन्नतो रावणानुजः।
विभीषणो महाप्राज्ञो भूमिं समवलोकयत् ॥ १ ॥
खात् पपातावनिं हृष्टो भक्तैरनुचरैः सह।
स तु रामस्य धर्मात्मा निपपात विभीषणः ॥ २ ॥
पादयोर्निपपाताथ चतुर्भिः सह राक्षसैः।
अब्रवीच्च तदा वाक्यं रामं प्रति विभीषणः ॥ ३ ॥
धर्मयुक्तञ्च युक्तञ्च साम्प्रतं सम्प्रहर्षणम्।
अनुजो रावणस्याहं तेन चास्म्यवमानितः ॥ ४ ॥

सन्नतो भक्तिप्रवणः। भूमिं समवलोकयत्। अवरोहणायेति भावः ॥ १ ॥

हृष्टः अभिमतलाभजनितप्रीतियुक्तः। रामस्य निपपात। पादयोरित्यनुकर्षः ॥ २ ॥

पूर्वमेकस्यैव पादपतनमुक्त्वा मन्त्रिसहितस्य तदाह,—पादयोरिति। पादयोर्निपपातेत्यनेन शरणागतधर्मकथनम् ॥ ३ ॥

युक्तं युक्तियुक्तम्। साम्प्रतं सम्प्रहर्षणं तत्कालं सन्तोषकरणम् ॥ ४ ॥

भवन्तं सर्वभूतानां शरण्यं शरणं गतः।
परित्यक्ता मया लङ्का मित्राणि च धनानि च ॥ ५ ॥
भवद्गतं हि मे राज्यं जीवितञ्च सुखानि च।
तस्य तद्वचनं श्रुत्वा रामो वचनमब्रवीत् ॥ ६ ॥
वचसा सान्त्वयित्वैनं लोचनाभ्यां पिबन्निव।
आख्याहि मम तत्त्वेन राक्षसानां बलाबलम् ॥ ७ ॥
एवमुक्तं तदा रक्षो रामेणाक्लिष्टकर्मणा।
रावणस्य बलं सर्वमाख्यातुमुपचक्रमे ॥ ८ ॥
अवध्यः सर्वभूतानां गन्धर्वोरगपक्षिणाम्।
राजपुत्र ! दशग्रीवो वरदानात् स्वयम्भुवः ॥ ९ ॥
रावणानन्तरो भ्राता मम ज्येष्ठश्च वीर्य्यवान्।
कुम्भकर्णो महातेजाः शक्रप्रतिबलो युधि ॥ १० ॥
राम ! सेनापतिस्तस्य प्रहस्तो यदि ते श्रुतः।
कैलासे येन समरे मणिभद्रः पराजितः ॥ ११ ॥

सर्वभूतानां शरण्यमित्यनेन तस्य रामे भगवदवतारत्वावगमः सूचितः ॥ ५ ॥

मे राज्यञ्च भवद्गतमित्युक्तया सर्वज्ञत्वेन रामो रावणवधं करिष्यत्येवेति निश्चितमिति गम्यते ॥ ६ ॥

पिबन्निव अनुग्रहचक्षुषाऽवलोकयन्निव ॥ ७ ॥ ८ ॥ ९ ॥

शक्रप्रतिबलः शक्रबलस्पर्द्धिबलवान् ॥ १० ॥ ११ ॥

बद्धगोधाङ्गुलित्रश्च अवध्यकवचो युधि ।
धनुरादाय यस्तिष्ठन्नदृश्यो भवतीन्द्रजित् ॥ १२ ॥
संग्रामे सुमहद्व्यूहे तर्पयित्वा हुताशनम् ।
अन्तर्द्धानगतः श्रीमानिन्द्रजिद्धन्ति राघव ! ॥ १३ ॥
महोदरमहापार्श्वौ राक्षसश्चाप्यकम्पनः ।
अनीकपास्तु तस्यैते लोकपालसमा युधि ॥ १४ ॥
दशकोटिसहस्राणि रक्षसां कामरूपिणाम् ।
मांसशोणितभक्ष्याणां लङ्कापुरनिवासिनाम् ॥ १५ ॥
स तैस्तु सहितो राजा लोकपालानयोधयत् ।
सह देवैस्तु ते भग्ना रावणेन दुरात्मना ॥ १६ ॥
विभीषणस्य तु वचस्तच्छ्रुत्वा रघुसत्तमः ।
अन्वीक्ष्य मनसा सर्वमिदं वचनमब्रवीत् ॥ १७ ॥

बद्धं गोधारूपमङ्गुलित्राणं येन सः । गोधा ज्याघातवारणम् । अदृश्यो भवति । युद्धे इति शेषः ॥ १२ ॥

तदेवाह,—संग्रामे इति । सुमहद्व्यूहे उचितबलसन्निवेशप्रवर्ति ॥ १३ ॥

अनीकपाः उपसेनापतयः ॥ १४ ॥

दशकोटिसहस्राणि । सन्तीति शेषः । इदञ्च प्रधानराक्षसविवक्षया ॥ १५ ॥

ते लोकपालाः ॥ १६ ॥ १७ ॥

यानि कर्मापदानानि रावणस्य विभीषण ! ।
आख्यातानि च तत्त्वेन ह्यवगच्छामि तान्यहम् ॥ १८ ॥
अहं हत्वा दशग्रीवं सप्रहस्तं सहात्मजम् ।
राजानं त्वां करिष्यामि सत्यमेतच्छृणो तु मे ॥ १९ ॥
रसातलं वा प्रविशेत्पातालं वापि रावणः ।
पितामहसकाशं वा न मे जीवन् विमोक्ष्यते ॥ २० ॥
अहत्वा रावणं संख्ये सपुत्रजनबान्धवम् ।
अयोध्यां न प्रवेक्ष्यामि त्रिभिस्तैर्भ्रातृभिः शपे ॥ २१ ॥
श्रुत्वा तु वचनं तस्य रामस्याक्लिष्टकर्मणः ।
शिरसा वन्द्य धर्मात्मा वक्तुमेव प्रचक्रमे ॥ २२ ॥
राक्षसानां वधे साह्यं लङ्कायाश्च प्रधर्षणे ।
करिष्यामि यथाप्राणं प्रवेक्ष्यामि च वाहिनीम् ॥ २३ ॥

कर्मापदानानि युधि कर्मनिर्वर्त्तितशौर्य्याणि । तान्यहमवगच्छाम्येव । न तु तानि मयि प्रभविष्यन्तीति भावः ॥ १८ ॥

यदुक्तं भवद्गतश्च मे राज्यमिति तदवश्यं सम्पादयिष्यामीति प्रतिजानीते । अहमिति ॥ १९ ॥

रसातलं भूमन्निहिताधोलोकम् । पातालम् अधोलोकावधिभूतं लोकम् । मे मत्तः ॥ २० ॥ २१ ॥

अथ विभीषणो रामस्य स्वार्थसाधनप्रतिज्ञां श्रुत्वा स्वयमपि रामकार्य्यसाधनं प्रतिजानीते । शिरसेति ॥ २२ ॥

इति ब्रुवाणं रामस्तु परिष्वज्य विभीषणम् ।
अब्रवील्लक्ष्मणं प्रीतः समुद्राज्जलमानय ॥ २४ ॥
तेन चेमं महाप्राज्ञमभिषिञ्च विभीषणम् ।
राजानं रक्षसां क्षिप्रं प्रसन्ने मयि मानद ! ॥ २५ ॥
एवमुक्तस्तु सौमित्रिरभ्यषिञ्चद्विभीषणम् ।
मध्ये वानरमुख्यानां राजानं राजशासनात् ॥ २६ ॥
तं प्रसादन्तु रामस्य दृष्ट्वा सद्यः प्लवङ्गमाः ।
प्रचुक्रुशुर्महात्मानं साधु साध्विति चाब्रुवन् ॥ २७ ॥
अब्रवीच्च हनूमांश्च सुग्रीवश्च विभीषणम् ।
कथं सागरमक्षोभ्यं तराम वरुणालयम् ।
सैन्यैः परिवृताः सर्वे वानराणां महौजसाम् ॥ २८ ॥
उपायैरभिगच्छाम यथा नदनदीपतिम् ।
तराम तरसा सर्वे ससैन्या वरुणालयम् ॥ २९ ॥

साह्यं साहाय्यम् । वाहिनीं रावणवाहिनीम् ॥ २३ ॥

परिष्वज्येत्यनेन मित्रत्वेन परिग्रहणं सूचितम् ॥ २४ ॥ २५ ॥ २६ ॥

प्रचुक्रुशुः सन्तोषात् किलकिलामकुर्वन् ॥ २७ ॥

वानराणां सैन्यैः परिवृताः कथं केनोपायेन सागरं तराम ॥ २८ ॥

ससैन्या वरुणालयं यथा तराम तथा कैरुपायैर्नदनदीपतिमभिगच्छाम । मार्गप्राप्तये तद्वदेति शेषः ॥ २९ ॥

एवमुक्तस्तु धर्मात्मा प्रत्युवाच विभीषणः।
समुद्रं राघवो राजा शरणं गन्तुमर्हति ॥ ३० ॥
खानितः सगरेणायमप्रमेयो महोदधिः।
कर्त्तुमर्हति रामस्य ज्ञातेः कार्य्यं महोदधिः ॥ ३१ ॥
एवं विभीषणेनोक्तं राक्षसेन विपश्चिता।
आजगामाथ सुग्रीवो यत्र रामः सलक्ष्मणः ॥ ३२ ॥
ततस्त्वाख्यातुमारेभे विभीषणवचः शुभम्।
सुग्रीवो विपुलग्रीवः सागरस्योपवेशनम् ॥ ३३ ॥
प्रकृत्या धर्मशीलस्य रामस्याप्यरोचत।
सलक्ष्मणं महातेजाः सुग्रीवञ्च हरीश्वरम् ॥ ३४ ॥
सत्क्रियार्थं क्रियादक्षं स्मितपूर्वमभाषत।

एवं प्रश्ने उपायमाह,—एवमिति ॥ ३० ॥

राघवेण शरणागमने समुद्रानुग्रहसिद्धौ हेतुमाह,—खानित इति। सगरेण पुत्रैरिति शेषः। अयमुदकतीरसमीपः कतिपयोंशः। ज्ञाते रामस्येत्यन्वयः ॥ ३१ ॥

एवं विभीषणोक्तं श्रुत्वा यत्र रामो वर्त्तते तं देशं सलक्ष्मणः सुग्रीव आजगामेति सम्बन्धः ॥ ३२ ॥

सागरस्योपवेशनं शरणागमनम् ॥ ३३ ॥

अस्य सकलजगच्छरणभूतस्य रामस्यापि अरोचत। युक्तियुक्तत्वात् सागरशरणागमनमिति भावः ॥ ३४ ॥

विभीषणस्य मन्त्रोऽयं मम लक्ष्मण ! रोचते ॥ २५ ॥
सुग्रीवः पण्डितो नित्यं भवान् मन्त्रविचक्षणः ।
उभाभ्यां सम्प्रधार्य्यार्थं रोचते यत्तदुच्यताम् ॥ २६ ॥
एवमुक्तौ ततो वीरावुभौ सुग्रीवलक्ष्मणौ ।
समुदाचारसंयुक्तमिदं वचनमूचतुः ॥ २७ ॥
किमर्थं नो नरव्याघ्र ! न रोचिष्यति राघव ! ।
विभीषणेन यत्तूक्तमस्मिन् काले सुखावहम् ॥ २८ ॥
अबध्वा सागरे सेतुं घोरेऽस्मिन् वरुणालये ।
लङ्का नासादितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ २९ ॥
विभीषणस्य शूरस्य यथार्थं क्रियतां वचः ।
अलं कालात्ययं कृत्वा सागराय नियुज्यताम् ।
यथा सैन्येन गच्छामः पुरीं रावणपालिताम् ॥ ४० ॥

सत्क्रियार्थं विभीषणस्य पूजार्थम् । सलक्ष्मणं सुग्रीवं हरीश्वरमभाषतेत्यन्वयः ॥ २५ ॥

उभाभ्यामर्थं कार्य्यं सम्प्रधार्य्य निश्चित्य यन्नोचते तदुच्यताम् ॥ २६ ॥

समुदाचार उपचारः ॥ २७ ॥

नो आवयोः । विभीषणेन यदुक्तं तत् कथं न रोचिष्यति । सर्वथाऽभिरुचितमेवेत्यर्थः ॥ २८ ॥ ॥ २९

एवमुक्तः कुशास्तीर्णे तीरे नदनदीपतेः।
संविवेश तदा रामो वेद्यामिव हुताशनः॥ ४१॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
एकोनविंशः सर्गः॥ १९॥

सागराय सागरप्रार्थनार्थं नियुज्यताम्। स्वात्मेति शेषः॥ ४०॥
॥ ४१॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे एकोनविंशः सर्गः॥ १९॥

---

## विंशः सर्गः ।



ततो निविष्टां ध्वजिनीं सुग्रीवेणाभिपालिताम् ।
ददर्श राक्षसोऽभ्येत्य शार्दूलो नाम वीर्य्यवान् ॥ १ ॥
चारो राक्षसराजस्य रावणस्य दुरात्मनः ।
तां दृष्ट्वा सर्वतो व्यग्रां प्रतिगम्य स राक्षसः ॥ २ ॥
आविश्य लङ्कां वेगेन राजानमिदमब्रवीत् ।
एष वै वानरर्क्षौघो लङ्कां समभिवर्त्तते ॥ ३ ॥
अगाधश्चाप्रमेयश्च द्वितीय इव सागरः ।
पुत्रौ दशरथस्येमौ भ्रातरौ रामलक्ष्मणौ ॥ ४ ॥
उत्तमौ रूपसम्पन्नौ सीतायाः पदमागतौ ।
एतौ सागरमासाद्य सन्निविष्टौ महाद्युते ! ॥ ५ ॥
बलञ्चाकाशमावृत्य सर्वतो दशयोजनम् ।

निविष्टां सागरतीरे इति शेषः ॥ १ ॥

तां वाहिनीम् ॥ २ ॥ ३ ॥

अगाधत्वं दुष्प्रवेशत्वेन ॥ ४ ॥

सीतायाः पदं त्राणमुद्दिश्यागतौ । पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रि वस्तुषु ॥ ५ ॥

तत्त्वभूतं महाराज! चिप्रं वेदितुमर्हसि॥ ६॥
तव दूता महाराज! चिप्रमर्हन्ति वेदितुम्।
उपप्रदानं सान्त्वं वा भेदो वात्र प्रयुज्यताम्॥ ७॥
शार्दूलस्य वचः श्रुत्वा रावणो राक्षसेश्वरः।
उवाच सहसा व्यग्रः सम्प्रधार्य्यार्थमात्मनः।
शुकं साधु तदा रक्षो वाक्यमर्थविदां वरम्॥ ८॥
सुग्रीवं ब्रूहि गत्वाशु राजानं वचनान्मम।
यथासन्देशमक्लीवं श्लक्ष्णया परया गिरा॥ ९॥

त्वं वै महाराजकुलप्रसूतो
महाबलश्चर्क्षरजःसुतश्च।
न कश्चनार्थस्तव नास्त्यनर्थ-
स्तथापि मे भ्रातृसमो हरीश!॥ १०॥

दशयोजनमाकाशं तावत्पर्य्यन्तावकाशमावृत्य सन्निविष्टमित्यनुषङ्गः। तत्त्वभूतं यथार्थमित्यर्थः॥ ६॥

उपप्रदानं सीतायाः। सान्त्वं सुग्रीवं प्रति साम। भेदो वा तं प्रत्येव॥ ७॥

आत्मनोऽर्थं तत्त्वालोचितकार्य्यम्। शुकमुवाचेत्यन्वयः। सुग्रीवं प्रति सामभेदप्रयोगार्थमिति शेषः॥ ८॥

तदेवाह,—सुग्रीवमिति। यथासन्देशं मत्सन्देशप्रकारमनतिक्रम्य। अक्लीवमकातरम्॥ ९॥

अहं यद्यहरं भार्य्यां राजपुत्रस्य धीमतः ।
किं तत्र तव सुग्रीव ! किष्किन्धां प्रतिगम्यताम् ॥ ११ ॥
न हीयं हरिभिर्लङ्का प्राप्तुं शक्या कथञ्चन ।
देवैरपि सगन्धर्वैः किं पुनर्नरवानरैः ॥ १२ ॥
स तदा राक्षसेन्द्रेण सन्दिष्टो रजनीचरः ।
शुको विहङ्गमो भूत्वा तूर्णमाप्लुत्य चाम्बरम् ॥ १३ ॥
स गत्वा दूरमध्वानमुपर्य्युपरि सागरम् ।
संस्थितो ह्यम्बरं वाक्यं सुग्रीवमिदमब्रवीत् ॥ १४ ॥
सर्व्वमुक्तं यथादिष्टं रावणेन दुरात्मना ।
तत्प्रापयन्तं वचनं तूर्णमाप्लुत्य वानराः ॥ १५ ॥

तवार्थः कोऽपि नास्ति रामसहायकरणेन प्राप्यं फलं नास्ति । अनर्थश्च कश्चित्परिहर्त्तव्यो नास्ति । अतो निष्प्रयोजनप्रवृत्तिरनुचितेति भावः । यद्यपि वा कश्चिदर्थो रामतो जातः स्यात् तथापि मे भ्रातृसमोऽसि । तथा च मद्विषये औदासीन्यमुचितमिति भावः ॥ १० ॥ ११ ॥

मद्वचनमनादृत्यागतेनापि त्वयात्र किमपि न कर्त्तुं शक्यमित्याह,—न हीयमिति ॥ १२ ॥

शुको विहङ्गमो भूत्वा शुकपक्षी भूत्वा आप्लुत्य चाम्बरं जगामेति शेषः ॥ १३ ॥

सागरस्योपर्य्युपरि सागरसमीपोर्ध्वदेशे ॥ १४ ॥

यथादिष्टं सर्व्वमुक्तं वाक्यमब्रवीदित्यन्वयः । तत्प्रापयन्तं रावणोक्तं सुग्रीवायेत्यर्थः ॥ १५ ॥

प्रापद्यन्त तदा क्षिप्रं लोप्तुं हन्तुञ्च मुष्टिभिः।
सर्वैः प्लवङ्गैः प्रसभं निगृहीतो निशाचरः॥ १६॥
गगनात् भूतले चाशु प्रतिगृह्यावतारितः।
वानरैः पीड्यमानस्तु शुको वचनमब्रवीत्॥ १७॥
न दूतान् घ्नन्ति काकुत्स्थ! वार्य्यन्तां साधु वानराः।
यस्तु हित्वा मतं भर्त्तुः स्वमतं सम्प्रधारयेत्।
अनुक्तवादी दूतः सन् स दूतो वधमर्हति॥ १८॥
शुकस्य वचनं रामः श्रुत्वा तु परिदेवितम्।
उवाच मावधिष्टेति घ्नतः शाखामृगर्षभान्॥ १९॥
स च पत्रलघुर्भूत्वा हरिभिर्दर्शितेऽभये।
अन्तरिक्षे स्थितो भूत्वा पुनर्वचनमब्रवीत्॥ २०॥

प्रापद्यन्त गृहीतवन्तः। लोप्तुम्। पक्षाविति शेषः॥ १६॥ १७॥

यथोक्तराजसन्देशवादिनो ममापराधो नास्तीत्याह,—यस्त्विति। भर्त्तुर्मतं सन्दिष्टं मार्गं हित्वा स्वमतं तत्काले आत्मत्राणार्थमन्यदेव किञ्चिद्यदि भाषते तदा सोऽनुक्तवादी सन् वधमर्हति॥ १८॥

शुकस्य परिदेवितरूपं वचनं श्रुत्वा। मा वधिष्ट मा वधिष्वमिति यावत्। एकवचनमार्षम्। रामवचसा हरिभिरभये दर्शिते सति। पत्रलघुः पक्षबलेन शीघ्रगतिर्भूत्वा वचनमब्रवीत्। यत्तु पत्रलघुः पत्रैर्लघुर्नपक्ष इति तीर्थस्तन्न। तादृशस्यान्तरिक्षगमनासम्भवात्। रामवचनानुष्ठानबाधाच्च॥ १९॥ २०॥

सुग्रीव ! सत्त्वसम्पन्न ! महाबलपराक्रम ! ।
किं मया खलु वक्तव्यो रावणो लोकरावण: ॥ २१ ॥

स एवमुक्त: प्लवगाधिपस्तदा
प्लवङ्गमानामृषभो महाबल: ।
उवाच वाक्यं रजनीचरस्य
चारं शुकं शुद्धमदीनसत्त्व: ॥ २२ ॥

न मेऽसि मित्रं न तथानुकम्प्यो
न चोपकर्त्तासि न मे प्रियोऽसि ।
अरिश्च रामस्य सहानुबन्ध-
स्ततोऽसि वालीव बधार्ह ! वध्य: ॥ २३ ॥

निहन्म्यहं त्वां ससुतं सबन्धुं
सज्ञातिवर्गं रजनीचरेश ! ।
लङ्काञ्च सर्वां महता बलेन
सर्वै: करिष्यामि समेत्य भस्म ॥ २४ ॥

लोकरावण इत्यनेन तत्सन्देशं विनैव गमने ततो मे महद्भयमिति सूचितम् ॥ २१ ॥

चारं प्रति सन्देशवाक्यम् ॥ २२ ॥

अनुकम्प्यो दयापात्रम् । अरिश्च असीति शेषः , अतः सहानुबन्धः सपुत्रमित्रादिपरिकरोऽस्ततो रामारित्वादेव वालीव वध्योऽसि । रामेणेति शेषः ॥ २३ ॥

न मोक्ष्यसे रावण ! राघवस्य
सर्वैः सहेन्द्रैरपि मूढ ! गुप्तः ।
अन्तर्हितः सूर्य्यपथं गतोऽपि
तथैव पातालमनुप्रविष्टः ।
गिरीशपादाम्बुजसङ्गतो वा
हतोऽसि रामेण सहानुजस्त्वम् ॥ २५ ॥

तस्य ते त्रिषु लोकेषु न पिशाचं न राक्षसम् ।
त्रातारं नानुपश्यामि न गन्धर्वं न चासुरम् ॥ २६ ॥
अवधीस्त्वं जरावृद्धं गृध्रराजं जटायुषम् ।
किन्नु ते रामसान्निध्ये सकाशे लक्ष्मणस्य च ।
हृता सीता विशालाक्षी यां त्वं गृह्य न बुध्यसे ॥ २७ ॥

त्वां हन्मित्रामारिम्। सर्वैः समेत्येत्यन्वयः ॥ २४ ॥

राघवस्य न मोक्ष्यसे राघवात्र मुच्यसे। अन्तर्हितोऽन्तर्द्धान-शक्त्या ॥ २५ ॥

पिशाचादीनामेकैकं समुदितञ्च त्रातारं न पश्यामि। अतएव नञ्पञ्चकं चरितार्थम् ॥ २६ ॥

किञ्च तद्बलं त्वय्येव ज्ञातमिति त्वत्कृतचौरवृत्त्या जानीम इत्याह,—अवधीरिति। जरावृद्धं जरायुक्तं वृद्धं चिरकालिकम्। चिर-कालिकोऽपि कश्चिदौषधसिद्ध्यादिना जरारहितो भवेत् अचिर-कालिकोऽपि कश्चित् शापादिना जरावानित्युभयोपादानम्। किन्नु न हृता यदि बलमस्तीति शेषः। न बुद्ध्यसे स्वबलमिति शेषः ॥ २७ ॥

महाबलं महात्मानं दुराधर्षं सुरैरपि।
न बुध्यसे रघुश्रेष्ठं यस्ते प्राणान् हरिष्यति॥ २८॥
ततोऽब्रवीद्वालिसुतोऽप्यङ्गदो हरिसत्तमः।
नायं दूतो महाप्राज्ञ! चारकः प्रतिभाति मे॥ २९॥
तुलितं हि बलं सर्वमनेन तव तिष्ठता।
गृह्यतां मागमल्लङ्कामेतद्धि मम रोचते॥ ३०॥
ततो राज्ञा समादिष्टाः समुत्पत्य वलीमुखाः।
जगृहुश्च बबन्धुश्च विलपन्तमनाथवत्॥ ३१॥
शुकस्तु वानरैश्चण्डैस्तत्र तैः सम्प्रपीड़ितः।
व्याचुक्रोश महात्मानं रामं दशरथात्मजम्।
लुप्येते मे बलात् पक्षौ भिद्येते मे तथाक्षिणी॥ ३२॥
याञ्च रात्रिं मरिष्यामि जाये रात्रिञ्च यामहम्।
एतस्मिन्नन्तरे काले यन्मया ह्यशुभं कृतम्।

रघुश्रेष्ठं महाबलत्वादिगुणकं न बुद्ध्यसे इत्यर्थः॥ २८॥

अयं स्वामिसन्देशप्रापणमात्रकृतो दूत एव न किन्तु गुप्ततया परबलपरीक्षाप्रवृत्तिश्चार एव॥ २९॥

कुतस्तत्राह,—तुलितं हीति। एवं प्रमाणमेवं व्यूहमिति सर्वं परिच्छिन्नमित्यर्थः॥ ३०॥

राज्ञा सुग्रीवेण॥ ३१॥

लुप्येते छिद्येते॥ ३२॥

सर्वं तदुपपद्येथा जह्याश्चेद्यदि जीवितम् ॥ २३ ॥
नाघातयत्तदा रामः श्रुत्वा तत् परिदेवितम् ।
वानरानब्रवीद्रामो मुच्यतां दूत आगतः ॥ २४ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
विंशः सर्गः ॥ २० ॥

रात्रिशब्दोऽहोरात्रपरः। यद्दिने मरिष्यामि यद्दिने च जातवानस्मि तदन्तरे काले यन्ममरणावधिकाले यन्मयाऽशुभं कृतं तत्सर्वं त्वमुपपद्येथाः त्वं प्राप्नुयाः यदीह त्वयाऽनिवारितताडनो जीवितं जह्याम् ॥ २३ ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे विंशः सर्गः ॥ २० ॥

---

## एकविंशः सर्गः ।



ततः सागरवेलायां दर्भानास्तीर्य्य राघवः ।
अञ्जलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधेः ॥ १ ॥
बाहुं भुजङ्गभोगाभमुपधायारिसूदनः ।
जातरूपमयैश्चैव भूषणैर्भूषितं सदा ॥ २ ॥
मणिकाञ्चनकेयूरमुक्ताप्रवरभूषणैः ।
भुजैः परमनारीणामभिमृष्टमनेकधा ॥ ३ ॥
चन्दनागुरुभिश्चैव पुरस्तादभिसेवितम् ।
बालसूर्य्यप्रकाशैश्च चन्दनैरुपशोभितम् ॥ ४ ॥
शयने चोत्तमाङ्गेन सीतायाः शोभितं पुरा ।
तक्षकस्येव सम्भोगं गङ्गाजलनिषेवितम् ॥ ५ ॥

तत इति । महोदधेरञ्जलिं कृत्वा प्राङ्मुखो वरप्रार्थनाय प्रतिशिश्ये शयनं कृतवान् ॥ १ ॥ २ ॥

मण्यादिमुक्ताप्रवरान्तानि भूषणानि येषु तैः । परमनारीणाम् एकदारव्रतत्वेनेतरस्त्रीप्रसङ्गाभावादुत्तमधात्रीजनानां भुजैरनेकधा स्नपनालङ्करणादिकालेऽभिमृष्टं स्पृष्टं बाहुमित्यन्वयः ॥ ३ ॥

पुरस्तात् पूर्वं बालसूर्य्यप्रकाशैरतिरक्तैश्चन्दनैः कुङ्कुमैरिति यावदित्यर्थः ॥ ४ ॥

संयुगे युगसङ्काशं शत्रूणां शोकवर्द्धनम्।
सुहृदां नन्दनं दीर्घं सागरान्तव्यपाश्रयम् ॥ ६ ॥
अस्यता च पुनः सव्यं ज्यावातविहतत्वचम्।
दक्षिणो दक्षिणं बाहुं महापरिघसन्निभम् ॥ ७ ॥
गोसहस्रप्रदातारं ह्युपधाय भुजं महत्।
अद्य मे तरणं वाथ मरणं सागरस्य वा ॥ ८ ॥

शयने तत्काले सीताया उत्तमाङ्गेन शिरसा रामभुजार्पितेन शोभितम्। तत्तत्कस्य सम्भोगं शरीरं गङ्गाजलेन निषेवितम्। स्थितगङ्गाजलमित्यर्थः। अत्र गङ्गाजलस्थाने सीतागौरवत्वात् पवित्रत्वाच्च ॥ ५ ॥

संयुगे शत्रूणां शोकवर्द्धनम्। युगसङ्काशं युगवद्दीर्घम्। दीर्घं दीर्घकालं सुहृदां नन्दनं सुखप्रापकम्। सागरान्तभूचक्रस्य व्यपाश्रयं प्रतिष्ठाभूतम् ॥ ६ ॥

पुनःपुनः सव्यमस्यता शरान् विसृजता ज्याघातेन विहता त्वक् यत्र तादृशं सर्वभुजेभ्य उत्तमङ्गोसहस्रप्रदातारं दक्षिणं बाहुं भुजं तदवच्छिन्नम्। कूर्परादुपरिदेशो भुज इत्याहुः। उपधाय दक्षिणः स्वयमधिशिश्ये इत्यन्वयः ॥ ७ ॥

पुनर्बाहुभुजशब्दप्रयोगः पूर्वस्य व्यवहिततया विशेषप्रतिपत्त्यर्थः। अद्य चिरदिनमुपासनया प्रसन्नस्य सागरस्य प्रसादेन मे ससैन्यस्य तरणं वापि स्यात्। ततः परमुपेक्षणे सागरस्य मत्तो मरणमेव स्यादिति धृतिं कृत्वा निश्चित्येति योजना ॥ ८ ॥

इति रामो धृतिं कृत्वा महाबाहुर्महोदधिम्।
अधिशिश्ये च विधिवत्प्रयतोऽत्र स्थितो मुनिः॥ ९ ॥
तस्य रामस्य सुप्तस्य कुशास्तीर्णे महीतले।
नियमादप्रमत्तस्य निशास्तिस्रोऽभिजग्मतुः॥ १० ॥
स त्रिरात्रोषितस्तत्र नयज्ञो धर्मवत्सलः।
उपासत तदा रामः सागरं सरितां पतिम्॥ ११ ॥
न च दर्शयते रूपं मन्दो रामस्य सागरः।
प्रयतेनापि रामेण यथार्हमभिपूजितः॥ १२ ॥
समुद्रस्य ततः क्रुद्धो रामो रक्तान्तलोचनः।
समीपस्थमुवाचेदं लक्ष्मणं शुभलक्ष्मणम्॥ १३ ॥
अवलेपः समुद्रस्य न दर्शयति यः स्वयम्।
प्रशमश्च क्षमा चैव आर्जवं प्रियवादिता।
असामर्थ्यफला ह्येते निर्गुणेषु सतां गुणाः॥ १४ ॥

मुनिर्मौनी। महोदधिमुद्दिश्येति शेषः॥ ९ ॥

अभिजग्मतुः अभिजग्मुः॥ १० ॥

सः अङ्गुल्यग्रेण तान् हन्यामित्यादिना प्रकटितवीर्य्यः। नयज्ञः सामाद्युपायानां यथोचितं प्रयोक्ता। धर्मवत्सलः शरणागतरक्षणरूपे धर्मे प्रीतिमान्। उपासत उपास्त॥ ११ ॥

शरणागतत्वेऽपि फलप्रदानाभिमुख्याभावात् सागरस्य सापराधत्वमाह,—न चेति। मन्दोऽमन्दबुद्धिः॥ १२ ॥

समुद्रस्य क्रुद्धः समुद्राय क्रुद्धः॥ १३ ॥

आत्मप्रशंसिनं दुष्टं धृष्टं विपरिधावकम् ।
सर्वत्रोत्सृष्टदण्डञ्च लोकः सत्कुरुते नरम् ॥ १५ ॥
न साम्ना शक्यते कीर्त्तिर्न साम्ना शक्यते यशः ।
प्राप्तुं लक्ष्मण ! लोकेऽस्मिन् जयो वा रणमूर्द्धनि ॥ १६ ॥
अद्य मद्बाणनिर्भिन्नैर्मकरैर्मकरालयम् ।
निरुद्धतोयं सौमित्रे ! प्लवद्भिः पश्य सर्वतः ॥ १७ ॥
भोगिनां पश्य भोगानि मया भिन्नानि लक्ष्मण ! ।
महाभोगानि मत्स्यानां करिणाञ्च करानिह ॥ १८ ॥

अवलेपो गर्व्वः । वर्त्तत इति शेषः । प्रशमश्चित्तशान्तिः । क्षमा शक्यप्रतिक्रियापराधसहिष्णुता । आर्जवं कौटिल्याभावः ॥ १४ ॥

एवं सतां गुणाः । निर्गुणेषु दयागुणहीनेषु अवलिप्तेषु तद्विषये असामर्थ्यफलाः । सर्वशक्तियुक्तोऽपि दुष्टविषये प्रशमादिपरश्चेत्तमशक्तं मन्यन्त इत्यर्थः । अतोऽयं दण्डस्यैव विषय इति भावः । आत्मप्रशंसिनं शौर्य्यादिगुणाभावेऽपि तद्वत्तया श्लाघमानम् । दुष्टं दुश्चरित्रम् । धृष्टम् अधर्मप्रवृत्तौ साहसिकम् । विपरिधावकम् इतस्ततः स्वगुणख्यापनाय परिधावनशीलम् ॥ १५ ॥

सर्वत्र प्राणिमात्रे । उत्सृष्टदण्डं कृतदण्डम् । सत्कुरुते बहुमन्यते । कीर्त्तिर्देशान्तरख्यातिर्यशः स्वदेशख्यातिर्न शक्यते प्राप्तुमित्यन्वयः ॥ १६ ॥

रणमूर्द्धि जये। न प्राप्तुं शक्य इत्यनुकर्षः । मद्बाणनिर्भिन्नैरतएव मृत्वा सर्वतः प्लवद्भिर्मत्स्यादिभिर्निरुद्धतोयं प्रच्छादिततोयम् । भोगिनां भोगानि शरीराणि ॥ १७ ॥ १८ ॥

सशङ्खशुक्तिकाजालं समीनमकरं तथा।
अद्य युद्धेन महता समुद्रं परिशोषये॥ १९॥
क्षमया हि समायुक्तं मामयं मकरालयः।
असमर्थं विजानाति धिक् क्षमामीदृशे जने॥ २०॥
न दर्शयति साम्ना मे सागरो रूपमात्मनः।
चापमानय सौमित्रे! शरांश्चाशीविषोपमान्॥ २१॥
समुद्रं शोषयिष्यामि पद्भ्यां यान्तु प्लवङ्गमाः!॥ २२॥
अद्याक्षोभ्यमपि क्रुद्धः क्षोभयिष्यामि सागरम्।
वेलासु कृतमर्य्यादं सहस्रोर्मिसमाकुलम्॥ २३॥
निर्मर्य्यादं करिष्यामि सायकैर्वरुणालयम्।
महार्णवं क्षोभयिष्ये महादानवसङ्कुलम्॥ २४॥
एवमुक्त्वा धनुष्पाणिः क्रोधविस्फारितेक्षणः।
बभूव रामो दुर्द्धर्षो युगान्ताग्निरिव ज्वलन्॥ २५॥

मत्स्यानां महाभोगानि महाशरीराणि। करिणां जलकरिणां करान् भिन्नान् पश्येति शेषः। शङ्खजालशुक्तिकाजालसहितं समुद्रमित्यन्वयः॥ १९॥

युद्धेन प्रहारेण॥ २०॥

असमर्थं स्वविजये इति शेषः॥ २१॥

स्ववैभवमवष्टभ्याह;—चापमिति॥ २२॥

वेलासु तीरेषु कृतमर्य्यादं तदलङ्घने कृतनियमम्॥ २३॥

निर्मर्य्यादं लङ्घितवेलम्॥ २४॥ २५॥

सम्पीड्य च धनुर्घोरं कम्पयित्वा शनैर्जगत्।
मुमोच विशिखानुग्रान् वज्रानिव शतक्रतुः ॥ २६ ॥
ते ज्वलन्तो महावेगास्तेजसा सायकोत्तमाः।
प्रविशन्ति समुद्रस्य जलं वित्रस्तपन्नगम् ॥ २७ ॥
तोयवेगः समुद्रस्य समीनमकरो महान्।
स बभूव महाघोरः समारुतरवस्तथा ॥ २८ ॥
महोर्मिजालचलितः शङ्खजालसमावृतः।
सधूमः परिवृत्तोर्मिः सहसासीन् महोदधिः ॥ २९ ॥
व्यथिताः पन्नगाश्चासन् दीप्तास्या दीप्तलोचनाः।
दानवाश्च महावीर्य्याः पातालतलवासिनः ॥ ३० ॥
ऊर्मयः सिन्धुराजस्य सनक्रमकरस्तथा।
विन्ध्यमन्दरसङ्काशाः समुत्पेतुः सहस्रशः ॥ ३१ ॥
आघूर्णितवरङ्गौघः सम्भ्रान्तोरगराक्षसः।
उद्वर्त्तितमहाग्राहः सघोषो वरुणालयः ॥ ३२ ॥
ततस्तु तं राघवमुग्रवेगं
प्रकर्षमाणं धनुरप्रमेयम्।

घोरं धनुः शनैः सम्पीड्य सम्पीडनपूर्वं सज्जं कृत्वा जगत् कम्पयित्वा। ज्याघोषेणेति शेषः ॥ २६ ॥ २७ ॥

समुद्रस्य तोयवेगः संक्षोभः। समारुतरवो बाणगणप्रवर्त्तितमारुतशब्दसहितः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

सौमित्रिरुत्पत्य विनि:श्वसन्तं
मामेति चोक्त्वा धनुराललम्बे ॥ २३ ॥
एतद्विनापि ह्युदधेस्तवाद्य
सम्पत्स्यते वीरतमस्य कार्य्यम् ।
भवद्विधा: क्रोधवशं न यान्ति
दीर्घं भवान् पश्यतु साधुवृत्तम् ॥ २४ ॥
अन्तर्हितैश्चापि तथाऽन्तरीक्षे
ब्रह्मर्षिभिश्चैव सुरर्षिभिश्च ।
शब्द: कृत: कष्टमिति ब्रुवद्भि-
र्मामेति चोक्त्वा महता स्वरेण ॥ २५ ॥

## इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे एकविंश: सर्ग: ॥ २१ ॥

सौमित्रिरुत्पत्योपगम्य विनि:श्वसन्तं रामं मामेत्युक्त्वा समुद्रसंश्वनाशनं न कार्य्यमित्युक्त्वा धनुराललम्बे धृतवानित्यर्थः ॥ २३ ॥

एतद्विनापि क्षोभनं विनापि । सधुवृत्तं समीचीनोपायमेव दीर्घं यथा भवति तथा पश्यतु ॥ २४ ॥

कष्टमिति ब्रुवद्भिर्ऋष्यादिभिर्महता स्वरेण मामेत्युक्त्वा शब्दो हाहाशब्दः कृत इत्यर्थः ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे एकविंश: सर्ग: ॥ २१ ॥

## द्वाविंशः सर्गः ।



अथोवाच रघुश्रेष्ठः सागरं दारुणं वचः ।
अद्याहं शोषयिष्यामि सपातालं महार्णवम् ॥ १ ॥
शरनिर्दग्धतोयस्य परिशुष्कस्य सागर ! ।
मया निहतसत्त्वस्य पांसुरुत्पद्यते महान् ॥ २ ॥
मत्कार्मुकनिसृष्टेन शरवर्षेण सागर ! ।
परं तीरं गमिष्यन्ति पद्भिरेव प्लवङ्गमाः ॥ ३ ॥
विचिन्वन्नाभिजानासि पौरुषं नापि विक्रमम् ।
दानवालय ! सन्तापं मत्तो नाम गमिष्यसि ॥ ४ ॥
ब्राह्मेणास्त्रेण संयोज्य ब्रह्मदण्डनिभं शरम् ।
संयोज्य धनुषि श्रेष्ठे विचकर्ष महाबलः ॥ ५ ॥

एवं प्राणिपीड़ावहे क्षोभे निवारिते शोषणप्रतिज्ञां सम्पादयितुमुपचक्रमे इति ॥ १ ॥

निहतानि सत्वानि यादांसि यस्य । उत्पद्यते । वर्त्तमानसामीप्ये लट् ॥ २ ॥ ३ ॥

विचिन्वन् जलादिवृद्ध्या वृद्धियुक्तः सन् । हे दानवालय । पूर्वोक्तहेतोर्मत्तः सन्तापं प्राणनाशनिबन्धनं गमिष्यसि । नामप्रसिद्धौ । इत्युक्तेति शेषः ॥ ४ ॥

तस्मिन् विकृष्टे सहसा राघवेण शरासने।
रोदसी सम्पफालेव पर्वताश्च चकम्पिरे ॥ ६ ॥
तमश्च लोकमावव्रे दिशश्च न चकाशिरे।
प्रतिचुक्षुभिरे चाशु सरांसि सरितस्तदा ॥ ७ ॥
तिर्य्यक् च सह नक्षत्रैः सङ्गतौ चन्द्रभास्करौ।
भास्करांशुभिरादीप्तं तमसा च समावृतम् ॥ ८ ॥
प्रचकाशे तदाकाशमुल्काशतविदीपितम्।
अन्तरिक्षाच्च निर्घाता निर्जग्मुरतुलस्वनाः ॥ ९ ॥
वपुःप्रकर्षेण ववुर्दिव्यमारुतपंक्तयः।
बभञ्ज च तदा वृक्षान् जलदानुद्वहन्नुरुः ॥ १० ॥
आरुजंश्चैव शैलाग्रान् शिखराणि बभञ्ज च।

अस्त्रेण तन्मन्त्रेण संयोज्य अभिमन्त्र्य। एवमभिमन्त्रितं शरं धनुषि संयोज्य ॥ ५ ॥

सम्पफालेव विशशरतुरिव। एकवचनमार्षम् ॥ ६ ॥ ७ ॥

नक्षत्रैः सह तिर्य्यक्सङ्गतौ यथा प्राप्तपूर्वापरमार्गप्रतिरोधाद्दक्षिणोत्तरमार्गगामिनावभूतामित्यर्थः। भास्करांशुभिरादीप्तमपि तमसा संवृतमाकाशमासीदिति शेषः। अनेन विरुद्धयोस्तेजस्तिमिरयोः समानाधिकरण्यरूप उत्पातः सूचितः ॥ ८ ॥

निर्घाता अशनयः निर्जग्मुः निःसृताः ॥ ९ ॥

दिव्यमारुतपङ्क्तयः परिवहादिवातस्कन्धाः। वपुःप्रकर्षेण महा-

दिवि च स्म महावेगाः संहताः समहास्वनाः ॥ ११ ॥
मुमुचुर्वैद्युतानग्नींस्ते महाशनयस्तदा।
यानि भूतानि दृश्यानि चुक्रुशुस्त्वाशनेः समम् ॥ १२ ॥
अदृश्यानि च भूतानि मुमुचुर्भैरवस्वनम्।
शिश्यिरे चाभिभूतानि सन्त्रस्तान्युद्विजन्ति च ॥ १३ ॥
सम्प्रविव्यथिरे चापि न च पस्पन्दिरे भयात्।
सह भूतैः सतोयोर्मिः सनागः सहराक्षसः ॥ १४ ॥
सहसाभूत्ततो वेगाद्भीमवेगो महोदधिः।
योजनं व्यतिचक्राम वेलामन्यत्र संप्लवात् ॥ १५ ॥
तं तथा समतिक्रान्तं नातिचक्राम राघवः।
तमुद्धतममित्रघ्नो रामो नदनदीपतिम् ॥ १६ ॥

वेगेन ववुः। बभञ्जचेति मारुतपङ्क्तिरिति शेषः। उद्वहन्मारुतसमूह इति शेषः। अग्नेष्वेध एव कर्त्ता॥ १०॥ ११॥

ते पतमाना महाशनयः महावेगत्वादिगुणा वैद्युतानग्नीन् मुमुचुः। अशनेः समम् अशनिघोषतुल्यघोषम्॥ १२॥

सन्त्रस्तानि भीतानि। उद्विजन्ति कम्पमानानि शिश्यिरे शयितान्यभूवन्। नोत्थातुं समर्थानीत्यर्थः॥ १३॥

तदेव विवृणोति। सम्प्रविव्यथिरे इति॥ १४॥

संप्लवः प्रलयस्ततोऽन्यत्रापि योजनं व्यतिचक्राम॥ १५॥

तं प्रसिद्धम् उच्यमानविशेषणम्। तं दक्षिणदेशस्थं नदनदीपतिं

ततो मध्यात् समुद्रस्य सागरः स्वयमुत्थितः।
उदयाद्रिमहाशैलात्-मेरोरिव दिवाकरः॥ १७॥
पन्नगैः सह दीप्तास्यैः समुद्रः प्रत्यदृश्यत।
स्निग्धवैदूर्य्यसङ्काशो जाम्बूनदविभूषणः॥ १८॥
रक्तमाल्याम्बरधरः पद्मपत्रनिभेक्षणः।
सर्व्वपुष्पमयीं दिव्यां शिरसा धारयन् स्रजम्॥ १९॥
जातरूपमयैश्चैव तपनीयविभूषणैः।
आत्मजानाञ्च रत्नानां भूषितो भूषणोत्तमैः॥ २०॥
धातुभिर्मण्डितः शैलो विविधैर्हिमवानिव।
आघूर्णिततरङ्गौघः कालिकानिलसङ्कुलः॥ २१॥
गङ्गासिन्धुप्रधानाभिरापगाभिः समावृतः।
सागरः समुपक्रम्य पूर्व्वमामन्त्र्य वीर्य्यवान्।
अब्रवीत्प्राञ्जलिर्वाक्यं राघवं शरपाणिनम्॥ २२॥

दृष्ट्वा राघवो रामो नातिचक्राम न चचाल। अस्त्रं न परावर्त्तितवानित्यर्थः। अस्त्रं न त्यक्तवानिति वा॥ १६॥ १७॥ १८॥ १९॥

जातरूपं सुवर्णम्। तपनीयं तप्तकाञ्चनमधिकवर्णम्। स्वोदरजातरत्नखचितभूषणोत्तमैर्भूषितः॥ २०॥

अतएव विविधधातुभिर्मण्डितः शैल इव। कालिकाभिर्मेघव्रातैः सङ्कुलः "मेघजाले च कालिका"॥ २१॥

समुपक्रम्य उपगम्य। पूर्व्वमामन्त्र्य हे रामेति प्रथमं सम्बोध्य। शरपाणिनं शरपाणिम्॥ २२॥

पृथिवी वायुराकाशमापो ज्योतिश्च राघव ! ।
स्वभावे सौम्य तिष्ठन्ति शाश्वतं मार्गमाश्रिताः ॥ २३ ॥
तत्स्वभावो ममाप्येष यदगाधोऽहमप्लवः ।
विकारस्तु भवेद्गाध एतत्ते प्रवदाम्यहम् ॥ २४ ॥
न कामान्न च लोभाद्वा न भयात् पार्थिवात्मज ! ।
रागान्नक्राकुलजलं स्तम्भयेयं कथञ्चन ॥ २५ ॥
विधास्ये येन गन्तासि विषहिष्येऽप्यहं तथा ।
न ग्राहा विधमिष्यन्ति यावत्सेना तरिष्यति ।

एतावत्कालमनागमने स्वीयमगाधत्वमेव कारणमिति सूचयितुं सामान्यतो भूतस्थितिमाह,—पृथिवीति। पृथ्वीस्वभावः काठिन्याद्धारणम्। वायोः सदा सञ्चारतः संयोजनवियोजने। आकाशस्यावकाशदानम्। अपां स्यन्दनं संश्लेषणञ्च। ज्योतिषः प्रकाशभस्मीकरणे। शाश्वतं मार्गमनादिं ब्रह्मसृष्टं स्वस्थितिप्रकारमाश्रिताः सन्तः स्वे स्वे भावे तिष्ठन्ति ॥ २३ ॥

तत्तस्मादहमप्यगाधत्वाशक्य तरणत्वरूपाशक्य-प्लवत्वादि-स्वभावः। गाधो गाधत्वं मम विकारो भवेत्। एतदेतस्माद्धेतोस्तेऽहं प्रवदाम्युपायमिति शेषः ॥ २४ ॥

ननु माभूत्ते गाधता स्वस्वरूपस्तम्भनेनास्माकं गतिं देहीत्यत्राह,—नेति। कामाद्यन्यतमेनापि समुदितेन वा न जलं स्तम्भये। जलरूपस्य मे स्वरूपपीडाप्रसङ्गात्। तत्र कामोऽभिलाषः। लोभः स्ववस्तुपरित्यागासहिष्णुता। रागोऽनुरागः ॥ २५ ॥

हरीणां तरणे राम ! करिष्यामि यथा स्थलम् ॥ २६ ॥
तमब्रवीत्तदा रामः शृणु मे वरुणालय ! ।
अमोघोऽयं महाबाणः कस्मिन् देशे निपात्यताम् ॥ २७ ॥
रामस्य वचनं श्रुत्वा तञ्च दृष्ट्वा महाशरम् ।
महोदधिर्महातेजा राघवं वाक्यमब्रवीत् ॥ २८ ॥
उत्तरेणावकाशोऽस्ति कश्चित् पुण्यतरो मम ।
द्रुमकुल्य इति ख्यातो लोके ख्यातो यथा भवान् ॥ २९ ॥
उग्रदर्शनकर्माणो बहवस्तत्र दस्यवः ।
आभीरप्रमुखाः पापाः पिबन्ति सलिलं मम ॥ ३० ॥

तर्हि कथं कार्य्यनिर्वाहस्तत्राह,—विधास्ये करिष्यामि । उक्त-मेवार्थं स्थैर्य्यायाह,—ग्राहा इति । हरीणां तरणे तरणनिमित्तं तथा स्थलं करिष्यामि । यथा यावत् सेना प्रतरिष्यति तावत् ग्राहा वान-रान्न प्रहरिष्यन्ति । वक्ष्यमाणमार्गेण मयि सेतुं कुर्व्वित्युक्तं भवति । एतद्विधानञ्च भयाद्रागाच्चेति बोध्यम् ॥ २६ ॥

इत्युक्तस्त्वब्रवीद्राम इति पाठे एवं कार्य्यसाधने कथमपि प्रति-ज्ञाते सतीत्यर्थः । बाणो ब्रह्मास्त्रसंयुतः ॥ २७ ॥ २८ ॥

उत्तरेण इत्येनबन्तमव्ययम् । ममोत्तरेणासन्नोत्तरदेशे धन्यिमदेश इति यावत् । उत्तरशब्दोऽग्रिमवाची । यथा भवान् लोके ख्यातः पुण्यतमश्च एवं द्रुमकुल्य इति ख्यातः पुण्यतमः कश्चिदवकाशो-ऽस्ति ॥ २९ ॥

तैर्न तत् स्पर्शनं पापं सहेयं पापकर्मभिः।
अमोघः क्रियतां राम! अयं तत्र शरोत्तमः॥ ३१॥
तस्य तद्वचनं श्रुत्वा सागरस्य महात्मनः।
मुमोच तं शरं दीप्तं परं सागरदर्शनात्॥ ३२॥
तेन तन्मरुकान्तारं पृथिव्यां किल विश्रुतम्।
निपातितः शरो यत्र वज्राशनिसमप्रभः॥ ३३॥
ननाद च तदा तत्र वसुधा शल्यपीड़िता।
तस्मात् व्रणमुखात्तोयमुत्पपात रसातलात्॥ ३४॥
स बभूव तदा कूपो व्रण इत्येव विश्रुतः।
सततञ्चोत्थितं तोयं समुद्रस्येव दृश्यते॥ ३५॥

तत्र उग्रे दर्शनकर्मणी येषां तादृशा बहवो दस्यवः पापाः सन्ति॥ ३०॥

तैः पापकर्मभिः स्पर्शनं ममास्ति तत् पापं न सहेयम्। अतस्तत्रायममोघः शरो मुच्यताम्॥ ३१॥

सागरदर्शनादनन्तरमिति शेषः। सागरोपदेशादिति वार्थः॥ ३२॥

यत्र शरः पातितस्तत् स्थलं तेन हेतुना मरुकान्तारमिति विश्रुतम्॥ ३३॥

व्रणमुखात् शस्त्रास्त्रक्षतद्वारात्॥ ३४॥

उत्थितं व्रणकूपादिति शेषः। समुद्रस्य जलमिव प्रभूतमिति शेषः॥ ३५॥

अवदारणशब्दश्च दारुणः समपद्यत ।
तस्मात्तद्बाणपातेन अपःकुक्षिष्वशोषयत् ॥ ३६ ॥
विख्यातं त्रिषु लोकेषु मरुकान्तारमेव च ।
शोषयित्वा तु तं कुक्षिं रामो दशरथात्मजः ।
वरं तस्मै ददौ विद्वान् मरवेऽमरविक्रमः ॥ ३७ ॥
पशव्यश्चाल्परोगश्च फलमूलरसायुतः ।
बहुस्नेहो बहुक्षीरः सुगन्धिर्विविधौषधिः ॥ ३८ ॥
एवमेतैश्च संयुक्तो बहुभिः संयुतो मरुः ।
रामस्य वरदानाच्च शिवः पन्था बभूव ह ॥ ३९ ॥
तस्मिन् दग्धे तदा कुक्षौ समुद्रः सरितां पतिः ।
राघवं सर्वशास्त्रज्ञमिदं वचनमब्रवीत् ॥ ४० ॥
अयं सौम्य ! नलो नाम तनयो विश्वकर्मणः ।

तस्मादवदारणशब्दात् बाणपातेन हेतुना तद्देशस्य कुक्षिषु सरस्तटाकादिषु वर्त्तमानाः पुरातनीरपोदस्युजीवनसाधनीभूता अशोषयद्राम इति शेषः ॥ ३६ ॥

बाणशोषितजलवत्त्वात्ततः परं मरुकान्तारमिति ख्यातम् । मरवे तद्देशाय ॥ ३७ ॥

पशव्यः पशुहितः । अल्परोगः क्षीणरोगः । विविधौषधिरता सुगन्धिः ॥ ३८ ॥

शिवः पन्थाः शोभनो देशः ॥ ३९ ॥ ४० ॥

पित्रा दत्तवरः श्रीमान् प्रीतिमान् विश्वकर्मणः ॥ ४१ ॥
एष सेतुं महोत्साहः करोतु मयि वानरः।
तमहं धारयिष्यामि यथा ह्येष पिता तथा ॥ ४२ ॥
एवमुक्त्वोदधिर्नष्टः समुत्थाय नलस्ततः।
अब्रवीद्वानरश्रेष्ठो वाक्यं रामं महाबलम् ॥ ४३ ॥
अहं सेतुं करिष्यामि विस्तीर्णे मकरालये।
पितुः सामर्थ्यमासाद्य तत्त्वमाह महोदधिः ॥ ४४ ॥
दण्ड एव परो लोके पुरुषस्येति मे मतिः।

पित्रादत्तवरः सर्ववस्तुनिर्माणसामर्थ्ये दत्तवरः। विश्वकर्मणस्तव प्रीतिमान् त्वद्विषयप्रीतिमान्। तेन त्वन्नामस्मरणं पूर्वं करोत्वित्यर्थः। संसारसागरेऽगाधतासम्पादकस्य त्वन्नाम्नो मद्गाधतासम्पादनमीषत्-करमिति भावः ॥ ४१ ॥

कथं त्वय्यगाधे करिष्यतीत्यत्राह,—तमिति। तं तत् क्रियमाण-सेतुं तावद्देशे गाधीभूत्वा धारयिष्यामि। तावन्मात्रसाहाय्ये मया कृते सेतुनिर्माणं तस्येषत्करमित्याह,—यथेति। सेत्वादिनिर्माणे यथास्य पिता विश्वकर्मा तथा एष एतस्मिन् कर्मणि समर्थ इत्यर्थः॥ ४२ ॥

नष्टोऽदर्शनं गतोऽन्तर्हित इत्यर्थः। ततो नलः समुत्थाया-ब्रवीत् ॥ ४३ ॥

तद्वाक्यमाह,—अहमिति। पितुर्वरदानसामर्थ्यमास्थाय सेतुं करि-ष्यामि नात्र संशयः। महोदधिश्च तत्त्वमेवाह,—त्वत्प्रीतिमतो मम सामर्थ्यमस्तीति ॥ ४४ ॥

धिक् क्षमामकृतज्ञेषु सान्त्वं दानमथापि वा ॥ ४५ ॥
अयं हि सागरो भीमः सेतुकर्मदिदृक्षया ।
ददौ दण्डभयाद्गाधं राघवाय महोदधिः ॥ ४६ ॥
मम मातुर्वरो दत्तो मन्दरे विश्वकर्मणा ।
मया तु सदृशः पुत्रस्तव देवि भविष्यति ॥ ४७ ॥
औरसस्तस्य पुत्रोऽहं सदृशो विश्वकर्मणा ।

अथ किञ्चित् वक्तुं नलो लोकस्थितिमाह,—दण्ड एवेति । पुरुषस्याकृतज्ञेषु दण्ड एव परोऽर्थसाधक इति मे मतिः । अतएवाकृतज्ञेषु क्षमां धिक् ॥ ४५ ॥

कुत एवं तत्राह,—अयं हीति । यतोऽयं सागरः रामपूर्वैः सगरपुत्रैर्वर्धितोऽपि अकृतज्ञतया दण्डभयादेव सञ्जातया दिदृक्षया तज्जन्यदर्शनेन राघवाय सेतुं कर्त्तुं गाधं ददौ । यद्यपि सागरसम्बन्धादेव हनूमते मैनाकद्वारा कृतोपचारः सागरस्तथापि रामे एतावद्विलम्बकरणं रामेण क्रोधादस्त्रसाधनं कारयित्वा स्वरिपुनाशनायेति बोध्यम् ॥ ४६ ॥

स्वस्य पितृसदृशत्वं सागरोक्तं सत्यमिति बोधयितुं वरागमनप्रकारमाह,—ममेति । उत्तरार्द्धं वरस्वरूपम् ॥ ४७ ॥

औरसः पुत्रः । मातुरालिङ्गनपूर्वं स्वतेजोनिषेकद्वारा निर्मितः पुत्र इत्यर्थः । अतोऽहं विचित्रनिर्माणे विश्वकर्मणा सदृशः । नन्वेतत्सामर्थ्यं प्रागेव त्वं किं नावदस्तत्राह,—न चेति । आत्मप्रशंसालज्जयेति शेषः ॥ ४८ ॥

न चाप्यहमनुक्तो वः प्रब्रूयामात्मनो गुणान् ॥ ४८ ॥
समर्थश्चाप्यहं सेतुं कर्त्तुं वै वरुणालये।
तस्मादद्यैव बध्नन्तु सेतुं वानरपुङ्गवाः ॥ ४९ ॥
ततो विसृष्टा रामेण सर्वतो हरिपुङ्गवाः।
उत्पेततुर्महारण्यं हृष्टाः शतसहस्रशः ॥ ५० ॥
ते नगान्नगसङ्काशाः शाखामृगगणर्षभाः।
बभञ्जुः पादपांस्तत्र प्रचकर्षुश्च सागरम् ॥ ५१ ॥
ते शालैश्चाश्वकर्णैश्च धवैर्वंशैश्च वानराः।
कुटजैरर्जुनैस्तालैस्तिलकैस्तिनिशैरपि ॥ ५२ ॥
बिल्वकैः सप्तपर्णैश्च कर्णिकारैश्च पुष्पितैः।
चूतैश्चाशोकवृक्षैश्च सागरं समपूरयन् ॥ ५३ ॥
समूलांश्च विमूलांश्च पादपान् हरिसत्तमाः।
इन्द्रकेतूनिवोद्यम्य प्रजह्रुर्वानरास्तरून् ॥ ५४ ॥
तालान् दाड़िमगुल्मांश्च नारिकेलविभीतकान्।

यस्मात् समर्थोऽस्मि तस्मादद्यैव मया सह वानराः सेतुं बध्नन्तु। बन्धनानुज्ञा दीयतामित्यर्थः ॥ ४९ ॥

विसृष्टाः दत्तानुज्ञाः। उत्पेततुः उत्पेतुः ॥ ५० ॥

नगसङ्काशास्ते नगान् पादपान् बभञ्जुः। सागरं सागरसमीपं प्रचकर्षुः आकृष्टवन्तः ॥ ५१ ॥

शालाश्वकर्णयोरवान्तरजातिकृतो भेदः ॥ ५२ ॥ ५३ ॥

करीरान् बकुलान् निम्बान् समाजह्रुरितस्ततः ॥ ५५ ॥

हस्तिमात्रान् महाकायाः पाषाणांश्च महाबलाः ।

पर्वतांश्च समुत्पाट्य यन्त्रैः परिवहन्ति च ॥ ५६ ॥

प्रक्षिप्यमाणैरचलैः सहसा जलमुद्धृतम् ।

समुत्ससर्प चाकाशमवासर्पत् ततः पुनः ॥ ५७ ॥

समुद्रं क्षोभयामासुर्निपतन्तः समन्ततः ।

सूत्राण्यन्ये प्रगृह्णन्ति ह्यायतं शतयोजनम् ॥ ५८ ॥

नलश्चक्रे महासेतुं मध्ये नदनदीपतेः ।

स तदा क्रियते सेतुर्वानरैर्घोरकर्मभिः ॥ ५९ ॥

दण्डानन्ये प्रगृह्णन्ति विचिन्वन्ति तथापरे ।

वानरैः शतशस्तत्र रामस्याज्ञापुरःसरैः ॥ ६० ॥

मेघाभैः पर्वताभैश्च तृणैः काष्ठैर्बबन्धिरे ।

पुष्पिताग्रैश्च तरुभिः सेतुं बध्नन्ति वानराः ॥ ६१ ॥

पाषणांश्च गिरिप्रख्यान् गिरीणां शिखराणि च ।

इन्द्रकेतून् फलपुष्पादिना शोभावत्त्वादिन्द्रध्वजसदृशानुन्मूल्यो-
द्यम्योद्धृत्योज्जह्रुः । तदहनित्यस्योत्तरेण सम्बन्धः ॥ ५४ ॥ ५५ ॥

यन्त्रैः सुखाहरणसाधनैः ॥ ५६ ॥

अवासर्पत् अधःपपातेत्यर्थः ॥ ५७ ॥

सूत्राणीति । आकर्षणार्थमिति शेषः । सेतोरवक्रत्वायेति वा शेषः ।
शतयोजनमायतं दीर्घं महासेतुं नलश्चक्रे इत्युत्तरेणान्वयः ॥ ५८ ॥ ५९ ॥

दृश्यन्ते परिधावन्तो गृह्य दानवसन्निभाः ॥ ६२ ॥
शिलानां चिप्यमाणानां शैलानां तत्र पात्यताम् ।
बभूव तुमुलः शब्दस्तदा तस्मिन् महोदधौ ॥ ६३ ॥
कृतानि प्रथमेनाह्ना योजनानि चतुर्दश ।
प्रहृष्टैर्गजसङ्काशैस्त्वरमाणैः प्लवङ्गमैः ॥ ६४ ॥
द्वितीयेन तथैवाह्ना योजनानि तु विंशतिः ।
कृतानि प्लवगैस्तूर्णं भीमकायैर्महाबलैः ॥ ६५ ॥
अह्ना तृतीयेन तथा योजनानि तु सागरे ।
त्वरमाणैर्महाकायैरेकविंशतिरेव च ॥ ६६ ॥
चतुर्थेण तथा चाह्ना द्वाविंशतिरथापि वा ।
योजनानि महावेगैः कृतानि त्वरितैस्ततः ॥ ६७ ॥
पञ्चमेन तथा चाह्ना प्लवगैः क्षिप्रकारिभिः ।
योजनानि त्रयोविंशत् सुवेलमधिकृत्य वै ॥ ६८ ॥
स वानरवरः श्रीमान् विश्वकर्मात्मजो बली ।
बबन्ध सागरे सेतुं यथा चास्य पिता तथा ॥ ६९ ॥
स नलेन कृतः सेतुः सागरे मकरालये ।

विचिन्वन्ति आहरणीयवृक्षादिकम् ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥

पञ्चदिनैः शतयोजनं बबन्ध । सुवेलम् । सामीप्ये सुशब्दस्याव्ययीभावः । वेलासमीपम् । परपारसमीपमधिकृत्येत्यर्थः ॥ ६८ ॥ ६९ ॥

शुशुभे सुभगः श्रीमान् स्वातीपथ इवाम्बरे ॥ ७० ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः।
आगम्य गगने तस्थुर्द्रष्टुकामास्तदद्भुतम् ॥ ७१ ॥
दशयोजनविस्तीर्णं शतयोजनमायतम्।
ददृशुर्देवगन्धर्वा नलसेतुं सुदुष्करम् ॥ ७२ ॥
आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः।
तमचिन्त्यमसह्यञ्च ह्यद्भुतं लोमहर्षणम् ॥ ७३ ॥
ददृशुः सर्वभूतानि सागरे सेतुबन्धनम्।
तानि कोटिसहस्राणि वानराणां महौजसाम् ॥ ७४ ॥
बध्नन्तः सागरे सेतुं जग्मुः पारं महोदधेः।
विशालः सुकृतः श्रीमान् सुभूमिः सुसमाहितः ॥ ७५ ॥
अशोभत महान् सेतुः सीमन्त इव सागरे।
ततः पारे समुद्रस्य गदापाणिर्विभीषणः ॥ ७६ ॥
परेषामभियानार्थमतिष्ठत् सचिवैः सह।
सुग्रीवस्तु ततः प्राह रामं सत्यपराक्रमम् ॥ ७७ ॥
हनूमन्तं त्वमारोह अङ्गदं त्वथ लक्ष्मणः।

स्वातीपथः छायापथः ॥ ७० ॥ ७१, ७२ ॥

गर्जन्तः प्लवङ्गमाश्च ददृशुः। अचिन्त्यमचिन्त्यरचनम्। असह्यं भगवत्सम्बन्धं विना केनाप्यशक्यकरणम् ॥ ७३ ॥ ७४ ॥

बध्नन्त इति लिङ्गव्यत्यय आर्षः ॥ ७५ ॥ ७६ ॥

अयं हि विपुलो वीर! सागरो मकरालयः ॥ ७८ ॥
वैहायसौ युवामेतौ वानरौ धारयिष्यतः।
अग्रतस्तस्य सैन्यस्य श्रीमान् रामः सलक्ष्मणः ॥ ७९ ॥
जगाम धन्वी धर्मात्मा सुग्रीवेण समन्वितः।
अन्ये मध्येन गच्छन्ति पार्श्वतोऽन्ये प्लवङ्गमाः ॥ ८० ॥
सलिलं प्रपतन्त्यन्ये मार्गमन्ये प्रपेदिरे।
केचिद्वैहायसगताः सुपर्णा इव पुप्लुवुः ॥ ८१ ॥
घोषेण महता घोषं सागरस्य समुच्छ्रितम्।
भीममन्तर्दधे भीमा तरन्ती हरिवाहिनी ॥ ८२ ॥
वानराणां हि सा तीर्णा वाहिनी नलसेतुना।
तीरे निविविशे राज्ञा बहुमूलफलोदके ॥ ८३ ॥

तदद्भुतं राघवकर्मदुष्करं
समीक्ष्य देवाः सह सिद्धचारणैः।

परेषां राक्षसानाम् ॥ ७७ ॥ ७८ ॥

वैहायसौ आकाशगतिमन्तौ ॥ ७९ ॥

सुग्रीवेण समन्वितो रामो धन्वी अग्रतो जगाम। अनेन सुग्रीवस्य व्योममार्गगमनं सिद्धम् ॥ ८० ॥ ८१ ॥

तरन्ती हरिवाहिनी महता स्वीयेन घोषेण सागरस्य भीमं घोषमन्तर्दधे तिरोहितवती ॥ ८२ ॥

तीरे पारतीरे निविविशे निवेशिता ॥ ८३ ॥

उपेत्य रामं सहसा महर्षिभि-
स्तमभ्यषिञ्चन् सुशुभैर्जलैः पृथक् ॥ ८४ ॥
जयस्व शत्रून्नरदेव ! मेदिनीं
ससागरां पालय शाश्वतीः समाः ।
इतीव रामं नरदेवसत्कृतं
शुभैर्वचोभिर्विविधैरपूजयन् ॥ ८५ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
द्वाविंशः सर्गः ॥ २२ ॥

अथ समुद्रे सेतुबन्धनहृष्टैर्देवैरिदानीमेव रामस्य राज्याभिषेकः कृतो रामेण विभीषणस्येवेत्याह,—तदद्भुतमिति । राघवकर्म । राघवा-ख्याजन्यत्वात् तन्नामयशस्याजन्यत्वाच्च । सुशुभैर्जलैः आकाशगङ्गादि-जलैः ॥ ८४ ॥

अभिषिच्याशीर्वादञ्च कुर्वन्तिः । जयस्वेत्यादि । इतीवेति अती-वेत्यर्थकम् । नरदेवा ब्राह्मणाः ॥ ८५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
बालकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

---

## त्रयोविंशः सर्गः



निमित्तानि निमित्तज्ञो दृष्ट्वा लक्ष्मणपूर्वजः ।
सौमित्रिं सम्परिष्वज्य इदं वचनमब्रवीत् ॥ १ ॥
परिगृह्योदकं शीतं वनानि फलवन्ति च ।
बलौघं संविभज्येमं व्यूह्य तिष्ठेम लक्ष्मण ! ॥ २ ॥
लोकक्षयकरं भीमं भयं पश्याम्युपस्थितम् ।
प्रबर्हणं प्रवीराणामृक्षवानररक्षसाम् ॥ ३ ॥
वाताश्च कलुषा वान्ति कम्पते च वसुन्धरा ।
पर्वताग्राणि वेपन्ते पतन्ति च महीरुहाः ॥ ४ ॥
मेघाः क्रव्यादसङ्काशाः परुषाः परुषस्वनाः ।
क्रूराः क्रूरं प्रवर्षन्ति मिश्रं शोणितबिन्दुभिः ॥ ५ ॥

अथ रामस्य घोरनिमित्तदर्शनमाह,—निमित्तानीति । वक्ष्यमाणा-नीत्यर्थः ॥ १ ॥

संविभज्य व्यूह्य ऋक्षगोलाङ्गूलवानरविभागं कृत्वा तस्य व्यूहञ्च कृत्वेत्यर्थः ॥ २ ॥

भय भयनिमित्तम् ॥ ३ ॥

कलुषा रजोव्याप्ताः ॥ ४ ॥

रक्तचन्दनसङ्काशा सन्ध्या परमदारुणा ।
ज्वलतः प्रपतत्येतदादित्यादग्निमण्डलम् ॥ ६ ॥
दीना दीनस्वराः क्रूराः सर्वतो मृगपक्षिणः ।
प्रत्यादित्यं विनर्दन्ति जनयन्तो महद्भयम् ॥ ७ ॥
रजन्यामप्रकाशस्तु सन्तापयति चन्द्रमाः ।
कृष्णरक्तांशुपर्य्यन्तो लोकक्षय इवोदितः ॥ ८ ॥
ह्रस्वो रूक्षो प्रशस्तश्च परिवेषस्तु लोहितः ।
आदित्ये विमले नीलं लक्ष्म लक्ष्मण ! दृश्यते ॥ ९ ॥
रजसा महता चापि नक्षत्राणि हतानि च ।
युगान्तमिव लोकानां पश्य शंसति लक्षण ! ॥ १० ॥
काकाः श्येनास्तथा नीचा गृध्राः परिपतन्ति च ।
शिवाश्चाप्यशुभान्नादान्नदन्ति सुमहाभयान् ॥ ११ ॥

क्रव्यादसङ्काशाः गृध्रगोमायुश्येनादिसदृशास्तद्भूसरवर्णाः । अत एव पक्षास्वस्तुबदेजकाः ॥ ५ ॥ ६ ॥

प्रत्यादित्यं सूर्य्यसम्मुखम् ॥ ७ ॥

चन्द्रमाः सन्तापयति । सोष्णकिरण इत्यर्थः । कृष्णरक्तेत्यादिना परिवेषविशेष उक्तः ॥ ८ ॥

रूक्षत्वादिगुणकः परिवेष आदित्ये दृश्यते ॥ ९ ॥

नक्षत्राणि हतानीति । रात्रिकाल इति शेषः ॥ १० ॥

*महाभयान् महाभयजनकान्नादान् ॥ ११ ॥

शैलैः शूलैश्च खड्गैश्च विमुक्तैः कपिराक्षसैः।
भविष्यत्यावृता भूमिर्मांसशोणितकर्दमा ॥ १२ ॥
क्षिप्रमद्यैव दुर्द्धर्षां पुरीं रावणपालिताम्।
अभियाम जवेनैव सर्वैर्हरिभिरावृताः ॥ १३ ॥
इत्येवमुक्त्वा धन्वी स रामः सङ्ग्रामधर्षणः।
प्रतस्थे पुरतो रामो लङ्कामभिमुखो विभुः ॥ १४ ॥
सविभीषणसुग्रीवाः सर्वे ते वानरर्षभाः।
प्रतस्थिरे विनर्दन्तो धृतानां द्विषतां वधे ॥ १५ ॥
राघवस्य प्रियार्थन्तु सुतरां वीर्य्यशालिनाम्।
हरीणां कर्मचेष्टाभिस्तुतोष रघुनन्दनः ॥ १६ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
त्रयोविंशः सर्गः ॥ २३ ॥

अधुना दृश्यमाननिमित्तानां फलमाह,—शैलैरित्यादि ॥ १२ ॥ १३ ॥
रामो जनरमणो रामः इत्यन्वयः ॥ १४ ॥
धृतानां निश्चितबुद्धीनाम् ॥ १५ ॥
कर्मणा धैर्य्येण परं प्रतिप्रस्थानलक्षणेन। चेष्टाभिः कायव्यापारैश्च तुतोषेत्यन्वयः ॥ १६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

## चतुर्विंशः सर्गः



सा वीरसमिती राज्ञा विरराज व्यवस्थिता ।
शशिना शुभनक्षत्रा पौर्णमासीव शारदी ॥ १ ॥
प्रचचाल च वेगेन त्रस्ता चैव वसुन्धरा ।
पीड्यमाना बलौघेन तेन सागरवर्चसा ॥ २ ॥
ततः शुश्रुवुराक्रुष्टं लङ्कायां काननौकसः ।
भेरीमृदङ्गसंघुष्टं तुमुलं लोमहर्षणम् ॥ ३ ॥
बभूवुस्तेन घोषेण संहृष्टा हरियूथपाः ।
अमृष्यमाणास्तद्घोषं विनेदुर्घोषवत्तरम् ॥ ४ ॥
राक्षसास्तु प्लवङ्गानां शुश्रुवुस्तेऽपि गर्जितम् ।
नर्दतामिव दृप्तानां मेघानामम्बरे स्वनम् ॥ ५ ॥

सेति । सा वीराणां समितिः समागमो राज्ञा व्यवस्थिता रामेण कृतव्यूहा विरराज । शुभनक्षत्रा शारदी पौर्णमासी शशिनेव ॥ १ ॥

तेन बलौघेन पीड्यमाना वसुन्धरा सेनाया वेगेन प्रचचाल विचस्ता च ॥ २ ॥

आक्रुष्टमाक्रोशम् ॥ ३ ॥

घोषवत्तरमतिशयितध्वनिमत् ॥ ४ ॥

दृष्ट्वा दाशरथिर्लङ्कां चित्रध्वजपताकिनीम्।
जगाम मनसा सीतां दूयमानेन चेतसा ॥ ६ ॥
अत्र सा मृगशावाक्षी रावणेनोपरुध्यते।
अभिभूता ग्रहेणेव लोहिताङ्गेन रोहिणी ॥ ७ ॥
दीर्घमुष्णञ्च निःश्वस्य समुद्वीक्ष्य च लक्ष्मणम्।
उवाच वचनं वीरस्तत्कालहितमात्मनः ॥ ८ ॥
आलिखन्तीमिवाकाशमुत्थितां पश्य लक्ष्मण!।
मनसेव कृतां लङ्कां नगाग्रे विश्वकर्मणा ॥ ९ ॥
विमानैर्बहुभिर्लङ्का सङ्कीर्णा रचिता पुरा।
विष्णोः पदमिवाकाशं छादितं पाण्डुभिर्घनैः ॥ १० ॥
पुष्पितैः शोभिता लङ्का वनैश्चित्ररथोपमैः।

अम्बरे मेघानां स्तनमिव तेऽपि राक्षसाः प्लवङ्गानां तद्गर्जितं शुश्रुवुः ॥ ५ ॥

मनसा जगाम सस्मारेत्यर्थः ॥ ६ ॥

अत्रास्मत्प्रकारेऽत्र सेति। उपरुध्यते उपरुद्धा तिष्ठति। लोहिताङ्गोऽङ्गारकः ॥ ७ ॥

आत्मनस्तत्कालहितं लङ्कादर्शनकाले आत्मनः प्रीतिकरम्। दिव्यपुरीदर्शनजसन्तोषद्योतकमिति यावत् ॥ ८ ॥

तदेवाह,—आलिखन्तीमित्यादि ॥ ९ ॥

विमानैः सप्तभूमिकप्रासादैः सङ्कीर्णा निबिड़ा। तत्रोपमा।

नानापतगसंघुष्टफलपुष्पोपगैः शुभैः ॥ ११ ॥
पश्य मत्तविहङ्गानि प्रलीनभ्रमराणि च ।
कोकिलाकुलखण्डानि दोधवीति शिवोऽनिलः ॥ १२ ॥
इति दाशरथी रामो लक्ष्मणं समभाषत ।
बलञ्च तत्र विभजच्छास्त्रदृष्टेन कर्मणा ॥ १३ ॥
शशास कपिसेनां तां बलादादाय वीर्य्यवान् ।
अङ्गदः सह नीलेन तिष्ठेदुरसि दुर्जयः ॥ १४ ॥
तिष्ठेद्वानरवाहिन्या वानरौघसमावृतः ।
आश्रितो दक्षिणं पार्श्वमृषभो नाम वानरः ॥ १५ ॥
गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः ।
तिष्ठेद्वानरवाहिन्याः सव्यं पक्षमधिष्ठितः ॥ १६ ॥

पाण्डुभिर्घनैः सङ्कीर्णं विष्णोर्व्यापनशीलस्य वायुमयस्य ब्रह्मणः पदं प्रचारस्थानमाकाशमिव ॥ १० ॥ ११ ॥

कोकिलाकुलखण्डानि तदाकुलवृक्षखण्डानि । दोधवीति कम्पयति ॥ १२ ॥

विभजत् व्यभजत् ॥ १३ ॥

बलाद्वानरबलाद् आदाय सबलं गृहीत्वा नीलेन सहाङ्गद उरसि उह्यमानपुरुषव्यूहस्योरसि तिष्ठेदिति कपिसेनां शशास ॥ १४ ॥

वानरौघसमावृत ऋषभो वानरवाहिन्या दक्षिणं पार्श्वमाश्रितस्तिष्ठेदित्यन्वयः ॥ १५ ॥ १६ ॥

मूर्ध्नि स्थास्याम्यहं यत्तो लक्ष्मणेन समन्वितः ।
जाम्बवांश्च सुषेणश्च वेगदर्शी च वानराः ॥ १७ ॥
ऋक्षमुख्या महात्मनः कुक्षिं रक्षन्तु ते त्रयः ।
जघनं कपिसेनायाः कपिराजोऽभिरक्षतु ।
पश्चार्द्धमिव लोकस्य प्रचेतास्तेजसावृतः ॥ १८ ॥
सुविभक्तमहाव्यूहा महावानररक्षिता ।
अनीकिनी सा विबभौ यथा द्यौः साभ्रसंप्लवा ॥ १९ ॥
प्रगृह्य गिरिशृङ्गाणि महतश्च महीरुहान् ।
आसेदुर्वानरा लङ्कां मिमर्दयिषवो रणे ॥ २० ॥
शिखरैर्विकिरामैनां लङ्कां मुष्टिभिरेव वा ।
इति स्म दधिरे सर्वे मनांसि हरिपुङ्गवाः ॥ २१ ॥
ततो रामो महातेजाः सुग्रीवमिदमब्रवीत् ।
सुविभक्तानि सैन्यानि शुक एष विमुच्यताम् ॥ २२ ॥
रामस्य तु वचः श्रुत्वा वानरेन्द्रो महाबलः ।
मोचयामास तं दूतं शुकं रामस्य शासनात् ॥ २३ ॥

यत्तः सावधानः ॥ १७ ॥

जाम्बवदादयस्त्रयोऽपि ऋक्षा जघनं पश्चार्द्धम् । लोकस्य भूलोकस्य पश्चार्द्धं पश्चिमदेशं तेजसावृतः प्रचेता इव ॥ १८ ॥ १९ ॥

मर्दयितुमिच्छवो मिमर्दयिषवः ॥ २० ॥

शिखरैर्गिरिशिखरैर्विकिराम विक्षिपाम नाशयामेति यावत् ॥२१॥

मोचितो रामवाक्येन वानरैश्च निपीड़ितः।

शुकः परमसन्त्रस्तो रचोऽधिपमुपागमत् ॥ २४ ॥

रावणः प्रहसन्नेव शुकं वाक्यमुवाच ह।

किमिमौ ते सितौ पक्षौ लूनपक्षश्च दृश्यसे ॥ २५ ॥

कच्चिन्नानेकचित्तानां तेषां त्वं वशमागतः।

ततः स भयसंविग्नस्तेन राज्ञाभिचोदितः।

वचनं प्रत्युवाचेदं राचसाधिपमुत्तमम् ॥ २६ ॥

सागरस्योत्तरे तीरेऽब्रुवन्ते वचनं तथा।

यथा सन्देशमक्लिष्टं सान्त्वयन् श्लक्ष्णया गिरा ॥ २७ ॥

क्रुद्धैस्तैरहमुत्प्लुत्य दृष्टमात्रः प्लवङ्गमैः।

गृहीतो ऽस्म्यपि चारब्धो हन्तुं लोप्तुश्च मुष्टिभिः ॥ २८ ॥

शुक एष विमुच्यतामिति। पूर्वं मुच्यतां दूत आगत इत्यत्र ताड़-नादिदुःखान् मुच्यतामित्येवार्थः। तेन बध्वा स्थापित इत्यवगम्यते ॥ २२ ॥ ॥ २३ ॥ २४ ॥

प्रहसन्नेव लूनपक्षत्वादिविकृताकारं दृष्ट्वा प्रहासः। इमौ ते पक्षौ सितौ बद्धौ किम्। अतः लूनपक्षश्च दृश्यसे ॥ २५ ॥

अनेकचित्तानां चञ्चलचित्तानां वानराणाम् ॥ २६ ॥

सागरस्योत्तरे तीरे स्थित्वा। श्लक्ष्णया गिरा वानरान् सान्त्वयन्। अक्लिष्टन्ते वचनं यथा सन्देशं तथाऽब्रुवम् ॥ २७ ॥

अहं तथा ब्रुवन् लोप्तुं पक्षभागे छेत्तुं मुष्टिभिर्हन्तुञ्चारब्धः ॥ २८ ॥

न ते सम्भाषितुं शक्याः सम्भ्रमोऽत्र न विद्यते।
प्रकृत्या कोपनास्तीक्ष्णा वानरा राक्षसाधिप! ॥ २९ ॥
स च हन्ता विराधस्य कबन्धस्य खरस्य च।
सुग्रीवसहितो रामः सीतायाः पदमागतः ॥ ३० ॥
स कृत्वा सागरे सेतुं तीर्त्वा च लवणोदधिम्।
एष रक्षांसि निर्धूय धन्वी तिष्ठति राघवः ॥ ३१ ॥
ऋक्षवानरसङ्घानामनीकानि सहस्रशः।
गिरिमेघनिकाशानां छादयन्ति वसुन्धराम् ॥ ३२ ॥
राक्षसानां बलौघस्य वानरेन्द्रबलस्य च।
नैतयोर्विद्यते सन्धिर्देवदानवयोरिव ॥ ३३ ॥
पुरा प्राकारमायान्ति क्षिप्रमेकतरं कुरु।
सीतां वास्मै प्रयच्छाशु युद्धं वापि प्रदीयताम् ॥ ३४ ॥
शुकस्य वचनं श्रुत्वा रावणो वाक्यमब्रवीत्।

तेऽकृतपरिभवाः सम्भाषितुं न शक्याः। अत्र परिसम्भवे सम्भ्रमो विचारो नास्ति। इदमेतावत् कार्य्यमिति मर्य्यादा नास्तीत्यर्थः। तदेव स्मारयति। प्रकृत्येति ॥ २९ ॥

अधुना विज्ञाप्यमाह,—स चेति। विराधादिहन्तेत्यनेन तवापि हन्तेति सूचितम्। पदं स्थानमन्विष्यागतः प्राप्तः ॥ ३० ॥

रक्षांसि निर्धूय तृणीकृत्य ॥ ३१ ॥ ३२ ॥

सन्धिः सन्धानं नास्त्येव ॥ ३३ ॥

रोषसंरक्तनयनो निर्दहन्निव चक्षुषा ॥ ३५ ॥
यदि मां प्रतियुध्येरन्देवगन्धर्वदानवाः ।
नैव सीतां प्रदास्यामि सर्वलोकभयादपि ॥ ३६ ॥
कदा समभिधावन्ति मामका राघवं शराः ।
वसन्ते पुष्पितं मत्ता भ्रमरा इव पादपम् ॥ ३७ ॥
कदा शोणितदिग्धाङ्गं दीप्तैः कार्मुकविच्युतैः ।
शरैरादीपयिष्यामि उल्काभिरिव कुञ्जरम् ॥ ३८ ॥
तच्चास्य बलमादास्ये बलेन महतावृतः ।
ज्योतिषामिव सर्वेषां प्रभामुद्यन् दिवाकरः ॥ ३९ ॥
सागरस्येव मे वेगो मारुतस्येव मे बलम् ।
न च दाशरथिर्वेद तेन मां योद्धुमिच्छति ॥ ४० ॥
न मे तूणीशयान् बाणान् सविषानिव पन्नगान् ।
रामः पश्यति संग्रामे तेन मां योद्धुमिच्छति ॥ ४१ ॥

पुरा आयान्ति आयास्यन्ति । पुरा योगे भविष्यति लट् । एकतरं वक्ष्यमाणयोरन्यतरत् ॥ ३४ ॥ ३५ ॥
सर्वस्य राक्षसलोकस्य रक्षाभयप्राप्तेरपीत्यर्थः ॥ ३६ ॥
समभिधावन्ति धाविष्यन्ति ॥ ३७ ॥ ३८ ॥
आदास्ये तिरस्करिष्यामि ॥ ३९ ॥
वेद जानाति ॥ ४० ॥
पश्यति दृष्टवान् ॥ ४१ ॥

न जानाति पुरा वीर्य्यं मम युद्धे स राघवः।
मम चापमयीं वीणां शरकोणैः प्रवादिताम् ॥ ४२ ॥
ज्याशब्दतुमुलां घोरामार्त्तगीतमहास्वनाम्।
नाराचतलसन्नादां नदीमहितवाहिनीम् ॥ ४३ ॥
अवगाह्य महारङ्गं वादयिष्याम्यहं रणे ॥ ४४ ॥

न वासवेनापि सहस्रचक्षुषा
युद्धेऽस्मि शक्यो वरुणेन वा स्वयम्।
यमेन वा धर्षयितुं शराग्निना
महाहवे वैश्रवणेन वा स्वयम् ॥ ४५ ॥

## इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

पुरा पूर्वं मम वीर्य्यं न जानाति नाज्ञासीत्। शरकोणैः शररूपवादनदण्डैः प्रवादिताम् ॥ ४२ ॥

ज्याशब्द एव तुमुलः शब्दो यस्यास्ताम्। आर्त्तः आर्त्तशब्दरूपो हा हतोऽस्मीत्यादिको गीतरूपो महान् स्वनो यस्यास्ताम्। नाराचतलरव एव सन्नादो यस्यास्ताम्। अत्र तुमुलमहास्वनसन्नादशब्दैर्वीणायामन्द्रमध्यताराः शब्दा उक्ताः। नदीरूपाया अहितवाहिनी सेना तद्रूपं महारङ्गमवगाह्य रणे वादयिष्यामि ॥ ४३ ॥ ४४ ॥

न शक्यो जेतुमिति शेषः ॥ ४५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्धकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

# पञ्चविंशः सर्गः

सबले सागरं तीर्णे रामे दशरथात्मजे ।
अमात्यौ रावणः श्रीमानब्रवीच्छुकसारणौ ॥ १ ॥
समग्रं सागरं तीर्णं दुस्तरं वानरं बलम् ।
अभूतपूर्वं रामेण सागरे सेतुबन्धनम् ॥ २ ॥
सागरे सेतुबन्धं तं न श्रद्दध्यां कथञ्चन ।
अवश्यञ्चापि संख्येयं तन्मया वानरं बलम् ॥ ३ ॥
भवन्तौ वानरं सैन्यं प्रविश्यानुपलक्षितौ ।
परिमाणञ्च वीर्य्यञ्च ये च मुख्याः प्लवङ्गमाः ॥ ४ ॥

रावणः शुकसारणाख्यावमात्यावब्रवीत् । अमात्यत्वेन विशेषणादयं शुकोऽन्यः । पूर्वप्रेषितशुकोऽस्तावृत्तान्तज्ञानपूर्वकं प्रेषणाच्चेति कतकादयः ॥ १ ॥

सर्वं वानरबलं तीर्णम् । सागरे सेतुबन्धनञ्च कृतमेतदुभयमप्यभूतपूर्वम् ॥ २ ॥

सागरे सेतुबन्धनं न श्रद्दध्याम् । समुद्रस्य विराडुदरत्वेन जीवशास्रैरशक्यबन्धनत्वात् जीवविशेषत्वाच्च रामस्येत्याशयः । रामोऽपि विराडेव मान्य इति बुद्धिस्तु रजस्तमःप्रधानत्वान्न तस्येति दिक् ॥ ३ ॥

मन्त्रिणो ये च रामस्य सुग्रीवस्य च सम्मताः।
ये पूर्वमभिवर्त्तन्ते ये च शूराः प्लवङ्गमाः॥ ५॥
स च सेतुर्यथा बद्धः सागरे सलिलार्णवे।
निवेशश्च यथा तेषां वानराणां महात्मनाम्॥ ६॥
रामस्य व्यवसायश्च वीर्यं प्रहरणानि च।
लक्ष्मणस्य च वीरस्य तत्त्वतो ज्ञातुमर्हथ॥ ७॥
कश्च सेनापतिस्तेषां वानराणां महात्मनाम्।
तच्च ज्ञात्वा यथा तत्त्वं शीघ्रमागन्तुमर्हथ॥ ८॥
इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ।
हरिरूपधरौ वीरौ प्रविष्टौ वानरं बलम्॥ ९॥
ततस्तद्वानरं सैन्यमचिन्त्यं लोमहर्षणम्।
संख्यातुं नाध्यगच्छेतां तदा तौ शुकसारणौ॥ १०॥
तत् स्थितं पर्वताग्रेषु निर्झरेषु गुहासु च।

मन्त्रिण इत्यादीनां तत्त्वतो ज्ञातुमर्हथ इत्यनेन सम्बन्धः। ये च मुख्यास्तानिति शेषः॥ ४॥

ये पूर्वमभिवर्त्तन्ते अग्रेसरा इत्यर्थः॥ ५॥

सागरे समुद्रे सलिलार्णवे लवणजले समुद्रे। निवेशं सेनानिवेशम्॥ ६॥

प्रहरणान्यायुधानि॥ ७॥ ८॥ ९॥

नाध्यगच्छेतां नाशक्नुवाताम्॥ १०॥

तरमाणश्च तीर्णश्च तर्त्तुकामश्च सर्वशः ॥ ११ ॥
निविष्टं निविशच्चैव भीमनादं महाबलम् ।
तद्बलार्णवमक्षोभ्यं ददृशाते निशाचरौ ॥ ॥ १२ ॥
तौ ददर्श महातेजाः प्रतिच्छन्नौ विभीषणः ।
आचचक्षे स रामाय गृहीत्वा शुकसारणौ ॥ १३ ॥
तस्यै तौ राक्षसेन्द्रस्य मन्त्रिणौ शुकसारणौ ।
लङ्कायाः समनुप्राप्तौ चारौ परपुरञ्जय ॥ १४ ॥
तौ दृष्ट्वा व्यथितौ रामं निराशौ जीविते तथा ।
कृताञ्जलिपुटौ भीतौ वचनञ्चेदमूचतुः ॥ १५ ॥
आवामिहागतौ सौम्य ! रावणप्रहितावुभौ ।
परिज्ञातुं बलं सर्वं तदिदं रघुनन्दन ! ॥ १६ ॥
तयोस्तद्वचनं श्रुत्वा रामो दशरथात्मजः ।
अब्रवीत् प्रहसन् वाक्यं सर्वभूतहिते रतः ॥ १७ ॥

तत्र हेतुमाह,—तत्स्थितमित्यादिना ॥ ११ ॥
ददृशाते ददृशतुः ॥ १२ ॥
प्रतिच्छन्नौ हरिरूपेण । गृहीत्वाचचक्षे गृहीत्वोपनीयाचचक्षे ॥ ॥ १३ ॥ १४ ॥
तौ रामं दृष्ट्वा व्यथितौ जीविते निराशौ चाभूताम् ॥ १५ ॥
रावणप्रहितौ तत्प्रेषितौ ॥ १६ ॥
प्रहसन् सेतुबन्धनेन जनस्थाने निरपेक्षं खरादिवधेन च न मद्बलज्ञानं कृतम् ? इति प्रहासः ॥ १७ ॥

यदि दृष्टं बलं सर्वं वयं वा सुसमाहिताः।
यथोक्तं वा कृतं कार्यं छन्दतः प्रतिगम्यताम् ॥ १८ ॥
अथ किञ्चिददृष्टं वा भूयस्तद्द्रष्टुमर्हथः।
विभीषणो वा कात्स्न्र्येन पुनः सन्दर्शयिष्यति ॥ १९ ॥
न चेदं ग्रहणं प्राप्य भेतव्यं जीवितं प्रति।
न्यस्तशस्त्रौ गृहीतौ च न दूतौ वधमर्हथः ॥ २० ॥
प्रच्छन्नौ च विमुञ्चेमौ चारौ रात्रिञ्चरावुभौ।
शत्रुपक्षस्य सततं विभीषणविकर्षिणौ ॥ २१ ॥
प्रविश्य महतीं लङ्कां भवद्भ्यां धनदानुजः।
वक्तव्यो रक्षसां राजा यथोक्तं वचनं मम ॥ २२ ॥
यद्बलं त्वं समाश्रित्य सीतां मे हृतवानसि।
तद्दर्शय यथाकामं ससैन्यश्च सबान्धवः ॥ २३ ॥

वयमिति रामेण निर्देशः सुग्रीवादिसहितस्य स्वस्य। सुसमाहिताः जातबलाः। यथोक्तं रावणोक्तमनतिक्रम्य। वा चेत्। छन्दतः स्वेच्छया ॥ १८ ॥

विभीषणो वा यस्माद्विशिष्य भवतां भयमिति शेषः ॥ १९ ॥

न्यस्तशस्त्रत्वादेकैकमप्यवधे हेतुः किमुत समुदितमिति भावः ॥ २० ॥

प्रच्छन्नौ च गूढतया रन्ध्रान्वेषिणावपि शत्रुपक्षस्य रावणशत्रुपक्षस्य सुग्रीवादिरूपस्य सततं विकर्षिणौ भेदादिपरावपि इमौ रात्रिचरौ हे विभीषण विमुञ्च ॥ २१ ॥

अथ रामः प्रतिसन्दिशति। प्रविश्येति ॥ २२ ॥ २३ ॥

श्वः काल्ये नगरीं लङ्कां सप्राकारां सतोरणाम् ।
रक्षसाञ्च बलं पश्य शरैर्विध्वंसितं मया ॥ २४ ॥
क्रोधं भीममहं मोक्ष्ये ससैन्ये त्वयि रावण ! ।
श्वः काल्ये वज्रवान् वज्रं दानवेष्विव वासवः ॥ २५ ॥
इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ ।
जयेति प्रतिनन्द्यैनं राघवं धर्मवत्सलम् ॥ २६ ॥
आगम्य नगरीं लङ्कामब्रूतां राक्षसाधिपम् ।
विभीषणगृहीतौ तु बधार्थं राक्षसेश्वर ! ॥ २७ ॥
दृष्ट्वा धर्मात्मना मुक्तौ रामेणामिततेजसा ।
एकस्थान गता यत्र चत्वारः पुरुषर्षभाः ॥ २८ ॥
लोकपालसमाः शूराः कृतास्त्रा दृढविक्रमाः ।
रामो दाशरथिः श्रीमान् लक्ष्मणश्च विभीषणः ॥ २९ ॥
सुग्रीवश्च महातेजा महेन्द्रसमविक्रमः ।
एते शक्ताः पुरीं लङ्कां सप्राकारां सतोरणाम् ॥ ३० ॥
उत्पाट्य संक्रामयितुं सर्वे तिष्ठन्तु वानराः ।

श्वः काल्ये श्वः प्रातःकाले ॥ २४ ॥
वज्रवान् वज्रवत्त्वगुणः ॥ २५ ॥ २६ ॥
विभीषणगृहीतावित्यनेन तस्यागन्तसमहत्तैरमर्थायेति सूचितम् ॥२७॥
यत्र यस्मादेते वक्ष्यमाणाश्चत्वार एकस्थानगताः एकत्र मिलितास्तस्मा-
त्एते शक्ता इति योजना ॥ २८ ॥ २९ ॥ ३० ॥

याद्दृशं तद्धि रामस्य रूपं प्रहरणानि च॥ ३१ ॥
वधिष्यति पुरीं लङ्कामेकस्तिष्ठन्तु ते त्रयः।
रामलक्ष्मणगुप्ता सा सुग्रीवेण च वाहिनी।
बभूव दुर्द्धर्षतरा सर्वैरपि सुरासुरैः॥ ३२ ॥
प्रहृष्टयोधा ध्वजिनी महात्मनां
वनौकसां सम्प्रति योद्धुमिच्छताम्।
अलं विरोधेन शमो विधीयतां
प्रदीयतां दाशरथाय मैथिली॥ ३३ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
पञ्चविंशः सर्गः॥ २५ ॥

उत्पाट्य संक्रामयितुं निखातप्राणास्तम्भमिवोपरि कृत्वा पुनः प्रतिष्ठापयितुमित्यर्थः॥ ३१ ॥ ३२ ॥
योद्धुमिच्छतां ध्वजिनी दुर्द्धर्षेत्यन्वयः। यदेवमतोऽलमिति॥ ३३ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे पञ्चविंशः सर्गः॥ २५ ॥

---

## षड्विंशः सर्गः ।



तद्वचः सत्यमक्लीवं सारणेनाभिभाषितम् ।
निशम्य रावणो राजा पर्य्यभाषत सारणम् ॥ १ ॥
यदि मामभियुञ्जीरन् देवगन्धर्वदानवाः ।
नैव सीतामहं दद्यां सर्वलोकभयादपि ॥ २ ॥
त्वन्तु सौम्य ! परित्रस्तो हरिभिः पीड़ितो भृशम् ।
प्रतिप्रदानमद्यैव सीतायाः साधु मन्यसे ॥ ३ ॥
को हि नाम सपत्नो मां समरे जेतुमर्हति ।
इत्युक्त्वा परुषं वाक्यं रावणो राक्षसाधिपः ॥ ४ ॥
आरुरोह ततः श्रीमान् प्रासादं हिमपाण्डुरम् ।
बहुतालसमुत्सेधं रावणोऽथ दिदृक्षया ॥ ५ ॥
ताभ्यां चराभ्यां सहितो रावणः क्रोधमूर्च्छितः ।
पश्यमानः समुद्रन्तं पर्वतांश्च वनानि च ॥ ६ ॥

तदिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

बहुतालसमुत्सेधम् अनेकतालप्रमाणोन्नतम् । दिदृक्षया वानरबल-दर्शनेच्छया ॥ ५ ॥

चराभ्यां चाराभ्याम् । पश्यमानः पश्यन् ॥ ६ ॥

ददर्श पृथिवीदेशं सुसम्पूर्णं प्लवङ्गमैः।
तदपारमसङ्ख्येयं वानराणां महाबलम् ॥ ७ ॥
आलोक्य रावणो राजा परिपप्रच्छ सारणम्।
एषां के वानरा मुख्याः के शूराः के महाबलाः ॥ ८ ॥
के पूर्वमभिवर्त्तन्ते महोत्साहाः समन्ततः।
केषां शृणोति सुग्रीवः के वा यूथपयूथपाः ॥ ९ ॥
सारणाचक्ष्व मे सर्वं किंप्रभावाः प्लवङ्गमाः।
सारणो राक्षसेन्द्रस्य वचनं परिपृच्छतः ॥ १० ॥
आबभाषेऽथ मुख्यज्ञो मुख्यांस्तत्र वनौकसः।
एष योऽभिमुखो लङ्कां नर्दंस्तिष्ठति वानरः ॥ ११ ॥
यूथपानां सहस्रेण शतेन परिवारितः।
यस्य घोषेण महता सप्रकारा सतोरणा ॥ १२ ॥
लङ्का प्रतिहता सर्वा सशैलवनकानना।
सर्वशाखामृगेन्द्रस्य सुग्रीवस्य महात्मनः ॥ १३ ॥

वानराणां महाबलञ्च ददर्शेत्यन्वयः ॥ ७ ॥ ८ ॥
केषां शृणोति वच इति शेषः। यूथपयूथपाः महाप्रधानाः ॥ ९ ॥
वचनम् उत्तरमाबभाषे इत्यन्वयः ॥ १० ॥ ११ ॥
सहस्रेण शतेन लक्षेणेत्यर्थः ॥ १२ ॥
यूथपसंख्याया एव गणनम्। सुग्रीवस्य बलाग्रे च यस्तिष्ठति एष
नील इत्यन्वयः ॥ १३ ॥

बलाग्रे तिष्ठते वीरो नीलो नामैष यूथपः ।
बाहू प्रगृह्य यः पद्भ्यां महीं गच्छति वीर्य्यवान् ॥ १४ ॥
लङ्कामभिमुखः कोपादभीक्ष्णञ्च विजृम्भते ।
गिरिशृङ्गप्रतीकाशः पद्मकिञ्जल्कसन्निभः ॥ १५ ॥
स्फोटयत्यतिसंरब्धो लाङ्गूलञ्च पुनः पुनः ।
यस्य लाङ्गूलशब्देन स्वनन्ति प्रदिशो दश ॥ १६ ॥
एष वानरराजेन सुग्रीवेणाभिषेचितः ।
युवराजोऽङ्गदो नाम त्वामाह्वयति संयुगे ॥ १७ ॥
वालिनः सदृशः पुत्त्रः सुग्रीवस्य सदा प्रियः ।
राघवार्थे पराक्रान्तः शक्रार्थे वरुणो यथा ॥ १८ ॥
एतस्य सा मतिः सर्वा यद्दृष्टा जनकात्मजा ।
हनूमता वेगवता राघवस्य हितैषिणा ॥ १९ ॥
बहूनि वानरेन्द्राणामेष यूथानि वीर्य्यवान् ।
परिगृह्याभियाति त्वां सेनानीकेन मर्दितुम् ॥ २० ॥

अथाङ्गदवर्णनम् । बाहू इति । प्रगृह्य उपगम्य पद्भ्यां महीं गच्छति । नरवदिति शेषः ॥ १४ ॥ १५ ॥ १६ ॥

अभिषेचितोऽभिषिक्तः ॥ १७ ॥

पराक्रान्तः पराक्रमितुमुद्यतः ॥ १८ ॥

यद्धनुमता जनकात्मजा दृष्टा सा सर्वा मतिरेतस्याङ्गदस्य मन्त्र-मूलेति शेषः ॥ १९ ॥

अनु वालिसुतस्यापि बलेन महता वृतः।
वीरस्तिष्ठति संग्रामे सेतुहेतुरयं नलः॥ २१॥
ये तु विष्टभ्यगात्राणि क्ष्वेडयन्ति नदन्ति च।
एत एनमनुगच्छन्ति वीराश्चन्दनवासिनः॥ २२॥
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम्।
श्वेतो रजतसङ्काशश्चपलो भीमविक्रमः॥ २३॥
बुद्धिमान् वानरः शूरस्त्रिषु लोकेषु विश्रुतः।
तूर्णं सुग्रीवमागम्य पुनर्गच्छति वानरः॥ २४॥
विभजन् वानरीं सेनामनीकानि प्रहर्षयन्।
यः पुरा गोमतीतीरे रम्यं पर्य्येति पर्वतम्॥ २५॥
नाम्ना संरोचनो नाम नानानगयुतो गिरिः।
तत्र राज्यं प्रशास्त्येष कुमुदो नाम यूथपः॥ २६॥

बहूनि यूथानि परिगृह्य स्वेनानीकेन त्वामभियाति॥ २०॥

वालिसुतस्यानु पश्चात्। सेतुहेतुः सेतुकर्त्ता॥ २१॥

अथ श्वेतवर्णनम्। येत्विति। गात्राणि विष्टभ्य क्ष्वेलां कुर्वन्ति। एनं श्वेतम्। चन्दनवासिनः॥ २२॥

एषैव एष एव। सन्धिरार्षः॥ २३॥

सुग्रीवमागम्य पुनर्गच्छतीत्यनेन राघवादर्शनसमये कार्य्यार्थं सुग्रीवसमीपमागत्य गतवानिति ज्ञायते॥ २४॥

यः पुरेत्यादिना कुमुदवर्णनम्। रम्यं रम्याख्यम्॥ २५॥

योऽसौ शतसहस्राणि सहर्षं परिकर्षति।
यस्य वाला बहुव्यामा दीर्घलाङ्गूलमाश्रिताः॥ २७॥
ताम्राः पीताः सिताः श्वेताः प्रकीर्णा घोरदर्शनाः।
अदीनो वानरश्चण्डः संग्राममभिकाङ्क्षति।
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम्॥॥ २८॥
यस्त्वेष सिंहसङ्काशः कपिलो दीर्घकेसरः।
निभृतः प्रेक्षते लङ्कां दिधक्षन्निव चक्षुषा॥ २९॥
विन्ध्यं कृष्णगिरिं सह्यं पर्वतञ्च सुदर्शनम्।
राजन्! सततमध्यास्ते स रम्भो नाम यूथपः॥ ३०॥
शतं शतसहस्राणां त्रिंशच्च हरिपुङ्गवाः॥ ३१॥
यं यान्तं वानरा घोराश्चण्डाश्चण्डपराक्रमाः।
परिवार्य्यानुगच्छन्ति लङ्कां मर्दितुमोजसा॥ ३२॥
यस्तु कर्णौ विवृणुते जृम्भते च पुनः पुनः।
न तु संविजते मृत्योर्न च सेनां प्रधावति॥ ३३॥

अस्यैव संरोचन इति नामान्तरम्॥ २६॥
चण्डवर्णनम्। यो सावित्ति॥ २७॥ २८॥
रम्भवर्णनम्। यस्त्विति। निभृत एकाग्रः॥ २९॥ ३०॥ ३१॥
यं यान्तमनुगच्छन्तीत्यन्वयः॥ ३२॥
शरभवर्णनम्। यस्तु कर्णाविति। मृत्योर्न संविजते नोद्विग्नं

प्रकम्पते च रोषेण तिर्य्यक् च पुनरीयते।
पश्य लाङ्गूलविक्षेपं क्ष्वेडत्येष महाबलः॥ ३४॥
महौजसा वीतभयो रम्यं साल्वेयपर्वतम्।
राजन्! सततमध्यास्ते शरभो नाम यूथपः॥ ३५॥
एतस्य बलिनः सर्वे विहारा नाम यूथपाः।
राजन्! शतसहस्राणि चत्वारिंशत्तथैव च॥ ३६॥
यस्तु मेघ इवाकाशं महानावृत्य तिष्ठति।
मध्ये वानरवीराणां सुराणामिव वासवः॥ ३७॥
भेरीणामिव सन्नादो यस्यैष श्रूयते महान्।
घोषः शाखामृगेन्द्राणां संग्राममभिकाङ्क्षताम्॥ ३८॥
एष पर्वतमध्यास्ते पारियात्रमनुत्तमम्।
युद्धे दुष्प्रसहो नित्यं पनसो नाम यूथपः॥ ३९॥
एनं शतसहस्राणां शतार्धं पर्य्युपासते।
यूथपा यूथपश्रेष्ठं येषां यूथानि भागशः॥ ४०॥

गच्छति। तथा वरदानादिति शेषः। न च सेनामिति। किन्त्वेक एव योद्धुमिच्छतीत्यर्थः॥ ३३॥ ३४॥

महौजसा महता तेजसा॥ ३५॥ ३६॥

पनसवर्णनम्। यस्तु मेघ इत्यादिना॥ ३७॥

भेरीणां नाद इव यस्य सन्नादः श्रूयत इति शेषः॥ ३८॥ ३९॥

एनं पनसम्। शतार्द्धं शतसहस्रसंख्यानां पञ्चाशल्लक्षसंख्यम्।

यस्तु भीमां प्रवल्गन्तीं चमूं तिष्ठति शोभयन्।
स्थितां तीरे समुद्रस्य द्वितीय इव सागरः ॥ ४१ ॥
एष दर्दुरसङ्काशो विनतो नाम यूथपः।
पिबंश्चरति यो वेणां नदीनामुत्तमां नदीम् ॥ ४२ ॥
षष्टिः शतसहस्राणि बलमस्य प्लवङ्गमाः।
त्वामाह्वयति युद्धाय क्रथनो नाम वानरः ॥ ४३ ॥
विक्रान्ता बलवन्तश्च यथा यूथानि भागशः।
यस्तु गैरिकवर्णाभं वपुः पुष्यति वानरः ॥ ४४ ॥
अवमत्य सदा सर्वान् वानरान् बलदर्पितः।
गवयो नाम तेजस्वी त्वां क्रोधादभिवर्त्तते ॥ ४५ ॥
एनं शतसहस्राणि सप्ततिः पर्य्युपासते।
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ ४६ ॥

यूथपाः पर्य्युपासते। येषां यूथानि भागशः प्रत्येकं सन्तीति शेषः ॥ ४० ॥

विनतवर्णनम्। यस्तु भीमामिति ॥ ४१ ॥ ४२ ॥

क्रथनवर्णनम्। त्वामाह्वयतीत्यादि ॥ ४३ ॥

विक्रान्ता बलवन्तश्च यस्य यूथपा इति शेषः। यथास्य यूथपास्तथैव तेषां भागशः प्रत्येकं यूथानि च सन्तीति शेषः। गवयवर्णनम्। यस्तु गैरिकेत्यादि ॥ ४४ ॥ ४५ ॥ ४६ ॥

एते दुष्प्रसहा वीरा येषां संख्या न विद्यते।
यूथपा यूथपश्रेष्ठास्तेषां यूथानि भागशः ॥ ४७ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
षड्विंशः सर्गः ॥ २६ ॥

येषां यूथपानां संख्या न विद्यते। भागशः सन्तीति शेषः ॥ ४७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे षड्विंशः सर्गः ॥ २६ ॥

---

## सप्तविंशः सर्गः ।



तांस्तु ते सम्प्रवक्ष्यामि प्रेक्षमाणस्य यूथपान् ।
राघवार्थे पराक्रान्ता ये न रक्षन्ति जीवितम् ॥ १ ॥
स्निग्धा यस्य बहुव्यामा दीर्घलाङ्गूलमाश्रिताः ।
ताम्राः पीताः सिताः श्वेताः प्रकीर्णा घोरकर्मणः ॥ २ ॥
प्रगृहीताः प्रकाशन्ते सूर्य्यस्येव मरीचयः ।
पृथिव्याञ्चानुकृष्यन्ते हरो नामैष वानरः ॥ ३ ॥
यं पृष्ठतोऽनुगच्छन्ति शतशोऽथ सहस्रशः ।
वृक्षानुद्यम्य सहसा लङ्कारोहणतत्पराः ॥ ४ ॥
यूथपा हरिराजस्य किङ्कराः समुपस्थिताः ।
नीलानिव महामेघांस्तिष्ठतो यांस्तु पश्यसि ॥ ५ ॥

तानिति । ये जीवितं न रक्षन्ति ॥ १ ॥

स्निग्धा इत्यादि हरवर्णनमिति कतकः । तारस्येत्यन्ये । बहुव्यामाः यस्य लाङ्गूलाश्रिता वाला बहुव्यामत्वादिगुणकाः ॥ २ ॥

प्रगृहीताः उत्क्षिप्ताः । एष हरो नामेत्यन्वयः । हरो गोलाङ्गूलजातिः ॥ ३ ॥ ४ ॥

धूम्रवर्णनम् । नीलानीत्यादि ॥ ५ ॥

असिताञ्जनसङ्काशान् युद्धे सत्यपराक्रमान् ।
असंख्येयाननिर्देश्यान् परं पारमिवोदधेः ॥ ६ ॥
पर्वतेषु च ये केचित् विषयेषु नदीषु च ।
एते त्वामभिवर्त्तन्ते राजन् ! ऋक्षाः सुदारुणाः ॥ ७ ॥
एषां मध्ये स्थितो राजा भीमाक्षो भीमदर्शनः ।
पर्जन्य इव जीमूतैः समन्तात् परिवारितः ॥ ८ ॥
ऋक्षवन्तं गिरिश्रेष्ठमध्यास्ते नर्मदां पिबन् ।
सर्वर्क्षाणामधिपतिर्धूम्रो नामैष यूथपः ॥ ९ ॥
यवीयानस्य तु भ्राता पश्यैनं पर्वतोपमम् ।
भ्रात्रा समानो रूपेण विशिष्टस्तु पराक्रमे ॥ १० ॥
स एष जाम्बवान्नाम महायूथपयूथपः ।
प्रशान्तो गुरुवर्त्ती च सम्प्रहारेष्वमर्षणः ॥ ११ ॥
एतेन साह्यन्तु महत् कृतं शक्रस्य धीमता ।
देवासुरे जाम्बवता लब्धाश्च बहवो वराः ॥ १२ ॥

अनिर्देश्यान् अशक्यनामगणनान् । पारमिव परपारस्थरेणूनिव ॥ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

अथ जाम्बवद्दर्शनम् । यवीयानिति । अस्य धूम्रस्य कनिष्ठ इत्यर्थः । यो भ्रात्रा समान इत्यन्वयः ॥ १० ॥

गुरुवर्त्ती सद्गुरूपासकः । अनेन सर्वसिद्धिमत्त्वमुक्तम् ॥ ११ ॥

साह्यं साहाय्यम् । देवासुरे युद्धे इति वैर इति वा शेषः ॥ १२ ॥

आरुह्य पर्वताग्रेभ्यो महाभ्रविपुलाः शिलाः ।
मुञ्चन्ति विपुलाकारा न मृत्योरुद्विजन्ति च ॥ १३ ॥
राक्षसानाञ्च सदृशाः पिशाचानाञ्च रोमशाः ।
एतस्य सैन्या बहवो विचरन्त्यमितौजसः ॥ १४ ॥
य एनमभिसंरब्धं प्लवमानमवस्थितम् ।
प्रेक्षन्ते वानराः सर्वे स्थितं यूथपयूथपम् ॥ १५ ॥
एष राजन् ! सहस्राक्षं पर्य्युपास्ते हरीश्वरः ।
बलेन बलसंयुक्तो रम्भो नामैष यूथपः ॥ १६ ॥
यः स्थितं योजने शैलं गच्छन् पार्श्वेन सेवते ।
ऊर्द्ध्वं तथैव कायेन गतः प्राप्नोति योजनम् ॥ १७ ॥
यस्मात्तु परमं रूपं चतुष्पात्सु न विद्यते ।
श्रुतः सन्नादनो नाम वानराणां पितामहः ॥ १८ ॥
येन युद्धं तदा दत्तं रणे शक्रस्य धीमता ।
पराजयश्च न प्राप्तः सोऽयं यूथपयूथपः ॥ १९ ॥

अथ तत्सैन्यवर्णनम् । आरुह्येति ॥ १३ ॥

रोमशा अधिकरोमवन्तः । रक्षःपिशाचसादृश्यं क्रौर्य्येण ॥ १४ ॥

दम्भवर्णनम् । य एनमिति । प्लवमानं लीलार्थमिति शेषः । स्थितं लीलार्थमेव पुनः स्थितम् ॥ १५ ॥ १६ ॥

सन्नादवर्णनम् । यः स्थितमिति । यो योजने स्थितं शैलं पार्श्वेन सेवते । एतेन योजनव्यायामदेह इत्युक्तम् । ऊर्द्ध्वमपि योजनं कायेन

यस्य विक्रममाणस्य शक्रस्येव पराक्रमः।
एष गन्धर्वकन्यायामुत्पन्नः कृष्णवर्त्मना ॥ २० ॥
तदा देवासुरे युद्धे साह्यार्थं त्रिदिवौकसाम्।
यत्र वैश्रवणो राजा जम्बूमुपनिषेवते ॥ २१ ॥
यो राजा पर्वतेन्द्राणां बहुकिन्नरसेविनाम्।
विहारसुखदो नित्यं भ्रातुस्ते राक्षसाधिप! ॥ २२ ॥
तत्रैष रमते श्रीमान् बलवान् वानरोत्तमः।
युद्धेष्वकत्थनो नित्यं क्रथनो नाम यूथपः ॥ २३ ॥
वृतः कोटिसहस्रेण हरीणां समवस्थितः।
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ २४ ॥
यो गङ्गामनुपर्य्येति त्रासयन् गजयूथपान्।
हस्तिनां वानराणाञ्च पूर्ववैरमनुस्मरन् ॥ २५ ॥

कायप्रमाणेन गतौ व्याप्तः सम्मूर्द्धवर्त्तिपदार्थं प्राप्नोति स्पृशति ॥ १७ ॥ ॥ १८ ॥ १९ ॥

अथ क्रथनवर्णनम्। यस्येति। कृष्णवर्त्मना अग्निना ॥ २० ॥

त्रिदिवौकसां साह्यार्थमुत्पन्न इत्यन्वयः। वैश्रवणो राजा यत्र गिरौ जम्बूम् उपनिषेवते। यः पर्वतो बहवः किन्नराः सेवका येषां तेषां पर्वतेन्द्राणां राजा। यश्च ते भ्रातुर्विहारसुखदः ॥ २१ ॥ २२ ॥

तत्र गिरौ कैलासे यो वसति। अकत्थनः आत्मश्लाघारहितः कार्य्येणैव पराक्रमप्रदर्शकः ॥ २३ ॥ २४ ॥

अथ प्रमाथिवर्णनम्। यो गङ्गामिति। गङ्गामनु गङ्गासमीपे।

एष यूथपतिर्नेता गर्जन् गिरिगुहाशयः ।
गजान् रोधयते वन्यान् आरुजंश्च महीरुहान् ॥ २६ ॥
हरीणां वाहिनी मुख्यो नदीं हैमवतीमनु ।
उशीरबीजमाश्रित्य मन्दरं पर्वतोत्तमम् ॥ २७ ॥
रमते वानरश्रेष्ठो दिवि शक्र इव स्वयम् ।
एनं शतसहस्राणां सहस्रमभिवर्त्तते ॥ २८ ॥
वीर्य्यविक्रमदृप्तानां नर्दतां बाहुशालिनाम् ।
स एष नेता चैतेषां वानराणां महात्मनाम् ॥ २९ ॥
स एष दुर्द्धरो राजन् ! प्रमाथीनामयूथपः ।
वातेनेवोद्धुतं मेघं यमेनमनुपश्यसि ॥ ३० ॥
अनीकमपि संरब्धं वानराणां तरस्विनाम् ।
उद्धूतमरुणाभासं पवनेन समन्ततः ॥ ३१ ॥

हस्तिवानरयोर्वैरं गजाकारशम्बसादनासुरस्य हनुमत्पिचा केसरिणा बधात् पूर्वमुत्पन्नमिति पौराणिकी गाथा ॥ २५ ॥

नेता प्रभुः ॥ २६ ॥

हैमवतीं नदीं गङ्गामनुवर्त्तमानमुशीरबीजाख्यं पर्वतमाश्रित्य यो रमते इत्यन्वयः ॥ २७ ॥

शतसहस्राणां सहस्रं सहस्रलक्षमिति यावत् ॥ २८ ॥ २९ ॥

दुर्धरः शत्रुभिर्धर्त्तुमशक्यः । प्रमाथिनं विशिष्य बोधयति । वातेनेवेति ॥ ३० ॥

तरस्विवानरसम्बन्धि यस्यानीकं संरब्धं पश्यसि । यस्यानीकेनोद्धतं

विवर्त्तमानं बहुशो यत्रैतद्बहुलं रजः।
एतेऽसितमुखा घोरा गोलाङ्गूला महाबलाः॥ ३२॥
शतं शतसहस्राणि दृष्ट्वा वै सेतुबन्धनम्।
गोलाङ्गूलं महाराज! गवाक्षं नाम यूथपम्॥ ३३॥
परिवार्य्याभिनर्दन्ते लङ्कां मर्दितुमोजसा।
भ्रमराचरिता यत्र सर्वकालफलद्रुमाः॥ ३४॥
यं सूर्य्यस्तुल्यवर्णाभमनुपर्य्येति पर्वतम्।
यस्य भासा सदा भान्ति तद्वर्णा मृगपक्षिणः॥ ३५॥
यस्य प्रस्थं महात्मानो न त्यजन्ति महर्षयः।
सर्वकामफला वृक्षाः सर्वे फलसमन्विताः॥ ३६॥
मधूनि च महार्हाणि यस्मिन् पर्वतसत्तमे।

बहुलं रजोऽरुणाभं धूम्रवर्णं पवनेन समन्ततो बहुशो विवर्त्तमानं विक्षिप्यमाणं यत्र यत्समीपे पश्यसि। स एष प्रमाथीत्यन्वयः॥ ॥ ३१॥ ३२॥

गवाक्षवर्णनम्। एतेऽसितेत्यादि। शतं शतसहस्राणि शतलक्ष-मित्यर्थः। सेतुबन्धनं नलसमीपे तत्सहायतया स्थित्वा सेतुबन्धनकर्त्ता-रम्॥ ३३॥

केसरिवर्णनं भ्रमरेत्यादि। यत्र पर्वते। सर्वकाले फलन्ति तादृशा द्रुमाः सन्ति॥ ३४॥

यं सूर्य्यस्तुल्यवर्णाभं स्वतुल्यवर्णकान्तियुक्तं पर्वतमनुपर्य्येति प्रदक्षिणं करोति। मृगपक्षिणस्तद्वर्णमृगादयः॥ ३५॥

तत्रैष रमते राजन्! रम्ये काञ्चनपर्वते ॥ ३७ ॥
मुख्यो वानरमुख्यानां केसरी नाम यूथपः।
षष्टिर्गिरिसहस्राणि रम्याः काञ्चनपर्वताः ॥ ३८ ॥
तेषां मध्ये गिरिवरस्त्वमिवानघ! रक्षसाम्।
तत्रैके कपिलाः श्वेतास्ताम्रास्या मधुपिङ्गलाः ॥ ३९ ॥
निवसन्त्यन्तिमगिरौ तीक्ष्णदंष्ट्रा नखायुधाः।
सिंहा इव चतुर्दंष्ट्रा व्याघ्रा इव दुरासदाः ॥ ४० ॥
सर्वे वैश्वानरसमा ज्वलदाशीविषोपमाः।
सुदीर्घाञ्चितलाङ्गूला मत्तमातङ्गसन्निभाः ॥ ४१ ॥
महापर्वतसङ्काशा महाजीमूतनिःस्वनाः।
वृत्तपिङ्गलनेत्रा हि महाभीमगतिस्वनाः ॥ ४२ ॥
मर्दयन्तीव ते सर्वे तस्थुर्लङ्कां समीक्ष्य ते।
एष चैषामधिपतिर्मध्ये तिष्ठति वीर्य्यवान् ॥ ४३ ॥
जयार्थी नित्यमादित्यमुपतिष्ठति वीर्य्यवान्।

सर्वकामेति। काम्यन्त इति कामविषयाः सर्वेषां भोगार्हस्रक्चन्दनाभरणवस्त्रादिरूपफलप्रदाः ॥ ३६ ॥

काञ्चनपर्वतो महामेरुः ॥ ३७ ॥

प्रसक्तविवर्णनम्। षष्टिरित्यादि ॥ ३८ ॥

तेषां मध्ये गिरिवरः। सावर्णिमेरुनामास्ति। तत्र सावर्णिमेरौ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

नाम्ना पृथिव्यां विख्यातो राजन्! शतबलीति यः ॥ ४४ ॥
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम्।
विक्रान्तो बलवान् शूरः पौरुषे स्वे व्यवस्थितः ॥ ४५ ॥
रामप्रियार्थं प्राणानां दयां न कुरुते हरिः।
गजो गवाक्षो गवयो नलो नीलश्च वानरः ॥ ४६ ॥
एकैकमेव योधानां कोटिभिर्दशभिर्वृतः।
तथान्ये वानरश्रेष्ठा विन्ध्यपर्वतवासिनः।
न शक्यन्ते बहुलात्तु संख्यातुं लघुविक्रमाः ॥ ४७ ॥

सर्वे महाराजमहाप्रभावाः
सर्वे महाशैलनिकाशकायाः।
सर्वे समर्थाः पृथिवीं क्षणेन
कर्त्तुं प्रविध्वस्तविकीर्णशैलाम् ॥ ४८ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
सप्तविंशः सर्गः ॥ २७ ॥

ते वानरास्ते तव लङ्कां समीक्ष्य मर्दयन्तीव मर्दयन्त इव तिष्ठन्ति।
॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

---

# अष्टाविंशः सर्गः।



सारणस्य वचः श्रुत्वा रावणं राक्षसाधिपम्।
बलमादिश्य तत्सर्वं शुको वाक्यमथाब्रवीत्॥ १॥
स्थितान् पश्यसि यानेतान् मत्तानिव महाद्विपान्।
न्यग्रोधानिव गाङ्गेयान् सालान् हैमवतानिव॥ २॥
एते दुष्प्रसहा राजन्! बलिनः कामरूपिणः।
दैत्यदानवसङ्काशा युद्धे देवपराक्रमाः॥ ३॥
एषां कोटिसहस्राणि नव पञ्च च सप्त च।
तथा शङ्कुसहस्राणि तथा वृन्दशतानि च॥ ४॥
एते सुग्रीवसचिवाः किष्किन्धानिलयाः सदा।
हरयो देवगन्धर्वैरुत्पन्नाः कामरूपिणः॥ ५॥

सारणानुक्तं किञ्चित् शुको वक्तीत्याह,—सारणस्येति। तत्सर्वं बलमादिश्य तूष्णीं स्थितवतः सारणस्य वचः श्रुत्वा स्थितं रावणं शुकोऽब्रवीत्॥ १॥

गाङ्गेयान् गङ्गातटोत्पन्नान्। अनपत्येऽपि ढगार्षः॥ २॥ ३॥

एषां कोटीति सुग्रीवसचिवसंख्या। सर्वबलसंख्यान्तु सर्गान्ते वक्ष्यति॥ ४॥ ५॥

यौ तौ पश्यसि तिष्ठन्तौ समानौ देवरूपिणौ ।
मैन्दश्च द्विविदश्चैव ताभ्यां नास्ति समो युधि ॥ ६ ॥
ब्रह्मणा समनुज्ञाता अमृतप्राशिनावभौ ।
आशंसेते यथा लङ्कामेतौ मर्दितुमोजसा ॥ ७ ॥
यन्तु पश्यसि तिष्ठन्तं प्रभिन्नमिव कुञ्जरम् ।
यो बलात् चोभयेत् क्रुद्धः समुद्रमपि वानरः ॥ ८ ॥
एषोऽभिगन्ता लङ्कायां वैदेह्यास्तव च प्रभो ! ।
एनं पश्य पुरा दृष्टं वानरं पुनरागतम् ॥ ९ ॥
ज्येष्ठः केसरिणः पुत्रो वातात्मज इति श्रुतः ।
हनूमानिति विख्यातो लङ्घितो येन सागरः ॥ १० ॥
कामरूपो हरिश्रेष्ठो बलरूपसमन्वितः ।
अनिवार्य्यगतिश्चैव यथा सततगः प्रभुः ॥ ११ ॥
उद्यन्तं भास्करं दृष्ट्वा बालः किल बुभुक्षितः ।

यौताविति मैन्दद्विविदविषयम् ॥ ६ ॥

समनुज्ञाता इत्यत्र लोपः प्राकल्यस्येति लोपः । समनुज्ञाता-वित्यर्थः ॥ ७ ॥

हनुमन्तं वर्णयति । यन्त्विति । प्रभिन्नं मत्तम् ॥ ८ ॥

एष लङ्कायां वैदेह्यास्तव चाभिगन्ताऽन्वेषो । समीपमागतश्चे-त्यर्थः ॥ ९ ॥ १० ॥

त्रियोजनसहस्रन्तु अध्वानमवतीर्य्य हि ॥ १२ ॥
आदित्यमाहरिष्यामि न मे क्षुत्प्रतियास्यति ।
इति निश्चित्य मनसा पुप्लुवे बलदर्पितः ॥ १३ ॥
अनाधृष्यतमं देवमपि देवर्षिराक्षसैः ।
अनासाद्यैव पतितो भास्करोदयने गिरौ ॥ १४ ॥
पतितस्य कपेरस्य हनुरेका शिलातले ।
किञ्चिद्भिन्ना दृढ़हनुर्हनुमानेष तेन वै ॥ १५ ॥
सत्यमागमयोगेन ममैष विदितो हरिः ।
नास्य शक्यं बलं रूपं प्रभावो वानुभाषितुम् ॥ १६ ॥
एष आशंसते लङ्कामेको मथितुमोजसा ।
येन जाज्वल्यतेऽसौ वै धूमकेतुस्तवाद्य वै ।
लङ्कायां निहितश्चापि कथं विस्मरसे कपिम् ॥ १७ ॥

सततगो वायुः ॥ ११ ॥ १२
प्रतियास्यति । भूलोकवर्त्तिफलैरिति शेषः ॥ १३ ॥
अनासाद्य भास्करमिति शेषः । भास्करोदयने इति बहुव्रीहिः ॥
॥ १४ ॥ १५ ॥
आगमयोगेन सह हनुमन्नामनिमित्तभूतपूर्ववृत्तान्तेन सहेत्यर्थः ॥ १६ ॥
धूमकेतुरग्निः । येन जाज्वल्यते प्रज्वलितः कृतः । त्वत्तेजोऽसह्योऽपि यत पुच्छं प्राप्यः प्रज्वलितः । लङ्कायां निहितो निक्षिप्तश्च ॥ १७ ॥

यस्यैषोऽनन्तरः शूरः श्यामः पद्मनिभेक्षणः।
इक्ष्वाकूणामतिरथो लोके विश्रुतपौरुषः॥ १८॥
यस्मिन्न चलते धर्मो यो धर्मं नातिवर्त्तते।
यो ब्राह्ममस्त्रं वेदांश्च वेदवेदविदाम्बरः॥ १९॥
यो भिन्द्याद्गगनं बाणैर्मेदिनीं वापि दारयेत्।
यस्य मृत्योरिव क्रोधः शक्रस्येव पराक्रमः॥ २०॥
यस्य भार्य्या जनस्थानात् सीता चापि हृता त्वया।
स एष रामस्त्वां राजन्! योद्धुं समभिवर्त्तते॥ २१॥
यस्यैष दक्षिणे पार्श्वे शुद्धजाम्बूनदप्रभः।
विशालवक्षास्ताम्राक्षो नीलकुञ्चितमूर्धजः॥ २२॥
एषो हि लक्ष्मणो नाम भ्रातुः प्रियहिते रतः।
नये युद्धे च कुशलः सर्वशस्त्रभृतां वरः॥ २३॥
अमर्षी दुर्जयो जेता विक्रान्तश्च जयी बली।
रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः॥ २४॥
न ह्येष राघवस्यार्थे जीवितं परिरक्षति।
एषैवाशंसते युद्धे निहन्तुं सर्वराक्षसान्॥ २५॥

रामं वर्णयति। यस्यैष इति। यस्य दर्शितस्य हनूमतोऽनन्तरः समीपवर्त्ती॥ १८॥ १९॥

गगनं बाणैर्भिन्द्यात्। सर्वं दुष्करमपि तस्य सुकरमिति तात्पर्य्यम्॥
॥ २०॥ २१॥ २२॥ २३॥ २४॥ २५॥

यस्य सव्यमसौ पक्षं रामस्याश्रित्य तिष्ठति ।
रक्षोगणपरिक्षिप्तो राजा ह्येष विभीषणः ॥ २६ ॥
श्रीमता राजराजेन लङ्कायामभिषेचितः ।
त्वामसौ प्रति संरब्धो युद्धायैषोऽभिवर्तते ॥ २७ ॥
यन्तु पश्यसि तिष्ठन्तं मध्ये गिरिमिवाचलम् ।
सर्वशाखामृगेन्द्राणां भर्तारममितौजसम् ॥ २८ ॥
तेजसा यशसा बुद्ध्या बलेनाभिजनेन च ।
यः कपीनतिबभ्राज हिमवानिव पर्वतः ॥ २९ ॥
किष्किन्धां यः समध्यास्ते दुर्गां सगहनद्रुमाम् ।
दुर्गां पर्वतदुर्गस्थां प्रधानैः सह यूथपैः ॥ ३० ॥
यस्यैषा काञ्चनी माला शोभते शतपुष्करा ।
कान्ता देवमनुष्याणां यस्यां लक्ष्मीः प्रतिष्ठिता ॥ ३१ ॥
एतां मालाञ्च ताराञ्च कपिराज्यञ्च शाश्वतम् ।
सुग्रीवो वालिनं हत्वा रामेण प्रतिपादितः ॥ ३२ ॥

यस्य प्रागवर्णितस्य रामस्य सव्यं पक्षमाश्रित्य तिष्ठतीत्यन्वयः । रक्षोगणपरिक्षिप्तः व्याप्तः । गणशब्देन चत्वार एव ॥ २६ ॥

राजराजेन रामेणाभिषेचित इत्यन्वयः । एषोऽसौ त्वां प्रति युद्धायाभिवर्त्तते ॥ २७ ॥

सुग्रीववर्णनं यन्त्विति ॥ २८ ॥

अतिबभ्राज अतिक्रम्यातिशयेन बभ्राजेत्यर्थः ॥ २९ ॥ ३० ॥

शतं शतसहस्राणां कोटिमाहुर्मनीषिणः।
शतं कोटिसहस्राणां शङ्कुरित्यभिधीयते ॥ ३३ ॥
शतं शङ्कुसहस्राणां महाशङ्कुरिति स्मृतः।
महाशङ्कुसहस्राणां शतं वृन्दमिहोच्यते ॥ ३४ ॥
शतं वृन्दसहस्राणां महावृन्दमिति स्मृतम्।
महावृन्दसहस्राणां शतं पद्ममिहोच्यते ॥ ३५ ॥
शतं पद्मसहस्राणां महापद्ममिति स्मृतम्।
महापद्मसहस्राणां शतं खर्वमिहोच्यते ॥ ३६ ॥
शतं खर्वसहस्राणां समुद्रमभिधीयते।
शतं समुद्रसाहस्रं महौघमिति विश्रुतम् ॥ ३७ ॥
एवं कोटिसहस्रेण शङ्कूनाञ्च शतेन च।
महाशङ्कुसहस्रेण तथा वृन्दशतेन च ॥ ३८ ॥
महावृन्दसहस्रेण तथा पद्मशतेन च।
महापद्मसहस्रेण तथा खर्वशतेन च ॥ ३९ ॥
समुद्रेण च तेनैव महौघेन तथैव च।
एष कोटीमहौघेन समुद्रसदृशेन च ॥ ४० ॥

पुष्करं पद्मम् ॥ ३१ ॥ ३२ ॥

अथ सर्वबलसंख्यां दर्शयितुं संख्यास्वरूपं निदर्शयति। शत-मिति ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

विभीषणेन वीरेण सचिवैः परिवारितः।
सुग्रीवो वानरेन्द्रस्त्वां युद्धार्थमनुवर्त्तते।
महाबलवृतो नित्यं महाबलपराक्रमः॥ ४१॥

इमां महाराज! समीक्ष्य वाहिनी-
मुपस्थितां प्रज्वलितग्रहोपमाम्।
ततः प्रयत्नः परमो विधीयताम्।
यथा जयः स्यान्न परैः पराभवः॥ ४२॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
अष्टाविंशः सर्गः॥ २८॥

अथ बलसंख्यामाह,—एवं कोटीति॥ ३८॥ ३९॥ ४०॥ ४१॥
प्रज्वलितग्रहोपमां प्रज्वलितग्रहज्वालोपमाम्॥ ४२॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे अष्टाविंशः सर्गः॥ २७॥

---

# एकोनत्रिंशः सर्गः।



शुकेन तु समादिष्टान् दृष्ट्वा स हरियूथपान्।
लक्ष्मणञ्च महावीर्य्यं भुजं रामस्य दक्षिणम्॥ १॥

समीपस्थञ्च रामस्य भ्रातरञ्च विभीषणम्।
सर्ववानरराजञ्च सुग्रीवं भीमविक्रमम्॥ २॥

अङ्गदञ्चापि बलिनं वज्रहस्तात्मजात्मजम्।
हनूमन्तञ्च विक्रान्तं जाम्बवन्तञ्च दुर्जयम्॥ ३॥

सुषेणं कुमुदं नीलं नलञ्च प्लवगर्षभम्।
गजं गवाक्षं शरभं मैन्दञ्च द्विविदं तथा॥ ४॥

किञ्चिदाविग्नहृदयो जातक्रोधश्च रावणः।
भर्त्सयामास तौ वीरौ कथान्ते शुकसारणौ॥ ५॥

अधोमुखौ तौ प्रणतावब्रवीच्छुकसारणौ।
रोषगद्गदया वाचा संरब्धं परुषं तथा॥ ६॥

शुकेनेति॥ १॥ २॥ ३॥ ४॥

कथान्ते वृत्तान्तश्रवणसमाप्तिसमये। भर्त्सयामास। स्वकीयभीताकारगोपनार्थोऽयं व्यापारः॥ ५॥

अधोमुखौ भर्त्सनेनेति शेषः॥ ६॥

न तावत्सदृशं नाम सचिवैरुपजीविभिः।
विप्रियं नृपतेर्वक्तुं निग्रहे प्रग्रहे प्रभोः॥ ७॥
रिपूणां प्रतिकूलानां युद्धार्थमभिवर्त्तताम्।
उभाभ्यां सदृशं नाम वक्तुमप्रस्तवे स्तवम्॥ ८॥
आचार्य्या गुरवो वृद्धा वृथा वां पर्य्युपासिताः।
सारं यद्राजशास्त्राणामनुजीव्यं न गृह्यते॥ ९॥
गृहीतो वा न विज्ञातो भारोऽज्ञानस्य वाह्यते।
ईदृशैः सचिवैर्य्युक्तो मूर्खैर्दिष्ट्या धराम्यहम्॥ १०॥

उच्यमानविशेषणस्य नृपतेः पुरस्तादुपजीविभिर्विप्रियं वक्तुं तावन्न सदृशम्। प्रग्रहे अनुग्रहे॥ ७॥

तदेव विप्रियं दर्शयति। रिपूणामिति। युद्धायाभिवर्त्तताम् अभिमुखतया वर्त्तमानानाम्। स्तवं बलोत्कर्षकथनम्। अप्रस्तवे तत्प्रश्नाभावे वक्तुं सदृशं युक्तं नाम। काकुरत्र अपि त्वयुक्तमेव। के यूथपाः कियद्बलमिति विचार्य्य वक्तव्यमिति प्रेषिते तावन्मात्रं वाच्यम्। अपृष्टन्तु तेषां प्राबल्यमेकैको नाशयितुं शक्य इत्यादिवक्तुं न युक्तमित्यर्थः॥ ८॥

आचार्य्या उपनीयवेदाध्यापकाः। गुरवः पित्रादयः। वृद्धाः ज्ञानवयोवृद्धाः। वां युवाभ्याम्। अनुजीव्यग्राह्यांशो न गृह्यते न गृहीतः॥ ९॥

गृहीतवानविज्ञातः। विस्मृत इत्यर्थः। ज्ञातविस्मरणमपि युवयोर्न सम्भावितमित्याह। भार इति। अज्ञानस्य भारो वाह्यते। अज्ञान-

किन्नु मृत्योर्भयं नास्ति मां वक्तुं परुषं वचः।
यस्य मे शासतो जिह्वा प्रयच्छति शुभाशुभम्॥ ११॥
अप्येव दहनं स्पृष्ट्वा वने तिष्ठन्ति पादपाः।
राजदण्डपरामृष्टास्तिष्ठन्ते नापराधिनः॥ १२॥
हन्यामहं त्विमौ पापौ शत्रुपक्षप्रशंसिनौ।
यदि पूर्वोपकारैर्मे क्रोधो न मृदुतां व्रजेत्॥ १३॥
अपध्वंसत नश्यध्वं सन्निकर्षादितो मम।
न हि वां हन्तुमिच्छामि स्मराम्युपकृतानि वाम्।

बाहुल्यमेव वर्तते न स्थानलेशोऽपीति भावः। धरामि राज्यति शेषः। राज्यभ्रंशस्य परमकारणं भवादृशदुर्मतिसङ्गस्तत्र सत्यपि तन्मूलानर्थे एतावत्कालं यत्तयोर्बलेन तिरस्कृत इत्यर्थः॥ १०॥

युवाभ्यां स्वनाशमप्यविज्ञाय दुर्वच उक्तमित्याह। किन्विति। शासतो राज्ञो यस्य मे जिह्वा तदुक्तिः शुभाशुभं निग्रहानुग्रहं प्रयच्छति तं मां परुषं वचो वक्तुमुत्सहेथे। यतः तद्युवयोर्मृत्योर्भयं किन्नु नास्ति। यदि स्यान्न ब्रुवाथे इत्यर्थः॥ ११॥

अप्रतिक्रियानर्थो राजद्रोह इत्याह। अप्येवेत्यादि। राजदोषपरामृष्टाः राजक्रोधविषयाः॥ १२॥

पूर्वोपकारैर्युद्धादौ कृतैः॥ १३॥

अपध्वंसत मत्सभाप्रवेशाद्भ्रष्टा भवत। मे सन्निकर्षान्नश्यध्वं अदर्शनं गच्छत। क्रोधवशाद्वचनव्युत्यासो न दोषाय। हतावेव विनापि शिरश्छेदं धिक्कारादेवेति शेषः॥ १४॥

हतावेव कृतघ्नौ द्वौ मयि स्नेहपराङ्मुखौ ॥ १४ ॥
एवमुक्ता तु सव्रीडौ तौ दृष्ट्वा शुकसारणौ।
रावणं जयशब्देन प्रतिनन्द्याभिनिःसृतौ ॥ १५ ॥
अब्रवीच्च दशग्रीवः समीपस्थं महोदरम्।
उपस्थापय मे शीघ्रं चारानिति निशाचरः।
महोदरस्तथोक्तस्तु शीघ्रमाज्ञापयच्चरान् ॥ १६ ॥
ततश्चाराः सन्त्वरिताः प्राप्ताः पार्थिवशासनात्।
उपस्थिताः प्राञ्जलयो वर्धयित्वा जयाशिषः ॥ १७ ॥
तानब्रवीत्ततो वाक्यं रावणो राक्षसाधिपः।
चरान् प्रत्यायिकान् शूरान् धीरान् विगतसाध्वसान् ॥ १८ ॥
इतो गच्छत रामस्य व्यवसायं परीक्षितुम्।
मन्त्रेष्वभ्यन्तरा येऽस्य प्रीत्या तेन समागताः ॥ १९ ॥
कथं स्वपिति जागर्ति किमद्य च करिष्यति।
विज्ञाय निपुणं सर्वमागन्तव्यमशेषतः ॥ २० ॥
चारेण विदितः शत्रुः पण्डितैर्वसुधाधिपैः।

प्रतिनन्द्याभिनिःसृतौ अयमेव तयो राक्षसत्वप्रापकशापस्यान्त इत्यन्यत्र स्पष्टम् ॥ १५ ॥ १६ ॥ १७ ॥

चरान् चारान् प्रत्यायिकान् प्रत्यय एव प्रत्यायस्तद्वत इत्यर्थः। अत इनिठनौ। विश्वासोपेतानित्यर्थः ॥ १८ ॥

मन्त्रेषु विचारेषु। अभ्यन्तराः परमान्तरङ्गमन्त्रिणः ॥ १९ ॥ २० ॥

युद्धे स्वल्पेन यत्नेन समासाद्य निरस्यते ॥ २१ ॥
चारास्तु ते तथेत्युक्त्वा प्रहृष्टा राक्षसेश्वरम्।
शार्दूलमग्रतः कृत्वा ततश्चक्रुः प्रदक्षिणम् ॥ २२ ॥
ततस्तन्तु महात्मानं चारा राक्षससत्तमम्।
कृत्वा प्रदक्षिणं जग्मुर्यत्र रामः सलक्ष्मणः ॥ २३ ॥
ते सुवेलस्य शैलस्य समीपे रामलक्ष्मणौ।
प्रच्छन्ना ददृशुर्गत्वा ससुग्रीवविभीषणौ ॥ २४ ॥
प्रेक्षमाणाश्चमून्ताञ्च बभूवुर्भयविक्लवाः।
ते तु धर्मात्मना दृष्टा राक्षसेन्द्रेण राक्षसाः ॥ २५ ॥
विभीषणेन तत्रस्था निगृहीता यदृच्छया।
शार्दूलो ग्राहितस्त्वेकः पापोऽयमिति राक्षसः ॥ २६ ॥
मोचितः सोऽपि रामेण वध्यमानः प्लवङ्गमैः।
आनृशंसेन रामेण मोचिता राक्षसाः परे ॥ २७ ॥
वानरैरर्दितास्ते तु विक्रान्तैर्लघुविक्रमैः।
पुनर्लङ्कामनुप्राप्ताः श्वसन्तो नष्टचेतसः ॥ २८ ॥

॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

शार्दूलः प्रधानचारो ग्राहितो विभीषणेनेति शेषः। एको ग्राहित इत्यत्र हेतुः। पापोऽयमिति। अतिदुष्ट इत्यर्थः ॥ २६ ॥

सोऽपि शार्दूलोऽपि। परे शार्दूलसहायभूतास्ते च मोचिताः ॥ २७ ॥ २८ ॥

ततो दशग्रीवमुपस्थितास्ते
चारा बहिर्नित्यचरा निशाचराः ।
गिरेः सुवेलस्य समीपवासिनं
न्यवेदयन् रामबलं महाबलाः ॥ २९ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
एकोनत्रिंशः सर्गः ॥ २९ ॥

बहिर्नित्यचराः स्वदेशाद् बहिः परवृत्तान्तपरिज्ञानाय नित्य-प्रवृत्ताः। सुवेलसमीपवासि रामबलं तं रावणं न्यवेदयन् ॥ २९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

---

## त्रिंशः सर्गः



ततस्तमक्षोभ्यबलं लङ्काधिपतये चराः ।
सुवेले राघवं शैले निविष्टं प्रत्यवेदयन् ॥ १ ॥
चाराणां रावणः श्रुत्वा प्राप्तं रामं महाबलम् ।
जातोद्वेगोऽभवत् किञ्चिच्छार्दूलं वाक्यमब्रवीत् ॥ २ ॥
अयथावच्च ते वर्णो दीनश्चासि निशाचर ! ।
नासि कच्चिदमित्राणां क्रुद्धानां वशमागतः ॥ ३ ॥
इति तेनानुशिष्टस्तु वाचं मन्दमुदीरयन् ।
तदा राक्षसशार्दूलं शार्दूलो भयविक्लवः ॥ ४ ॥
न ते चारयितुं शक्या राजन् ! वानरपुङ्गवाः ।
विक्रान्ता बलवन्तश्च राघवेण च रक्षिताः ॥ ५ ॥

तत इति ॥ १ ॥

चाराणां वचनादिति शेषः । तद्वचनाद् रामं प्रति प्राप्तं लङ्का-समीपमागतं श्रुत्वेत्यन्वयः ॥ २ ॥

अमित्राणां वशमागतोऽसि कच्चिदिति ॥ ३ ॥

तेन अनुशिष्टः । पृष्ट इत्यर्थः ॥ ४ ॥

चारयितुं चारैर्विचारयितुम् ॥ ५ ॥

नापि सम्भाषितुं शक्याः संप्रश्नोऽत्र न लभ्यते ।
सर्वतो रक्षते पन्था वानरैः पर्वतोपमैः ॥ ६ ॥
प्रविष्टमात्रे ज्ञातोऽहं बले तस्मिन् विचारिते ।
बलाद् गृहीतो रक्षोभिर्बहुधास्मि विचारितः ॥ ७ ॥
जानुभिर्मुष्टिभिर्दन्तैस्तलैश्चाभिहतो भृशम् ।
परिणीतोऽस्मि हरिभिर्बलमध्ये अमर्षणैः ॥ ८ ॥
परिणीय च सर्वत्र नीतोऽहं रामसंसदि ।
रुधिरस्रावि दीनाङ्गो विक्लवश्चलितेन्द्रियः ॥ ९ ॥
हरिभिर्वध्यमानश्च याचमानः कृताञ्जलिः ।
राघवेण परित्रातो मामेति च यदृच्छया ॥ १० ॥
एष शैलशिलाभिस्तु पूरयित्वा महार्णवम् ।
द्वारमाश्रित्य लङ्काया रामस्तिष्ठति सायुधः ॥ ११ ॥

यतः सम्भाषितुमशक्या अतोऽत्र संप्रश्नो विचारहेतुपर्य्यनुयोगो न लभ्यते ॥ ६ ॥

विचारिते विचारयितुं प्रक्रान्ते । रक्षोभिर्विभीषणपरिवारैः । विचारितः बहुप्रकारगत्या चालितः ॥ ७ ॥

परिणीतोऽस्मि हनूमानिव घोषणार्थमितस्ततो नीतोऽस्मि ॥ ८ ॥

तदेवाह । परिणीय च सर्वत्रेति । रुधिरस्रावी चासौ दीनाङ्गश्चेति कर्मधारयः ॥ ९ ॥

यदृच्छया दृष्टेन रामेण मा मा वध्यतामिति परित्रातः ॥ १० ॥ ११ ॥

गरुड़व्यूहमास्थाय सर्वतो हरिभिर्वृतः ।
मां विसृज्य महातेजा लङ्कामेवातिवर्त्तते ॥ १२ ॥
पुरा प्राकारमायाति क्षिप्रमेकतरं कुरु ।
सीतां वापि प्रयच्छाशु युद्धं वापि प्रदीयताम् ॥ १३ ॥
मनसा तत्तदा प्रेक्ष्य तत् श्रुत्वा राक्षसाधिपः ।
शार्दूलं सुमहद्वाक्यमथोवाच स रावणः ॥ १४ ॥
यदि मां प्रतियुध्यन्ते देवगन्धर्वदानवाः ।
नैव सीतां प्रदास्यामि सर्वलोकभयादपि ॥ १५ ॥
एवमुक्त्वा महातेजा रावणः पुनरब्रवीत् ।
चरिता भवता सेना केऽत्र शूराः प्लवङ्गमाः ॥ १६ ॥
किंप्रभाः कीदृशाः सौम्य वानरा ये दुरासदाः ।
कस्य पुत्राश्च पौत्राश्च तत्त्वमाख्याहि सुव्रत ॥ १७ ॥
तथात्र प्रतिपत्स्यामि ज्ञात्वा तेषां बलाबलम् ।
अवश्यं खलु संख्यानं कर्तव्यं युद्धमिच्छता ॥ १८ ॥
अथैवमुक्तः शार्दूलो रावणेनोत्तमस्वरः ।
इदं वचनमारेभे वक्तुं रावणसन्निधौ ॥ १९ ॥

गरुड़व्यूहमास्थायेति प्रस्थानार्थम्। पूर्वन्तु स्थितिकालत्वात् पुरुषव्यूह आसीत् ॥ १२ ॥

पुरा याति आयास्यति ॥ १३ ॥ १४ ॥ १५ ॥

चरिता भवता। देवगत्या शोधनार्थं प्रयत्नेनेति भावः ॥१६॥ ७॥

ऋषर्चरजसः पुत्रो युधि राजन्! सुदुर्जयः।
गद्गदस्याथ पुत्रोऽत्र जाम्बवानिति विश्रुतः॥ २०॥
गद्गदस्याथ पुत्रोऽन्यो गुरुपुत्रः शतक्रतोः।
कदनं यस्य पुत्रेण कृतमेकेन रक्षसाम्॥ २१॥
सुषेणश्चात्र धर्मात्मा पुत्रो धर्मस्य वीर्य्यवान्।
सौम्यः सोमात्मजश्चात्र राजन्! दधिमुखः कपिः॥ २२॥
सुमुखो दुर्मुखश्चात्र वेगदर्शी च वानरः।
मृत्युर्वानररूपेण नूनं सृष्टः स्वयम्भुवा॥ २३॥
पुत्रो हुतवहस्यात्र नीलः सेनापतिः स्वयम्।
अनिलस्य तु पुत्रोऽत्र हनूमानिति विश्रुतः॥ २४॥
नप्ता शक्रस्य दुर्धर्षो बलवानङ्गदो युवा।

तथा तदनुसारेण॥ १८॥ १९॥

गद्गदो जाम्बवतः क्षेत्रदारापिता। यद्यपि जाम्बवान् जृम्भमाणस्य मम वक्त्रादजायतेति भगवन्मुखादस्योत्पत्तिः श्रुता तथापि जृम्भमाणसमये उद्गताया भगवच्छक्तेर्गद्गदक्षेत्रमाविश्य तेन रूपेण परिणामाददोषः॥ २०॥

अन्यः पुत्रो धूम्रः। शतक्रतोर्गुरुपुत्रो बृहस्पतिपुत्र इत्यर्थः। अयं केसरीति प्रोक्तः। यस्य केसरिणः पुत्रेण हनूमता एकेन रक्षसां कदनं कृतम्। पूर्वमित्यर्थः॥ २१॥ २२॥

मृत्युर्यमः। सुमुखादयो मृत्युतुल्या इत्यर्थः॥ २३॥ २४॥ २५॥

मैन्दश्च द्विविदश्चोभौ बलिनावश्विसम्भवौ ॥ २५ ॥
पुत्रा वैवस्वतस्याथ पञ्च कालान्तकोपमाः ।
गजो गवाक्षो गवयः शरभो गन्धमादनः ॥ २६ ॥
दश वानरकोट्यश्च शूराणां युद्धकाङ्क्षिणाम् ।
श्रीमतां देवपुत्राणां शेषं नाख्यातुमुत्सहे ॥ २७ ॥
पुत्रो दशरथस्यैष सिंहसंहननो युवा ।
दूषणो निहतो येन खरश्च त्रिशिरास्तथा ॥ २८ ॥
नास्ति रामस्य सदृशो विक्रमे भुवि कश्चन ।
विराधो निहतो येन कबन्धश्चान्तकोपमः ॥ २९ ॥
वक्तुं न शक्तो रामस्य गुणान् कश्चिन्नरः क्षितौ ।
जनस्थानगता येन तावन्तो राक्षसा हताः ॥ ३० ॥
लक्ष्मणश्चात्र धर्मात्मा मातङ्गानामिवर्षभः ।
यस्य बाणपथं प्राप्य न जीवेदपि वासवः ॥ ३१ ॥
श्वेतो ज्योतिर्मुखश्चात्र भास्करस्यात्मसम्भवौ ।
वरुणस्याथ पुत्रोऽथ हेमकूटः प्लवङ्गमः ॥ ३२ ॥

पञ्चयमपुत्रपरिगणनं गज इत्यादि ॥ २६ ॥

दशवानरकोट्य इति । वानरेति लुप्तषष्ठी बहुवचनान्तम् । तद्विशेषणं शूराणामित्यादि । नाख्यातुमुत्सहे । अशक्यगणनत्वात् ॥ २७ ॥ ॥ २८ ॥ २९ ॥

विश्वकर्मसुतो वीरो नलः प्लवगसत्तमः ।
विक्रान्तो वेगवानत्र वसुपुत्रः स दुर्धरः ॥ ३३ ॥
राक्षसानां वरिष्ठश्च तव भ्राता विभीषणः ।
प्रतिगृह्य पुरीं लङ्कां राघवस्य हिते रतः ॥ ३४ ॥
इति सर्वं समाख्यातं तथा वै वानरं बलम् ।
सुवेलेऽधिष्ठितं शैले शेषकार्य्ये भवान् गतिः ॥ ३५ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
त्रिंशः सर्गः ॥ ३० ॥

यतो दूषणादयस्तेन निहता अतस्तस्य गुणान् वक्तुं न कोऽपि शक्त इत्यन्वयः ॥ ३० ॥ ३१ ॥ ३२ ॥

दुर्धरस्तदाख्यः ॥ ३३ ॥ ३४ ॥

भवान् गतिः प्रमाणम् । निर्णायक इति यावत् । नन्वत्र धर्मपुत्रः सुषेणो वैवस्वतपुत्रौ शरभगन्धमादनावुभौ । बालकाण्डे वरुणात् सुषेणः पर्ज्जन्याच्छरभः कुवेराद् गन्धमादन उक्त इति चेन्न। तत्तत् संज्ञकानामनेकेषामपि सत्त्वान्न विरोध इति तीर्थः ॥ ३५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे त्रिंशः सर्गः ॥ ३० ॥

---

## एकत्रिंशः सर्गः ।



ततस्तमक्षोभ्यबलं लङ्कायां नृपतेश्चराः ।
सुवेले राघवं शैले निविष्टं प्रत्यवेदयन् ॥ १ ॥
चाराणां रावणः श्रुत्वा प्राप्तं रामं महाबलम् ।
जातोद्वेगोऽभवत् किञ्चित् सचिवानिदमब्रवीत् ॥ २ ॥
मन्त्रिणः शीघ्रमायान्तु सर्वे वै सुसमाहिताः ।
अयं नो मन्त्रकालो हि संप्राप्त इति राक्षसाः ॥ ३ ॥
तस्य तच्छासनं श्रुत्वा मन्त्रिणोऽभ्यागमन् द्रुतम् ।
ततः स मन्त्रयामास राक्षसैः सचिवैः सह ॥ ४ ॥
मन्त्रयित्वा तु दुर्धर्षः क्षमं यत्तदनन्तरम् ।
विसर्जयित्वा सचिवान् प्रविवेश स्वमालयम् ॥ ५ ॥
ततो राक्षसमादाय विद्युज्जिह्वं महाबलम् ।
मायाविनं महामायं प्राविशद्यत्र मैथिली ॥ ६ ॥

तत इति ॥ १ ॥
सचिवानुपमन्त्रिणः ॥ २ ॥
आयान्तु युष्मद्वचनादिति शेषः ॥ ३ ॥ ४ ॥
यत्तदनन्तरं क्षमम् । सीताप्राप्ताविति शेषः ॥ ५ ॥

विद्युज्जिह्वञ्च मायाज्ञमब्रवीद् राक्षसाधिपः।
मोहयिष्यावहे सीतां मायया जनकात्मजाम्॥ ७॥
शिरोमायामयं गृह्य राघवस्य निशाचर!।
मां त्वं समुपतिष्ठस्व महच्च सशरं धनुः॥ ८॥
एवमुक्तस्तथेत्याह विद्युज्जिह्वो निशाचरः।
दर्शयामास तां मायां सुप्रयुक्तां स रावणे॥ ९॥
तस्य तुष्टोऽभवद् राजा प्रददौ च विभूषणम्।
अशोकवनिकायाञ्च सीतादर्शनलालसः॥ १०॥
नैर्ऋतानामधिपतिः संविवेश महाबलः।
ततो दीनामदीनार्हां ददर्श धनदानुजः॥ ११॥
अधोमुखीं शोकपरामुपविष्टां महीतले।
भर्त्तारं समनुध्यान्तीमशोकवनिकां गताम्॥ १२॥

ततः स्वान्तःपुरप्रवेशानन्तरम्। मायाविनं प्रशस्तमायावन्तम्। महामायं तादृशमायाप्रयोगकर्तारम्॥ ६॥

मायाविनं विद्युज्जिह्वमब्रवीच्च वचनमाह। मोहयिष्यावहे इति॥७॥

मां त्वं समुपतिष्ठस्व। मत् समीपमागच्छेत्यर्थः॥ ८॥

रावणे रावणायेत्यर्थः॥ ९॥

कुब्जायै कैकेयीवत्तस्य विद्युज्जिह्वस्यानर्थे आनुकूल्यात्तुष्टः सन् भूषणं प्रददौ॥ १०॥

संविवेश प्रविवेश॥ ११॥ १२॥

उपास्यमानां घोराभी राचसीभिरदूरतः।
उपसृत्य ततः सीतां प्रहर्षं नाम कीर्तयन् ॥ १३ ॥
इदञ्च वचनं धृष्टमुवाच जनकात्मजाम्।
सान्त्व्यमाना मया भद्रे! यमाश्रित्य विमन्यसे ॥ १४ ॥
खरहन्ता स ते भर्ता राघवः समरे हतः।
छिन्नन्ते सर्वथा मूलं दर्पश्च निहतो मया ॥ १५ ॥
व्यसनेनात्मनः सीते! मम भार्य्या भविष्यसि।
विसृजैतां मतिं मूढ़े! किं मृतेन करिष्यसि ॥ १६ ॥
भवस्व भद्रे! भार्य्याणां सर्वासामीश्वरी मम।
अल्पपुण्ये निवृत्तार्थे मूढ़े! पण्डितमानिनि!।
शृणु भर्तृवधं सीते! घोरं वृत्रवधं यथा ॥ १७ ॥
समायातः समुद्रान्तं हन्तुं मां किल राघवः।

प्रहर्षं नाम कीर्तयन्। नामेत्यपरमार्थे। अपरमार्थभूतं रामजयजं प्रहर्षं कीर्तयन् ॥ १३ ॥ १४ ॥

ते मूलमस्मदपरिग्रहनिदानम्। सर्वथा सर्वप्रकारेण छिन्नम्। ते दर्पश्च मया निहतः ॥ १५ ॥

एवं करणेन किं ते जातं तत्राह। आत्मनस्तव व्यसनेन मम भार्य्या भविष्यसि। गत्यन्तराभावात् स्वयमेवेति शेषः। एतां मतिं रामविषयां मतिम् ॥ १६ ॥

भवस्व भवेत्यर्थः। निवृत्तार्थे निवृत्तो रामरूपोऽर्थो यस्यास्तादृशि। कथमिदं त्वया साधितमिति चेदुपायेनेत्याह। शृणिवति ॥१७॥

वानरेन्द्रप्रणीतेन बलेन महता वृतः ॥ १८ ॥
सन्निविष्टः समुद्रस्य पीड्य तीरमथोत्तरम् ।
बलेन महता रामो व्रजत्यस्तं दिवाकरे ॥ १९ ॥
अथाध्वनि परिश्रान्तमर्धरात्रे स्थितं बलम् ।
सुखसुप्तं समासाद्य चरितं प्रथमं चरैः ॥ २० ॥
तत्प्रहस्तप्रणीतेन बलेन महता मम ।
बलमस्य हतं रात्रौ यत्र रामः सलक्ष्मणः ॥ २१ ॥
पट्टिशान् परिघांश्चक्रान् ऋष्टीन् दण्डान् महायुधान् ।
बाणजालानि शूलानि भास्वरान् कूटमुद्गरान् ॥ २२ ॥
यष्टीश्च तोमरान् प्रासांश्चक्राणि मुषलानि च ।
उद्यम्योद्यम्य रक्षोभिर्वानरेषु निपातिताः ॥ २३ ॥
अथ सुप्तस्य रामस्य प्रहस्तेन प्रमाथिना ।
असक्तं कृतहस्तेन शिरश्छिन्नं महासिना ॥ २४ ॥

प्रणीतेन आनीतेन ॥ १८ ॥

अस्तं दिवाकरे व्रजति । महाबलेन समुद्रस्योत्तरं तीरं संपीड्य रामः सन्निविष्ट इत्यन्वयः ॥ १९ ॥

बलं रामसेना । चरितं चारितं तद्बलमिति शेषः ॥ २० ॥

यत्र रामः सलक्ष्मणस्तद्देशेऽस्य बलं हतम् ॥ २१ ॥

चक्रान् खल्वान् । चक्राणीति पुनरुक्तेः । एतानि उद्यम्योद्यम्य ते पट्टिशादयो वानरेषु पातिताः । ऋष्टयः सूक्ष्मखड्गाः ॥ २२ ॥ २३ ॥

विभीषणः समुत्पत्य निगृहीतो यदृच्छया।
दिशं प्रव्राजितः सैन्यैर्लक्ष्मणः प्लवगैः सह॥ २५॥
सुग्रीवो ग्रीवया सीते! भग्नया प्लवगाधिपः।
निरस्तहनुकः सीते! हनूमान् राक्षसैर्हतः॥ २६॥
जाम्बवानथ जानुभ्यामुत्पतन्निहतो युधि।
पट्टिशैर्बहुभिश्छिन्नो निकृत्तः पादपो यथा॥ २७॥
मैन्दश्च द्विविदश्चोभौ तौ वानरवरर्षभौ।
निःश्वसन्तौ रुदन्तौ च रुधिरेण परीवृतौ॥ २८॥
असिना व्यायतौ छिन्नौ मध्ये ह्यरिनिषूदनौ।
अनुष्वनति मेदिन्यां पनसः पनसो यथा॥ २९॥
नाराचैर्बहुभिश्छिन्नः शेते दर्य्यां दरीमुखः।
कुमुदस्तु महातेजा निष्कूजन् सायकैर्हतः॥ ३०॥
अङ्गदो बहुभिश्छिन्नः शरैरासाद्य राक्षसैः।
परितो रुधिरोद्गारी क्षितौ निपतितोऽङ्गदः॥ ३१॥
हरयो मथिता नागै रथजालैस्तथापरे।
शयानाम्मृदितास्तत्र वायुवेगैरिवाम्बुदाः॥ ३२॥

हतहस्तेन शिञ्चितहस्तेनासक्तं यथा तथा छिन्नम्॥ २४॥
समुत्पत्य यदृच्छया गतोऽपि निगृहीतः॥२५॥२६॥२७॥२८॥२९॥
कुमुदस्तु महातेजा निष्कूजन् सायकैर्हत इति पाश्चात्यः पाठः॥ ३०॥
राक्षसैरासाद्य प्राप्य छिन्नः॥ ३१॥ ३२॥

प्रहृताश्च परे त्रस्ता हन्यमाना जघन्यतः।
अनुद्रुतास्तु रक्षोभिः सिंहैरिव महाद्विपाः॥ ३३॥
सागरे पतिताः केचित् केचिद्गगनमाश्रिताः।
ऋक्षा वृक्षानुपारूढा वानरैर्व्यतिमिश्रिताः॥ ३४॥
सागरस्य च तीरेषु शैलेषु च वनेषु च।
पिङ्गलास्ते विरूपाक्षै राक्षसैर्बहवो हताः॥ ३५॥
एवं तव हतो भर्त्ता ससैन्यो मम सेनया।
क्षतजार्द्रं रजोध्वस्तमिदञ्चास्याहृतं शिरः॥ ३६॥
ततः परमदुर्धर्षो रावणो राक्षसेश्वरः।
सीतायामुपशृण्वन्त्यां राक्षसीमिदमब्रवीत्॥ ३७॥
राक्षसं क्रूरकर्माणं विद्युज्जिह्वं समानय।
येन तद्राघवशिरः संग्रामात् स्वयमाहृतम्॥ ३८॥
विद्युज्जिह्वस्तदा गृह्य शिरस्तत् सशरासनम्।
प्रणामं शिरसा कृत्वा रावणस्याग्रतः स्थितः॥ ३९॥
तमब्रवीत्ततो राजा रावणो राक्षसं स्थितम्।
विद्युज्जिह्वं महाजिह्वं समीपपरिवर्त्तिनम्॥ ४०॥
अग्रतः कुरु सीतायाः शीघ्रं दाशरथेः शिरः।
अवस्थां पश्चिमां भर्त्तुः कृपणां साधु पश्यतु॥ ४१॥

जघन्यतोऽनुद्रुता इत्यन्वयः॥ ३३॥ ३४॥ ३५॥ ३६॥
राक्षसीं सीतासमीपवर्त्तिनीम्॥ ३७॥ ३८॥ ३९॥ ४०॥ ४१॥

एवमुक्तन्तु तद्रक्षः शिरस्तत् प्रियदर्शनम् ।
उपनिक्षिप्य सीतायाः क्षिप्रमन्तरधीयत ॥ ४२ ॥
रावणश्चापि चिक्षेप भास्वरं कार्मुकं महत् ।
त्रिषु लोकेषु विख्यातं रामस्यैतदिति ब्रुवन् ॥ ४३ ॥
इदं तत्तव रामस्य कार्मुकं ज्यासमावृतम् ।
इह प्रहस्तेनानीतं तं हत्वा निशि मानुषम् ॥ ४४ ॥

स विद्युजिह्वेन सहैव तच्छिरो
धनुश्च भूमौ विनिकीर्य्यमाणः ।
विदेहराजस्य सुतां यशस्विनीं
ततोऽब्रवीत्तां भव मे वशानुगा ॥ ४५ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
एकत्रिंशः सर्गः ॥ ३१ ॥

शिरस्तत् प्रियदर्शनं रामशिरोवत् प्रियदर्शनमित्यर्थः । अन्तरधीयत अपगच्छन् स्त्रीगोष्ठ्यां स्थातुमयुक्तत्वधियेति भावः ॥ ४२ ॥

चिक्षेप आचकर्ष ॥ ४३ ॥ ४४ ॥

स विद्युजिह्वेनेति छन्दोवशात्तकारलोपः । विनिकीर्य्यमाणः विकिरन्नित्यर्थः ॥ ४५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

---

## द्वात्रिंशः सर्गः ।

सा सीता तच्छिरो दृष्ट्वा तच्च कार्मुकमुत्तमम् ।
सुग्रीवप्रतिसंसर्गमाख्यातञ्च हनूमता ॥ १ ॥
नयने मुखवर्णञ्च भर्त्तुस्तत्सदृशं मुखम् ।
केशान् केशान्तदेशञ्च तञ्च चूड़ामणिं शुभम् ॥ २ ॥
एतैः सर्वैरभिज्ञानैरभिज्ञाय सुदुःखिता ।
विजगर्हेऽथ कैकेयीं क्रोशन्ती कुररी यथा ॥ ३ ॥
सकामा भव कैकेयि ! हतोऽयं कुलनन्दनः ।
कुलमुत्सादितं सर्वं त्वया कलहशीलया ॥ ४ ॥
आर्य्येण किन्नु कैकेय्याः कृतं रामेण विप्रियम् ।
यन्मया चीरवसनं दत्वा प्रव्राजितो वनम् ॥ ५ ॥
एवमुक्ता तु वैदेही वेपमाना तपस्विनी ।

सेति । हनूमताख्यातं सुग्रीवप्रतिसंसर्गं सुग्रीवरामसम्बन्धं रावणकल्पितवानरबधस्योपपादकं स्मृत्वेति शेषः ॥ १ ॥

भर्त्तृसदृशमिति विभक्तिविपरिणामेन सर्वत्रान्वेति । केशान्तदेशं ललाटम् । तं केशान्तवर्त्तिनम् ॥ २ ॥

अभिज्ञानैः लक्षणैः ॥ ३ । ४ ॥

जगाम जगतीं बाला छिन्ना तु कदली यथा ॥ ६ ॥
सा मुहूर्त्तात् समाश्वस्य परिलभ्याथ चेतनाम्।
तच्छिरः समुपास्थाय विललापायतेक्षणा ॥ ७ ॥
हा! हतास्मि महाबाहो! वीरव्रतमनुव्रत!।
इमां ते पश्चिमावस्थां गतास्मि विधवा कृता ॥ ८ ॥
प्रथमं मरणं नार्य्या भर्त्तुर्वैगुण्यमुच्यते।
सुवृत्तः साधुवृत्तायाः संवृत्तस्त्वं ममाग्रतः ॥ ९ ॥
महद्दुःखं प्रपन्नाया मग्नायाः शोकसागरे।
यो हि मामुद्यतस्त्रातुं सोऽपि त्वं विनिपातितः ॥ १० ॥
सा श्वश्रूर्मम कौसल्या त्वया पुत्रेण राघव!।

आर्य्येण रामेणेत्यन्वयः। चीरवसनं दत्वा मया सह प्रव्राजित इत्यन्वयः ॥ ५ ॥ ६ ॥

समुपास्थाय स्वसमीपे स्थापयित्वा। समुपाघ्रायेति पाठान्तरम् ॥ ७ ॥

वीरव्रतं सुदृढं पितृवाक्यपालनव्रतम्। ते तव नाशादिमां पश्चिमावस्थां गतास्मि। तामवस्थामाह,—विधवा कृतेति ॥ ८ ॥

नार्य्या भर्त्तुर्मरणं प्रथमं वैगुण्यं मुख्योऽनर्थः। यत्तु भर्त्तुः प्रथमं मरणं नार्य्या वैगुण्यं दुश्चरित्रमूलमित्यर्थस्तन्न। एवं हि सर्वविधवानामसतीत्वापत्तेः। संवृत्तः अतीतः ॥ ९ ॥

महद्दुःखं प्रपन्नाया मम मरणमेव वरमिति शेषः। हि यतो यस्त्वं मां त्रातुमुद्यतः सोऽपि त्वं विनिपातितो राक्षसैरिति शेषः ॥ १० ॥

वत्सला ते यथा धेनुर्विवत्सा वत्सला कृता ॥ ११ ॥
उद्दिष्टं दीर्घमायुस्ते दैवज्ञैरपि राघव ! ।
अनृतं वचनं तेषामल्पायुरसि राघव ! ॥ १२ ॥
अथवा नश्यति प्रज्ञा प्राज्ञस्यापि सतस्तव ।
पचत्येनं तथाकालो भूतानां प्रभवो ह्ययम् ॥ १३ ॥
अदृष्टं मृत्युमापन्नः कस्मात्त्वं नयशास्त्रवित् ।
व्यसनानामुपायज्ञः कुशलो ह्यसि वर्जने ॥ १४ ॥
तथा त्वं सम्परिष्वज्य रौद्रयातिनृशंसया ।
कालरात्र्या मयाच्छिद्य हृतः कमललोचनः ॥ १५ ॥

सा वत्सला मम श्वश्रूस्त्वया पुत्रेण राक्षसहृतेन वत्सला धेनुरिव विवत्सा कृता ॥ ११ ॥

दैवज्ञैर्वशिष्ठादिभिरिति शेषः। यतोऽल्पायुरसि अतस्तेषां वचनं मिथ्या ॥ १२ ॥

अथवेति। अथेति प्रश्ने। प्राज्ञस्य सतस्तवापि प्रज्ञा नश्यत्यथ नाशं प्राप्ता किम्। येन प्रज्ञादौर्बल्यात् सुप्तोऽरिवसं प्राप्त इति शेषः। वा अथवा। हि यतः कालो भूतानां प्रभवः प्रभवाय हेतुस्तस्मादयमेनं प्राणिनं तथा पचति तत्तत्कर्मफलं प्रापयति। काल ईश्वरः। अतः प्राज्ञोऽपि त्वमप्राज्ञो जात इति भावः ॥ १३ ॥

हि यतस्त्वं व्यसनानां वर्जने उपायज्ञस्तदनुष्ठाने कुशलश्चासि। तस्मात् कस्माद्धेतोरदृष्टं पूर्वमज्ञातं मृत्युमापन्नः। अत्र हेतुं न पश्यामीति भावः ॥ १४ ॥

इह शेषे महाबाहो! मां विहाय तपस्विनीम्।
प्रियामिव यथा नारीं पृथिवीं पुरुषर्षभ!॥ १६॥
अर्चितं सततं यत्नात् गन्धमाल्यैर्मया तव।
इदं ते मत्प्रियं वीर! धनुः काञ्चनभूषितम्॥ १७॥
पित्रा दशरथेन त्वं श्वशुरेण ममानघ!।
सर्वैश्च पितृभिः सार्द्धं नूनं स्वर्गे समागतः॥ १८॥
दिवि नक्षत्रभूतश्च महत्कर्मकृतं तथा।
पुण्यं राजर्षिवंशं त्वमात्मनः समुपेक्षसे॥ १९॥
किं मां न प्रेक्षसे राजन्! किं वा न प्रतिभाषसे।
बालां बाल्येन सम्प्राप्तां भार्य्यां मां सहचारिणीम्॥ २०॥

मया कालरात्रेत्यन्वयः। रौद्रत्वादिविशिष्टया मया कालरात्र्या सम्परिष्वज्य आच्छिद्य बलात्कृत्य तथा त्वं हृतो यथा नष्ट इति भावः॥ १५॥

मां विहाय प्रियां नारीमिव पृथिवीमालिङ्ग्य शेषे॥ १६॥

मया सह तव त्वयार्चितं मत्प्रियं ते धनुरिदमेतादृशं जातमिति शेषः॥ १७॥

सर्वैः पितृभिः सार्द्धं स्थितेन दशरथेन स्वर्गे त्वं समागत इत्यन्वयः॥ १८॥

दिवि नक्षत्रभूतम्। त्रिशङ्कोस्तथात्वाच्छ्रिन्यायेन वंशस्य तथा त्वम्। महता पितृवचःपालनरूपेण कर्मणा कृतम्। तथा पुण्यमासाद्य

संश्रुतं गृह्णता पाणिं चरिष्यामीति यत्त्वया ।
स्मर तन्नाम काकुत्स्थ ! नय मामपि दुःखिताम् ॥ २१ ॥
कस्मान्मामपहाय त्वं गतो गतिमतां वर ! ।
अस्माल्लोकादमुं लोकं त्यक्त्वा मामपि दुःखिताम् ॥ २२ ॥
कल्याणै रुचिरं गात्रं परिष्वक्तं मयैव तु ।
क्रव्यादैस्तच्छरीरं ते नूनं विपरिकृष्यते ॥ २३ ॥
अग्निष्टोमादिभिर्यज्ञैरिष्टवानाप्तदक्षिणैः ।
अग्निहोत्रेण संस्कारं केन त्वं न तु लप्स्यसे ॥ २४ ॥
प्रव्रज्यामुपपन्नानां त्रयाणामेकमागतम् ।
परिप्रेक्ष्यति कौसल्या लक्ष्मणं शोकलालसा ॥ २५ ॥

आत्मनः प्रियं पुण्यं राजर्षिवंशं समुपेक्षसे त्यक्त्वा गच्छसीतदन्याय्यमित्यर्थः ॥ १९ ॥ २० ॥

पाणिं गृह्णता त्वया त्वया सह चरिष्यामि धर्मादिकर्मेति यत् संश्रुतं प्रतिज्ञातं तत् स्मर । अतो दुःखितां मामपि नय ॥ २१ ॥ २२ ॥

कल्याणैर्मङ्गलैः रुचिरं यत्त्वच्छरीरं तदेव तावत्कालपर्य्यन्तं मयैव परिष्वक्तम् । तत्तव शरीरमद्य क्रव्यादैर्विपरिकृष्यते ॥ २३ ॥

अग्निहोत्रेण वैतानाग्निना संस्कारं केन हेतुना न लप्स्यसे न लभसे ॥ २४ ॥

प्रव्रज्यां प्रवासमुपपन्नानां त्रयाणामस्माकं मध्ये एकं लक्ष्मणमित्यन्वयः । परिप्रेक्ष्यति द्रक्ष्यतीत्यर्थः ॥ २५ ॥

स तस्याः परिपृच्छन्त्या वधं मित्रबलस्य ते।
तत्र चाख्यास्यते नूनं निशायां राक्षसैर्वधम्॥ २६॥
सा त्वां सुप्तं हतं ज्ञात्वा मां च रक्षोगृहं गताम्।
हृदयेनावदीर्णेन न भविष्यति राघव !॥ २७॥
मम हेतोरनार्य्याया अनघः पार्थिवात्मजः।
रामः सागरमुत्तीर्य्य वीर्य्यवान् गोष्पदे हतः॥ २८॥
अहं दाशरथेनोढ़ा मोहात् स्वकुलपांसनी।
आर्य्यपुत्रस्य रामस्य भार्य्या मृत्युरजायत॥ २९॥
नूनमन्यां मया जातिं वारितं दानमुत्तमम्।
याहमद्यैव शोचामि भार्य्या सर्व्वातिथेरिह॥ ३०॥

मित्रबलस्य वानरबलस्य॥ २६॥

अवदीर्णेन विदीर्णेनोपलक्षिता सती नूनं न भविष्यति। म्रियेतेत्यर्थः॥ २७॥

सागरमुत्तीर्य्य गोष्पदे हतस्तत्तल्लक्षणाग्रमयेति या लोकवार्त्ता तत्तुल्यमिदं जातमित्यर्थः॥ २८॥

दाशरथेन दशरथपुत्रेण। अनार्यः। मृत्युरजायत मृत्युरूपा जाता॥ २९॥

अन्यां जातिमन्यस्मिन् जन्मनि उत्तमं दानं कन्यादानं गोभूहिरण्यादिदानञ्च वारितं न कृतम्। सर्व्वातिथेः सर्व्वातिथिप्रियस्य। इह काले देशे च॥ ३०॥

साधु घातय मां क्षिप्रं रामस्योपरि रावण ! ।
समानय पतिं पत्न्या कुरु कल्याणमुत्तमम् ॥ ३१ ॥
शिरसा मे शिरश्चास्य कायं कायेन योजय ।
रावणानुगमिष्यामि गतिं भर्त्तुर्महात्मनः ॥ ३२ ॥
इतीव दुःखसन्तप्ता विललापायतेक्षणा ।
भर्त्तुः शिरो धनुश्चैव ददर्श जनकात्मजा ॥ ३३ ॥
एवं लालप्यमानायां सीतायां तत्र राक्षसः ।
अभिचक्राम भर्त्तारमनीकस्थः कृताञ्जलिः ॥ ३४ ॥
विजयस्वार्य्यपुत्रेति सोऽभिवाद्य प्रसाद्य च ।
न्यवेदयदनुप्राप्तं प्रहस्तं वाहिनीपतिम् ॥ ३५ ॥
अमात्यैः सहितः सर्वैः प्रहस्तस्त्वामुपस्थितः ।
तेन दर्शनकामेन अहं प्रस्थापितः प्रभो ! ॥ ३६ ॥
नूनमस्ति महाराज ! राजभावात् क्षमान्वित ! ।
किञ्चिदात्ययिकं कार्य्यं तेषां त्वं दर्शनं कुरु ॥ ३७ ॥

समानय योजय ॥ ३१ ॥ ३२ ॥ ३३ ॥

तत्र अशोकवनिकायाम् । राक्षसः प्रहस्तप्रेरितः । अनीकस्थः द्वाररक्षीराक्षसः । भर्त्तारं स्वामिनमभिचक्रामाभिक्रम्यार्य्यपुत्रविजयस्वेति प्रसाद्याभिवाद्य च कृताञ्जलिः समुपस्थितः । आर्य्यपुत्रशब्दो यद्यपि स्त्रीभिर्भर्त्तरि प्रयुज्यते प्रायेण तथापि पूज्यमात्रे सामान्यतः प्रयोगोऽपि बोध्यः ॥ ३४ ॥ ३५ ॥ ३६ ॥

एतच्छ्रुत्वा दशग्रीवो राक्षसप्रतिवेदितम्।
अशोकवनिकां त्यक्त्वा मन्त्रिणां दर्शनं ययौ ॥ ३८ ॥
स तु सर्वं समर्थ्यैव मन्त्रिभिः कृत्यमात्मनः।
सभां प्रविश्य विदधे विदित्वा रामविक्रमम् ॥ ३९ ॥
अन्तर्द्धानन्तु तच्छीर्षं तच्च कार्मुकमुत्तमम्।
जगाम रावणस्यैव निर्य्याणसमनन्तरम् ॥ ४० ॥
राक्षसेन्द्रस्तु तैः सार्द्धं मन्त्रिभिर्भीमविक्रमैः।
समर्थयामास तदा रामकार्य्यविनिश्चयम् ॥ ४१ ॥
अविदूरस्थितान् सर्वान् बलाध्यक्षान् हितैषिणः।
अब्रवीत् कालसदृशो रावणो राक्षसाधिपः ॥ ४२ ॥
शीघ्रं भेरीनिनादेन स्फुटं कोणाहतेन मे।

नन्ववसरे कथं प्रस्थापितवांस्तत्राह,—नूनमिति। राजभावाद्राजकार्य्याभिप्रायज्ञानाद्धेतोरनवसरप्राप्तावपि क्षमान्वित महाराज। नूनं निश्चितम्। आत्ययिकम् अत्यावश्यकं किञ्चित्कार्य्यमस्ति तस्मादागत्य तेषां त्वं दर्शनं कुरु। क्षमान्वितेति पाङ्क्तः पाठः ॥ ३७ ॥

मन्त्रिणां दर्शनम्। उद्दिश्येति शेषः ॥ ३८ ॥

सर्वं समर्थ्यैव गत्वा दुष्टमन्त्रिभिरेकान्ते सर्वं कृत्यं विचार्य्येत्यर्थः। सभां प्रविश्य विदधे। एकान्ते कृतमन्त्रोचितव्यापारमिति शेषः ॥ ३९ ॥

निर्य्याणसमनन्तरमेवेति योजना। मायामयत्वादिति भावः ॥ ४० ॥

रामकार्य्यविनिश्चयं रामविषयं स्वकर्त्तव्यनिश्चयम् ॥ ४१ ॥ ४२ ॥

समानयध्वं सैन्यानि वक्तव्यञ्च न कारणम् ॥ ४३ ॥
ततस्तथेति प्रतिगृह्य तद्वच-
स्तदैव दूताः सहसा महद्बलम् ।
समानयंश्चैव समागतञ्च
न्यवेदयन् भर्त्तरि युद्धकाङ्क्षिणि ॥ ४४ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
द्वात्रिंशः सर्गः ॥ ३२ ॥

स्फुटं वीणाहतेन उल्बणवादनदण्डाहतेन । कारणं न वक्तव्यमिति भावः । राजा आज्ञयते इत्येतावदेव वक्तव्यं नत्वेतदर्थमितीति भावः ॥ ४३ ॥

अत्र सीताप्रलापः स्वस्य मानुषधर्मप्रकटनायेति बोध्यम् ॥ ४४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

---

## त्रयस्त्रिंशः सर्गः ।



सीतां तु मोहितां दृष्ट्वा सरमा नाम राक्षसी ।
आससादाथ वैदेहीं प्रियां प्रणयिनी सखी ॥ १ ॥
मोहितां राक्षसेन्द्रेण सीतां परमदुःखिताम् ।
आश्वासयामास तदा सरमा मृदुभाषिणी ॥ २ ॥
सा हि तत्र कृता मित्रं सीतया रक्ष्यमाणया ।
रक्षन्ती रावणादिष्टा सानुक्रोशा दृढव्रता ॥ ३ ॥
सा ददर्श सखी सीतां सरमा नष्टचेतनाम् ।

सीतान्त्विति । विभीषणपत्नीयं सरमा सा तु सीतायां भक्तिमती सा हि रावणेन ज्ञातसात्विकभावातिभर्त्सनेन नाश्माशङ्क्य सीताश्वासनार्थं सन्दिष्टेति बोध्यम् । प्रणयिनी स्नेहवती सखी सरमेत्यन्वयः ॥ १ ॥ २ ॥

ननु राक्षसी कथं सखी कथं चाश्वासयेदत आह,—सा हीति । तत्र अशोकवनिकायाम् । रावणादिष्टा अत्र बीजमुक्तम् । अतएव राक्षसीभ्यो नित्यं रक्षन्ती सरमा रक्ष्यमाणया सीतया आत्मनः स्वस्याः मित्रं कृता सखी सम्पादिता । तत्र योग्यतामाह,—सानुक्रोशेत्यादि । दुःखितेषु सदया दृढव्रता प्राणैरपि मयेयं रक्षणीयेति दृढप्रतिज्ञा ॥ ३ ॥

उपावृत्त्योत्थितां ध्वस्तां वड़वामिव पांसुषु ॥ ४ ॥
तां समाश्वासयामास सखीस्नेहेन सुव्रताम् ।
उक्ता यद्रावणेन त्वं प्रत्युक्तश्च स्वयं त्वया ॥ ५ ॥
लीनया गहने शून्ये भयमुत्सृज्य रावणात् ।
तत्र हेतोर्विशालाक्षि ! न हि मे रावणाद्भयम् ॥ ६ ॥
स सम्भ्रान्तश्च निष्क्रान्तो यत्कृते राक्षसेश्वरः ।
तत्र मे विदितं सर्वमभिनिष्क्रम्य मैथिलि ! ॥ ७ ॥
न शक्यं सौप्तिकं कर्त्तुं रामस्य विदितात्मनः ।

उपावृत्त्य श्रमनाशार्थं लुठित्वा । ध्वस्तां पीड़िताम् अध्वश्रमेण शोकेन च ॥ ४ ॥

रावणेन यत्त्वमुक्ता यच्च रावणं प्रति स्वयं त्वयोक्तं साधु घातय मां क्षिप्रमित्यादि तत्सर्वं मया परिश्रुतम् ॥ ५ ॥

ननु विभीषणस्य विरुद्धकोटौ गतत्वात् तत्पत्न्या त्वया रावण-सन्निधौ स्थित्वा कथं श्रुतं तत्राह,—लीनयेति । गहनेऽशोकवनमध्ये पूर्वमस्य मायाकृतवृत्तान्तं श्रुतवत्या त्वद्रक्षणरूपकार्य्यार्थमागत्य लीनया गुप्तं स्थितया रावणात् भयमुत्सृज्य स्थितया सर्वं श्रुतम् । न हि मे रावणात् भयम् । तेनैव तत्र रक्षणे नियुक्तत्वात् तज्ज्ञातित्वाच्च । ततोऽन्यैवैषा सरमेत्यन्ये ॥ ६ ॥

स रावणो यत्कृते यन्निमित्तं सम्भ्रान्तो निष्क्रान्तस्तदपि अभि-निष्क्रम्य वहिर्गत्वा मया विदितं ज्ञातम् ॥ ७ ॥

वधश्च पुरुषव्याघ्रे तस्मिन्नैवोपपद्यते ॥ ८ ॥
नत्वेवं वानरा हन्तुं शक्याः पादपयोधिनः ।
सुरा देवर्षभेणेव रामेण हि सुरक्षिताः ॥ ९ ॥
दीर्घवृत्तभुजः श्रीमान् महोरस्कः प्रतापवान् ।
धन्वी सन्नहनोपेतो धर्मात्मा भुवि विश्रुतः ॥ १० ॥
विक्रान्तो रक्षिता नित्यमात्मनश्च परस्य च ।
लक्ष्मणेन सह भ्रात्रा कुलीनो नयशास्त्रवित् ॥ ११ ॥
हन्ता परबलौघानामचिन्त्यबलपौरुषः ।
न हतो राघवः श्रीमान् सीते! शत्रुनिबर्हणः ॥ १२ ॥
अयुक्तबुद्धिकृत्येन सर्वभूतविरोधिना ।
इयं प्रयुक्ता रौद्रेण माया मायाविना त्वयि ॥ १३ ॥
शोकस्ते विगतः सर्वः कल्याणं त्वामुपस्थितम् ।

तस्य पश्चादपि कथने बाधकाभावेनादौ राममोहं निवर्त्तयति। न शक्यमिति। सौप्तिकं सुप्तिकालयुद्धम्। तत्र हेतुर्विदितात्मनः। जितनिद्रालस्यादिदोषचित्तस्येत्यर्थः। पुरुषव्याघ्रे सर्वातिशायिशौर्य्यवति। अतएव तस्मिन् वधो नोपपद्यते ॥ ८ ॥

सर्ववानरहननमप्यशक्यमित्याह,—नत्वेवमिति ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

ननु प्रत्यक्षतो हते कथं न हतस्तत्राह,—अयुक्तेति। अयुक्ता अनुचिता बुद्धिः कृत्यञ्च यस्य तेन रौद्रेण रावणेन ॥ १३ ॥

ध्रुवं त्वां भजते लक्ष्मीः प्रियं ते भवति ! शृणु ॥ १४ ॥
उत्तीर्य्य सागरं रामः सह वानरसेनया ।
सन्निविष्टः समुद्रस्य तीरमासाद्य दक्षिणम् ॥ १५ ॥
दृष्टो मे परिपूर्णार्थः काकुत्स्थः सहलक्ष्मणः ।
सहितैः सागरान्तस्थैर्बलैस्तिष्ठति रक्षितः ॥ १६ ॥
अनेन प्रेषिता ये च राक्षसा लघुविक्रमाः ।
राघवस्तीर्ण इत्येवं प्रवृत्तिस्तैरिहाहृता ॥ १७ ॥
स तां श्रुत्वा विशालाक्षि ! प्रवृत्तिं राक्षसाधिपः ।
एष मन्त्रयते सर्वैः सचिवैः सह रावणः ॥ १८ ॥
इति ब्रुवाणा सरमा राक्षसी सीतया सह ।

शोको विगतः कल्याणञ्चोपस्थितं कुतस्तत्राह,— हे भवति ते प्रियं प्रियवचनम् ॥ १४ ॥ १५ ॥

दृष्टो मे । मया दृष्ट इत्यर्थः । स्वगृहवत्यूर्ध्वगृहमारुह्येति शेषः । खेचरीत्वात् बहिर्निर्गत्येति शेषो वा । सागरान्तस्थैः सागरतीरस्थैः । सहितैः सङ्गतैर्बलैः सह स्वमहिम्ना रक्षितस्तिष्ठति ॥ १६ ॥

अथ रावणस्य निष्क्रमहेतुमाह,—अनेनेति । प्रेषितास्तैराघवस्तीर्ण इति प्रवृत्तिर्वार्त्ता इहाहृता ॥ १७ ॥

तां प्रवृत्तिं राघवस्य सबलोत्तरणप्रवृत्तिम् । इतो निर्गत्येति शेषः । मन्त्रयते विचारयति ॥ १८ ॥

सर्वोद्योगेन सैन्यानां शब्दं शुश्राव भैरवम् ॥ १९ ॥
दण्डनिर्घातवादिन्याः श्रुत्वा भेर्य्या महास्वनम्।
उवाच सरमा सीतामिदं मधुरभाषिणी ॥ २० ॥
सन्नाहजननी ह्येषा भैरवा भीरु! भेरिका।
भेरीनादञ्च गम्भीरं शृणु तोयदनिःस्वनम् ॥ २१ ॥
कल्प्यन्ते मत्तमातङ्गा युज्यन्ते रथवाजिनः।
दृश्यन्ते तुरगारूढाः प्रासहस्ताः सहस्रशः ॥ २२ ॥
तत्र तत्र च सन्नद्धाः सम्पतन्ति सहस्रशः।
आपूर्य्यन्ते राजमार्गाः सैन्यैरद्भुतदर्शनैः ॥ २३ ॥
वेगवद्भिर्नदद्भिश्च तोयौघैरिव सागरः।
शस्त्राणाञ्च प्रसन्नानां चर्मणां वर्मणां तथा ॥ २४ ॥
रथवाजिगजानाञ्च राक्षसेन्द्रानुयायिनाम्।
सम्भ्रमो रक्षसामेष हृषितानां तरस्विनाम् ॥ २५ ॥

शब्दं सिंहनादम् ॥ १९ ॥ २० ॥

सन्नाहो युद्धाय सन्नहनम्। भेरीनादं शृणु। रामबले युद्धाय सन्नाहकर्मिति शेषः ॥ २१ ॥

युज्यन्ते रथेनेति शेषः ॥ २२ ॥ २३ ॥

प्रसन्नानां शाणोल्लेखननिर्मलानाम्। चर्म फलकम्। वर्म कवचम् ॥ २४ ॥ २५ ॥

प्रभां विसृजतां पश्य नानावर्णसमुत्थिताम् ॥ २६ ॥
वनं निर्दहतो घर्मे यथारूपं विभावसोः ।
घण्टानां शृणु निर्घोषं रथानां नेमिनिःस्वनम् ।
हयानां ह्रेषमाणानां शृणु तूर्यध्वनिं तथा ।
उद्यतायुधहस्तानां राक्षसेन्द्रानुयायिनाम् ।
सम्भ्रमो रक्षसामेष तुमुलं लोमहर्षणम् ।
श्रीस्त्वां भजति शोकघ्नी रक्षसां भयमागतम् ॥ २७ ॥
रामः कमलपत्राक्षो दैत्यानामिव वासवः ।
अवजित्य जितक्रोधस्तमचिन्त्यपराक्रमः ।
रावणं समरे हत्वा भर्त्ता त्वाऽधिगमिष्यति ॥ २८ ॥
विक्रमिष्यति रक्षःसु भर्त्ता ते सहलक्ष्मणः ।

नानावर्णैर्नीलपीतादिभिः समुत्थितां प्रभां विसृजतां चर्मादीनां प्रभां पश्येत्यावृत्त्यान्वयः ॥ २६ ॥

एतदुत्तरं वनं निर्दहत इत्यादिश्लोकद्वयं प्रक्षिप्तमिति कतकः । सम्भ्रम इति । एष सम्भ्रमो रक्षसामेवातो रक्षसां तुमुलं लोमहर्षणं भयमागतं विद्धि । अर्थाच्छोकघ्नी श्रीस्त्वां भजति इति विद्धि ॥ २७ ॥

अथ दैत्यानां निकटस्थां लक्ष्मीं यथा वासवो हृतवानेवं रामो रावणं समरे हत्वा तव भर्त्ता त्वामवजित्य प्रत्युद्गृह्यादवमुच्याधिगमिष्यति ॥ २८ ॥

यथा शत्रुषु शत्रुघ्नो विष्णुना सह वासवः ॥ २९ ॥
आगतस्य हि रामस्य क्षिप्रमङ्कगतां सतीम्।
अहं द्रक्ष्यामि सिद्धार्थां त्वां शचौ विनिपातिते ॥ ३० ॥
अस्राण्यानन्दजानि त्वं वर्त्तयिष्यसि जानकि!।
समागम्य परिष्वक्ता तस्योरसि महोरसः ॥ ३१ ॥
अचिरान्मोक्ष्यते सीते! देवि! ते जघनं गताम्।
धृतामेकां बहून् मासान् वेणीं रामो महाबलः ॥ ३२ ॥
तस्य दृष्ट्वा मुखं देवि! पूर्णचन्द्रमिवोदितम्।
मोक्ष्यसे शोकजं वारि निर्मोकमिव पन्नगी ॥ ३३ ॥
रावणं समरे हत्वा न चिरादेव मैथिलि!।
त्वया समग्रः प्रियया सुखार्हो लप्स्यते सुखम् ॥ ३४ ॥
सभाजिता त्वं रामेण मोदिष्यति महात्मना।
सुवर्षेण समायुक्ता यथा सस्येन मेदिनी ॥ ३५ ॥

रक्षःसु विक्रमिष्यति च। यथा शत्रुघ्नो वासवो विष्णुनोपेन्द्रेण सह शत्रुषु विक्रान्तवांस्तथा ते भर्त्ता विक्रमिष्यतीत्यन्वयः ॥ २९ ॥ ३० ॥
तस्योरसि अस्राणि वर्त्तयिष्यसीत्यन्वयः ॥ ३१ ॥
जघनं गतां जघनदेशं प्राप्तां वणीमित्यन्वयः ॥ ३२ ॥ ३३ ॥
समग्रः सहितः ॥ ३४ ॥ ३५ ॥

गिरिवरमभितो विवर्त्तमानो
हय इव मण्डलमाशु यः करोति।
तमिह शरणमभ्युपैहि देवि!
दिवसकरं प्रभवो ह्ययं प्रजानाम्॥ ३६॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
त्रयस्त्रिंशः सर्गः॥ ३३॥

गिरिवरं मेरुमभितो विवर्त्तमानः परिवर्त्तमानो हय इव यो मण्डलं मण्डलाकारगतिम् आशु करोति तं दिवसकरन्ते कुलदैवतं शरणमभ्युपैहि। हि यतोऽयं प्रजानां सुखदुःखदात्र्यारिति शेषः प्रभवः॥ ३६॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे त्रयस्त्रिंशः सर्गः॥ ३३॥

———

३४

## चतुस्त्रिंशः सर्गः ।

अथ तां जातसन्तापां तेन वाक्येन मोदिताम् ।

सरमाह्लादयामास महीं दग्धामिवाम्भसा ॥ १ ॥

ततस्तस्याः हितं सख्याश्चिकीर्षन्ती सखीवचः ।

उवाच काले कालज्ञा स्मितपूर्वाभिभाषिणी ॥ २ ॥

उत्सहेयमहं गत्वा त्वद्वाक्यमसितेक्षणे ! ।

निवेद्य कुशलं रामे प्रतिच्छन्ना निवर्त्तितुम् ॥ ३ ॥

न हि मे क्रममाणाया निरालम्बे विहायसि ।

समर्थो गतिमन्वेतुं पवनो गरुडोऽपि वा ॥ ४ ॥

एवं ब्रुवाणां तां सीता सरमामिदमब्रवीत् ।

मधुरं श्लक्ष्णया वाचा पूर्वशोकाभिपन्नया ॥ ५ ॥

तेन वाक्येन रावणवधवाक्येन । अम्भसा मेघपङ्क्तिरिवेति शेषः ॥ १ ॥

चिकीर्षन्ती कर्त्तुमिच्छन्ती सखी सरमा वच उवाचेत्यन्वयः ॥ २ ॥

अहं प्रतिच्छन्ना गत्वा कुशलं कुशलावेदकं त्वद्वाक्यं रामे निवेद्य पुनः प्रतिच्छन्ना निवर्त्तितुमुत्सहेयमित्युवाच ॥ ३ ॥

स्वस्यास्तथा सामर्थ्यं दर्शयति । न हीति ॥ ४ ॥

तां सरमामित्यन्वयः । एवं ब्रुवाणां दूतत्वेच्छुम् । पूर्वशोकाभिपन्नाया आश्वासनात् पूर्वं जातेन शोकेनैवयुक्तया ॥ ५ ॥

समर्था गगनं गन्तुमपि च त्वं रसातलम् ।
अवगच्छाद्य कर्त्तव्यं कर्त्तव्यं ते मदन्तरे ॥ ६ ॥
मत्प्रियं यदि कर्त्तव्यं यदि बुद्धिः स्थिरा तव ।
ज्ञातुमिच्छामि तं गत्वा किं करोतीति रावणः ॥ ७ ॥
स हि मायाबलः क्रूरो रावणः शत्रुरावणः ।
मां मोहयति दुष्टात्मा पीतमात्रेव वारुणी ॥ ८ ॥
तर्जापयति मां नित्यं भर्त्सापयति चासकृत् ।
राक्षसीभिः सुघोराभिर्यो मां रक्षति नित्यशः ॥ ९ ॥

अथ सीता शूर्पणखाया इवास्या अपि रामसमीपगमनमनुचितमिति विचार्य्य तत्सामर्थ्यश्लाघापूर्वं तामुचितकृत्ये नियोजयति । समर्थेति । अवगच्छाद्य कर्त्तव्यमिति पाठः पाठ इति कतकः । अन्तरशब्दस्तादर्थ्ये । मदन्तरे मदर्थं यत्कर्त्तव्यं त्वया कर्त्तुं योग्यं तादृशं कर्त्तव्यं कृत्यं मयोच्यमानमवगच्छ ॥ ६ ॥

मत्प्रियं कर्त्तव्यमिति यदि तव बुद्धिः स्थिरास्ति तदोच्यत इति शेषः । स्थिरैव निःशङ्कं ब्रूहीत्युक्ता चाह,—ज्ञातुमिति । इतो गत्वा रावणः किं करोतीति रावणं ज्ञातुमिच्छामि ॥ ७ ॥

पीतमात्रा सद्यः पीता ॥ ८ ॥

तर्जापयतीति । तर्जभर्त्साभ्यां तत्करोतीति णिचि पुगागमः । अवाचिकीभीषिकातर्जनम् । वाचिकीतुसाभर्त्सनम् । राक्षसीभिरिति द्वारकथनम् । रक्षति अवरुध्यते ॥ ९ ॥

उद्विग्ना शङ्किता चास्मि न स्वस्थञ्च मनो मम।
तद्भयाच्चाहमुद्विग्ना अशोकवनिकां गता॥ १०॥
यदि नाम कथा तस्य निश्चितं वापि यद्भवेत्।
निवेदयेथाः सर्वं तद्वरो मे स्यादनुग्रहः॥ ११॥
साप्येवं ब्रुवतीं सीतां सरमा मृदुभाषिणी।
उवाच वदनं तस्याः स्पृशन्ती बाष्पविक्लवम्॥ १२॥
एष ते यद्यभिप्रायस्तस्माद्गच्छामि जानकि!।
गृह्य शत्रोरभिप्रायमुपावर्त्तामि मैथिलि!॥ १३॥
एवमुक्त्वा ततो गत्वा समीपं तस्य रक्षसः।
शुश्राव कथितं तस्य रावणस्य समन्त्रिणः॥ १४॥
सा श्रुत्वा निश्चयं तस्य निश्चयज्ञा दुरात्मनः।
पुनरेवागमत् क्षिप्रमशोकवनिकां शुभाम्॥ १५॥

उद्विग्नेति। कथमुद्विग्नेत्यत्राह,—तद्भयादिति। अशोकवनिकां गताप्यहं तद्भयादुद्विग्नास्मि॥ १०॥

कथा मद्विमोक्षविषया कथा यदि नाम भवेत्। अपि वा तदभावविषया स्यात्। अनयोर्यन्निश्चितं तत्सर्वं मे निवेदयेथाः। तदा मे वरः श्रेष्ठोऽनुग्रहः स्यात्। एतदनुकूलमेवोत्तरं वक्ष्यति। न त्वामुत्सहते मोक्तुमिति॥ ११॥

बाष्पविक्लवं तस्या वदनं स्पृशन्ती परिमार्जयन्ती॥ १२॥

सा प्रविष्टा ततस्तत्र ददर्श जनकात्मजाम् ।
प्रतीक्षमाणां स्वामेव भ्रष्टपद्मामिव श्रियम् ॥ १६ ॥
तान्तु सीता पुनः प्राप्तां सरमां प्रियभाषिणीम् ।
परिष्वज्य च सुस्निग्धं ददौ च स्वयमासनम् ॥ १७ ॥
इहासीना सुखं सर्वमाख्याहि मम तत्त्वतः ।
क्रूरस्य निश्चयं तस्य रावणस्य दुरात्मनः ॥ १८ ॥
एवमुक्ता तु सरमा सीतया वेपमानया ।
कथितं सर्वमाचष्ट रावणस्य समन्त्रिणः ॥ १९ ॥
जनन्या राक्षसेन्द्रो वै तन्मोक्षार्थं बृहद्वचः ।
अतिस्निग्धेन वैदेहि ! मन्त्रिवृद्धेन चोदितः ॥ २० ॥
दीयतामभिसत्कृत्य मनुजेन्द्राय मैथिली ।
निदर्शनं ते पर्य्याप्तं जनस्थाने यदद्भुतम् ॥ २१ ॥

उपावर्त्तामि परावृत्यागच्छामि ॥ १३ ॥ १४ ॥ १५ ॥

स्वामेव प्रतीक्षमाणां कदा आगमिष्यति सरमेति तदागमनं प्रतीक्षमाणामित्यर्थः ॥ १६ ॥ १७ ॥ १८ ॥

समन्त्रिणो रावणस्य सर्वं कथितं परस्परालापम् आचष्ट ॥ १९ ॥

जनन्या मात्रा अतिस्निग्धेन वृद्धेन च रावणो बृहद्वचः । सर्वथा हितत्वाद्वचसो बृहत्त्वम् । तदुक्ता चोदितः बोधितः ॥ २० ॥

तद्वाक्यमाह,—दीयतामिति । सत्कारपूर्वं दीयतामित्यर्थः । निदर्शनं तत्पराक्रमविषय इति शेषः । जनस्थानेऽद्भुतं खरादिवधरूपं

लङ्घनञ्च समुद्रस्य दर्शनञ्च हनूमतः।
वधञ्च रक्षसां युद्धे कः कुर्य्यान् मानुषो युधि॥ २२॥
एवं स मन्त्रिवृद्धैश्च मात्रा च बहु बोधितः।
न त्वामुत्सहते मोक्तुमर्थमर्थपरो यथा॥ २३॥
नोत्सहत्यमृतो मोक्तुं युद्धे त्वामिति मैथिलि!
सामात्यस्य नृशंसस्य निश्चयो ह्येष वर्त्तते॥ २४॥
तदेषां सुस्थिरा बुद्धिर्मृत्युलोभादुपस्थिता।
भयान्न शक्तस्त्वां मोक्तुमनिरस्तः स संयुगे॥ २५॥
राक्षसानाञ्च सर्वेषामात्मनश्च वधेन हि।

यत्तूक्तं तदेव पर्य्याप्तं प्रमाणान्तरानपेक्षं निदर्शनं तत्पराक्रमस्येत्यर्थः॥ २१॥

किञ्च। रामानुचरो हनूमानेव सर्वराक्षसजयसमर्थ इत्याह,—लङ्घनञ्चेति। दर्शनं सीताया इति शेषः। मानुषः पुरुषः। तस्माद्धनूमान् रामो वानरो मनुष्यो वा न अपि तु देवावतार इति भावः॥ २२॥

बहुबोधितो बहुप्रकारं बोधितः। अर्थपरः उत्तरोत्तरमर्थार्जनतत्परः। परमलुब्ध इत्यर्थः॥ २३॥

युद्धेऽमृतो मरणमप्राप्तः। ततः प्राक् त्वां मोक्तुं त्यक्तुं नोत्सहति। हि प्रसिद्धम्। तस्य सामात्यस्यैष निश्चयो वर्त्तते॥ २४॥

मृत्युलोभान् मृत्युकृतवञ्चनया सर्वेषां राक्षसानामात्मनो रावणस्य

निहत्य रावणं संख्ये सर्वथा निशितैः शरैः ।
प्रतिनेष्यति रामस्त्वामयोध्यामसितेक्षणे ॥ २६ ॥
एतस्मिन्नन्तरे शब्दो भेरीशङ्खसमाकुलः ।
श्रुतो वै सर्वसैन्यानां कम्पयन् धरणीतलम् ॥ २७ ॥
श्रुत्वा तु तं वानरसैन्यनादं
लङ्कागता राक्षसराजभृत्याः ।
हतौजसो दैन्यपरीतचेष्टाः
श्रेयो न पश्यन्ति नृपस्य दोषात् ॥ २८ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
चतुस्त्रिंशः सर्गः ॥ ३४ ॥

च वधेन रामेण युद्धेऽनिरस्तः सन् रामतो मृत्युभयाद्भयं प्राप्य न त्वां मोक्तुं शक्तः । नोत्सहत इत्यर्थः ॥ २५ ॥

तर्हि मम निर्गमोऽसम्भवोऽयत आह,—निहत्येति ॥ २६ ॥

भेरीशङ्खसमाकुलः तच्छब्दसमाकुलः सर्वसैन्यानां शब्दः श्रुतः ॥२७॥

नृपस्य रावणस्य दोषादन्यायात् श्रेयो न पश्यन्ति । नष्टजीविताशाः अभूवन्नित्यर्थः ॥ २८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

———

## पञ्चत्रिंशः सर्गः ।



तेन शङ्खविमिश्रेण भेरीशब्देन नादिना ।
उपयाति महाबाहू रामः परपुरञ्जयः ॥ १ ॥
तं निनादं निशम्याथ रावणो राक्षसेश्वरः ।
मुहूर्त्तं ध्यानमास्थाय सचिवानभ्युदैक्षत ॥ २ ॥
अथ तान् सचिवांस्तत्र सर्वानाभाष्य रावणः ।
सभां सन्नादयन् सर्वानित्युवाच महाबलः ॥ ३ ॥
जगत्सन्तापनः क्रूरोऽगर्हयन् राक्षसेश्वरः ।
तरणं सागरस्यास्य विक्रमं बलपौरुषम् ॥ ४ ॥
यदुक्तवन्तो रामस्य भवन्तस्तन्मया श्रुतम् ।
भवतश्चाप्यहं वेद्मि युद्धे सत्यपराक्रमान् ।
तूष्णीकानीक्षतोऽन्योऽन्यं विदित्वा रामविक्रमम् ॥ ५ ॥

उपयाति स्म । लङ्कामिति शेषः ॥ १ ॥ २ ॥

आभाष्य आमन्त्र्य ॥ ३ ॥

रामबलमहं जानामीति सचिवान् स्तुवन्नाह,—जगत्सन्तापयतीति जगत्सन्तापनः अगर्हयन्निति च्छेदः ।. अस्य रामस्य ॥ ४ ॥

ततस्तु सुमहाप्राज्ञो माल्यवान्नाम राक्षसः ।
रावणस्य वचः श्रुत्वा इति मातामहोऽब्रवीत् ॥ ६ ॥
विद्यास्वभिविनीतोयो राजा राजन्नयानुगः ।
स शास्ति चिरमैश्वर्य्यमरींश्च कुरुते वशे ॥ ७ ॥
सन्दधानो हि कालेन विगृह्णंश्चारिभिः सह ।
स्वपक्षे वर्धनं कुर्वन् महदैश्वर्य्यमश्नुते ॥ ८ ॥
हीयमानेन कर्तव्यो राज्ञा सन्धिः समेन च ।
न शत्रुमवमन्येत ज्यायान् कुर्वीत विग्रहम् ॥ ९ ॥
तन्मह्यं रोचते सन्धिः सह रामेण रावण ! ।
यदर्थमभियुक्तोऽसि सीता तस्मै प्रदीयताम् ॥ १० ॥

तूष्णीकानिति । अद्य रामविक्रमं विदित्वा अन्योन्यमीक्षतस्तूष्णीकान्निरुत्साहान् पश्यामीदं किमिति शेषः ॥ ५ ॥

मातुः पैतामह इति पाठे रावणमातुः पितामहपुत्रस्तस्याः पितेत्यर्थ इति तीर्थः ॥ ६ ॥

तद्वाक्यमाह,—विद्यासु चतुर्दशसु । अभिविनीतः शिक्षितः । नयानुगः नीतिमार्गगः ॥ ७ ॥

तां नीतिमेवाह,—सन्दधान इति । कालेन सन्धानविग्रहोचितकालानुसारेण ॥ ८ ॥

कस्य तयोः काल इत्याह,—हीयमानेनेति । क्षीयमाणेन समेन च कर्त्ता सन्धिः कार्य्यः । ज्यायान् प्रबलो विग्रहं कुर्वीत । सर्वथा शत्रु नावमन्येत नोपेक्षेतेत्यर्थः ॥ ९ ॥

तस्य देवर्षयः सर्वे गन्धर्वाश्च जयैषिणः।
विरोधं मागमस्तेन सन्धिस्ते तेन रोचताम्॥ ११॥
असृजद् भगवान् पक्षौ द्वावेव हि पितामहः।
सुराणामसुराणाञ्च धर्माधर्मौ तदाश्रयौ॥ १२॥
धर्मो हि श्रूयते पक्ष अमराणां महात्मनाम्।
अधर्मो रक्षसां पक्षो ह्यसुराणाञ्च राक्षस!॥ १३॥
धर्मो वै ग्रसतेऽधर्मं यदा कृतमभूद् युगम्।
अधर्मो ग्रसते धर्मं तदातिष्यः प्रवर्तते॥ १४॥

एवं हि स्वपक्षवृद्धिर्भवतीत्युक्तं स्वपक्षे वर्द्धनं कुर्वन्निति। ततस्मा-द्धीयमानस्य तव बलवता रामेण सन्धिर्मह्यं रोचते। सन्धानोपाय-माह,— यदर्थमिति। सीतार्थमित्यर्थः। अभियुक्तः परैः स्वयं वाभि-निविष्टोऽसि वा॥ १०॥

शत्रोर्वृद्धिः स्वक्षयश्च सन्धानकालस्तत्राद्यः स्पष्ट एवेत्याह। तस्येति॥ ११॥

अथ स्वपक्षक्षयं दर्शयितुं सामान्यतो जगतः क्षयवृद्धिहेतुमाह। असृजदिति। भगवान् पितामहः सुराणामसुराणाञ्च हिताहित-प्राप्तिपरिहारार्थौ विधिनिषेधरूपौ द्वावेव पक्षावसृजत्। किं विषयौ तौ तत्राह। धर्माधर्मौ तदाश्रयौ तयोर्विधिनिषेधयोः क्रमादाश्रयौ विषयौ। विधिविषयो धर्मो निषेधविषयश्चाधर्मः॥ १२॥

तत्रामराणां धर्मस्तद्विषयो विधिः पक्षः। राक्षसा राजसा असुरास्तामसा इति भेदः॥ १३॥

तत्त्वया चरता लोकान् धर्मोऽपि निहतो महान् ।
अधर्मः प्रगृहीतश्च तेनास्मद् बलिनः परे ॥ १५ ॥
स प्रमादात् प्रवृद्धस्तेऽधर्मोऽहिर्ग्रसते हि नः ।
विवर्धयति पक्षञ्च सुराणां सुरभावनः ॥ १६ ॥

अथ तयोः कालविशेषेणाभिभवानभिभवौ दर्शयति । धर्मो वै इत्यादि । यदा कृतं युगमभूत् तदा तस्मादेव कालाद्धेतोः प्रवृद्धो धर्मोऽधर्मं ग्रसतेऽभिभवति । वै प्रसिद्धम् । यदा तिष्यः कलिः प्रवर्तते तदा तत एव हेतोरधर्मो धर्मं ग्रसते । कलौ पादेन धर्मस्थितेः । तथाहि सर्वदा सुखसाधनं धर्म एकरूप एव । अधर्मस्त्रिधा । धर्मान्यस्तद्विरोधी तदभावश्चेति । तत्राद्यः शाक्यादिधर्ममार्गे दृष्टो धर्माभासः । द्वितीयो हत्यादिलक्षणः । अन्त्यः स्वस्वविहितनित्यधर्मलोपात्मा । कृते त्रिविधाधर्माभाव एव । त्रेतादौ क्रमादेकद्वित्रिभिरधर्मैः संवलनं धर्मस्य । एवञ्च कलौ अधर्माभिभूतपादत्रयत्वादेकपादेन धर्मस्य वृत्तिरुक्ता । एवञ्च धर्मतो देवत्वमधर्मतो राक्षसत्वादीति सूचितम् । नन्वधर्मस्य रक्षोऽसुरधर्मत्वे रक्षोऽसुराणां धर्मफलैश्वर्यजयादिकथमिति चेत् शृणु । देवाः केवलधर्मपराः । रक्षोऽसुराः काम्यराजसतामसधर्ममात्रपराः । तादृशधर्ममनुतिष्ठतोऽपि तानुक्तत्रिप्रकाराधर्मो न मुञ्चत्येव । रजस्तमःप्रकृतित्वात् । अतो धर्मकरणेन सुखिनोऽपि ते काम्यत्वेन सान्ततया धर्मफलान्तेऽधर्मफलभोगभाज इति न दोषः ॥ १४ ॥

अस्तु तावताप्रकृते किमायातं तत्राह । तत्त्वयेति । तदित्यव्ययम् । तस्मात्त्वया निखिलैश्वर्यादिसाधनो धर्मो लोकान् दिग्विजयाय चरता

विषयेषु प्रसक्तेन यत्किञ्चित्कारिणा त्वया ।
ऋषीणामग्निकल्पानामुद्वेगो जनितो महान् ॥ १७ ॥
तेषां प्रभावो दुर्धर्षः प्रदीप्त इव पावकः ।
तपसा भावितात्मानो धर्मस्यानुग्रहे रताः ॥ १८ ॥
मुख्यैर्यज्ञैर्यजन्त्येते तैस्तैर्यत्ते द्विजातयः ।
जुह्वत्यग्नींश्च विधिवद् वेदांश्चोच्चैरधीयते ।
अभिभूय च रक्षांसि ब्रह्मघोषानुदीरयन् ॥ १९ ॥

निहतः यज्ञदानतपसां विघ्नकरता तस्य नाशः अतः अधर्मस्य प्रग्रहीतः अनेकद्विजदेवर्ष्यादिपीड़नेनेति शेषः । तेन कारणेन अस्मत् अस्मत्तः परे प्रभवो बलिनः । धर्माद्यन्यधर्मपरिग्रहयोरभावात् ॥ १५ ॥

अधर्मजानर्थं दर्शयति । स इति । ते तव प्रमादाच्चित्तदोषात् प्राक्सम्पादित इदानीं प्रवृद्धोऽधर्मरूपोऽहिर्नामान् ग्रसते । सुरैर्भावनं नित्यानुष्ठानं यस्य धर्मस्य सोऽसौ धर्मः सुराणां तदंशभूतानां परेषां पक्षं निवर्धयति ॥ १६ ॥

रावणस्याधर्मपरिग्रहं प्रपञ्चयति । विषयेष्विति । विषयेषु स्त्रीवारुण्यादिषु प्रसक्तेन तत एव यत्किञ्चित्कारिणा निर्मर्यादं यथेष्टं कुर्वता त्वया ऋषीणामुद्वेगः क्रोधो जनितः ॥ १७ ॥

ननु किं तेषां क्रोधेन तत्राह । तेषां प्रभावः क्रोधजस्तापः प्रदीप्तः पावक इव दुर्धर्षो दुःसहः । कुतो दुःसहता तत्प्रभावस्य तत्राह । तपसेति । धर्मस्यानुग्रहे अनुग्रहः सम्बन्धस्तत्सम्पादने रताः ॥ १८ ॥

दिशो विप्रद्रुताः सर्वे स्तनयित्नुरिवोष्णगे ।
ऋषीणामग्निकल्पानामग्निहोत्रसमुत्थितः ॥ २० ॥
आवृत्तश्च रक्षसां तेजो धूमो व्याप्य दिशो दश ।
तेषु तेषु च देशेषु पुण्येष्ववधृतव्रतैः ॥ २१ ॥
चर्य्यमाणं तपस्तीव्रं सन्तापयति राक्षसान् ।
देवदानवयक्षेभ्यो गृहीतश्च वरस्तथा ॥ २२ ॥
मनुष्या वानरा ऋक्षा गोलाङ्गूला महाबलाः ।
बलवन्त इहागम्य गर्जन्ति दृढविक्रमाः ॥ २३ ॥
उत्पातान् विविधान् दृष्ट्वा घोरान् बहुविधान् बहून् ।
विनाशमनुपश्यामि सर्वेषां रक्षसामहम् ॥ २४ ॥
खराभिस्तनिता घोरा मेघाः प्रतिभयङ्कराः ।

मुख्यैर्यज्ञैर्ध्यानरूपैः । ब्रह्मघोषान् वेदघोषानुदीरयन् उदैरयन् कृतवन्तः ॥ १९ ॥

दिशो विप्रद्रुताः तदुदीरितब्रह्मघोषेण । राक्षसा इति शेषः । स्तनयित्नुर्बलाहकः । उष्णो ग्रीष्मस्तद्गते रवाविति शेषः ॥ २० ॥

धूम उत्तिष्ठतीति शेषः ॥ २१ ॥

नन्वन्यराक्षसांस्तत्तपः सन्तापयतु मया तु ब्रह्मणः सकाशादवध्यत्व-वरो लब्ध इति चेत्तत्राह । देवेति ॥ २२ ॥

वानरादयो न देवादय इति भावः ॥ २३ ॥

किञ्च । दुर्निमित्तैरप्यस्माकमनर्थप्राप्तिरनुमीयत इत्याह । उत्पाता-निति । बहुविधान् दिव्यान्तरिक्षभौमभेदभिन्नान् बहूननेकान् ॥२४॥

शोणितेनाभिवर्षन्ति लङ्कामुष्णेन सर्वतः ॥ २५ ॥
रुदतां वाहनानाञ्च प्रपतन्त्यश्रुबिन्दवः।
रजोध्वस्ता विवर्णाश्च न प्रभान्ति यथापुरम् ॥ २६ ॥
व्याला गोमायवो गृध्रा वाश्यन्ति च सुभैरवम्।
प्रविश्य लङ्कामारामे समवायांश्च कुर्वते ॥ २७ ॥
कालिकाः पाण्डुरैर्दन्तैः प्रहसन्त्यग्रतः स्थिताः।
स्त्रियः स्वप्नेषुमुष्णन्त्यो गृहाणि प्रतिभाष्य च ॥ २८ ॥
गृहाणां बलिकर्माणि श्वानः पर्य्युपसेवते।
खरा गोषु प्रजायन्ते मूषका नकुलेषु च ॥ २९ ॥

खराभिस्तनिताः दुःश्रवशब्दवन्तः। लङ्कामित्यनेन स्वपक्षानर्थः सूचितः ॥ २५ ॥

यथापुरं यथापूर्वम्। अनतिक्रमेऽव्ययीभावः। न प्रभान्ति। दिश इति शेषः। वाहनानित्यन्ये ॥ २६ ॥

व्यालाः मांसादाः पशवः। सर्पो मांसात् पशुर्व्याल इति कोशः। समवायान् यूथान् ॥ २७ ॥

कालिकाः महाकाल्यः स्त्रियः स्वप्नेषु गृहाणि तद्वर्तिद्रव्यजातं मुष्णन्त्योऽग्रतः स्थिताः प्रतिभाष्य प्रतिकूलभाषणं कृत्वा पाण्डुरैर्दन्तैरुपलक्षिताः प्रहसन्ति ॥ २८ ॥

बलिकर्माणि देवपूजासाधनघृतदध्यन्नपानादीनि श्वभिः स्पृश्यन्ते। बलिहरणानि श्वान एव भुञ्जते न तु वायसा इत्यर्थ इत्यन्ये ॥ २९ ॥

मार्जारा द्वीपिभिः सार्द्धं सूकराः शुनकैः सह ।
किन्नरा राक्षसैश्चापि समेयुर्मानुषैः सह ॥ ३० ॥
पाण्डुरा रक्तपादाश्च विहगाः कालचोदिताः ।
राक्षसानां विनाशाय कपोता विचरन्ति च ॥ ३१ ॥
चीचीकूचीति वाशन्तः शारिका वेश्मसु स्थिताः ।
पतन्ति ग्रथिताश्चापि निर्जिताः कलहैषिभिः ॥ ३२ ॥
पक्षिणश्च मृगाः सर्वे प्रत्यादित्यं रुदन्ति ते ।
करालो विकलो मुण्डः पुरुषः कृष्णपिङ्गलः ॥ ३३ ॥
कालो गृहाणि सर्वेषां काले कालेऽन्ववेक्षते ।
एतान्यन्यानि दुष्टानि निमित्तान्युत्पतन्ति च ॥ ३४ ॥
रामं मन्यामहे विष्णुं मानुषं रूपमास्थितम् ।

द्वीपिभिः शार्दूलैः । समेयुर्मिथुनीभावं जग्मुः ॥ ३० ॥

पाण्डुरत्वादिगुणविशिष्टाः कपोता विहगा विचरन्ति । गृहेषु मध्ये इति शेषः ॥ ३१ ॥

चीचीकूचीतिशब्दानुकारः । कलहैषिभिः पक्ष्यन्तरैर्निर्जिताः । ग्रथिताः पतन्ति परस्परमाबध्य पतन्ति ॥ ३२ ॥

प्रत्यादित्यं सूर्य्याभिमुखीभूय वदन्ति रुदन्त इव रटन्तीत्यर्थः ॥ ३३ ॥

कालः कालरूपः स पुरुषः सर्वेषां गृहाणि काले काले सन्ध्याकालेषु सर्वेषां नो गृहाण्यवेक्षते ॥ ३४ ॥

नहि मानुषमात्रोऽसौ राघवो दृढ़विक्रमः ।
येन बद्धः समुद्रे च सेतुः स परमाद्भुतः ।
कुरुष्व नरराजेन सन्धिं रामेण रावण ! ।
ज्ञात्वावधार्य्य कर्माणि क्रियतामायतिक्षमम् ॥ ३५ ॥

इदं वचस्तस्य निगद्य माल्यवान्
परीक्ष्य रक्षोधिपतेर्मनः पुनः ।
अनुत्तमेषूत्तमपौरुषो बली
बभूव तूष्णीं समवेक्ष्य रावणम् ॥ ३६ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
पञ्चत्रिंशः सर्गः ॥ ३५ ॥

एतदग्रे रामं मन्यामहे विष्णुमित्यादिश्लोकद्वयं प्रक्षिप्तमिति प्राचीनैर्न व्याख्यातमिति कतकः । ज्ञात्वेति । अस्य रामस्य कर्माणि । एतानि निमित्तानि च ज्ञात्वा आयतिक्षमम् उत्तरकालसुखदं यत् कर्म तदवधार्य्य यदुचितं तत् क्रियताम् ॥ ३५ ॥

तस्य तस्मै रावणायेत्यर्थः । मनः परीक्ष्य मदुक्तमस्मै न रोचत इति ज्ञात्वेत्यर्थः । तूष्णीं बभूव किमपि नोवाच । ३६ ।

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

# षट्त्रिंशः सर्गः ।

तत्तु माल्यवतो वाक्यं हितमुक्तं दशाननः ।
न मर्षयति दुष्टात्मा कालस्य वशमागतः ॥ १ ॥
स बद्धा भ्रुकुटीं वक्त्रे क्रोधस्य वशमागतः ।
अमर्षात् परिवृत्ताक्षो माल्यवन्तमथाब्रवीत् ॥ २ ॥
हितबुद्ध्या यदहितं वचः परुषमुच्यते ।
परपक्षं प्रविश्यैव नैतच्छ्रोत्रगतं मम ॥ ३ ॥
मानुषं कृपणं राममेकं शाखामृगाश्रयम् ।
समर्थं मन्यसे केन त्यक्तं पित्रा वनाश्रयम् ॥ ४ ॥
रक्षसामीश्वरं माञ्च देवानाञ्च भयङ्करम् ।
हीनं मां मन्यसे केन अहीनं सर्वविक्रमैः ॥ ५ ॥

तत्त्विति ॥ १ ॥ २ ॥

परपक्षं तत्प्राबल्यं प्रविश्यैव परिगृह्यैव । वस्तुतोऽहितं वचः परुषं हितबुद्ध्या यदुच्यते नैतन्मम श्रोत्रगतं मच्छ्रोत्रेण नैव गृहीतम् ॥ ३ ॥

कुतस्तत्राह,—मानुषमिति ॥ ४ ॥

हीनं विक्रमैरित्यनुषज्यते ॥ ५ ॥

वीरद्वेषेण वा शङ्के पक्षपातेन वा रिपोः ।
त्वयाहं परुषाण्युक्तो मम प्रोत्साहनेन वा ॥ ६ ॥
प्रभवन्तं पदस्थं हि परुषं कोऽभिभाषते ।
पण्डितः शास्त्रतत्त्वज्ञो विना प्रोत्साहनेन वा ॥ ७ ॥
आनीय च वनात् सीतां पद्महीनामिव श्रियम् ।
किमर्थं प्रतिदास्यामि राघवस्य भयादहम् ॥ ८ ॥
वृतं वानरकोटीभिः ससुग्रीवं सलक्ष्मणम् ।
पश्य कैश्चिदहोभिश्च राघवं निहतं मया ॥ ९ ॥
द्वन्द्वे यस्य न तिष्ठन्ति दैवतान्यपि संयुगे ।
स कस्माद्रावणो युद्धे भयमाहारयिष्यति ॥ १० ॥

यत्त्वयाहं परुषाण्युक्तस्तत्तु वीरद्वेषेण वा वीरे मयि द्वेषेण वा आहोस्विद्रिपौ पक्षपातेन वा मम प्रोत्साहनेन शत्रुप्रशंसायां क्रोधादुद्धाय प्रवर्त्तिष्यत इति प्रवर्त्तनेन वा हेतुनेति शङ्के । न तु वाक्यस्य मया श्रुतार्थे तात्पर्य्यमित्यर्थः ॥ ६ ॥

तदेव समर्थ यन्नाह,—प्रभवन्तमिति । प्रभवन्तं युद्धादिसमर्थम् । पदस्थम् अव्याहतस्वराज्यस्थं राजानं विना प्रोत्साहनं रिपुवधप्रवृत्तिप्रेरणाप्रयोजनं विना पण्डितत्वादिगुणविशिष्टः कः परुषमभिभाषते । न कोऽपीति निश्चयः । वा शब्दो निश्चये ॥ ७ ॥

पद्महीनामित्यनेन लक्ष्मीत्वाभावबोधनमनत्युपादेयत्वबोधनञ्च ॥ ८ ॥
॥ ९ ॥ १० ॥

द्विधा भज्येयमप्येवं न नमेयन्तु कस्यचित् ।
एष मे सहजो दोषः स्वभावो दुरतिक्रमः ॥ ११ ॥
यदि तावत् समुद्रे तु सेतुर्बद्धो यदृच्छया ।
रामेण विस्मयः कोऽत्र येन ते भयमागतम् ॥ १२ ॥
स तु तीर्त्वार्णवं रामः सह वानरसेनया ।
प्रतिजानामि ते सत्यं न जीवन् प्रतियास्यति ॥ १३ ॥
एवं ब्रुवाणं संरब्धं रुष्टं विज्ञाय रावणम् ।
व्रीड़ितो माल्यवान् वाक्यं नोत्तरं प्रत्यपद्यत ॥ १४ ॥
जयाशिषा तु राजानं वर्द्धयित्वा यथोचितम् ।
माल्यवानभ्यनुज्ञातो जगाम स्वं निवेशनम् ॥ १५ ॥
रावणस्तु सहामात्यो मन्त्रयित्वा विमृश्य च ।

एवमपि रामस्य महत्त्वेऽपि द्विधा भज्येयम् इतरवेणुवत् । न नमेयं वेतसवत् । सहज आजानसिद्धः । ननु दोषस्त्यज्यतां तत्राह,—स्वभाव इति । न ह्यग्निः कदापि शीतलो भवतीति भावः ॥ ११ ॥

ननु रामः कथं मानुष इत्युच्यते । समुद्रे सेतोर्मनुष्यासाध्यत्वादत आह,—यदीति । तावत् प्रथमतो रामेण समुद्रे सेतुर्बद्ध इति विस्मयो यदि कोऽत्र विस्मयः यतः स यदृच्छया दैवगत्याघुणाक्षरन्यायेन । न तु स्वसामर्थ्येनेत्यर्थः । येन सेतुबन्धनेन ते इदं भयमागतम् ॥ १२ ॥ १३ ॥

संरब्धं युद्धे संरम्भवन्तम् । रुष्टं कुपितम् । उत्तरं वाक्यं न प्रत्यपद्यत ॥ १४ ॥

लङ्कायास्तु तदा गुप्तिं कारयामास राक्षसः ॥ १६ ॥
आदिदेश च पूर्वस्यां प्रहस्तं द्वारि राक्षसम्।
दक्षिणस्यां महावीर्य्यौ महापार्श्वमहोदरौ ॥ १७ ॥
पश्चिमायामथ द्वारि पुत्त्रमिन्द्रजितं तदा।
व्यादिदेश महामायं राक्षसैर्बहुभिर्वृतम् ॥ १८ ॥
उत्तरस्यां पुरद्वारि व्यादिश्य शुकसारणौ।
स्वयञ्चात्र गमिष्यामि मन्त्रिणस्तानुवाच ह ॥ १९ ॥
राक्षसन्तु विरूपाक्षं महावीर्य्यपराक्रमम्।
मध्यमे स्थापयत् गुल्मे बहुभिः सह राक्षसैः ॥ २० ॥
एवं विधानं लङ्कायां कृत्वा राक्षसपुङ्गवः।
कृतकृत्यमिवात्मानं मन्यते कालचोदितः ॥ २१ ॥
विसर्जयामास ततः समन्त्रिणो
विधानमाज्ञाप्य पुरस्य पुष्कलम्।

अभ्यनुज्ञातो रावणेन ॥ १५ ॥ १६ ॥
गुप्तिप्रकारो व्यादिदेशेति ॥ १७ ॥
महामायमित्यादीन्द्रजिद्विशेषणम् ॥ १८ ॥
व्यादिश्य तन्मुखतो वृत्तान्तश्रवणोत्तरं तौ तिरस्कृत्येत्यर्थः। अत्र उत्तरद्वारे। स्वयञ्च स्वयमेव गमिष्यामीति तान्मन्त्रिण उवाच ॥ १९ ॥
वीर्य्यं क्रमबलसामर्थ्यम्। मध्यमे पुरमध्यवर्त्तिनि सेनासन्निवेशे स्थापयत ॥ २० ॥ २१ ॥

जयाशिषा मन्त्रिगणेन पूजितो
विवेश सोऽन्तःपुरमृद्धिमन्महत् ॥ २२ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
षट्त्रिंशः सर्गः ॥ ३६ ॥

जयाशिषा जयाशीर्बोधकशब्दैः ॥ २२ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

## सप्तत्रिंशः सर्गः ।

नरवानरराजानौ स तु वायुसुतः कपिः ।
जाम्बवान् ऋक्षराजश्च राक्षसश्च विभीषणः ॥ १ ॥

अङ्गदो वालिपुत्रश्च सौमित्रिः शरभः कपिः ।
सुषेणः सह दायादो मैन्दो द्विविद एव च ॥ २ ॥

गजो गवाक्षः कुमुदो नलोऽथ पनसस्तथा ।
अमित्रविषयं प्राप्ताः समवेताः समर्थयन् ॥ ३ ॥

इयं सा लक्ष्यते लङ्का पुरी रावणपालिता
सासुरोरगगन्धर्वैः सर्वैरपि सुदुर्जया ॥ ४ ॥

कार्य्यसिद्धिं पुरस्कृत्य मन्त्रयध्वं विनिर्णये ।
नित्यं सन्निहितो यत्र रावणो राक्षसाधिपः ॥ ५ ॥

गु।ग-

महामायमित्यादा॰ ॰ीवा। टजभाव आर्षः ॥ १ ॥

आदिश्य तन्मुखतो वृत्त।॰

उत्तरद्वारे। स्वयञ्च स्वयमेव गमि[illegible]ममकुर्वन् ॥ ३ ॥

वीर्य्यं क्रमबलसामर्थ्यम्। मध्यमे [illegible]तैः सर्वदैवैरपि या सुदु-
पयत ॥ २० ॥ २१ ॥

अथ तेषु ब्रुवाणेषु रावणावरजोऽब्रवीत् ।
वाक्यमग्राम्यपदवत् पुष्कलार्थं विभीषणः ॥ ६ ॥
अनलः पनसश्चैव सम्पातिः प्रमतिस्तथा ।
गत्वा लङ्कां ममामात्याः पुरीं पुनरिहागताः ॥ ७ ॥
भूत्वा शकुनयः सर्वे प्रविष्टाश्च रिपोर्बलम् ।
विधानं विहितं यच्च तत् दृष्ट्वा समुपस्थिताः ॥ ८ ॥
संविधानं यथाहुस्ते रावणस्य दुरात्मनः ।
राम ! तत् ब्रुवतः सर्वं याथातथ्येन मे शृणु ॥ ९ ॥
पूर्वं प्रहस्तः सबलो द्वारमासाद्य तिष्ठति ।
दक्षिणञ्च महावीर्य्यौ महापार्श्वमहोदरौ ॥ १० ॥
इन्द्रजित् पश्चिमं द्वारं राक्षसैर्बहुभिर्वृतः ।
पट्टिशासिधनुष्मद्भिः शूलमुद्गरपाणिभिः ॥ ११ ॥
नानाप्रहरणैः शूरैरावृतो रावणात्मजः ।

कार्य्यसिद्धिं शत्रुहननरूपकार्य्यसिद्धिं पुरस्कृत्य तदुपायनिश्चयाय मन्त्रः क्रियताम् । नित्यं यत्र रावणः सन्निहितः सेयं लङ्केति शेषः ॥ ५ ॥

अग्राम्यपदवत् अग्राम्यार्थपदवत् अपशब्दहीनञ्च । पुष्कलार्थं बह्वर्थाल्पशब्दम् ॥ ६ ॥ ७ ॥

यच्च विधानं विहितं पुरस्कार्यमिति शेषः । समुपस्थिताः मम समीपं प्राप्ताः ॥ ८ ॥ ९ ॥

पूर्वद्वारमित्यन्वयः ॥ १० ॥ ११ ॥

राक्षसानां सहस्रैस्तु बहुभिः शस्त्रपाणिभिः ॥ १२ ॥
युक्तः परमसंविग्नो राक्षसैः सह मन्त्रवित्।
उत्तरं नगरद्वारं रावणः स्वयमास्थितः ॥ १३ ॥
विरूपाक्षस्तु महता शूलमुद्गधनुष्मता।
बलेन राक्षसैः सार्द्धं मध्यमं गुल्ममाश्रितः ॥ १४ ॥
एतानेवंविधान् गुल्मान् लङ्कायाः समुदीक्ष्यते।
मामका मन्त्रिणः सर्वे शीघ्रं पुनरिहागताः ॥ १५ ॥
गजानां दशसाहस्रं रथानामयुतं तथा।
हयानामयुते द्वे च साग्रां कोटिश्च रक्षसाम् ॥ १६ ॥
विक्रान्ता बलवन्तश्च संयुगेष्वाततायिनः।
इष्टा राक्षसराजस्य नित्यमेते निशाचराः ॥ १७ ॥
एकैकस्यात्र युद्धार्थे राक्षसस्य विशाम्पते ! ।

राक्षसानां सहस्रैरित्यादि रावणविशेषणम् ॥ १२ ॥

परमसंविग्नः शुकसारणावेदितमहाबलस्मरणादन्तःकरणेऽतिभीतः ॥ १३ ॥ १४ ॥ १५ ॥

तद्बलाधिष्ठातॄंस्तदुचितैः स्वबलैः प्रतिरोधकानुपदिश्य तत्तत्बलस्य समाधिकन्यूनता परिज्ञानाय तत् परिच्छेदमाह,—गजानामिति। गजयोधिनामित्यर्थः। रथानां रथिनाम्। दशसाहस्रमयुतम्। साग्रकोटिः किञ्चिल्लक्षसंख्याधिककोटिरित्यर्थः ॥ १६ ॥

आततायिनः शस्त्रपाणयः। एते यूथपा गणिताः ॥ १७ ॥

परीवारः सहस्राणां सहस्रमुपतिष्ठति ॥ १८ ॥
एतां प्रवृत्तिं लङ्कायां मन्त्रिप्रोक्तां विभीषणः ।
एवमुक्त्वा महाबाहू राक्षसांस्तानदर्शयत् ॥ १९ ॥
लङ्कायां सचिवैः सर्वं रामाय प्रत्यवेदयत् ।
रामं कमलपत्राक्षमिदमुत्तरमब्रवीत् ॥ २० ॥
रावणावरजः श्रीमान रामप्रियचिकीर्षया ।
कुवेरन्तु यदा राम ! रावणः प्रतियुध्यति ॥ २१ ॥
षष्टिः शतसहस्राणि तदा निर्य्यान्ति राक्षसाः ।
पराक्रमेण वीर्य्येण तेजसा सत्वगौरवात् ।
सदृशा ह्यत्र दर्पेण रावणस्य दुरात्मनः ॥ २२ ॥
अत्र मन्युर्न कर्त्तव्यः कोपये त्वां न भीषये ।

सहस्राणां सहस्रम् अनेकलक्षमित्यर्थः। एकैकस्य राक्षसस्य परिवाराः परैर्युद्धार्थं उक्तसंख्या उपतिष्ठन्ति ते ॥ १८ ॥

एतां मन्त्रिप्रोक्तां प्रवृत्तिम्। एवम्प्रकारेणोक्त्वा तान् राक्षसान् अनलादींश्चतुरो मन्त्रिणोऽदर्शयत् ॥ १९ ॥

तैः सचिवैः चरणभूतैः सर्वलङ्कायां यत् वृत्तं तत् प्रत्यवेदयत्। तदुत्तरं राममिदमब्रवीच्च ॥ २० ॥ २१ ॥

षष्टिः शतसहस्राणि षष्टिलक्षमित्यर्थः। इदानीं बह्वधिकमित्यर्थः। पराक्रमादिना रावणस्य सदृशाः। सत्वगौरवात् धैर्य्यातिशयाच्च तत्सदृशाः ॥ २२ ॥

समर्थो ह्यसि वीर्य्येण सुराणामपि निग्रहे ॥ २३ ॥
तद्भवांश्चतुरङ्गेण बलेन महता वृतम्।
व्यूह्येदं वानरानीकं निर्मथिष्यसि रावणम् ॥ २४ ॥
रावणावरजे वाक्यमेवं ब्रुवति राघवः।
ग्रत्रूणां प्रतिघातार्थमिदं वचनमब्रवीत् ॥ २५ ॥
पूर्वद्वारन्तु लङ्कायाः नीलो वानरपुङ्गवः।
प्रहस्तं प्रतियोद्धा स्याद्वानरैर्बहुभिर्वृतः ॥ २६ ॥
अङ्गदो वालिपुत्रस्तु बलेन महता वृतः।
दक्षिणे बाधतां द्वारे महापार्श्वमहोदरौ ॥ २७ ॥
हनूमान् पश्चिमद्वारं निपीड्य पवनात्मजः।
प्रविशत्वप्रमेयात्मा बहुभिः कपिभिर्वृतः ॥ २८ ॥

अत्र रावणबलवर्णनविषये मन्युः स्वान्तःकरणे दैन्यमपि रोषस्य न कार्य्यो रावणवत्। यतस्त्वां रावणं प्रति रोषये इत्यर्थः। तत्र हेतुमाह,—समर्थ इति ॥ २३ ॥

यस्मात्तेन तत्तत् द्वारेषु सर्वा सेना विभज्य स्थापिता तत्तस्माद्भवानपि इदं वानरानीकं तद्वदेव विभागेन व्यूह्य व्यूहितेन चतुरङ्गया बलेन वृतं रावणं निर्मथिष्यसि ॥ २४ ॥ २५ ॥

प्रहस्तं प्रतियोद्धा प्रहस्तस्य सेनापतेः प्रतियोद्धा ॥ २६ ॥ २७ ॥

हनूमान् पश्चिमद्वारमिति। तस्येन्द्रजित् द्वारत्वात्तदुचितमहाबलनियोजनम्। तदेवौचित्यमाह,—अप्रमेयात्मा ॥ २८ ॥

दैत्यदानवयक्षाणामृषीणाञ्च महात्मनाम् ।
विप्रकारप्रियः क्षुद्रो वरदानबलान्वितः ॥ २९ ॥
परिक्रमति यः सर्वान् लोकान् सन्तापयन् प्रजाः ।
तस्याहं राक्षसेन्द्रस्य स्वयमेव वधे धृतः ॥ ३० ॥
उत्तरं नगरद्वारमहं सौमित्रिणा सह ।
निपीड्याभिप्रवेक्ष्यामि सबलो यत्र रावणः ॥ ३१ ॥
वानरेन्द्रश्च बलवान् ऋक्षराजश्च वीर्य्यवान् ।
राक्षसेन्द्रानुजश्चैव गुल्मे भवतु मध्यमे ॥ ३२ ॥
न चैव मानुषं रूपं कार्य्यं हरिभिराहवे ।
एषा भवतु नः संज्ञा युद्धेऽस्मिन् वानरे बले ॥ ३३ ॥
वानरा एव वश्चिह्नं स्वजनेऽस्मिन् भविष्यति ।
वयन्तु मानुषेणैव सप्त योत्स्यामहे परान् ॥ ३४ ॥

विप्रकारो वधः ॥ २९ ॥

सर्वान् लोकान् परिक्रमति दिग्विजयाय। अहं तस्य वधे धृतः कृतप्रतिज्ञो यतोऽतोऽहमेवोत्तरं प्रवक्ष्यामीत्युत्तरश्लोकेन योजना ॥ ३० ॥ ३१ ॥ ३२ ॥

अथ वानराणामपि कामरूपतया रूपान्तरकरणे युद्धे स्वीयपरकीयविवेकासम्भवादाह,—न चैवेति। संज्ञा नित्यवानररूपधारणसङ्केतः। एवञ्चास्मान् सप्त हित्वा मनुष्याकारो निःसृष्ट वध्यः। वानररूपधारी वानरैर्युध्यते तदा वध्य एवेति भावः॥ ३३ ॥

अहमेव सह भ्रात्रा लक्ष्मणेन महौजसा।
आत्मना पञ्चमश्चायं सखा मम विभीषणः॥ ३५॥
स रामः कृत्यसिद्ध्यर्थमेवमुक्त्वा विभीषणम्।
सुवेलारोहणे बुद्धिं चकार मतिमान् प्रभुः॥ ३६॥
रमणीयतरं दृष्ट्वा सुवेलस्य गिरेस्तटम्॥ ३७॥
ततस्तु रामो महता बलेन
प्रच्छाद्य सर्वां पृथिवीं महात्मा।

सङ्केतप्रकारमाह,—वानरा एवेति। वो युष्माकं स्वजने स्वजनत्व-परिज्ञाने वानरा एव वानरत्वविशिष्टा एव चिह्नम्। तद्वेशिष्ट्यमेव चिह्नमित्यर्थः। मानुषेण रूपेणेति शेषः॥ ३४॥

के सप्त तत्राहाहमिति। आत्मना पञ्चमः। मन्त्रिचतुष्टयसहितो विभीषण इत्यर्थः॥ ३५॥

रक्षसामपि संस्थानं मनुष्यवदेवेति इत एव ज्ञायते। कतकस्तु रक्षोरूपाणामपि तेषां मानुषत्वेन प्रच्छादनं स्वार्थानुरोधेन परेषा-मपरिज्ञानार्थञ्च तदेवाह,—कृत्यसिद्ध्यर्थं विभीषणमेवमुक्त्वेति। मानुष-रूपेण स्वसमीपे स्थित्वा योद्धव्यमित्युक्त्वेत्यर्थ इत्याह,—सुवेलारोहणे बुद्धिञ्चकार। तस्य दुर्गत्वाद्रात्रौ तत्रावस्थानस्य सुखत्वाच्च। मतिमान् मतिमिति पाठे। मतिमर्थनिर्धारणात्मिकां बुद्धिमित्यर्थः। अर्थनिर्धा-रणं मतिरिति तीर्थः॥ ३६॥ ३७।

एतदग्रे। ततस्तु राम इति पद्यं पठन्ति तत्र वक्ष्यमाणसंग्रहो

प्रहृष्टरूपोऽभिजगाम लङ्कां
कृत्वा मतिं सोऽरिवधे महात्मा ॥ ३८ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
सप्तत्रिंशः सर्गः ॥ ३७ ॥

नाप्युक्तानुवादो नाप्यत्र प्रकरणविच्छेद इतीमं श्लोकं वृथा प्रक्षिप्यात्र सर्गच्छेदं कुर्वन्ति भ्रान्ता इति कतककृत् ॥ ३८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

## अष्टत्रिंशः सर्गः ।



स तु कृत्वा सुवेलस्य मतिमारोहणं प्रति ।
लक्ष्मणानुगतो रामः सुग्रीवमिदमब्रवीत् ॥ १ ॥
विभीषणञ्च धर्मज्ञमनुरक्तं निशाचरम् ।
मन्त्रज्ञञ्च विधिज्ञञ्च श्लक्ष्णया परया गिरा ॥ २ ॥
सुवेलं साधुशैलेन्द्रमिमं धातुशतैश्चितम् ।
अध्यारोहामहे सर्वे वत्स्यामोऽत्र निशामिमाम् ॥ ३ ॥
लङ्काञ्चालोकयिष्यामो निलयं तस्य रक्षसः ।
येन मे मरणान्ताय हृता भार्य्या दुरात्मना ॥ ४ ॥
येन धर्मो न विज्ञातो न वृत्तं न कुलं तथा ।
राक्षस्या नीचया बुद्ध्या येन तद्गर्हितं कृतम् ॥ ५ ॥

सत्विति ॥ १ ॥
विधिज्ञं कार्य्यमिदम् ॥ २ ॥
अध्यारोहामहे आरोक्ष्यामहे ॥ ३ ॥
मरणान्ताय मरणपर्य्यन्तदुःखमनुभवितुम् ॥ ४ ॥
राक्षस्या रक्षःसम्बन्धिन्या नीचया क्रूरया । तत् सीताहरण-रूपम् ॥ ५ ॥

एवं सम्मन्त्रयन्नेव सक्रोधो रावणम्प्रति।
रामः सुवेलमासाद्य चित्रसानुमुपारुहत् ॥ ६ ॥
पृष्ठतो लक्ष्मणश्चैनमन्वगच्छत् समाहितः।
स शरञ्चापमुद्यम्य सुमहद्विक्रमे रतः ॥ ७ ॥
तमन्वारोहत् सुग्रीवः सामात्यः सविभीषणः।
ते वायुवेगप्रवणास्तं गिरिं गिरिचारिणः ॥ ८ ॥
अध्यारोहन्त शतशः सुवेलं यत्र राघवः।
ते त्वदीर्घेण कालेन गिरिमारुह्य सर्वतः ॥ ९ ॥
ददृशुः शिखरे तस्य विषक्तामिव खे पुरीम्।
तां शुभां प्रवरद्वारां प्राकारवरशोभिताम् ॥ १० ॥
लङ्कां राक्षससम्पूर्णां ददृशुर्हरियूथपाः।
प्राकारवरसंस्थैश्च तथा नीलैश्च राक्षसैः।
ददृशुस्ते हरिश्रेष्ठाः प्राकारमपरं कृतम् ॥ ११ ॥
तं दृष्ट्वा वानराः सर्वे राक्षसान् युद्धकाङ्क्षिणः।
मुमुचुर्विविधान्नादांस्तस्य रामस्य पश्यतः ॥ १२ ॥

सम्मन्त्रयन् सञ्चिन्तयन्। चित्रसानुं सुवेलमित्यन्वयः ॥ ६ ॥ ७ ॥
वायुवेगप्रवणाः वायुवेगगतयः ॥ ८ ॥
यत्र राघवः। येन राघव आरूढ़ इत्यर्थः ॥ ९ ॥
शिखरे तस्येति। स्थितेति शेषः। खे आकाशे विषक्तां रचिता-
मिव ॥ १० ॥

ततोऽस्तमगमत् सूर्य्यः सन्ध्यया प्रतिरञ्जितः ।
पूर्णचन्द्रप्रदीप्ता च क्षपा समतिवर्त्तत ॥ १३ ॥
ततः स रामो हरिवाहिनीपति-
र्विभीषणेन प्रतिनन्द्य सत्कृतः ।
सलक्ष्मणो यूथपयूथसंयुतः
सुवेलपृष्ठे न्यवसत् यथासुखम् ॥ १४ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
अष्टत्रिंशः सर्गः ॥ ३८ ॥

रक्षार्थं प्राकारवरसंश्लेषैर्निशाचरैरपरं प्राकारं कृतमिव ददृशुः ॥
॥ ११ ॥ १२ ॥

प्रतिरञ्जितः प्रतिप्रापितरागः। पूर्णचन्द्रप्रदीप्ता क्षपेत्यनेन पौष-शुक्लचतुर्दश्यां पूर्णिमायां वा सुवेलारोहणमिति बोध्यम्। सुवेलाग्रे रामः सैन्यं न्यवेशयदित्यभिवेशस्योक्तिः। अत्र पूर्णचन्द्रत्वोक्तिः पूर्णकल्प-त्वादिति ॥ १३ ॥ १४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे अष्टत्रिंशः सर्गः ॥ ३८ ॥

---

# एकोनचत्वारिंशः सर्गः

तां रात्रिमुषितास्तत्र सुवेले हरियूथपाः ।
लङ्कायां ददृशुर्वीरा वनान्युपवनानि च ॥ १ ॥
समसौम्यानि रम्याणि विशालान्यायतानि च ।
दृष्टिरम्याणि ते दृष्ट्वा बभूवुर्जातविस्मयाः ॥ २ ॥
चम्पकाशोकबकुलशालतालसमाकुला ।
तमालपनसच्छन्ना नागमालासमावृता ॥ ३ ॥
हिन्तालैरर्जुनैर्नीपैः सप्तपर्णैः सुपुष्पितैः ।
तिलकैः कर्णिकारैश्च पाटलैश्च समन्ततः ॥ ४ ॥
शुशुभे पुष्पिताग्रैश्च लतापरिगतद्रुमैः ।
लङ्का बहुविधैर्दिव्यैर्यथेन्द्रस्यामरावती ॥ ५ ॥

तामिति ॥ १ ॥

समसौम्यानि आयामविस्ताराभ्यां समानि समभूतलानि च दुष्टमृगाद्युपद्रवराहित्येन सौम्यानि। अतएव क्रीडादौ रम्याणीत्यर्थ इति तीर्थः। समसाम्यानीति पाठः। समप्रदेशे साम्यसंस्थानानि। रम्याणि मृगाद्युपद्रवराहित्यादिति कतकः। विशालानि विपुलानि। आयतानि दीर्घाणि। दृष्टिरम्याणि चक्षुःप्रियाणि ॥ २ ॥

चम्पकेत्यादिलङ्काविशेषणम्। नागमाला नागवृक्षपङ्क्तिः ॥ ३ ॥ ४ ॥

विचित्रकुसुमोपेतै रक्तकोमलपल्लवैः।
शाद्वलैश्च तथा नीलैश्चित्राभिर्वनराजिभिः॥ ६॥
गन्धाढ्यान्यतिरम्याणि पुष्पाणि च फलानि च।
धारयन्त्यगमास्तत्र भूषणानीव मानवाः॥ ७॥
तच्चैत्ररथसङ्काशं मनोज्ञं नन्दनोपमम्।
वनं सर्वर्त्तुकं रम्यं शुशुभे षट्पदायुतम्॥ ८॥
दात्यूहकोयष्टिबकैर्नृत्यमानैश्च बर्हिणैः।
रुतं परभृतानाञ्च शुश्रुवे वननिर्झरे॥ ९॥
नित्यमत्तविहङ्गानि भ्रमराचरितानि च।
कोकिलाकुलखण्डानि विहङ्गाभिरुतानि च॥ १०॥
भृङ्गराजाधिगीतानि कुररस्वनितानि च।
विविशुस्ते ततस्तानि वनान्युपवनानि च॥ ११॥
हृष्टाः प्रमुदिता वीरा हरयः कामरूपिणः।
तेषां प्रविशतां तत्र वानराणां महौजसाम्॥ १२॥

द्रुमैरुपलक्षिता। हृद्यैर्दृष्टिप्रियवस्तुभिरुपलक्षिता॥ ५॥
हृद्यान्येवाह,—विचित्रेति॥ ६॥
अगमा वृक्षाः॥ ७॥
सर्वे ऋतवो यस्मिंस्तत्सर्वर्त्तुकम्॥ ८॥
बर्हिणैर्मयूरैः। परभृताः कोकिलाः। वननिर्झरे निर्झरयुते वने। राजदन्तादिः॥ ९॥

पुष्पसंसर्गसुरभिर्ववौ प्राणसमोऽनिलः ।
अन्ये तु हरिवीराणां यूथान्निष्क्रम्य यूथपाः ।
सुग्रीवेणाभ्यनुज्ञाता लङ्कां जग्मुः पताकिनीम् ॥ १३ ॥
वित्रासयन्तो विहगान् ग्लापयन्तो मृगद्विपान् ।
कम्पयन्तश्च तां लङ्कां नादैः स्वैर्नदतां वराः ॥ १४ ॥
कुर्वन्तस्ते महावेगा महीञ्च रणपीड़िताम् ।
रजश्च सहसैवोर्द्धं जगाम च रणोत्थितम् ॥ १५ ॥
ऋक्षाः सिंहाश्च महिषा वारणाश्च मृगाः खगाः ।
तेन शब्देन वित्रस्ता जग्मुर्भीता दिशो दश ॥ १६ ॥
शिखरन्तु त्रिकूटस्य प्रांशु चैकं दिविस्पृशम् ।
समन्तात् पुष्पसंच्छन्नं महारजतसन्निभम् ॥ १७ ॥
शतयोजनविस्तीर्णं विमलञ्चारुदर्शनम् ।

कोकिलैराकुलाः खण्डा वृक्षखण्डा येषु तानि वनोपवनानि । अर्थेऽपि बहुव्रीहिरेव ॥ १० ॥ ११ ॥ १२ ॥

प्राणसमत्वेन मन्दता । अन्ये तु वनोपवनप्रवेष्टृव्यतिरिक्ताः । यूथान्निष्क्रम्य लङ्कां जग्मुः ॥ १३ ॥ १४ ॥ १५ ॥

वारणाः वनगजाः ॥ १६ ॥

एकमखण्डम् । दिविस्पृशं दिविस्पृक् । पूर्वपदे हृद्युभ्याञ्चेति ङेरलुक् । स्पृशेः क्विप्प्रत्ययस्यार्थः । समन्तात् परित इत्यर्थः । महारजतं स्वर्णम् ॥ १७ ॥

श्लक्ष्णं श्रीमन्महच्चैव दुष्प्रापं शकुनैरपि ॥ १८ ॥
मनसापि दुरारोहं किं पुनः कर्मणा जनैः।
निविष्टा तस्य शिखरे लङ्का रावणपालिता ॥ १९ ॥
दशयोजनविस्तीर्णा विंशद्योजनमायता।
सा पुरी गोपुरैरुच्चैः पाण्डुराम्बुदसन्निभैः।
काञ्चनेन च शालेन राजतेन च शोभते ॥ २० ॥
प्रासादैश्च विमानैश्च लङ्का परमभूषिता।
घनैरिवातपापाये मध्यमं वैष्णवं पदम् ॥ २१ ॥
यस्यां स्तम्भसहस्रेण प्रासादः समलङ्कृतः।
कैलासशिखराकारो दृश्यते खमिवोल्लिखन् ॥ २२ ॥
चैत्यः स राक्षसेन्द्रस्य बभूव पुरभूषणम्।
शतेन रक्षसां नित्यं यः समग्रेण रक्ष्यते ॥ २३ ॥

शतयोजनेति। अनेकयोजनेत्यर्थः। श्लक्ष्णां कुट्टिमभूमिवत्। ॥ १८ ॥ १९ ॥

दशयोजनेति। इदञ्च लङ्काख्यं महद्दुर्गान्तर्वर्त्तिरावणावासस्थानभूतान्तर्दुर्गपरम्। शतयोजनविस्तीर्णा त्रिंशद्योजनमायतेत्यत्र वाक्यस्थले उक्तः। काञ्चनेन राजतेन शालेन प्राकारेण ॥ २० ॥

प्रासादभूषितत्वे उपमानम्। घनैरित्यादि। मध्यमं वैष्णवं पदम् आकाशमित्यर्थः ॥ २१ ॥

अत्र रावणगृहं प्रासादविशेषेण लक्ष्यत इत्याह,—यस्यामिति। स्तम्भसहस्रेण निर्मित इति शेषः ॥ २२ ॥

मनोज्ञां काञ्चनवतीं पर्वतैरुपशोभिताम्।
नानाधातुविचित्रैश्च उद्यानैरुपशोभिताम्॥ २४॥
नानाविहगसंघुष्टां नानामृगनिषेविताम्।
नानाकुसुमसम्पन्नां नानाराक्षससेविताम्॥ २५॥
तां समृद्धां समृद्धार्थां लक्ष्मीवान् लक्ष्मणाग्रजः।
नगरीं त्रिदिवप्रख्यां विस्मयं प्राप वीर्यवान्॥ २६॥
तां रत्नपूर्णां बहुसंविधानां
प्रासादमालाभिरलङ्कृताञ्च।
पुरीं महायन्त्रकवाटमुख्यां
ददर्श रामो महता बलेन॥ २७॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
एकोनचत्वारिंशः सर्गः॥ ३९॥

स एष पुरभूषणं प्रासादो राक्षसेन्द्रस्य। चैत्य आलयः। चैत्यमायतनं तुल्ये। पुंस्त्वमार्षम्। समग्रेण रक्षसां शतेन समग्रसन्नाहवता अनेकेनेत्यर्थः॥ २३॥ २४॥ २५॥
नगरीं दृष्ट्वेति शेषः॥ २६॥ २७॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे एकोनचत्वारिंशः सर्गः॥ ३९॥

---

## चत्वारिंशः सर्गः।



ततो रामः सुवेलाग्रं योजनद्वयमण्डलम्।
उपारोहत् ससुग्रीवो हरियूथैः समन्वितः॥ १॥
स्थित्वा मुहूर्त्तं तत्रैव दिशो दश विलोकयन्।
त्रिकूटशिखरे रम्ये निर्मितां विश्वकर्मणा॥ २॥
ददर्श लङ्कां सुन्यस्तां रम्यकाननशोभिताम्।
तस्य गोपुरशृङ्गस्थं राक्षसेन्द्रं दुरासदम्॥ ३॥
श्वेतचामरपर्य्यन्तं विजयच्छत्रशोभितम्।
रक्तचन्दनसंलिप्तं रक्ताभरणभूषितम्॥ ४॥
नीलजीमूतसङ्काशं हेमसंच्छादिताम्बरम्।
ऐरावतविषाणाग्रैरुत्कृष्टकिणवक्षसम्॥ ५॥

योजनद्वयमण्डलं योजनद्वयविस्तारम्॥ १॥ २॥ ३॥

श्वेतचामरे पर्य्यन्ते वीज्यमाने यस्य। विजयच्छत्रेण श्वेतच्छत्रेण राजचिह्नेन शोभितम्॥ ४॥

हेमसंच्छादिताम्बरं हेममालोपरचितहंसादिचित्रैः संच्छादितमम्बरमन्तरीयवासो यस्य। तद्विषाणाग्रकरणकैरुत्कृष्टैर्विलेखनैर्जातः किणो वक्षसि यस्य तम्॥ ५॥

शशलोहितरागेण संवीतम् रक्तवाससा।
सन्ध्यातपेन संच्छन्नं मेघराशिमिवाम्बरे॥ ६॥
पश्यतां वानरेन्द्राणां राघवस्यापि पश्यतः।
दर्शनाद्राक्षसेन्द्रस्य सुग्रीवः सहसोत्थितः॥ ७॥
क्रोधवेगेन संयुक्तः सत्त्वेन च बलेन च।
अचलाग्रा दशोत्थाय पुप्लुवे गोपुरस्थले॥ ८॥
स्थित्वा मुहूर्त्तं संप्रेक्ष्य निर्भयेनान्तरात्मना।
तृणीकृत्य च तद्रक्षः सोऽब्रवीत् परुषं वचः॥ ९॥
लोकनाथस्य रामस्य सखा दासोऽस्मि राक्षस!।
न मया मोक्ष्यसेऽद्य त्वं पार्थिवेन्द्रस्य तेजसा॥ १०॥
इत्युक्त्वा सहसोत्पत्य पुप्लुवे तस्य चोपरि।
आकृष्य मुकुटं चित्रं पातयामास तद्भुवि॥ ११॥

शशलोहितं शशरुधिरं तत्सदृशरागवता रक्तवाससोत्तरीयवस्त्रेण संवीतम्॥ ६॥

पश्यतां पश्यतोऽनादृत्येत्यर्थः॥ ७॥

सत्त्वेन सत्त्वकार्य्योत्साहेन। अचलाग्रात् सुवेलाग्रात् गोपुरस्थले रावणावस्थितिस्थाने॥ ८॥ ९॥

पार्थिवेन्द्रस्य तेजसानुगृहीतेन मया न मोक्ष्यसे। रामाभिप्रायेण सखा स्वाभिप्रायेण दास इति बोध्यम्॥ १०॥

उत्पत्य गोपुरादिति शेषः। तस्योपरि पुप्लुवे लुत्यागत इत्यर्थः।

समीक्ष्य तूर्णमायान्तं बभाषे तं निशाचरः ।
सुग्रीवस्त्वं परोक्षं मे हीनग्रीवो भविष्यसि ॥ १२ ॥
इत्युक्त्वोत्थाय तं क्षिप्रं बाहुभ्यामाक्षिपत्तले ।
कन्दुवत् स समुत्थाय बाहुभ्यामाक्षिपत् हरिः ॥ १३ ॥

परस्परं स्वेदविदग्धगात्रौ
परस्परं शोणितरक्तदेहौ ।
परस्परं श्लिष्टनिरुद्धचेष्टौ
परस्परं शाल्मलिकिंशुकाविव ॥ १४ ॥

मुष्टिप्रहारैश्च तलप्रहारै-
ररत्निघातैश्च कराग्रघातैः ।
तौ चक्रतुर्युद्धमसह्यरूपं
महाबलौ राक्षसवानरेन्द्रौ ॥ १५ ॥

चित्रमद्भुतं तत्प्रसिद्धं मुकुटम् आकृष्य शिरसो गृहीत्वा भुवि पातयामास तत पातयित्वा स्वयं भूमौ पपात ॥ ११ ॥

तूर्णमायान्तं पुनर्भूतलादिति शेषः। मे परोक्षमेव त्वं सुग्रीवः। इदानीं मद्दृष्ट्यग्रे हीनग्रीवो भविष्यसि ॥ १२ ॥

तले भूतले ; क्रीड़ायां तलाहतकन्दुको यथा द्रागुत्तिष्ठति तद्वत् समुत्थाय बाहुभ्यामाक्षिपत्। भूमाविति शेषः ॥ १३ ॥

शोणितेन रुधिरेण रक्तवर्णौ देहौ ययोस्तौ। परस्परं श्लिष्टौ श्लिष्टत्वादेव तौ च तौ निरुद्धचेष्टौ शाल्मलिकिंशुकाविव पुष्पिताविति शेषः ॥ १४ ॥

कृत्वा नियुद्धं भृशमुग्रवेगौ
कालं चिरं गोपुरवेदिमध्ये।
उत्क्षिप्य चोत्क्षिप्य विनम्य देहौ
पादक्रमात् गोपुरवेदिलग्नौ ॥ १६ ॥
अन्योऽन्यमापीड्य विलग्नदेहौ
तौ पेततुः सालनिखातमध्ये।
उत्पेततुर्भूमितलं स्पृशन्तौ
स्थित्वा मुहूर्त्तं त्वभिनिःश्वसन्तौ ॥ १७ ॥
आलिङ्ग्य चालिङ्ग्य च बाहुयोक्त्रैः
संयोजयामासतुराहवे तौ।
संरम्भशिक्षाबलसम्प्रयुक्तौ
सुचेरतुः सम्प्रति युद्धमार्गे ॥ १८ ॥

अरत्निघातैर्निष्कनिष्ठमुष्टिघातैः। अरत्निस्तु निष्कनिष्ठेन मुष्टिनेत्यमरः। असह्यरूपम् अत्यन्तासह्यम् ॥ १५ ॥

नियुद्धं बाहुयुद्धम्। विनम्य पादक्रमात् पादविक्षेपाद्धेतेः। गोपुरवेदिलग्नौ भूपतिताविव्यर्थः ॥ १६ ॥

सालनिखातमध्ये प्राकारपरिखयोर्मध्ये। निघातेति पाठेऽप्ययमेवार्थः। अभिनिःश्वसन्तौ मुहूर्त्तं स्थित्वालिङ्ग्येत्यन्वयः ॥ १७ ॥

बाहुरूपैर्योक्त्रै रज्जुभिः संयोजयामासतुर्बबन्धतुः। संरम्भः क्रोधः। शिक्षा नियुद्धाभ्यासः। बलं सहजं प्राणीयम्। तैः संयुक्तौ ॥ १८ ॥

शार्दूलसिंहाविव जातदर्पौ
गजेन्द्रपोताविव सम्प्रयुक्तौ।
संहत्य संवेद्य च तौ कराभ्यां
तौ पेततुर्वै युगपद्धरायाम् ॥ १९ ॥
उद्यस्य चान्योऽन्यमधिक्षिपन्तौ
सञ्चक्रमाते बहु युद्धमार्गे।
व्यायामशिक्षाबलसम्प्रयुक्तौ
क्लमं न तौ जग्मतुराशु वीरौ ॥ २० ॥
बाहूत्तमैर्वारणवारणाभै-
र्निवारयन्तौ परवारणाभौ।
चिरेण कालेन भृशं प्रयुद्धौ
सञ्चेरतुर्मण्डलमार्गमाशु ॥ २१ ॥
तौ परस्परमासाद्य यत्तावन्योऽन्यसूदने।
मार्जाराविव भक्षार्थेऽवतस्थाते मुहुर्मुहुः ॥ २२ ॥

पोतौ बालः। संवेदनं प्रेरणम् ॥ १९ ॥

व्यायामो नियुद्धोत्साहः ॥ २० ॥

वारयन्त्येभिः प्रतिगजानिति वारणो महागजः। द्वितीय वारण-शब्दः करिहस्तवाची करिकराभैरित्यर्थः। परवारणो मत्तगजः। मण्डलमार्गम्। मण्डलाकारत्वसाधको मार्गो गतिभेदः ॥ २१ ॥

मण्डलानि विचित्राणि स्थानानि विविधानि च ।
गोमूत्रकाणि चित्राणि गतप्रत्यागतानि च ॥ २३ ॥
तिरश्चीनगतान्येव तथा वक्रगतानि च ।
परिमोक्षं प्रहाराणां वर्जनं परिधावनम् ॥ २४ ॥
अभिद्रवणमाप्लावमवस्थानं सविग्रहम् ।
परावृत्तमपावृत्तमपद्रुतमवप्लुतम् ॥ २५ ॥

भद्रार्थं भद्ररूपप्रयोजननिमित्तम् । यथा क्रुद्धाववतस्थाते तथे-त्यर्थः ॥ २२ ॥

विचित्राणि मण्डलानि चारिकरणखण्डमहामण्डलाख्यमण्डलभेदात् । तानि तु । एकपादप्रचारेण चारिसंज्ञन्तु मण्डलम् । द्विपादक्रमणं यत्र करणाख्यन्तु मण्डलम् । करणानां समायोगात् खण्डमण्डलमीरितम् । खण्डैस्त्रिभिश्चतुर्भिर्वा महामण्डलमीरितमिति भरतोक्तानि । विविधानि स्थानानि । वैष्णवं समपादञ्च वैशाखं मण्डलं तथा । प्रत्यालीढमनालीढं स्थानान्येतानि षण्नृणामिति भरतोक्तानि । पादयोः पूर्वापरविक्षेपतिर्य्यग्विक्षेपादिविन्यासविशेषरूपाणीति तीर्थः । गोमूत्रकाणि गोमूत्ररेखाकारकुटिलगमनानि । चित्राणि गतप्रत्यागतानि नानाप्रकारापसर्पणोपसर्पणानि ॥ २३ ॥

तिरश्चीनगतानि तिर्य्यग्गतानि । वक्रगतानि सव्यापसव्यसञ्चारणानि । प्रहाराणां परदत्तप्रहाराणाम् । परिमोक्षं स्थानचलनादिना व्यर्थीकरणम् । वर्जनं स्वप्रहारवैफल्यापादकस्थाने तद्वर्जनम् । परिधावनम् एकस्य तिष्ठतः परितो धावनं भ्रमणमित्यर्थः ॥ २४ ॥

उपन्यस्तमपन्यस्तं युद्धमार्गविशारदौ।
तौ विचेरतुरन्योऽन्यं वानरेन्द्रश्च रावणः॥ २६॥
एतस्मिन्नन्तरे रक्षो मायाबलमथात्मनः।
आरब्धुमुपसम्पेदे ज्ञात्वा तं वानराधिपः॥ २७॥
उत्पपात तदाकाशं जितकाशी जितक्लमः।
रावणः स्थितएवाच हरिराजेन वञ्चितः॥ २८॥
अथ हरिवरनाथः प्राप्तसंग्रामकीर्त्ति-
र्निशिचरपतिमाजौ योजयित्वा श्रमेण।

अभिद्रवणम् अभिमुखेन शीघ्रगमनम्। आप्लवनमीषदीषद्गमनम्। अवस्थानं कृत्वा कृत्वागमनमिति यावत्। सविग्रहमवस्थानं विग्रहाभिमुख्येनावस्थानम्। परावृत्तं पराङ्मुखगमनम्। अपावृत्तं पार्श्वतोपसरणम्। अपद्रुतं परस्परजान्वादिग्रहणायावनतकायतयाधावनम्। अवप्लुतं प्रतिभटं पादेन प्रहृत्त्य मभिगमनम्॥ २५॥

उपन्यस्तं परेण स्वबाहोरग्रहणाय स्वोरःसमीपस्थानम्। अपन्यस्तं प्रतिभटबाहुग्रहणार्थं स्वबाहुप्रसारणम्। कुर्वन्तौ तौ विचेरतुरित्यन्वयः॥ २६॥

एतस्मिन्नन्तरे सुग्रीवादात्मानं बलतो मोचयितुमशक्यत्वावसरे। मायाबलमारब्धुमुपसम्पेदे उपचक्रमे। तम् उपक्रान्तमायं ज्ञात्वा॥ २७॥

जितकाशी जितश्वासः। वञ्चितः क्व गत इत्यज्ञातहरिराजगमनः॥ २८॥

गगनमतिविशालं लङ्घयित्वार्कसूनु-
र्हरिगणबलमध्ये रामपार्श्वं जगाम ॥ २९ ॥
स इति सवितृसूनुस्तत्र तत्कर्म कृत्वा
पवनगतिरनीकं प्राविशत् सम्प्रहृष्टः ।
रघुवरनृपसूनोर्वर्द्धयन् युद्धहर्षं
तरुमृगगणमुख्यैः पूज्यमानो हरीन्द्रः ॥ ३० ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
चत्वारिंशः सर्गः ॥ ४० ॥

प्राप्ता संग्रामकीर्त्तिः । तदेव दर्शयति निशिचरपतिमाजौ श्रमेण योजयित्वेति । निशिचरेत्यार्षम् । अतिविशालं गगनमतिदूरं लङ्घयित्वेत्यर्थः ॥ २९ ॥

उक्तमर्थमुपसंहरति । स इति । तरुमृगा वानरास्तद्गणमुख्या हनूमदादयः ॥ ३० ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

———

## एकचत्वारिंशः सर्गः ।



अथ तस्मिन्निमित्तानि दृष्ट्वा लक्ष्मणपूर्वजः ।
सुग्रीवं सम्परिष्वज्य रामो वचनमब्रवीत् ॥ १ ॥
असम्मन्त्र्य मया सार्द्धं तदिदं साहसं कृतम् ।
एवं साहसयुक्तानि न कुर्वन्ति जनेश्वराः ॥ २ ॥
संशये स्थाप्य माञ्चेदं बलञ्चेमं विभीषणम् ।
कष्टं कृतमिदं वीर ! साहसं साहसप्रिय ! ॥ ३ ॥
इदानीं मा कृथा वीर ! एवंविधमरिन्दम ! ।
त्वयि किञ्चित् समापन्ने किं कार्य्यं सीतया मम ॥ ४ ॥
भरतेन महाबाहो ! लक्ष्मणेन यवीयसा ।
शत्रुघ्नेन च शत्रुघ्न ! स्वशरीरेण वा पुनः ॥ ५ ॥

तस्मिन् सुग्रीवे । निमित्तानि क्षतजादिरूपाणि युद्धचिह्नानि ॥ १ ॥

जनेश्वराः नृपाः ॥ २ ॥

संशये स्थाप्येति । अतिघोरशत्रुसमीपं गतः कथमागमिष्यति राजेति बहुचिन्तामग्नं कृत्वा ॥ ३ ॥

इदानीं घोरयुद्धप्राप्तौ । एवंविधमस्माभिः सहासम्मन्त्र्य कार्य्यमितःपरं मा कृथाः । त्वयि किञ्चित् समापन्ने दैवात्तवापमानादिप्राप्तावित्यर्थः । नासीमं कीर्त्तयेदित्युक्तरेवं वादः ॥ ४ ॥ ५ ॥

त्वयि चानागते पूर्वमिति मे निश्चिता मतिः।
जानतश्चापि ते वीर्य्यं महेन्द्रवरुणोपम!॥ ६॥
हत्वाहं रावणं युद्धे सपुत्त्रबलवाहनम्।
अभिषिच्य च लङ्कायां विभीषणमथापि च॥ ७॥
भरते राज्यमारोप्य त्यक्ष्ये देहं महाबल!।
तमेवं वादिनं रामं सुग्रीवः प्रत्यभाषत॥ ८॥
तव भार्य्यापहर्त्तारं दृष्ट्वा राघव! रावणम्।
मर्षयामि कथं वीर! जानन् विक्रममात्मनः॥ ९॥
इत्येवं वादिनं वीरमभिनन्द्य च राघवः।
लक्ष्मणं लक्ष्मिसम्पन्नमिदं वचनमब्रवीत्॥ १०॥

त्वयि चानागते पूर्वं त्वदागमनात् पूर्वम्। यदि तव विपत्तिः स्यात्तर्हीति शेषः। इति वक्ष्यमाणप्रकारा मतिर्मे निश्चिताभूत्। भगवन् कथमेवं मयि तव प्राकृत इव शङ्केत्यत्राह,—जानतश्चापीति। अति-स्नेहः पापशङ्कीति न्यायादित्याशयः॥ ६॥

तां मतिं दर्शयति। हत्वेति। अभिषिच्येति प्रतिज्ञायाः साधनीय-त्वादित्याशयः॥ ७॥

महाबलेत्यन्तं मतिकथनम्॥ ८॥

आत्मनो विक्रमं स्वस्य परपराक्रमसंहारसामर्थ्यं जानन् स्वानु-भवेनावगच्छन् कथं मर्षयामि। न कथमपीत्यर्थः॥ ९॥

अभिनन्द्य सौहृदस्यातिबलसम्पत्तेश्चेदमेव दुक्तमिति श्लाघां कृत्वे-त्यर्थः। लक्ष्मिसम्पन्नमिति ह्रस्व आर्षः॥ १०॥

परिगृह्योदकं शीतं वनानि फलवन्ति च ।
बलौघं संविभज्येमं व्यूह्य तिष्ठाम लक्ष्मण ! ॥ ११ ॥
लोकक्षयकरं भीमं भयं पश्य ह्युपस्थितम् ।
निवर्हणं प्रवीराणामृक्षवानररक्षसाम् ॥ १२ ॥
वाता हि परुषं वान्ति कम्पते च वसुन्धरा ।
पर्वताग्राणि वेपन्ते नदन्ति धरणीधराः ॥ १३ ॥
मेघाः क्रव्यादसङ्काशाः परुषाः परुषस्वराः ।
क्रूराः क्रूरं प्रवर्षन्ते मिश्रं शोणितविन्दुभिः ॥ १४ ॥
रक्तचन्दनसङ्काशा सन्ध्या परमदारुणा ।
ज्वलच्च निपतत्येतदादित्यादग्निमण्डलम् ॥ १५ ॥
आदित्यमभिवाश्यन्ति जनयन्तो महद्भयम् ।
दीना दीनस्वराः क्रूरा अप्रशस्ता मृगद्विजाः ॥ १६ ॥
रजन्यामप्रशस्तश्च सन्तापयति चन्द्रमाः ।
कृष्णरक्तांशुपर्यन्तो यथा लोकस्य सङ्क्षये ॥ १७ ॥
ह्रस्वो रूक्षो प्रशस्तश्च परिवेषः सुलोहितः ।
आदित्यमण्डले नीलं लक्ष्म लक्ष्मण ! दृश्यते ॥ १८ ॥

शीतमुदकं तद्वतो जलाशयान् । फलवन्ति वनानि च परिगृह्य ।
बलौघं व्यूह्य व्यूहविशेषपूर्वं संविभज्य विभागेन स्थापयित्वा ॥ ११ ॥
व्याख्यातप्राया इमे श्लोकाः॥ १२॥ १३॥ १४॥ १५॥ १६॥ १७॥ १८॥

दृश्यते न यथावच्च नक्षत्राण्यभिवर्त्तते ।
युगान्तमिव लोकस्य पश्य लक्ष्मण ! शंसति ॥ १९ ॥
काकाः श्येनास्तथा गृध्रा नीचैः परिपतन्ति च ।
शिवाश्चाप्यशुभा वाचः प्रवदन्ति महास्वनाः ॥ २० ॥
शैलैः शूलैश्च खड्गैश्च विमुक्तैः कपिराक्षसैः ।
भविष्यत्यावृता भूमिर्मांसशोणितकर्दमा ॥ २१ ॥
क्षिप्रमद्य दुराधर्षां पुरीं रावणपालिताम् ।
अभियाम जवेनैव सर्वतो हरिभिर्वृताः ॥ २२ ॥
इत्येवन्तु वदन् वीरो लक्ष्मणं लक्ष्मणाग्रजः ।
तस्मादवातरच्छीघ्रं पर्वताग्रान् महाबलः ॥ २३ ॥
अवतीर्य्य तु धर्मात्मा तस्माच्छैलात् स राघवः ।
परैः परमदुर्द्धर्षं ददर्श बलमात्मनः ॥ २४ ॥
सन्नह्य तु ससुग्रीवः कपिराजबलं महत् ।
कालज्ञो राघवः काले संयुगायाभ्यचोदयत् ॥ २५ ॥

यच्च नक्षत्राण्यभिवर्त्तते प्रकाशगत्यादिकं तच्च यथावन्न दृश्यते इत्यन्वयः । हे लक्ष्मण उक्तदुर्निमित्तजालं लोकस्य युगान्तं शंसतीव पश्य ॥ १९ ॥

श्येनादयो नीचैर्निपतन्ति ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

ससुग्रीवः सुग्रीवसहितः । कपिराजबलं सन्नह्य कृतसन्नाहं कृत्वा काले ज्योतिः शास्त्रोक्तकाले संयुगाय युद्धायाभ्यचोदयत् ॥ २५ ॥

ततः काले महाबाहुर्बलेन महता वृतः ।
प्रविष्टः पुरतो धन्वी लङ्कामभिमुखः पुरीम् ॥ २६ ॥
तौ विभीषणसुग्रीवौ हनूमान् जाम्बवान्नलः ।
ऋक्षराजस्तथा नीलो लक्ष्मणश्चान्वयुस्तदा ॥ २७ ॥
ततः पश्चात् सुमहती पृतनर्क्षवनौकसाम् ।
प्रच्छाद्य महतीं भूमिमनुयाति स्म राघवम् ॥ २८ ॥
शैलशृङ्गाणि शतशः प्रवृद्धांश्च महीरुहान् ।
जगृहुः कुञ्जरप्रख्या वानराः परवारणाः ॥ २९ ॥
तौ त्वदीर्घेण कालेन भ्रातरौ रामलक्ष्मणौ ।
रावणस्य पुरीं लङ्कामासेदतुररिन्दमौ ॥ ३० ॥
पताकामालिनीं रम्यामुद्यानवनशोभिताम् ।
चित्रवप्रां सुदुष्प्रापामुच्चैः प्राकारतोरणाम् ॥ ३१ ॥
तां सुरैरपि दुर्द्धर्षां रामवाक्यप्रचोदिताः ।
यथानिदेशं सम्पीड्य न्यविशन्त वनौकसः ॥ ३२ ॥
लङ्कायास्तूत्तरद्वारं शैलशृङ्गमिवोन्नतम् ।

काले स्वरशास्त्रोक्ते युद्धयोग्ये काले । प्रविष्टः प्रवेष्टुं प्रस्थितः ॥ २६ ॥ २७ ॥

ऋक्षवनौकसां पृतनेति च्छेदः ॥ २८ ॥

परवारणाः शत्रुनिवारकाः ॥ २९ ॥ ३० ॥ ३१ ॥

यथानिदेशं रामनिदेशमनतिक्रम्य । सम्पीड्य लङ्कां रुद्ध्वा ॥ ३२ ॥

रामः सहानुजो धन्वी जुगोप च रुरोध च ॥ ३३ ॥
लङ्कामुपनिविष्टस्तु रामो दशरथात्मजः।
लक्ष्मणानुचरो वीरः पुरीं रावणपालिताम् ॥ ३४ ॥
उत्तरद्वारमासाद्य यत्र तिष्ठति रावणः।
नान्यो रामाद्धि तद्द्वारं समर्थः परिरक्षितुम् ॥ ३५ ॥
रावणाधिष्ठितं भीमं वरुणेनेव सागरम्।
सायुधै राक्षसैर्भीमैरभिगुप्तं समन्ततः ॥ ३६ ॥
लघूनां त्रासजननं पातालमिव दानवैः।
विन्यस्तानि च योधानां बहूनि विविधानि च ॥ ३७ ॥
ददर्शायुधजालानि तथैव कवचानि च।
पूर्वन्तु द्वारमासाद्य नीलो हरिचमूपतिः ॥ ३८ ॥
अतिष्ठत् सह मैन्देन द्विविदेन च वीर्य्यवान्।
अङ्गदो दक्षिणद्वारं जग्राह सुमहाबलः ॥ ३९ ॥
ऋषभेण गवाक्षेण गजेन गवयेन च।
हनूमान् पश्चिमद्वारं ररक्ष बलवान् कपिः ॥ ४० ॥

तस्यैव प्रपञ्चो लङ्काया इति। उत्तरद्वारं रुरोध तद्द्वारनिरोधकमात्मबलं जुगोप च ॥ ३३ ॥ ३४ ॥

उक्तमेवार्थं स्थैर्य्यायाह,—लङ्कामिति। तद्द्वारं तद्द्वाररोधिकां सेनाम् ॥ ३५ ॥ ३६ ॥

लघूनाम्। अल्पवीर्य्याणाम्। दानवैः पातालमिव गुप्तं द्वारमित्य-

प्रजङ्घतरसाभ्याञ्च वीरैरन्यैश्च सङ्गतः।
मध्यमे च स्वयं गुल्मे सुग्रीवः समतिष्ठत ॥ ४१ ॥
सह सर्वैर्हरिश्रेष्ठैः सुपर्णपवनोपमैः।
वानराणान्तु षट्त्रिंशत् कोव्यः प्रख्यातयूथपाः ॥ ४२ ॥
निपीड्योपनिविष्टाश्च सुग्रीवो यत्र वानरः।
शामनेन तु रामस्य लक्ष्मणः सविभीषणः ॥ ४३ ॥
द्वारे द्वारे हरीणान्तु कोटिं कोटिर्न्यवेशयत्।
पश्चिमेन तु रामस्य सुषेणः सह जाम्बवान ॥ ४४ ॥
अदूरान्मध्यमे गुल्मे तस्थौ बहुबलानुगः।
ते तु वानरशार्दूलाः शार्दूला इव दंष्ट्रिणः।
गृहीत्वा द्रुमशैलाग्रान् हृष्टा युद्धाय तस्थिरे ॥ ४५ ॥

न्वयः। विन्यस्तानि गुल्मकाले यथोचितपरिग्रहार्थमिति शेषः ॥ ३७ ॥
॥ ३८ ॥ ३९ ॥ ४० ॥

मध्यमे गुल्मे ध्वतिर्जयरावणीन्द्रजिदधिष्ठितयोरुत्तरपश्चिमद्वारयो-र्मध्ये वायुदिशि। तदुभयद्वारनिरोधकानां मध्यमशिन्यायेन सहायं कर्त्तुं सुग्रीवः समतिष्ठतेत्यर्थः ॥ ४१ ॥

सर्वहरिश्रेष्ठैर्द्वारनिरोधनियुक्तेभ्यो वशिष्ठैः। प्रख्यातयूथपाः षट्-त्रिंशत् कोव्यः। अप्रख्यातयूथपानां तत् सेनानाञ्च गणनाभाव इति भावः ॥ ४२ ॥ ४३ ॥

द्वारनिरोधनियुक्तसेनाप्रमाणमाह,—द्वारे इति ॥ ४४ ॥

सर्वे विकृतलाङ्गूलाः सर्वे दंष्ट्रानखायुधाः ।
सर्वे विकृतचित्राङ्गाः सर्वे च विकृताननाः ॥ ४६ ॥
दशनागबलाः केचित् केचिद्दशगुणोत्तराः ।
केचिन्नागसहस्रस्य बभूवुस्तुल्यविक्रमाः ॥ ४७ ॥
सन्ति चौघबलाः केचित् केचिच्छतगुणोत्तराः ।
अप्रमेयबलाश्चान्ये तत्रासन् हरियूथपाः ॥ ४८ ॥
अद्भुतश्च विचित्रश्च तेषामासीत् समागमः ।
तत्र वानरसैन्यानां शलभानामिवोद्गमः ॥ ४९ ॥
प्रतिपूर्णमिवाकाशं सम्पूर्णेव च मेदिनी ।
लङ्कामुपनिविष्टैश्च सम्पतद्भिश्च वानरैः ॥ ५० ॥
शतं शतसहस्राणां पृतनार्चवनौकसाम् ।
लङ्काद्वाराण्युपाजग्मुरन्ये योद्धुं समन्ततः ॥ ५१ ॥

अदूरात् पश्चिमेन आसन्नपृष्ठभागावष्टम्भेन ॥ ४५ ॥
विकृतलाङ्गूलाः । क्रोधामर्षवशादिति शेषः ॥ ४६ ॥
दशगुणोत्तराः शतनागबलाः । नागसहस्रस्य नागसहस्रेण ॥ ४७ ॥
ओघबलाः ओघसङ्ख्यनागबलाः ॥ ४८ ॥
शलभानामिति । उत्पातकाले इति शेषः ॥ ४९ ॥
सम्पतद्भिराकाशं पूर्णं निविष्टैर्मेदिनी पूर्णा ॥ ५० ॥
ऋच्चवनौकसां शतसहस्राणाम् । शतकोटिरित्यर्थः । एवञ्च कोटि-
सङ्ख्याः पृतनाः लङ्काद्वाराण्युपाजग्मुः । पृतना ऋच्चेत्यत्र सन्धिरार्षः ।

आवृतः स गिरिः सर्वैस्तैः समन्तात् प्लवङ्गमैः।
अयुतानां सहस्रञ्च पुरीं तामभ्यवर्त्तत ॥ ५२ ॥
वानरैर्बलवद्भिश्च बभूव द्रुमपाणिभिः।
सर्वतः संवृता लङ्का दुष्प्रवेशापि वायुना ॥ ५३ ॥
राक्षसा विस्मयं जग्मुः सहसाभिनिपीड़िताः।
वानरैर्मेघसङ्काशैः शक्रतुल्यपराक्रमैः ॥ ५४ ॥
महाञ्छब्दोभवत्तत्र बलौघस्याभिवर्त्ततः।
सागरस्येव भिन्नस्य यथास्यात् सलिलस्वनः ॥ ५५ ॥
तेन शब्देन महता सप्राकारा सतोरणा।
लङ्का प्रचलिता सर्वा सशैलवनकानना ॥ ५६ ॥
रामलक्ष्मणगुप्ता सा सुग्रीवेण च वाहिनी।
बभूव दुर्द्धर्षतरा सर्वैरपि सुरासुरैः ॥ ५७ ॥
राघवः सन्निवेश्यैव स्वसैन्यं रक्षसां वधे।
सम्मन्त्र्य मन्त्रिभिः सार्द्धं निश्चित्य च पुनः पुनः ॥ ५८ ॥

एते पूर्वनियुक्ताधिका इति बोध्यम्। अन्येऽवशिष्टाः समन्ततो युद्धं परितो योद्धुं जग्मुः ॥ ५१ ॥

स गिरिस्त्रिकूटः। अयुतानां सहस्रञ्च पुरीं तामभ्यवर्त्तत। सर्वद्वारवर्त्तिस्वसेनासर्ववृत्तान्तग्रहणार्थं सञ्चरतामिति शेषः ॥ ५२ ॥ ५३ ॥ ५४ ॥

बलौघस्य वानरीयस्य। अभिवर्त्ततोऽभिवर्त्तमानस्य। भिन्नस्य सागरस्य कृतसेतुविभेदनस्य। अभूतोपमेयम् ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥

आनन्तर्य्यमभिप्रेप्सुः क्रमयोगार्थतत्त्ववित् ।
विभीषणस्यानुमते राजधर्ममनुस्मरन् ॥ ५९ ॥
अङ्गदं वालितनयं समाहूयेदमब्रवीत् ।
गत्वा सौम्य ! दशग्रीवं ब्रूहि मद्वचनात् कपे ! ॥ ६० ॥
लङ्घयित्वा पुरीं लङ्कां भयं त्यक्त्वा गतव्यथः ।
भ्रष्टश्रीकं गतैश्वर्य्यं मुमूर्षानष्टचेतनम् ॥ ६१ ॥
ऋषीणां देवतानाञ्च गन्धर्व्वाप्सरसां तथा ।
नागानामथ यक्षाणां राज्ञाञ्च रजनीचर ! ॥ ६२ ॥
यच्च पापं कृतं मोहादवलिप्तेन राक्षस ! ।
नूनं ते विगतो दर्पः स्वयम्भूवरदानजः ॥ ६३ ॥

आनन्तर्य्यमनन्तरकर्त्तव्यम् अभिप्रेप्सुः प्राप्तुमिच्छुः । क्रमयोगार्थ-तत्त्ववित् सामाद्युपायानां क्रमयोगं क्रमप्रयोगं तत्साध्यमर्थं तत्त्वं तत्प्रयो-जनञ्च वेत्ति सः । विभीषणस्यानुमते स्थित इति शेषः । यदि रावणो भवन्तं शरणमुपेयात्तदा लङ्काराज्यं तस्यैव देयमिति विभीषणमते स्थित इत्यर्थः । राजधर्ममनुस्मरन् । सामादित्रयुपायसाध्येऽर्थे दण्डो न मोक्तव्यः प्रजानाशहेतुरित्येवं रूपं राजधर्ममनुचिन्तयन् ॥ ५९ ॥

इदं वक्ष्यमाणमङ्गदमाहूयाब्रवीत् ॥ ६० ॥

लङ्घयित्वा समुद्रम् । गतव्यथो निरुपद्रवः । भयं त्यक्त्वा त्वद्बलं तृणीकृत्य लङ्कामुपारुह्यमिति शेषः । अतो भ्रष्टेत्यादि । तादृशं ब्रूहीत्यन्वयः ॥ ६१ ॥ ६२ ॥

यस्य दण्डधरस्तेऽहं दाराहरणकर्शितः।
दण्डं धारयमाणस्तु लङ्काद्वारे व्यवस्थितः॥ ६४॥
पदवीं देवतानाञ्च महर्षीणाञ्च राक्षस!।
राजर्षीणाञ्च सर्वेषां गमिष्यसि युधि स्थिरः॥ ६५॥
बलेन येन वै सीतां मायया राक्षसाधम!।
मामतिक्रमयित्वा त्वं हृतवांस्तन्निदर्शय॥ ६६॥
अराक्षसमिमं लोकं कर्त्तास्मि निशितैः शरैः।
न चेच्छरणमभ्येषि तामादाय तु मैथिलीम्॥ ६७॥
धर्मात्मा राक्षसश्रेष्ठः सम्प्राप्तोऽयं विभीषणः।
लङ्कैश्वर्य्यमिदं श्रीमान् ध्रुवं प्राप्नोत्यकण्टकम्॥ ६८॥

यच्च पापं कृतं प्राणान्तनानाप्रकारपीड़नम्। तत् करणीभूतः स्वयम्भूवरदानजो दर्पस्ते तत्सम्बन्धी अद्य विगतः॥ ६३॥

दण्डं धारयमाणः निरुच्छ्वासं पुरोपरोधरूपनिग्रहं कुर्वाणः॥ ६४॥

ऋष्यादीनां पदवीं गमिष्यसि। तद्वत् तवापि मरणं भविष्यतीति भावः। किञ्च युधि स्थिरत्वे स्वयम्भूपासकस्य ते तदनुग्रहात् मत्तो मरणे पुण्यलोकप्राप्तिस्तवेति भावः। राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः। निर्मलाः स्वर्गयायान्ति सन्तः सुकृतिनो यथेत्युक्तेः॥ ६५॥

युध्यस्व मा पलायिनोऽभूरित्याह,—बलेनेत्यादि॥ ६६॥

यदि मरणभीत्या युयुत्सा नास्ति तदापि ते हितं ब्रवीमित्याह,— अराक्षसमिति॥ ६७॥

प्राणगतिं विना जीवनं राज्यञ्च सुतरां दुर्लभमित्याह,—धर्मा-

न हि राज्यमधर्मेण भोक्तुं क्षणमपि त्वया।
शक्यं मूर्खसहायेन पापेनाविदितात्मना ॥ ६९ ॥
युध्यस्व मा धृतिं कृत्वा शौर्य्यमालम्ब्य राक्षस!।
मच्छरैस्त्वं रणे शान्तस्ततः शान्तो भविष्यसि ॥ ७० ॥
यद्याविशसि लोकांस्त्रीन् पक्षीभूतो निशाचर!।

त्वमित्यादि। इहागत्य मां शरणं प्राप्य विभीषण इदं लङ्कैश्वर्य्यमकण्टकं तद्रूपकण्टकरहितं ध्रुवं प्राप्नोति। तत्प्राप्तियोग्यतां धर्मात्मेत्यादिविशेषणैर्दर्शयति। धर्मात्मा धर्मप्रधानो नित्यं धर्मचित्तश्च। इदमैश्वर्य्यस्य साक्षान्निदानम्। राक्षसश्रेष्ठ इत्यनेन त्वदनन्तरं न्यायप्राप्तं तस्य राज्यमिति दर्शितम्। श्रीमानित्यनेन तदैश्वर्य्यप्रापकाशेषलक्षणवत्त्वम्। मां प्राप्येत्यनेन तत्प्रापकसमग्रसामग्री सम्पद्दर्शिता ॥ ६८ ॥

ननु मयि जीवति कथं लङ्कैश्वर्य्यप्राप्तिस्तस्येत्यत्राह,—न हीति। अधर्मेणान्यायेन। शक्यमित्यत्र हेतुर्मूर्खसहायेनेति। विभीषणाय मया राज्यस्य दत्तत्वाच्च तद्भोगो न न्याय्य इति भावः ॥ ६९ ॥

शरणव्रजने तु जीवितमेकांशेन राज्यञ्च तवापि दास्यामि। तदभावे तु दण्डाधिकारिणा मया सर्वथा वध्यस्त्वम्। युद्धवधश्च परमं हितं तवेति परमदयालुर्भगवांस्तदेवोपदिशति। युध्यस्वेति। मा माम्। धृतिं कृत्वा युध्यस्व। युध्यस्व मा धृतिं कृत्वेति पाश्चः पाठः। मच्छरैः पापशोधनाधिकृतस्य मम शरैः रणे शान्तः समाप्तस्तत एव हेतोः शान्त आजन्मकृतात् पापात् पूतो भविष्यसि। दर्शननामस्मरणैः पापशोधनपावक एवायमवतारस्तत्त्वेन ज्ञायते। तथा ज्ञानाभावेऽपि मत्तो मरणे किञ्चित्कालोत्तरमुत्तमक्षत्रियकुले जन्मप्राप्तिरिति भावः ॥ ७० ॥

मम चक्षुःपथं प्राप्य न जीवन् प्रतियास्यसि ॥ ७१ ॥
ब्रवीमि त्वां हितं वाक्यं क्रियतामौर्द्ध्वदेहिकम्।
सुदृष्टा क्रियतां लङ्का जीवितं ते मयि स्थितम् ॥ ७२ ॥
इत्युक्तः स तु तारेयो रामेणाक्लिष्टकर्मणा।
जगामाकाशमाविश्य मूर्त्तिमानिव हव्यवाट् ॥ ७३ ॥
सोऽतिपत्य मुहूर्त्तेन श्रीमान् रावणमन्दिरम्।
ददर्शासीनमव्यग्रं रावणं सचिवैः सह ॥ ७४ ॥
ततस्तस्याविदूरेण निपत्य हरिपुङ्गवः।
दीप्ताग्निसदृशस्तस्थावङ्गदः कनकाङ्गदः ॥ ७५ ॥
तद्रामवचनं सर्वमन्यूनाधिकमुत्तमम्।
सामात्यं श्रावयामास निवेद्यात्मानमात्मना ॥ ७६ ॥
दूतोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः।
वालिपुत्रोऽङ्गदो नाम यदि ते श्रोत्रमागतः ॥ ७७ ॥

पुनरपि धैर्य्यार्थं वधनिश्चयमवलम्ब्य तदुचितकार्यं कुर्वित्युपदिशति। ब्रवीति। न स देशोऽस्ति यत्र न मे चक्षुःप्राप्तिरिति भावः ॥ ७१ ॥
देहादूर्द्ध्वं प्राप्त ऊर्द्ध्वदेहः परलोकस्तत्र हितं दानादिकम् और्द्ध्वदेहिकम्। सुदृष्टा क्रियताम् इतःपरं तद्दर्शनाभावात् ॥ ७२ ॥
मूर्त्तिमान् हव्यवाडिति। वानरवेशोऽग्निरित्यर्थः ॥ ७३ ॥
अतिपत्य अतिक्रम्य। मार्गमिति शेषः ॥ ७४ ॥ ७५ ॥
तद्रामवचनमिति। संक्षेपकथनं वक्ष्यमाणस्य ॥ ७६ ॥

आह त्वां राघवो रामः कौसल्यानन्दवर्द्धनः।
निष्पत्य प्रतियुध्यस्व नृशंस ! पुरुषो भव॥ ७८॥
हन्तास्मि त्वां सहामात्यं सपुत्रज्ञातिबान्धवम्।
निरुद्विग्नास्त्रयो लोका भविष्यन्ति हते त्वयि॥ ७९॥
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम्।
शत्रुमद्योद्धरिष्यामि त्वामृषीणाञ्च कण्टकम्॥ ८०॥
विभीषणस्य चैश्वर्य्यं भविष्यति हते त्वयि।
न चेत् सत्कृत्य वैदेहीं प्रणिपत्य प्रदास्यसि॥ ८१॥
इत्येवं परुषं वाक्यं ब्रुवाणे हरिपुङ्गवे।
अमर्षवशमापन्नो निशाचरगणेश्वरः॥ ८२॥
ततः स रोषमापन्नः शशास सचिवांस्तदा।
गृह्यतामिति दुर्मेधा वध्यतामिति चासकृत्॥ ८३॥
रावणस्य वचः श्रुत्वा दीप्ताग्निमिव तेजसा।
जगृहुस्तं ततो घोराश्चत्वारो रजनीचराः॥ ८४॥

तस्यैव प्रपन्नो दूतोऽहमिति। यदीत्यसन्दिग्धे सन्दिग्धवचनम्। वेदाः प्रमाणश्चेदितिवत्। अोक्षमागत एव। एतेन तस्य सीतायाश्च बलादि तुभ्यं न वाच्यमेव त्वया ज्ञातत्वादिति भावः॥ ७७॥

निष्पत्य पुरान्निष्क्रम्य। पुरुषो भव शूरो भव॥ ७८॥ ७९॥ ८०॥

वैदेहीं सत्कृत्य क्षमापनं कृत्वा मां प्रणिपत्य न चेत् प्रदास्यसि तदा त्वयि हते विभीषणस्यैश्वर्य्यं भविष्यति॥ ८१॥ ८२॥ ८३॥ ८४॥

ग्राहयामास तारेयः स्वयमात्मानमात्मवान्।
बलं दर्शयितुं वीरो यातुधानगणे तदा ॥ ८५ ॥
स तान् बाहुद्वयासक्तानादाय पतगानिव।
प्रासादं शैलसङ्काशमुत्पपाताङ्गदस्तदा ॥ ८६ ॥
तस्योत्पतनवेगेन निर्धूतास्तत्र राक्षसाः।
भूमौ निपतिताः सर्वे राक्षसेन्द्रस्य पश्यतः ॥ ८७ ॥
ततः प्रासादशिखरं शैलशृङ्गमिवोन्नतम्।
चक्राम राक्षसेन्द्रस्य वालिपुत्रः प्रतापवान ॥ ८८ ॥
पफाल च तदाक्रान्तं दशग्रीवस्य पश्यतः।
पुरा हिमवतः शृङ्गं वज्रेनेव विदारितम् ॥ ८९ ॥
भंक्त्वा प्रासादशिखरं नाम विश्राव्य चात्मनः।
विनद्य सुमहानादमुत्पपात विहायसा ॥ ९० ॥
व्यथयन् राक्षसान् सर्वान् हर्षयंश्चापि वानरान्।
स वानराणां मध्ये तु रामपार्श्वमुपागतः ॥ ९१ ॥
रावणस्तु परञ्चक्रे क्रोधं प्रासादधर्षणात्।

ग्राहयामास स्वेच्छया ग्रहणं कारयामास। किमर्थमिदं तत्राह,—बलमित्यादि ॥ ८५ ॥

बलमेव दर्शयति। स तानित्यादि ॥ ८६ ॥ ८७ ॥

वालिपुत्रः प्रासादशिखरं ददर्शेति शेषः। दृष्ट्वा च तच्चक्राम पदाक्रान्तवान् ॥ ८८ ॥

विनाशञ्चात्मनः पश्यन् निःश्वासपरमोऽभवत् ॥ ९२ ॥
रामस्तु बहुभिर्हृष्टैर्विनदद्भिः प्लवङ्गमैः ।
वृतो रिपुवधाकाङ्क्षी युद्धायैवाभिवर्त्तत ॥ ९३ ॥
सुषेणस्तु महावीर्य्यो गिरिकूटोपमो हरिः ।
बहुभिः संवृतस्तत्र वानरैः कामरूपिभिः ॥ ९४ ॥
स तु द्वाराणि संयम्य सुग्रीववचनात् कपिः ।
पर्य्यक्रामत दुर्द्धर्षो नक्षत्राणीव चन्द्रमाः ॥ ९५ ॥
तेषामक्षौहिणिशतं समवेक्ष्य वनौकसाम् ।
लङ्कामुपनिविष्टानां सागरञ्चाभिवर्त्तताम् ॥ ९६ ॥
राक्षसा विस्मयं जग्मुस्त्रासं जग्मुस्तथापरे ।
अपरे समरे हर्षाद्धर्षमेवोपपेदिरे ॥ ९७ ॥

तदाक्रान्तञ्च प्रासादशिखरं पश्यतो दशग्रीवस्य पपात शतधा विशीर्णमभूत् ॥ ८९ ॥ ९० ॥ ९१ ॥

पश्यन्निति। एकोऽपि समग्रं मम बलं पराभूय निर्भयं गच्छति एवंविधेष्वनेकेषु मन्नाशोऽद्य तेषु कथं जीवनमिति पर्य्यालोचयन्नित्यर्थः॥ ९२ ॥

युद्धायैवाभिवर्त्तत। अभ्यवर्त्तत ॥ ९३ ॥ ९४ ॥

पर्य्यक्रामत सर्वबलरक्षार्थं सर्वद्वारवृत्तान्तग्रहणार्थञ्च। नक्षत्राणि अश्विन्यादीनि ॥ ९५ ॥

अक्षौहिणिशतम्। आर्षो ह्रस्वः। अक्षौहिण्यामिति वृद्धिः।

कृत्स्नं हि कपिभिर्व्याप्तं प्राकारपरिखान्तरम्।
ददृशू राक्षसा दीनाः प्राकारं वानरीकृतम्॥ ९८॥
हाहाकारमकुर्वन्त राक्षसा भयमागताः॥ ९९॥

तस्मिन् महाभीषणके प्रवृत्ते
कोलाहले राक्षसराजयोधाः।
प्रगृह्य रक्षांसि महायुधानि
युगान्तवाता इव संविचेरुः॥ १००॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
एकचत्वारिंशः सर्गः॥ ४१॥

यावन्तोऽक्षौहिण्यां गजाश्वरथिपदातयस्तत्संख्या वानरा इत्यर्थः। शत-शब्दोऽनन्तवाची। सागरश्चाभिवर्त्ततां। सागरपर्य्यन्तमभिव्याप्य वर्त्त-मानामामित्यर्थः॥ ९६॥ ९७॥

वानरीकृतं वानररूपनिर्मितरूपमिव कृतम्॥ ९८॥ ९९॥

राक्षसराजयोधरूपाणि रक्षांसीत्यर्थः॥ १००॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे एकचत्वारिंशः सर्गः॥ ४१॥



## द्विचत्वारिंशः सर्गः

ततस्ते राक्षसास्तत्र गत्वा रावणमन्दिरम् ।
न्यवेदयन् पुरीं रुद्धां रामेण सह वानरैः ॥ १ ॥
रुद्धान्तु नगरीं श्रुत्वा जातक्रोधो निशाचरः ।
विधानं द्विगुणं श्रुत्वा प्रासादञ्चाप्यरोहत ॥ २ ॥
स ददर्शावृतां लङ्कां सशैलवनकाननाम् ।
असंख्येयैर्हरिगणैः सर्वतो युद्धकाङ्क्षिभिः ॥ ३ ॥
स दृष्ट्वा वानरैः सर्वैर्वसुधां कपिलीकृताम् ।
कथं क्षपयितव्याः स्युरिति चिन्तापरोऽभवत् ॥ ४ ॥
स चिन्तयित्वा सुचिरं धैर्य्यमालम्ब्य रावणः ।
राघवं हरियूथांश्च ददर्शायतलोचनः ॥ ५ ॥
राघवः सह सैन्येन मुदितो नाम पुप्लुवे ।
लङ्कां ददर्श गुप्तां वै सर्वतो राक्षसैर्वृताम् ॥ ६ ॥

तत इति ॥ १ ॥

विधानम् । द्वारायां रक्षाविधानमित्यर्थः ॥ २ ॥ ३ ॥

कपिलीकृतां कपिलवर्णवत्सदृशीकृताम् ॥ ४ ॥ ५ ॥

दृष्ट्वा दाशरथिर्लङ्कां चित्रध्वजपताकिनीम् ।
जगाम मनसा सीतां दूयमानेन चेतसा ॥ ७ ॥
अत्र सा मृगशावाक्षी मत्कृते जनकात्मजा ।
पीड्यते शोकसन्तप्ता कृशा स्थण्डिलशायिनी ॥ ८ ॥
निपीड्यमानां धर्मात्मा वैदेहीमनुचिन्तयन् ।
क्षिप्रमाज्ञापयद्रामो वानरान् द्विषतां वधे ॥ ९ ॥
एवमुक्ते तु वचसि रामेणाक्लिष्टकर्मणा ।
सङ्घर्षमाणाः प्लवगाः सिंहनादैरपूरयन् ॥ १० ॥
शिखरैर्विकिरामैतां लङ्कां मुष्टिभिरेव वा ।
इति स्म दधिरे सर्वे मनांसि हरियूथपाः ॥ ११ ॥
उद्यम्य गिरिशृङ्गाणि महान्ति शिखराणि च ।

मुदितः पुप्लुवे। नामशब्दो वाक्यालङ्कारे। प्राकारसमीपमिति शेषः। रामाधिरूढवानरप्लवनं रामे उपचर्य्यते ॥ ६ ॥

मनसा जगाम सस्मार ॥ ७ ॥

मत्कृते मन्निमित्तं शोकसन्तप्तापि पीड्यते। मदर्थं रामस्यैवं महाक्लेशो जायत इति खिन्ना भवतीत्यर्थः ॥ ८ ॥

निपीड्यमानाम् उत्तरीत्येति शेषः। आज्ञापयत् आज्ञाप्तवान् ॥ ९ ॥

सङ्घर्षमाणाः अग्रे भवितुं परस्परं स्पर्धमानाः ॥ १० ॥

विकिराम विदारयाम ॥ ११ ॥

तरूंश्चोत्पाट्य विविधांस्तिष्ठन्ति हरियूथपाः ॥ १२ ॥

प्रेक्षतो राक्षसेन्द्रस्य तान्यनीकानि भागशः ।

राघवप्रियकामार्थं लङ्कामारुरुहुस्तदा ॥ १३ ॥

ते ताम्रवक्त्रा हेमाभा रामार्थे त्यक्तजीविताः ।

लङ्कामेवाभ्यवर्तन्त सालभूधरयोधिनः ॥ १४ ॥

ते द्रुमैः पर्वताग्रैश्च मुष्टिभिश्च प्लवङ्गमाः ।

प्राकाराग्राण्यसंख्यानि ममन्थुस्तोरणानि च ॥ १५ ॥

परिखान् पूरयन्तश्च प्रसन्नसलिलाशयान् ।

पांसुभिः पर्वताग्रैश्च तृणैः काष्ठैश्च वानराः ॥ १६ ॥

ततः सहस्रयूथाश्च कोटियूथाश्च यूथपाः ।

कोटियूथशताश्चान्ये लङ्कामारुरुहुस्तदा ॥ १७ ॥

काञ्चनानि प्रमर्दन्तस्तोरणानि प्लवङ्गमाः ।

कैलासशिखराग्राणि गोपुराणि प्रमथ्य च ॥ १८ ॥

आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ।

गिरिशृङ्गाणि सूक्ष्माणि । शृङ्गं स्यात् पर्वतस्याग्रे शिखरे खड्ग-शैलके इति निघण्टुः ॥ १२ ॥

प्रेक्षतः । प्रेक्षन्तमनादृत्येत्यर्थः । राघवस्य प्रियो यः कामो मनोरथस्तत् सिद्ध्यर्थम् । आरुरुहुर्लङ्कां लङ्काप्राकारमित्यर्थः ॥ १३ ॥ ॥ १४ ॥ १५ ॥

परिखानिति पुंस्त्वमार्षम् ॥ १६ ॥ १७ ॥

लङ्कां तामभिधावन्ति महावारणसन्निभाः ॥ १९ ॥
जयत्युरुबलो रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ २० ॥
इत्येवं घोषयन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
अभ्यधावन्त लङ्कायाः प्राकारं कामरूपिणः ॥ २१ ॥
वीरबाहुः सुबाहुश्च नलश्च पनसस्तथा ।
निपीड्योपनिविष्टास्ते प्राकारं हरियूथपाः ।
एतस्मिन्नन्तरे चक्रुः स्कन्धावारनिवेशनम् ॥ २२ ॥
पूर्वद्वारन्तु कुमुदः कोटिभिर्दशभिर्वृतः ।
आवृत्य बलवांस्तस्थौ हरिभिर्जितकाशिभिः ॥ २३ ॥

काञ्चनानि तन्मयानि । कैलासशिखराग्राणि तद्वदुच्चावचानि गोपुराणि ॥ १८ ॥

आप्लवन्तः समन्तात् प्लवन्तः । प्लवन्तः प्राकाराभिमुखं प्लवन्तः ॥ ॥ १९ ॥ २० ॥ २१ ॥

प्राकारं निपीड्योपनिविष्टा इति सेनाप्रवेशार्थं बहिःप्राकारं भंक्त्वा स्थिताः । एतस्मिन्नन्तरे बहिःप्राकारं भंक्त्वा सेनाप्रवेशसमये । स्कन्धावारस्य सेनानिवेशस्य निवेशनं व्यूहभावेन स्थापनम् ॥ २२ ॥

तत्प्रकारः पूर्वद्वारमित्यादि । पूर्वादिशब्दाद्दैशानाग्निनिर्ऋतिवायुदिक्पराः । नीलादीनां साक्षात् पूर्वादिद्वारनिरोधकतायाः प्रागुक्तत्वात् । एवञ्च तदुपोद्बलनार्थमेषां तत्तत् कोणे स्थितिः । पूर्वद्वारं पूर्वद्वारोपदिशमित्यर्थः ॥ २३ ॥

सहायार्थे तु तस्यैव निविष्टः प्रघसो हरिः।
पनसश्च महाबाहुर्वानरैरभिसंवृतः॥ २४ ॥
दक्षिणद्वारमासाद्य वीरः शतबलिः कपिः।
आवृत्य बलवांस्तस्थौ विंशत्या कोटिभिर्वृतः॥ २५ ॥
सुषेणः पश्चिमद्वारं गत्वा तारापिता बली।
आवृत्य बलवांस्तस्थौ कोटिकोटिभिरावृतः॥ २६ ॥
उत्तरद्वारमागम्य रामः सौमित्रिणा सह।
आवृत्य बलवांस्तस्थौ सुग्रीवश्च हरीश्वरः॥ २७ ॥
गोलाङ्गूलो महाकायो गवाक्षो भीमदर्शनः।
वृतः कोव्या महावीर्य्यस्तस्थौ रामस्य पार्श्वतः॥ २८ ॥
ऋक्षाणां भीमकोपानां धूम्रः शत्रुनिबर्हणः।
वृतः कोव्या महावीर्य्यस्तस्थौ रामस्य पार्श्वतः॥ २९ ॥
सन्नद्धस्तु महावीर्य्यो गदापाणिर्विभीषणः।
वृतो यत्तैस्तु सचिवैस्तस्थौ यत्र महाबलः॥ ३० ॥
गजो गवाक्षो गवयः शरभो गन्धमादनः।
समन्तात् परिधावन्तो ररक्षुर्हरिवाहिनीम्॥ ३१ ॥

तस्यैव ईशानदिग्वर्त्तिकुमुदस्यैव॥ २४ ॥ २५॥ २६ ॥
सुग्रीवश्चेति। अयञ्च वायुकोणस्थ इति प्रागेवोक्तम्॥ २७॥
॥ २८ ॥ २९ ॥
यत्र महाबलो रामस्तत्र तस्थावित्यन्वयः॥ ३० ॥

ततः कोपपरीतात्मा रावणो राक्षसेश्वरः ।
निर्य्याणं सर्वसैन्यानां द्रुतमाज्ञापयत्तदा ॥ ३२ ॥
एतच्छ्रुत्वा तदा वाक्यं रावणस्य मुखेरितम् ।
सहसा भीमनिर्घोषमुद्घुष्टं रजनीचरैः ॥ ३३ ॥
ततः प्रबोधिता भेर्य्यश्चन्द्रपाण्डुरपुष्कराः ।
हेमकोणैरभिहता राक्षसानां समन्ततः ॥ ३४ ॥
विनेदुश्च महाघोषाः शङ्खाः शतसहस्रशः ।
राक्षसानां सुघोराणां मुखमारुतपूरिताः ॥ ३५ ॥
ते बभुः शुक्लनीलाङ्गाः सशङ्खा रजनीचराः ।
विद्युन्मण्डलसन्नद्धाः सबलाका इवाम्बुदाः ॥ ३६ ॥
निष्पतन्ति ततः सैन्या हृष्टा रावणचोदिताः ।
समये पूर्य्यमाणस्य वेगा इव महोदधेः ॥ ३७ ॥

गवाक्ष इति। अयं गवाक्षो रामपार्श्वस्थगवाक्षादन्यो ज्ञेयः ॥ ॥ ३१ ॥ ३२ ॥

एतद्वाक्यं निर्य्याणाज्ञावाक्यम्। भीमनिर्घोषं यथा तथा रजनीचरैरुद्घुष्टम् उद्घोषितमभूत् ॥ ३३ ॥

चन्द्रवत् पाण्डुराणि पुष्कराणि मुखानि यासां ताः। पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले इत्यमरः। हेमकोणैरभिहताः स्वर्णमयवादनदण्डाभिहताः ॥ ३४ ॥ ३५ ॥

विद्युन्मण्डलसन्नद्धत्वस्थाने राक्षसेषु भूषणभूषितत्वं ज्ञेयम् ॥ ३६ ॥

ततो वानरसैन्येन मुक्तो नादः समन्ततः ।
मलयः पूरितो येन ससानुप्रस्थकन्दरः ॥ ३८ ॥
शङ्खदुन्दुभिनिर्घोषः सिंहनादस्तरस्विनाम् ।
पृथिवीं चान्तरिक्षञ्च सागरञ्चाभ्यनादयत् ॥ ३९ ॥
गजानां बृंहितैः सार्द्धं हयानां ह्रेषितैरपि ।
रथानान्नेमिनिर्घोषै रक्षसां पदनिःस्वनैः ॥ ४० ॥
एतस्मिन्नन्तरे घोरः संग्रामः समपद्यत ।
रक्षसां वानराणाञ्च यथा देवासुरे पुरा ॥ ४१ ॥
ते गदाभिः प्रदीप्ताभिः शक्तिशूलपरश्वधैः ।
निजघ्नुर्वानरान् सर्वान् कथयन्तः स्वविक्रमान् ॥ ४२ ॥
तथा वृक्षैर्महाकायाः पर्वताग्रैश्च वानराः ।
निजघ्नुस्तानि रक्षांसि नखैर्दन्तैश्च वेगिनः ॥ ४३ ॥

सैन्याः । सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते इत्यमरः । समये प्रलयकाले पूर्य्यमाणस्य महार्णवस्येति शेषः । वेगास्तरङ्गाः ॥३७॥

येन अतिदूरवर्त्तीमलयोऽपि पूरितः स्यात्तादृशो नादो मुक्तः । सानुर्महाप्रस्थः । प्रस्थः क्षुद्रः ॥ ३८ ॥

अभ्यनादयत् प्रतिध्वनियुक्तानकरोत् ॥ ३९ ॥

गजानां बृंहितैरित्यादीनामभ्यनादयन्नित्यनेनान्वयः ॥ ४० ॥

देवासुरे तत् युद्धे ॥ ४१ ॥ ४२ ॥

वृक्षा मृदूनां युद्धसाधनानि । पर्वताग्रादीनि क्रूरक्रूरतराणामिति विवेकः ॥ ४३ ॥

राजा जयति सुग्रीव इति शब्दो महानभूत्।
राजन् जयजयेत्युक्त्वा स्व स्व नामकथान्ततः॥ ४४॥
राक्षसास्त्वपरे भीमाः प्राकारस्था महीं गतान्।
वानरान् भिन्दिपालैश्च शूलैश्चैव व्यदारयन्॥ ४५॥
वानराश्चापि संक्रुद्धाः प्राकारस्थान् महीं गताः।
राक्षसान् पातयामासुः खमाप्लुत्य स्वबाहुभिः॥ ४६॥
स सम्प्रहारस्तुमुलो मांसशोणितकर्दमः।
रक्षसां वानराणाञ्च सम्बभूवाद्भुतोपमः॥ ४७॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
द्विचत्वारिंशः सर्गः॥ ४२॥

राजन् रावणजयजयेति राक्षसामुक्तिः। स्व स्व नामरूपां यथा शब्दश्चोक्त्वा वानरान् व्यदारयन्निति सम्बन्धः॥ ४४॥

अत्र राक्षसास्त्वपरे इत्यर्द्धं प्रक्षिप्तमिति कतकः॥ ४५॥ ४६॥ ४७॥

एतत् युद्धोत्तरं प्रत्यवहारः सेनाया इति भारताल्लभ्यते।
ततः प्रत्यवहारोऽभूत् सैन्यानां राघवाज्ञया॥
ततो निविशमानांस्तान् सैनिकान् रावणानुगाः।
अभिजग्मुर्गणा एके पिशाचक्षुद्ररक्षसाम्॥
ततोऽभिपततां तेषामदृश्यानां दुरात्मनाम्।
अन्तर्द्धानवधं तत्रश्चकार स विभीषण इति तत्रोक्तम्॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे द्विचत्वारिंशः सर्गः॥ ४२॥

---

## त्रिचत्वारिंशः सर्गः ।

युध्यतान्तु ततस्तेषां वानराणां महात्मनाम् ।
रक्षसां सम्बभूवाथ बलरोषः सुदारुणः ॥ १ ॥
ते हयैः काञ्चनापीडैर्गजैश्चाग्निशिखोपमैः ।
रथैश्चादित्यसङ्काशैः कवचैश्च मनोरमैः ॥ २ ॥
निर्ययू राक्षसा वीरा नादयन्तो दिशो दश ।
राक्षसा भीमकर्माणो रावणस्य जयैषिणः ॥ ३ ॥
वानराणामपि चमूर्बृहती जयमिच्छताम् ।
अभ्यधावत तां सेनां रक्षसां घोरकर्मणाम् ॥ ४ ॥
एतस्मिन्नन्तरे तेषामन्योऽन्यमभिधावताम् ।
रक्षसां वानराणाञ्च द्वन्द्वयुद्धमवर्त्तत ॥ ५ ॥

बलरोषः परस्परबलदर्शनजो रोषः । एतावद्दिनयुद्धेऽपि बहव एव तिष्ठन्तीत्येवं रोष इति भावः ॥ १ ॥
काञ्चनापीडैः काञ्चनभूषणवद्भिः । अग्निशिखोपमैस्तद्वद्दुर्द्धर्षैः ॥ २ ॥
निर्ययुरिति । अनेन वाल्मीकिनापि प्रत्यवहारो ध्वनितः ॥ ३ ॥ ४ ॥
अन्योऽन्यमभिधावताम् । द्वन्द्वयुद्धार्थमिति भावः ॥ ५ ।

अङ्गदेनेन्द्रजित्सार्द्धं वालिपुत्रेण राक्षसः।
अयुद्ध्यत महातेजास्त्र्यम्बकेण यथान्धकः॥ ६॥
प्रजंघेन च सम्पातिर्नित्यं दुर्द्धर्षणो रणे।
जम्बुमालिनमारब्धो हनूमानपि वानरः॥ ७॥
सङ्गतस्तु महाक्रोधो राक्षसो रावणानुजः।
समरे तीक्ष्णवेगेन शत्रुघ्नेन विभीषणः॥ ८॥
तपनेन गजः सार्द्धं राक्षसेन महाबलः।
निकुम्भेन महातेजा नीलोऽपि समयुद्ध्यत॥ ९॥
वानरेन्द्रस्तु सुग्रीवः प्रघसेन सुसङ्गतः।
सङ्गतः समरे श्रीमान् विरूपाक्षेण लक्ष्मणः॥ १०॥
अग्निकेतुः सुदुर्द्धर्षो रश्मिकेतुश्च राक्षसः।
मित्रघ्नो यज्ञकोपश्च रामेण सह सङ्गताः॥ ११॥
वज्रमुष्टिश्च मैन्देन द्विविदेनाशनिप्रभः।
राक्षसाभ्यां सुघोराभ्यां कपिमुख्यौ समागतौ॥ १२॥
वीरः प्रतपनो घोरो राक्षसो रणदुर्द्धरः।

तान्येव द्वन्द्वयुद्धान्याह,—अङ्गदेनेति॥ ६॥

प्रजंघेन तदाख्यरक्षसा। सम्पातिस्तु त्रिभिर्बाणैः प्रजंघेन समाहत इति लिङ्गात्। दुर्द्धर्षणः दुःसहः। आरब्धो युद्धमारब्धवान्॥ ७॥

शत्रुघ्नेन तदाख्यरक्षसा। मित्रघ्नेनेति क्वचित् पाठः॥ ८॥ ९॥ १०॥ ११॥

समरे तीक्ष्णवेगेन नलेन समयुध्यत ॥ १३ ॥
धर्मस्य पुत्रो बलवान् सुषेण इति विश्रुतः ।
स विद्युन्मालिना सार्द्धमयुध्यत महाकपिः ॥ १४ ॥
वानराश्च परे घोरा राक्षसैरपरैः सह ।
द्वन्द्वं समीयुः सहसा युद्धा च बहुभिः सह ॥ १५ ॥
तत्रासीत् सुमहत् युद्धं तुमुलं रोमहर्षणम् ।
रक्षसां वानराणाञ्च वीराणां जयमिच्छताम् ॥ १६ ॥
हरिराक्षसदेहेभ्यः प्रसृताः केशशाद्वलाः ।
शरीरसङ्घाटवहाः प्रसुस्रुः शोणितापगाः ॥ १७ ॥
आजघानेन्द्रजित् क्रुद्धो वज्रेणेव शतक्रतुः ।
अङ्गदं गदया वीरं शत्रुसैन्यविदारणम् ॥ १८ ॥
तस्य काञ्चनचित्राङ्गं रथं साश्वं ससारथिम् ।
जघान गदया श्रीमान् अङ्गदो वेगवान् हरिः ॥ १९ ॥
सम्पातिस्तु प्रजङ्घेन त्रिभिर्वाणैः समाहतः ।

राक्षसाभ्यां वज्रमुष्ट्यशनिप्रभाभ्याम् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

केशैः शाद्वलवन्त्यः केशशाद्वलाः । शरीराण्येव सङ्घाटाः काष्ठसञ्चयास्तद्वहाः । प्रसुस्रुः प्रसुस्रुवुरित्यर्थः ॥ १७ ॥

अनुक्रान्तानां क्रमेण युद्धकथनमाजघानेति । शत्रुसैन्यविदारण-मित्यङ्गदविशेषणम् ॥ १८ ॥

तस्येन्द्रजितः तस्य रथं तस्यैव गदया स्वापहृतया जघान ॥ १९ ॥

निजघानाश्वकर्णेन प्रजङ्घं रणमूर्द्धनि ॥ २० ॥
जम्बुमाली रथस्थस्तु रथशक्त्या महाबलः ।
बिभेद समरे क्रुद्धो हनूमन्तं स्तनान्तरे ॥ २१ ॥
तस्य तं रथमास्थाय हनूमान् मारुतात्मजः ।
प्रममाथ तलेनाशु सह तेनैव रक्षसा ॥ २२ ॥
नदन् प्रतपनो घोरो नलं सोऽभ्यनुधावत ।
नलः प्रतपनस्याशु पातयामास चक्षुषी ॥ २३ ॥
भिन्नगात्रः शरैस्तीक्ष्णैः चिप्रहस्तेन रक्षसा ।
ग्रसन्तमिव सैन्यानि प्रघसं वानराधिपः ॥ २४ ॥
सुग्रीवः सप्तपर्णेन निजघान जवेन च ।
प्रपीड्य शरवर्षेण राक्षसं भीमदर्शनम् ॥ २५ ॥
निजघान विरूपाक्षं शरेणैकेन लक्ष्मणः ।
अग्निकेतुश्च दुर्द्धर्षो रश्मिकेतुश्च राक्षसः ।

अश्वकर्णो वृक्षविशेषः। तेन प्रजङ्घमाजघान। सम्पातिरित्यनुकर्षः ॥ २० ॥

*रथस्था शक्तिः रथशक्तिः* ॥ २१ ॥

तेन रक्षसा सह तस्य रथं प्रममाथ। तेन जम्बुमाली मृत इति गम्यते ॥ २२ ॥ २३ ॥

तीक्ष्णैः शरैर्भिन्नगात्रो नलः प्रतपनस्य चक्षुषी पातयामास। नखैराकृष्येति शेषः। ग्रसन्तमित्यादिना प्रघससुग्रीवयोः ॥ २४ ॥

मित्रघ्नो यज्ञकोपश्च राममादीपयच्छरैः ॥ २६ ॥
तेषां चतुर्णां रामस्तु शिरांसि समरे शरैः ।
क्रुद्धश्चतुर्भिश्चिच्छेद घोरैरग्निशिखोपमैः ॥ २७ ॥
वज्रमुष्टिस्तु मैन्देन मुष्टिना निहतो रणे ।
पपात सरथः साश्वः सुराट्ट इव भूतले ॥ २८ ॥
निकुम्भस्तु रणे नीलं नीलाञ्जनचयप्रभम् ।
निर्बिभेद शरैस्तीक्ष्णैः करैर्मेघमिवांशुमान् ॥ २९ ॥
पुनः शरशतेनाथ क्षिप्रहस्तो निशाचरः ।
बिभेद समरे नीलं निकुम्भः प्रजहास च ॥ ३० ॥
तस्यैव रथचक्रेण नीलो विष्णुरिवाहवे ।
शिरश्चिच्छेद समरे निकुम्भस्य च सारथेः ॥ ३१ ॥
वज्राशनिसमस्पर्शो द्विविदस्त्व शमप्रभम् ।
जघान गिरिशृङ्गेण मिषतां सर्वरक्षसाम् ॥ ३२ ॥
द्विविदं वानरेन्द्रं तं द्रुमयोधिनमाहवे ।
शरैरशनिसङ्काशैः स विव्याधाशनिप्रभः ॥ ३३ ॥

सप्तपर्णा वृक्षविशेषः ॥ २५ ॥ २६ ॥
चतुर्भिश्चिच्छेद नाभिकैरित्यर्थः ॥ २७ ॥
अट्टः क्षौममिति कतकः । विमानमित्यन्ये ॥ २८ ॥ २९ ॥ ३० ॥
रथस्य चक्रं रथचक्रम् । निकुम्भस्य च निकुम्भस्य तत् सारथेश्च शिरश्चिच्छेदः ॥ ३१ ॥

स शरैरभिविद्धाङ्गो द्विविदः क्रोधमूर्च्छितः।
सालेन सरथं साश्वं निजघानाशनिप्रभम्॥ ३४॥
विद्युन्माली रथस्थस्तु शरैः काञ्चनभूषणैः।
सुषेणं ताडयामास ननाद च मुहुर्मुहुः॥ ३५॥
तं रथस्थमथो दृष्ट्वा सुषेणो वानरोत्तमः।
गिरिशृङ्गेण महता रथमाशु न्यपातयत्॥ ३६॥
लाघवेन तु संयुक्तो विद्युन्माली निशाचरः।
अपक्रम्य रथात्तूर्णं गदापाणिः क्षितौ स्थितः॥ ३७॥
ततः क्रोधसमाविष्टः सुषेणो हरिपुङ्गवः।
शिलां सुमहतीं गृह्य निशाचरमभिद्रवत्॥ ३८॥
तमापतन्तं गदया विद्युन्माली निशाचरः।
वक्षस्यभिजघानाशु सुषेणं हरिपुङ्गवम्॥ ३९॥
गदाप्रहारं तं घोरमचिन्त्य प्लवगोत्तमः।
तां तूष्णीं पातयामास तस्योरसि महामृधे॥ ४०॥
शिलाप्रहाराभिहतो विद्युन्माली निशाचरः।
निष्पिष्टहृदयो भूमौ गतासुर्निपपात ह॥ ४१॥

वज्राशनिसमस्पर्शैः। तथा क्रूरमुष्टिप्रहार इत्यर्थः॥ ३२॥ ३३॥
॥ ३४॥ ३५॥ ३६॥

अपक्रम्यापसृत्य॥ ३७॥ ३८॥ ३९॥

अचिन्त्या चिन्तयित्वा। तां पूर्वगृहीतां शिलाम्॥ ४०॥ ४१॥

एवं तैर्वानरैः शूरैः शूरास्ते रजनीचराः ।
द्वन्द्वे विमथितास्तत्र दैत्या इव दिवौकसैः ॥ ४२ ॥
भग्नैश्चान्यैर्गदाभिश्च शक्तितोमरसायकैः ।
अपविद्धैश्चापि रथैस्तथा सांग्रामिकैर्हयैः ॥ ४३ ॥
निहतैः कुञ्जरैर्मत्तैस्तथा वानरराक्षसैः ।
चक्राक्षयुगदण्डैश्च भग्नैर्धरणिसंश्रितैः ॥ ४४ ॥
बभूवायोधनं घोरं गोमायुगणसेवितम् ।
कबन्धानि समुत्पेतुर्दिक्षु वानररक्षसाम् ॥ ४५ ॥
विमर्दे तुमुले तस्मिन् देवासुररणोपमे ॥ ४६ ॥

विहन्यमाना हरिपुङ्गवैस्तदा
निशाचराः शोणितगन्धमूर्च्छिताः ।
पुनः सुयुद्धं तरसा समाश्रिता
दिवाकरस्यास्तमयाभिकाङ्क्षिणः ॥ ४७ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

दिवौकसैर्देवैः । आर्षप्रयोगः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥
अस्तमयाभिकाङ्क्षिणः । रात्रौ रक्षसां बलाधिक्यात् ॥ ४७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

# चतुश्चत्वारिंशः सर्गः ।

युध्यतामेव तेषान्तु तदा वानररक्षसाम् ।
रविरस्तं गतो रात्रिः प्रवृत्ता प्राणहारिणी ॥ १ ॥
अन्योऽन्यं बद्धवैराणां घोराणां जयमिच्छताम् ।
सम्प्रवृत्तं निशायुद्धं तदा वानररक्षसाम् ॥ २ ॥
राक्षसोऽसीति हरयो वानरोऽसीति राक्षसाः ।
अन्योऽन्यं समरे जघ्नुस्तस्मिंस्तमसि दारुणे ॥ ३ ॥
हत दारय चैहीति कथं विद्रवसीति च ।
एवं सुतुमुलः शब्दस्तस्मिन् सैन्ये तु शुश्रुवे ॥ ४ ॥

युध्यतामिति ॥ १ ॥

निशायुद्धं प्रवृत्तम् । परस्परं बहुसेनादर्शनजदोषादिति भावः । पौषपौर्णमास्यां सुवेलारोहणस्य स्पष्टप्रतीतेः । सेनाविभागादिना पौषे कृष्णेऽतीते माघशुक्लप्रतिपदि युद्धारम्भे बहुदिनपर्यन्तं सङ्कुलं युद्धं सामान्येन उक्तम् । तदुत्तरनिवेदने चेदं निशायुद्धं प्रवृत्तम् । ततो ऽह्नि महायुद्धं सङ्कुलं कपिरक्षसाम् । मध्याह्ने प्रथमं युद्धं प्रारब्धं प्रतिपद्यभूदिति पाद्मोक्तेः । अत्र प्रकरणे तमसि दुष्पारे तमसि दारुणे इति वारं वारं वाल्मीक्युक्तेरिदं रात्रियुद्धं कृष्णपक्षान्त्यदिनेष्विति प्रतीयते । अत्र तत्त्वं वक्ष्यामः ॥ २ ॥ ३ ॥

कालाः काञ्चनसन्नाहास्तस्मिंस्तमसि राक्षसाः।
सम्प्रदृश्यन्त शैलेन्द्रा दीप्तौषधिवना इव ॥ ५ ॥
तस्मिंस्तमसि दुष्पारे राक्षसाः क्रोधमूर्च्छिताः।
परिपेतुर्महावेगा भक्षयन्तः प्लवङ्गमान् ॥ ६ ॥
ते हयान् काञ्चनापीडान् ध्वजांश्चाशीविषोपमान्।
आप्लुत्य दशनैस्तीक्ष्णैर्भीमकोपा व्यदारयन् ॥ ७ ॥
वानरा बलिनो युद्धेऽक्षोभयन् राक्षसीञ्चमूम्।
कुञ्जरान् कुञ्जरारोहान् पताकाध्वजिनो रथान् ॥ ८ ॥
चकर्षुश्च ददंशुश्च दशनैः क्रोधमूर्च्छिताः।
लक्ष्मणश्चापि रामश्च शरैराशीविषोपमैः ॥ ९ ॥
दृश्यादृश्यानि रक्षांसि प्रवराणि निजघ्नतुः।
तुरङ्गखुरविध्वस्तं रथनेमिसमुत्थितम् ॥ १० ॥
रुरोध कर्णनेत्राणि युध्यतां धरणीरजः।

हत। इदं हन्तेर्लोटि मध्यमपुरुषबहुवचनम्। हननं कुर्वतेत्यर्थः। दारय विदारणं कुरु। एहि आगच्छ। कथं विस्रवसि कथं पलायसे एवं तुमुलः शब्दस्तस्मिन् सैन्ये सुश्रुवे ॥ ४ ॥

कालाः कृष्णवर्णाः। काञ्चनसन्नाहाः सुवर्णकवचाः ॥ ५ ॥ ६ ॥ ७ ॥

अक्षोभयन्निति पदम्। पताकाध्वजिनः पताकोपेतध्वजवन्तः ॥ ॥ ८ ॥ ९ ॥

प्रवराणि श्रेष्ठानि ॥ १० ॥

वर्त्तमाने तथा घोरे संग्रामे लोमहर्षणे ।
रुधिरौघा महाघोरा नद्यस्तत्र विसुस्रवुः ॥ ११ ॥
ततो भेरीमृदङ्गानां पणवानाञ्च निःस्वनः ।
शङ्खनेमिस्वनोन्मिश्रः सम्बभूवाद्भुतोपमः ॥ १२ ॥
हतानां स्तनमानानां राक्षसानाञ्च निःस्वनः ।
शस्तानां वानराणाञ्च सम्बभूवात्र दारुणः ॥ १३ ॥
हतैर्वानरमुख्यैश्च शक्तिशूलपरश्वधैः ।
निहतैः पर्वताकारै राक्षसैः कामरूपिभिः ॥ १४ ॥
शस्त्रपुष्पोपहारा च तत्रासीत् युद्धमेदिनी ।
दुर्ज्ञेया दुर्निवेशा च शोणितास्रावकर्दमा ॥ १५ ॥
सा बभूव निशा घोरा हरिराक्षसहारिणी ।
कालरात्रीव भूतानां सर्वेषां दुरतिक्रमा ॥ १६ ॥
ततस्ते राक्षसास्तत्र तस्मिंस्तमसि दारुणे ।
राममेवाभ्यवर्त्तन्त संहृष्टाः शरवृष्टिभिः ॥ १७ ॥

रथनेमिसमुद्धतं रजो युध्यतां कर्णनेत्राणि ररोध ॥ ११ ॥ १२ ॥
स्तनमानानां स्तनताम् । शस्तानां हिंसितानाम् ॥ १३ ॥
कामरूपिभिरुपलक्षिता मेदिनी शस्त्राण्येव पुष्पोपहारो यस्यां तादृशीव आसीत् ॥ १४ ॥
शोणितानामास्रावैः कर्दमो यस्यां सा ॥ १५ ॥
कालरात्री संहाररात्रिः ॥ १६ ॥ १७ ॥

तेषामापततां शब्दः क्रुद्धानामपि गर्जताम् ।
उद्वर्त्त इव मत्तानां समुद्राणामभूत् स्वनः ॥ १८ ॥
तेषां रामः शरैः षड्भिः षड् जघान निशाचरान् ।
निमेषान्तरमात्रेण शरैरग्निशिखोपमैः ॥ १९ ॥
यज्ञशत्रुश्च दुर्द्धर्षो महापार्श्वमहोदरौ ।
वज्रदंष्ट्रो महाकायस्तौ चोभौ शुकसारणौ ॥ २० ॥
ते तु रामेण बाणौघैः सर्वमर्मसु ताड़िताः ।
युद्धादपसृतास्तत्र सावशेषायुषोऽभवन् ॥ २१ ॥
निमेषान्तरमात्रेण घोरैरग्निशिखोपमैः ।
दिशश्चकार विमलाः प्रदिशश्च महारथः ॥ २२ ॥
ये त्वन्ये राक्षसा वीरा रामस्याभिमुखे स्थिताः ।
तेऽपि नष्टाः समासाद्य पतङ्गा इव पावकम् ॥ २३ ॥
सुवर्णपुङ्खैर्विशिखैः सम्पतद्भिः समन्ततः ।
बभूव रजनी चित्रा खद्योतैरिव शारदी ॥ २४ ॥

उद्वर्त्ते प्रलयकाले ॥ १८ ॥

षड्भिः षड़िति प्रधानानिति शेषः ॥ १९ ॥

ते षड़्गण्यन्ते । यज्ञशत्रुरिति । दुर्द्धर्ष इति यज्ञशत्रोर्विशेषणम् । महाकाय इति वज्रदंष्ट्रस्य । इमौ शुकसारणौ चारत्वेन प्रेषिताभ्यामन्यावेवेति बहवः । ताविति पदस्वारस्याच्चारत्वेन प्रेषितावेवेमौ राज्ञाधिकृतावपि राजसन्निधिं परित्यज्य युद्धे स्मृतावित्यन्ये ॥ २० ॥

राक्षसानाञ्च निनदैर्भेरीणाञ्चैव निःस्वनैः ।
सा बभूव निशा घोरा भूयो घोरतराभवत् ॥ २५ ॥
तेन शब्देन महता प्रवृद्धेन समन्ततः ।
त्रिकूटः कन्दराकीर्णः प्रव्याहरदिवाचलः ॥ २६ ॥
गोलाङ्गूला महाकायास्तमसा तुल्यवर्चसः ।
सम्परिष्वज्य बाहुभ्यां भक्षयन् रजनीचरान् ॥ २७ ॥
अङ्गदस्तु रणे शत्रून् निहन्तुं समुपस्थितः ।
इन्द्रजित्तु रथं त्यक्त्वा हताश्वो हतसारथिः ।
अङ्गदेन महायस्तस्तत्रैवान्तरधीयत ॥ २८ ॥
तत् कर्म वालिपुत्रस्य सर्वे देवाः सहर्षिभिः ।
तुष्टुवुः पूजनार्हस्य तौ चोभौ रामलक्ष्मणौ ॥ २९ ॥
प्रभावं सर्वभूतानि विदुरिन्द्रजितो युधि ।
ततस्तेन महात्मानं दृष्ट्वा तुष्टाः प्रधर्षितम् ॥ ३० ॥
ततः प्रहृष्टाः कपयः ससुग्रीवविभीषणाः ।

यत सावशेषायुषोऽतो युद्धादपसृता अभवन् ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

घोरा सा निशा भूयो घोरतरा बभूव ॥ २५ ॥ २६ ॥

भक्षयन् अभक्षयन् ॥ २७ ॥

अङ्गदेन हताश्वोऽत एव महायस्तो महाखेदं प्राप्त इन्द्रजित् तत्रैवान्तरधीयतेत्यन्वयः ॥ २८ ॥ २९ ॥

साधु साध्विति नेदुश्च दृष्ट्वा शत्रुं पराजितम् ॥ ३१ ॥
इन्द्रजित्तु तदानेन निर्जितो भीमकर्मणा।
संयुगे वालिपुत्रेण क्रोधञ्चक्रे सुदारुणम् ॥ ३२ ॥
सोऽन्तर्द्धानगतः पापो रावणी रणकर्शितः।
ब्रह्मदत्तवरो वीरो रावणिः क्रोधमूर्च्छितः ॥ ३३ ॥
अदृश्यो निशितान् बाणान् मुमोचाशनिवर्च्चसः।
रामञ्च लक्ष्मणञ्चैव घोरैर्नागमयैः शरैः ॥ ३४ ॥
बिभेद समरे क्रुद्धः सर्वगात्रेषु राघवौ।
मायया संवृतस्तत्र मोहयन् राघवौ युधि ॥ ३५ ॥
अदृश्यः सर्वभूतानां कूटयोधी निशाचरः।
बबन्ध शरबन्धेन भ्रातरौ रामलक्ष्मणौ ॥ ३६ ॥
तौ तेन पुरुषव्याघ्रौ क्रुद्धेनाशीविषैः शरैः।
सहसाभिहतौ वीरौ तदा प्रैक्षन्त वानराः ॥ ३७ ॥

यतः इन्द्रजितो युधि प्रभावं विदुरतस्तेनाङ्गदेन तमिन्द्रजितं प्रधर्षितं दृष्ट्वा महात्मानं तमङ्गदं दृष्ट्वा तुष्टाः ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ॥ ३४ ॥ ३५ ॥

शरबन्धेन शरपरिणतनागपाशबन्धेन। अयं शरबन्धो भाद्रशुक्लाष्ट्यादिनेषु इत्यग्रे निरूपयिष्यामः ॥ ३६ ॥

अभिहतौ बद्धौ ॥ ३७ ॥

प्रकाशरूपस्तु यदा न शक्त-
स्तौ बाधितुं राक्षसराजपुत्रः ।
मायां प्रयोक्तुं समुपाजगाम
बबन्ध तौ राजसुतौ दुरात्मा ॥ ३८ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

उक्तानुवादः प्रकाशेत्यादि । समुपाजगाम उपचक्रमे । भ्रूभङ्ग-मात्रेण सर्वजगत्संहर्त्तुरपि भगवतो नागपाशबन्धनसहनं स्वकृत-मर्य्यादारूपब्रह्मवरदानपालनार्थम् । विरोधेनापि नित्यमात्मानं स्मरतो रावणस्य रावणेश्च परमभक्ततया कीर्त्तिर्लोकेषु वृद्ध्यर्थञ्चेति तत्त्वम् ॥ ३८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

## पञ्चचत्वारिंशः सर्गः ।

स तस्य गतिमन्विच्छन् राजपुत्त्रः प्रतापवान् ।
दिदेशातिबलो रामो दशवानरयूथपान् ॥ १ ॥
द्वौ सुषेणस्य दायादौ नीलञ्च प्लवगाधिपम् ।
अङ्गदं वालिपुत्त्रञ्च शरभञ्च तरस्विनम् ॥ २ ॥
द्विविदञ्च हनूमन्तं सानुप्रस्थं महाबलम् ।
ऋषभञ्चर्षभस्कन्धमादिदेश परन्तपः ॥ ३ ॥
ते सम्प्रहृष्टा हरयो भीमानुद्यम्य पादपान् ।
आकाशं विविशुः सर्वे मार्गमाणा दिशो दश ॥ ४ ॥
तेषां वेगवतां वेगमिषुभिर्वेगवत्तरैः ।
अस्त्रवित् परमास्त्रेण वारयामास रावणिः ॥ ५ ॥
तं भीमवेगा हरयो नाराचैः क्षतविक्षताः ।
अन्धकारेण ददृशुर्मेघैः सूर्य्यमिवावृतम् ॥ ६ ॥

उक्तस्यैव राघवयोरिन्द्रजितकृतबन्धनस्य प्रपञ्चः । स इति । तस्य इन्द्रजितो गतिम् अवस्थानप्रदेशम् अन्विच्छन् दिदेश आदिदेश ॥ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

परमास्त्रेण ब्रह्मास्त्रेण मन्त्रितैरिषुभिर्वारयामास ॥ ५ ॥ ६ ॥

रामलक्ष्मणयोरेव सर्व्वदेहभिदः शरान् ।
भृशमावेशयामास रावणिः समितिञ्जयः ॥ ७ ॥
निरन्तरशरीरौ तु तावुभौ रामलक्ष्मणौ ।
क्रुद्धेनेन्द्रजिता वीरौ पन्नगैः शरतां गतैः ॥ ८ ॥
तयोः क्षतजमार्गेण सुस्राव रुधिरं बहु ।
तावुभौ च प्रकाशेते पुष्पिताविव किंशुकौ ॥ ९ ॥
ततः पर्य्यन्तरक्ताक्षो भिन्नाञ्जनचयोपमः ।
रावणिर्भ्रातरौ वाक्यमन्तर्द्धानगतोऽब्रवीत् ॥ १० ॥
युद्ध्यमानमनालक्ष्यं शक्रोऽपि त्रिदशेश्वरः ।
द्रष्टुमासादितुं वापि न शक्तः किं पुनर्युवाम् ॥ ११ ॥
प्रापिताविषुजालेन राघवौ कङ्कपत्रिणा ।
एष रोषपरीतात्मा नयामि जमसादनम् ॥ १२ ॥
एवमुक्त्वा तु धर्म्मज्ञौ भ्रातरौ रामलक्ष्मणौ ।
निर्बिभेद शितैर्बाणैः प्रजहर्ष ननाद च ॥ १३ ॥
भिन्नाञ्जनचयश्यामो विस्फार्य्य विपुलं धनुः ।
भूय एव शरान् घोरान् विससर्ज महामृधे ॥ १४ ॥

आवेशयामास प्रवेशयामास ॥ ७ ॥
निरन्तरशरीरौ तु क्षताविति शेषः ॥ ८ ॥
क्षतजमार्गेण क्षतेन व्रणेन जातो यो मार्गस्तेन ॥ ९ ॥ १० ॥
अनालक्ष्यम् अप्रत्यक्षगोचरम् ॥ ११ ॥

ततो मर्मसु मर्मज्ञो मज्जयन्निशितान् शरान् ।
रामलक्ष्मणयोर्वीरो ननाद च मुहुर्मुहुः ॥ १५ ॥

बद्धौ तु शरबन्धेन तावुभौ रणमूर्द्धनि ।
निमेषान्तरमात्रेण न शेकतुरवेक्षितुम् ॥ १६ ॥

ततो विभिन्नसर्वाङ्गौ शरशल्याचितौ कृतौ ।
ध्वजाविव महेन्द्रस्य रज्जुमुक्तौ प्रकम्पितौ ॥ १७ ॥

तौ सम्प्रचलितौ वीरौ मर्मभेदेन कर्शितौ ।
निपेततुर्महेष्वासौ जगत्यां जगतीपती ॥ १८ ॥

तौ वीरशयने वीरौ शयानौ रुधिरोक्षितौ ।
शरवेष्टितसर्वाङ्गावार्त्तौ परमपीड़ितौ ॥ १९ ॥

न ह्यविद्धं तयोर्गात्रे बभूवाङ्गुलमन्तरम् ।
नानिर्विद्धं न चाध्वस्तमाकराग्रादजिह्मगैः ॥ २० ॥

प्रापितौ बन्धनमिति शेषः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

न शेकतुरवेक्षितुं तादृशाविवक्षितौ मनुष्यत्वनाट्यमायेति बोद्धम् ॥ ॥ १६ ॥ १७ ॥ १८ ॥

वीरशयने युद्धभूमौ शरवेष्टितसर्वाङ्गौ शरभूतसर्पवेष्टितसर्वगात्रौ ॥ १९ ॥

अविद्धं वेधरहितम् । अङ्गुलमङ्गुलप्रमाणमन्तरमवकाशो नाभूत् । आकराग्रात् कराग्रमभिव्याप्याध्वस्तमक्षोभितम् । अस्तब्धमिति पाठे चेष्टावत् । अजिह्मगैर्बाणैरनिर्विद्धमविदारितञ्चाङ्गं नाभूत् ॥ २० ॥

तौ तु क्रूरेण निहतौ रक्षसा कामरूपिणा ।
असृक् सुस्रुवतुस्तीव्रं जलं प्रस्रवणाविव ॥ २१ ॥
पपात प्रथमं रामो विद्धो मर्मसु मार्गणैः ।
क्रोधादिन्द्रजिता येन पुरा शक्रो विनिर्जितः ॥ २२ ॥
रुक्मपुङ्खैः प्रसन्नाग्रै रजोगतिभिराशुगैः ।
नाराचैरर्द्धनाराचैर्भल्लैरञ्जलिकैरपि ।
विव्याध वत्सदन्तैश्च सिंहदंष्ट्रैः क्षुरैस्तथा ॥ २३ ॥
स वीरशयने शिश्ये विज्यमाविध्य कार्मुकम् ।
भिन्नमुष्टिपरीणाहं त्रिनतं रुक्मभूषितम् ॥ २४ ॥
बाणपातान्तरे रामं पातितं पुरुषर्षभम् ।
स तत्र लक्ष्मणो दृष्ट्वा निराशो जीवितेऽभवत् ॥ २५ ॥
रामं कमलपत्राक्षं शरण्यं रणतोषितम् ।
शुशोच भ्रातरं दृष्ट्वा पतितं धरणीतले ॥ २६ ॥

प्रस्रवणौ प्रस्रवणाख्यपर्वताविव ॥ २१ ॥

इन्द्रजित्त्वं कुतस्तत्राह,—येनेति ॥ २२ ॥

रजोगतिभिर्वायुना विस्तीर्य्यमाणरजोवद्गभीरन्ध्रं सम्पतद्भिः । अर्द्ध-नाराचैरर्द्धभागे नाराचतुल्यैः । अञ्जलिकैरञ्जल्याकारमुखैः । वत्स-दन्तादयस्तत्तदाकाराः ॥ २३ ॥

आविध्य त्यक्त्वा । भिन्नो मुष्टिपरीणाहो मुष्टिप्रदेशो मुष्टिग्रहणं वा यस्य । त्रिषु स्थानेषु निम्नम् ॥ २४ ॥

हरयश्चापि तं दृष्ट्वा सन्तापं परमं गताः ।
शोकार्त्ताश्चुक्रुशुर्घोरमश्रुपूरितलोचनाः ॥ २७ ॥

बद्धौ तु तौ वीरशये शयानौ
ते वानराः सम्परिवार्य्य तस्थुः ।
समागता वायुसुतप्रमुख्या
विषादमार्त्ताः परमञ्च जग्मुः ॥ २८ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

बाणपातान्तरे शरतल्पमध्ये ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

---

# षट्चत्वारिंशः सर्गः

ततो द्यां पृथिवीञ्चैव वीक्षमाणा वनौकसः ।
ददृशुः सन्ततौ बाणैर्भ्रातरौ रामलक्ष्मणौ ॥ १ ॥
वृष्ट्वेवोपरते देवे कृतकर्मणि राक्षसे ।
आजगामाथ तं देशं ससुग्रीवो विभीषणः ॥ २ ॥
नीलश्च द्विविदो मैन्दः सुषेणः कुमुदोऽङ्गदः ।
तूर्णं हनुमतासार्द्धमन्वशोचन्त राघवौ ॥ ३ ॥
अचेष्टौ मन्दनिःश्वासौ शोणितेन परिप्लुतौ ।
शरजालाचितौ स्तब्धौ शयानौ शरतल्पगौ ॥ ४ ॥
निःश्वसन्तौ यथा सर्पौ निश्चेष्टौ दीनविक्रमौ ।
रुधिरस्रावदिग्धाङ्गौ तपनीयाविव ध्वजौ ॥ ५ ॥
तौ वीरशयने वीरौ शयानौ मन्दचेष्टितौ ।
यूथपैः स्वैः परिवृतौ बाष्पव्याकुललोचनैः ॥ ६ ॥
राघवौ पतितौ दृष्ट्वा शरजालसमन्वितौ ।

द्यां पृथिवीञ्च वीक्षमाणा अतिभयादिति शेषः । सन्ततौ व्याप्तौ ॥ १ ॥

देवे इन्द्रे वृष्ट्वेव कृतकर्मणि तस्मिन् राक्षसे उपरते सति ॥ २ ॥ ३ ॥

बभूवुर्व्यथिताः सर्वे वानराः सविभीषणाः ॥ ७ ॥
अन्तरिक्षं निरीक्षन्तो दिशः सर्वाश्च वानराः ।
न चैनं माययाच्छन्नं ददृशू रावणिं रणे ॥ ८ ॥
तन्तु मायाप्रतिच्छन्नं माययैव विभीषणः ।
वीक्षमाणो ददर्शाग्रे भ्रातुःपुत्रमवस्थितम् ।
तमप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे ॥ ९ ॥
ददर्शान्तर्हितं वीरं वरदानाद्विभीषणः ।
तेजसा यशसा चैव विक्रमेण च संयुतः ॥ १० ॥
इन्द्रजित्त्वात्मनः कर्म तौ शयानौ समीक्ष्य च ।
उवाच परमप्रीतो हर्षयन् सर्वराक्षसान् ॥ ११ ॥
दूषणस्य च हन्तारौ खरस्य च महाबलौ ।
सादितौ मामकैर्बाणैर्भ्रातरौ रामलक्ष्मणौ ॥ १२ ॥
नेमौ मोचयितुं शक्यावेतस्मादिषुबन्धनात् ।
सर्वैरपि समागम्य सर्षिसङ्घैः सुरासुरैः ॥ १३ ॥

रुधिरस्य स्रावः प्रवाहस्तेन दिग्धाङ्गा ॥ ५ ॥ ६ ॥ ७ ॥
माययाच्छन्नमेनं रावणिं वानरा न ददृशुः ॥ ८ ॥
किन्तु मायाप्रतिच्छन्नं तं भ्रातुः पुत्रं रावणिं विभीषण एव मायया ददर्श ॥ ९ ॥
वरदानात् ब्रह्मवरदानलब्धयान्तर्द्धानविद्ययान्तर्हितम् ॥ १० ॥
आत्मनः कर्म समीक्ष्य शयानौ तौ च समीक्ष्य ॥ ११ ॥ १२ ॥ १३ ॥

यत्कृते चिन्तयानस्य शोकार्त्तस्य पितुर्मम।
अस्पृष्ट्वा शयनं गात्रैस्त्रियामा याति शर्वरी॥ १४॥
कृत्स्नेयं यत्कृते लङ्का नदी वर्षास्विवाकुला।
सोऽयं मूलहरोऽनर्थः सर्वेषां शमितो मया॥ १५॥
रामस्य लक्ष्मणस्यैव सर्वेषाञ्च वनौकसाम्।
विक्रमा निष्फलाः सर्वे यथा शरदि तोयदाः॥ १६॥
एवमुक्त्वा तु तान् सर्वान् राक्षसान् परिपश्यतः।
यूथपानपि तान् सर्वांस्ताड़यत् स च रावणिः॥ १७॥
नीलं नवभिराहत्य मैन्दं स द्विविदं तथा।
त्रिभिस्त्रिभिरमित्रघ्नस्तताप परमेषुभिः॥ १८॥
जाम्बवन्तं महेष्वासो विद्धा बाणेन वक्षसि।
हनूमतो वेगवतो विससर्ज शरान् दश॥ १९॥
गवाक्षं शरभञ्चैव तावप्यमितविक्रमौ।
द्वाभ्यां द्वाभ्यां महावेगो विव्याध युधि रावणिः॥ २०॥
गोलाङ्गूलेश्वरञ्चैव वालिपुत्रमथाङ्गदम्।

यत्कृते ययो राघवयोर्निमित्तम्। तद्वयेनेति यावत्। गात्रैः शयनमस्पृष्ट्वैव त्रियामा रात्रिर्याति। अनिद्र एव निशाः क्षपयतीत्यर्थः॥ १४॥ १५॥ १६॥

यूथपाम् वानराणामिति शेषः। ताड़यदताड़यत्॥ १७॥ १८॥

हनूमत उपरीति शेषः॥ १९॥ २०॥

विव्याध बहुभिर्बाणैस्त्वरमाणोऽथ रावणिः ॥ २१ ॥
तान् वानरवरान् भित्त्वा शरैरग्निशिखोपमैः ।
ननाद बलवांस्तत्र महासत्त्वः स रावणिः ॥ २२ ॥
तानर्दयित्वा बाणौघैस्त्रासयित्वा च वानरान् ।
प्रजहास महाबाहुर्वचनञ्चेदमब्रवीत् ॥ २३ ॥
शरबन्धेन घोरेण मया बद्धौ चमूमुखे ।
सहितौ भ्रातरावेतौ निशामयत राक्षसाः ॥ २४ ॥
एवमुक्तास्तु ते सर्वे राक्षसाः कूटयोधिनः ।
परं विस्मयमापन्नाः कर्मणा तेन हर्षिताः ॥ २५ ॥
विनेदुश्च महानादान् सर्वे ते जलदोपमाः ।
हतो राम इति ज्ञात्वा रावणिं समपूजयन् ॥ २६ ॥
निष्पन्दौ तु तदा दृष्ट्वा भ्रातरौ रामलक्ष्मणौ ।
वसुधायां निरुच्छ्वासौ हतावित्यन्वमन्यत ॥ २७ ॥
हर्षेण तु समाविष्ट इन्द्रजित् समितिञ्जयः ।
प्रविवेश पुरीं लङ्कां हर्षयन् सर्वनैरृतान् ॥ २८ ॥
रामलक्ष्मणयोर्दृष्ट्वा शरीरे सायकैश्चिते ।
सर्वाणि चाङ्गोपाङ्गानि सुग्रीवं भयमाविशत् ॥ २९ ॥

त्वरमाणः त्वरां वेगं कुर्वन् ॥ २१ ॥ २२ ॥ २३ ॥
निशामयत पश्यत ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

तमुवाच परित्रस्तं वानरेन्द्रं विभीषणः ।
सबाष्पवदनं दीनं क्रोधव्याकुललोचनम् ।
अलं त्रासेन सुग्रीव ! बाष्पवेगो निगृह्यताम् ॥ ३० ॥
एवम्प्रायाणि युद्धानि विजयो नास्ति नैष्ठिकः ।
सभाग्यशेषतास्माकं यदि वीर ! भविष्यति ॥ ३१ ॥
मोहमेतौ प्रहास्येते महात्मानौ महाबलौ ।
पर्य्यवस्थापयात्मानमनाथं माञ्च वानर ! ॥ ३२ ॥
एवमुक्त्वा ततस्तस्य जलक्लिन्नेन पाणिना ।
सुग्रीवस्य शुभे नेत्रे प्रममार्ज विभीषणः ॥ ३३ ॥
ततः सलिलमादाय विद्यया परिजप्य च ।
सुग्रीवनेत्रे धर्मात्मा प्रममार्ज विभीषणः ॥ ३४ ॥

तयोः शरीरे सायकैश्चिते। सर्वाण्यङ्गान्युपाङ्गानि च सायकैश्चितानि दृष्ट्वा ॥ २९ ॥

सबाष्पवदनं बाष्पसहितवदनम् ॥ ३० ॥

एवंप्रायाणि एवंविधः प्रायो बाहुल्यं येषां तानि। प्रायेणैवंविधानीत्यर्थः। नैष्ठिको नित्यैकान्तः। भाग्यशेषेण सहिताः सभाग्यशेषास्तेषां भावस्तत्ता भाग्यशेषसाहित्यम्। तदैश्वर्य्यं यद्यस्माकमित्यर्थः ॥ ३१ ॥

अनाथमशरणं माञ्च पर्य्यवस्थापय आश्वासय। तव तु स्वतन्त्रराज्यमस्त्यस्ति अहं त्वगतिरेवेति भावः ॥ ३२ ॥ ३३ ॥

ततः सामान्यतः प्रमार्जनानन्तरम्। विद्यया तिरस्करणी विद्या-

विमृज्य वदनं तस्य कपिराजस्य धीमतः।
अब्रवीत् कालसम्प्राप्तमसम्भ्रान्तमिदं वचः॥ ३५॥
न कालः कपिराजेन्द्र! वैक्लव्यमवलम्बितुम्।
अतिस्नेहोऽपि कालेऽस्मिन् मरणायोपकल्पते॥ ३६॥
तस्मादुत्सृज्य वैक्लव्यं सर्वकार्य्यविनाशनम्।
हितं रामपुरोगाणां सैन्यानामनुचिन्तय॥ ३७॥
अथवा रक्ष्यतां रामो यावत् संज्ञाविपर्य्ययः।
लब्धसंज्ञौ हि काकुत्स्थौ भयं नौ व्यपनेष्यतः॥ ३८॥
नैतत् किञ्चन रामस्य न च रामो मुमूर्षति।

तिरस्कारकविद्यया परिजप्य। परिवीक्ष्येति पाठेऽप्ययमेवार्थः। राक्षसमायापरिज्ञानेन धैर्य्यसम्पादनश्चैतत् प्रमार्जनस्य फलम्। वस्तुतस्ततः सलिलमिति श्लोको बहुपुस्तकेषु नास्तीति प्रायेण प्रक्षिप्तोऽयम्। तेनेन्द्रजितं ददर्शेति तत्कार्य्यप्रकाशकोत्तरवाक्याभावात्॥ ३४॥

कालसम्प्राप्तं कालोचित्येन प्राप्तम्॥ ३५॥

अतिस्नेहोऽपि अतिस्नेहमूलरोदनादिव्यापारोऽपि। अस्मिन् काले ईदृशे विषमकाले॥ ३६॥

यदेवमतस्तस्मादित्यादि। हितं तत्समाश्वासनम्॥ ३७॥

यदि तव सेनासमाश्वासने धैर्य्यं नास्ति तदा तदहं करिष्यामि त्वया तु रामो रक्षणीय इत्याह,—अथवेति। संज्ञाविपर्य्ययो मोहो यावत्तावपर्य्यन्तम्। मोहमात्रमेवानयोर्नत्वन्यसम्भावनेत्याह,—लब्धसंज्ञाविति। नौ आवयोः॥ ३८॥

न ह्येनं हास्यते लक्ष्मीर्दुर्लभा या गतायुषाम् ॥ ३९ ॥
तस्मादाश्वासयात्मानं बलञ्चाश्वासय स्वकम्।
यावत् सैन्यानि सर्वाणि पुनः संस्थापयाम्यहम् ॥ ४० ॥
एते हि फुल्लनयनास्त्रासादागतसाध्वसाः।
कर्णे कर्णे प्रकथिता हरयो हरिसत्तम! ॥ ४१ ॥
मान्तु दृष्ट्वा प्रधावन्तमनीकं सम्प्रहर्षितम्।
त्यजन्तु हरयस्त्रासं भुक्तपूर्वामिव स्रजम् ॥ ४२ ॥
समाश्वास्य तु सुग्रीवं राक्षसेन्द्रो विभीषणः।
विद्रुतं वानरानीकं तत् समाश्वासयत् पुनः ॥ ४३ ॥
इन्द्रजित्तु महामायः सर्वसैन्यसमावृतः।
विवेश नगरीं लङ्कां पितरञ्चाभ्युपागमत् ॥ ४४ ॥

व्यपनेष्यत इतीममेवार्थं स्पष्टयति। नैतदिति। रामस्य नैतत् किञ्चन। अपायकरणमित्यर्थः। कुहस्तत्राह,—न चेति। मुमूर्षाभावे लिङ्गमाह,—न हीति। या गतायुषां दुर्लभा सा लक्ष्मीरेनं न हास्यति। इदानीं न जहात्येवाग्रेऽपि न हास्यतीत्यर्थः ॥ ३९ ॥

स्वकम्बलं स्वकम्प्राणम्। अहं यावत् सैन्यानि सर्वाणि पुनः स्थापयामि स्थिराणि करोमि तावदात्मानमात्मप्राणञ्चाश्वासय ॥ ४० ॥

एते फुल्लनयनत्वादिगुणका हरयः कर्णे कर्णे प्रकथिताः रामविपद्विषयप्रक थनवन्तो भवन्ति। हरिसत्तम सुग्रीव ॥ ४१ ॥

अनीकप्रत्याश्वासनार्थं मां धावन्तं दृष्ट्वा तु सम्प्रहर्षितं प्राप्तहर्षमनीकं तद्रूपा हरयो भुक्तपूर्वां स्रजमिव त्रासं त्यजन्तु ॥ ४२ ॥

तत्र रावणमासाद्य अभिवाद्य कृताञ्जलिः।
आचचक्षे प्रियं पित्रे निहतौ रामलक्ष्मणौ ॥ ४५ ॥
उत्पपात ततो हृष्टः पुत्रञ्च परिषस्वजे।
रावणो रक्षसां मध्ये श्रुत्वा शत्रू निपातितौ ॥ ४६ ॥
उपाघ्राय च तं मूर्द्ध्नि पप्रच्छ प्रीतमानसः।
पृच्छते च यथावृत्तं पित्रे तस्मै न्यवेदयत् ॥ ४७ ॥
यथा तौ शरबन्धेन निश्चेष्टौ निष्प्रभौ कृतौ ॥ ४८ ॥

स हर्षवेगानुगतान्तरात्मा
श्रुत्वा गिरं तस्य महारथस्य।
जहौ ज्वरं दाशरथेः समुत्थं
प्रहृष्टवाचाभिननन्द पुत्रम् ॥ ४९ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
षट्चत्वारिंशः सर्गः ॥ ४६ ॥

समाश्वास्य　उत्तरीत्येति　शेषः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ॥ ४८ ॥ ४९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

---

## सप्तचत्वारिंशः सर्गः

तस्मिन् प्रविष्टे लङ्कायां कृतार्थे रावणात्मजे ।
राघवं परिवार्य्याथ ररक्षुर्वानरर्षभाः ॥ १ ॥
हनूमानङ्गदो नीलः सुषेणः कुमुदो नलः ।
गजो गवाक्षः पनसः सानुप्रस्थो महाहरिः ॥ २ ॥
जाम्बवानृषभः सुन्दो रम्भः शतबलिः पृथुः ।
व्यूढानीकाश्च यत्ताश्च द्रुमानादाय सर्वतः ॥ ३ ॥
वीक्षमाणा दिशः सर्वास्तिर्य्यगूर्द्ध्वञ्च वानराः ।
तृणेष्वपि च चेष्टत्सु राक्षसा इति मेनिरे ॥ ४ ॥
रावणश्चापि संहृष्टो विसृज्येन्द्रजितं सुतम् ।
आजुहाव ततः सीतारक्षणी राक्षसीस्तदा ॥ ५ ॥
राक्षस्यस्त्रिजटा चापि शासनात्तमुपस्थिताः ।

तस्मिन्निति ॥ १ ॥ २ ॥

व्यूढानि गरुडाद्याकारव्यूहवन्त्यनीकानि येषां ते ॥ ३ ॥

राक्षसा इत्यस्यागता इति शेषः ॥ ४ ॥

सीतारक्षणीः सीतारक्षिकाराक्षसीराजुहाव । ताः राक्षस्यस्त्रि-जटा च समुपस्थिताः ॥ ५ ॥ ६ ॥

ता उवाच ततो हृष्टो राक्षसी राक्षसाधिपः ॥ ६ ॥
हताविन्द्रजिताख्यात वैदेह्या रामलक्ष्मणौ ।
पुष्पकं तत् समारोप्य दर्शयद्ध्वं रणे हतौ ॥ ७ ॥
यदाश्रयादवष्टब्धा नेयं मामुपतिष्ठते ।
सोऽस्या भर्त्ता सह भ्रात्रा निहतो रणमूर्द्धनि ॥ ८ ॥
निर्विशङ्का निरुद्विग्ना निरपेक्षा च मैथिली ।
मामुपस्थास्यते सीता सर्व्वाभरणभूषिता ॥ ९ ॥
अद्य कालवशं प्राप्तं रणे रामं सलक्ष्मणम् ।
अवेक्ष्य विनिवृत्ता सा चान्यां गतिमपश्यती ।
अनपेक्षा विशालाक्षी मामुपस्थास्यते स्वयम् ॥ १० ॥
तस्य तद्वचनं श्रुत्वा रावणस्य दुरात्मनः ।
राक्षस्यस्तास्तथेत्युक्त्वा जग्मुर्यत्र पुष्पकम् ॥ ११ ॥
ततः पुष्पकमादाय राक्षस्यो रावणाज्ञया ।
अशोकवनिकास्थां तां मैथिलीं समुपानयत् ॥ १२ ॥
तामादाय तु राक्षस्यो भर्त्तृशोकपराजिताम् ।
सीतामारोपयामासुर्विमानं पुष्पकं तदा ॥ १३ ॥

आख्यात कथयत । रणे हतौ राघवौ । तस्यैतद्दर्शयद्ध्वम् ॥ ७ ॥
यदाश्रयात् अवष्टब्धा गर्व्विता ॥ ८ ॥
निर्विशङ्का रामशङ्कारहिता । निरुद्विग्ना निःशोका । निरपेक्षा
रामो मिलिष्यतीत्याशारहिता ॥ ९ ॥

ततः पुष्पकमारोप्य सीतां त्रिजटया सह ।
रावणश्चारयामास पताकाध्वजमालिनीम् ॥ १४ ॥
प्राघोषयत हृष्टश्च लङ्कायां राक्षसेश्वरः ।
राघवो लक्ष्मणश्चैव हताविन्द्रजिता रणे ॥ १५ ॥
विमानेनापि गत्वा तु सीता त्रिजटया सह ।
ददर्श वानराणान्तु सर्वं सैन्यं निपातितम् ॥ १६ ॥
प्रहृष्टमनसश्चापि ददर्श पिशिताशनान् ।
वानरांश्चातिदुःखार्त्तान् रामलक्ष्मणपार्श्वतः ॥ १७ ॥
ततः सीता ददर्शोभौ शयानौ शरतल्पगौ ।
लक्ष्मणञ्चैव रामञ्च विसंज्ञौ शरपीड़ितौ ॥ १८ ॥
विध्वस्तकवचौ वीरौ विप्रविद्धशरासनौ ।
सायकैश्छिन्नसर्वाङ्गौ शरस्तम्बमयौ क्षितौ ॥ १९ ॥
तौ दृष्ट्वा भ्रातरौ तत्र प्रवीरौ पुरुषर्षभौ ।

अवेक्ष्य विनिवृत्ता प्रत्यागता । सा च सा तु । अन्यां मत्तोन्यां रामरूपाम् । प्राप्यं वस्तुपश्यती अनपेक्षा रामापेक्षारहिता ॥ १० ॥ ॥ ११ ॥ १२ ॥ १३ ॥

पताकाध्वजमालिनीं लङ्कां चारयामास । रक्षसां तौ द्रष्टुमिति शेषः ॥ १४ ॥

सोपसर्गप्रकारो राघवो लक्ष्मणश्चेति ॥ १५ ॥

सर्वं नष्टमित्यर्थः ॥ १६ ॥ १७ ॥ १८ ॥

शयानौ पुण्डरीकाक्षौ कुमाराविव पावकी ॥ २० ॥
शरतल्पगतौ वीरौ तथाभूतौ नरर्षभौ।
दुःखार्त्ता करुणं सीता सुभृशं विललाप ह ॥ २१ ॥
भर्त्तारमनवद्याङ्गी लक्ष्मणञ्चासितेक्षणा।
प्रेक्ष्य पांसुषु चेष्टन्तौ रुरोद जनकात्मजा ॥ २२ ॥

सा बाष्पशोकाभिहता समीक्ष्य
तौ भ्रातरौ देवसुतप्रभावौ।
वितर्कयन्ती निधनं तयोः सा
दुःखान्विता वाक्यमिदं जगाद ॥ २३ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

विप्रविद्धशरासनौ भ्रष्टधनुष्कौ। शरस्तम्बः शरसमूहस्तन्मयौ॥
॥ १९ ॥ २० ॥ २१ ॥ २२ ॥
वितर्कयन्ती चिन्तयन्तीत्येव ॥ २३ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

---

## अष्टचत्वारिंशः सर्गः।



भर्त्तारं निहतं दृष्ट्वा लक्ष्मणञ्च महाबलम्।
विललाप भृशं सीता करुणं शोककर्षिता॥ १॥
ऊचुर्लाक्षणिका ये मां पुत्रिण्यविधवेति च।
तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः॥ २॥
यज्वनो महिषीं ये मामूचुः पत्नीञ्च सत्रिणः।
तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः॥ ३॥
वीरपार्थिवपत्नीनां ये विदुर्भर्तृपूजिताम्।
तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः॥ ४॥
ऊचुः संश्रवणे ये मां द्विजाः कार्त्तान्तिकाः शुभाम्।

विललापेति। सर्वज्ञापि देवी राक्षसानां मानुषबुद्धिस्थैर्याय नटवत् विललापेवेत्यर्थः। निहतं निहतमिव स्थितम्॥ १॥

लाक्षणिकाः सामुद्रिकलक्षणज्ञाः॥ २॥

अयमेव पाङ्क्तः पाठ इति कतकः। यज्वनोऽश्वमेधादियागकर्त्तुः। सत्रिणः बहुदिनसाध्यबहुकर्तृकयागकर्त्तुः॥ ३॥

वीरपार्थिवपत्नीनां पूजनीयामिति शेषः। भर्तृपूजितां सुमङ्गलीं ये प्राहुः॥ ४॥

तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ५ ॥
इमानि खलु पद्मानि पादयोर्वै कुलस्त्रियः ।
आधिराज्येऽभिषिच्यन्ते नरेन्द्रैः पतिभिः सह ॥ ६ ॥
वैधव्यं यान्ति यैर्नार्योऽलक्षणैर्भाग्यदुर्लभाः ।
नात्मनस्तानि पश्यामि पश्यन्ती हतलक्षणा ॥ ७ ॥
सत्यनामानि पद्मानि स्त्रीणामुक्तानि लक्षणैः ।
तान्यद्य निहते रामे वितथानि भवन्ति मे ॥ ८ ॥
केशाः सूक्ष्मा समा नीला भ्रुवौ चासंहते मम ।
वृत्ते चारोमके जङ्घे दन्ताश्चाविरला मम ॥ ९ ॥

सम्यक् श्रवणं यस्मिन्निति संश्रवणं सन्निधिस्तस्मिन् मत्समक्षमिति यावत् । कार्त्तान्तिकाः ज्योतिः कृतान्तविदः । शुभाम् अविधवाम् । ज्ञानिन इति च्छेदः ॥ ५ ॥

यैर्लक्षणैः स्त्रियो नरेन्द्रैः पतिभिः सहाधिराज्येऽभिषिच्यन्ते तानीमानि पद्मानि पाणिपादवर्त्तिरेखारूपपद्मानि मयि वर्त्तन्त इति शेषः ॥ ६ ॥

यैरलक्षणैर्भाग्यदुर्लभादुर्लभभाग्या वैधव्यं यान्ति तान्यात्मनो न पश्यामि । सुलक्षणानि पश्यन्त्यपि हतलक्षणा निष्फललक्षणा जाता-स्मीति शेषः । इदं पद्यं प्रक्षिप्तमिति बहवः ॥ ७ ॥

लक्षणैर्लक्षणशैस्तत्प्रतिपादकशास्त्रैश्च । सत्यनामानि अमोघफलानि । तानि शास्त्राणि तत्प्रतिपादितलक्षणानि च ॥ ८ ॥

असंहते अपरस्पराश्लिष्टे ॥ ९ ॥

शङ्खे नेत्रे करौ पादौ गुल्फावूरू समे चितौ ।
अनुवृत्तनखाः स्निग्धाः समाश्चाङ्गुलयो मम ॥ १० ॥
स्तनौ चाविरलौ पीनौ मामकौ मग्नचूचुकौ ।
मग्ना चोत्सेधनी नाभिः पार्श्वोरस्कञ्च मे चितम् ॥ ११ ॥
मम वर्णो मणिनिभो मृदून्यङ्गरुहाणि च ।
प्रतिष्ठितां द्वादशभिर्मामूचुः शुभलक्षणाम् ॥ १२ ॥
समग्रयवमच्छिद्रं पाणिपादञ्च वर्णवत् ।
मन्दस्मितेत्येव च मां कन्या लाक्षणिका विदुः ॥ १३ ॥

शङ्खे नयनोपान्त्यभागौ ललाटफलके इति कतकः । चितौ उपचितौ । अनुवृत्ताः आनुपूर्व्येण वृत्तत्वगुणयुक्ताः । समाः सममध्याः ॥ १० ॥

अविरलौ परस्परसंसक्तौ । मग्नचूचुकौ निमग्नाग्रभागौ । उत्सेधनी उन्नतपर्य्यन्तप्रदेशा । पार्श्वञ्चोरस्कञ्च । स्वार्थे कः । तत्पार्श्वोरस्कम् । प्राण्यङ्गत्वादेकवचनम् । चितम् उपचितम् ॥ ११ ॥

वर्णः कान्तिः । मणिनिभः शाणघृष्टमणिवदुज्ज्वलः । अङ्गरुहाणि रोमाणि । द्वादशभिः प्रतिष्ठिताम् । पादद्वयवर्त्यङ्गुलिदशकं द्वे पादतले च एवं द्वादशभिः सुप्रतिष्ठितां सुस्पृष्टभूमिकाम् । एवं केशादिपादान्तलक्षणैर्मां शुभलक्षणामूचुः ॥ १२ ॥

समग्रयवम् अङ्गुलिपर्वमध्यगसमग्रयवप्रमाणदिदिरेखावत् । अच्छिद्रं नीरन्ध्राङ्गुल्यन्तरालम् । वर्णवत्प्रशस्तकान्ति । मन्दस्मिता मन्दस्मितवत्स्वरूपसुलक्षणवती । कन्या लाक्षणिकाः कन्यावर्त्तिसामुद्रिकलक्षणज्ञाः ॥१३॥

आधिराज्येऽभिषेको मे ब्राह्मणैः पतिना सह।
कृतान्तकुशलैरुक्तं तत्सर्वं वितथीकृतम्॥ १४॥
शोधयित्वा जनस्थानं प्रवृत्तिमुपलभ्य च।
तीर्त्वा सागरमक्षोभ्यं भ्रातरौ गोष्पदे हतौ॥ १५॥
ननु वारुणमाग्नेयमैन्द्रं वायव्यमेव च।
अस्त्रं ब्रह्मशिरश्चैव राघवौ प्रत्यपद्यत॥ १६॥
अदृश्यमानेन रणे मायया वासवोपमौ।
मम नाथावनाथाया निहतौ रामलक्ष्मणौ॥ १७॥
न हि दृष्टिपथं प्राप्य राघवस्य रणे रिपुः।
जीवन् प्रतिनिवर्त्तेत यद्यपि स्यान्मनोजवः॥ १८॥
न कालस्यातिभारोऽस्ति कृतान्तश्च सुदुर्जयः।
यत्र रामः सह भ्रात्रा शेते युधि निपातितः॥ १९॥

कृतान्तनिपुणैर्ज्योतिःशास्त्रसिद्धान्तज्ञैः। आधिराज्येऽभिषेको भावीत्युक्तमित्यन्वयः॥ १४॥

सागरं समुद्रं राक्षससेनासागरश्चाक्षोभ्यं तीर्त्वा गोष्पदेऽल्पावशिष्टसैन्ये हतावित्यर्थः। अनेन बहुदिनयुद्धोत्तरमल्पावशिष्टे सैन्ये कतिपययूथपरूपेयं शरबन्ध इति लभ्यते॥ १५॥

प्रत्यपद्यत प्रत्यपद्येताम्। एकवचनमार्षम्। नन्वितः पूर्वं तत्तु किमिदानीं न स्मृतमिति शेषः॥ १६॥ १७॥ १८॥

कालस्य शुभाशुभफलप्रापकस्य तत्प्रापणेऽतिभारो नास्ति अतस्त-

न शोचामि तथा रामं लक्ष्मणञ्च महारथम्।
नात्मानं जननीञ्चापि यथा श्वश्रूं तपस्विनीम् ॥ २० ॥
सा तु चिन्तयते नित्यं समाप्तव्रतमागतम्।
कदा द्रक्ष्यामि सीताञ्च लक्ष्मणञ्च सराघवम् ॥ २१ ॥
परिदेवयमानां तां राक्षसी त्रिजटाब्रवीत्।
मा विषादं कृथा देवि! भर्त्ताऽयं तव जीवति ॥ २२ ॥
कारणानि च वक्ष्यामि महान्ति सदृशानि च।
यथेमौ जीवतो देवि! भ्रातरौ रामलक्ष्मणौ ॥ २३ ॥
न हि कोपपरीतानि हर्षपर्य्युत्सुकानि च।
भवन्ति युधि योधानां मुखानि निहते पतौ ॥ २४ ॥

दुपस्थापितफलनिर्वर्त्तको यः कृतान्तो दैवं स न सुदुर्जयः। सामान्यरूपस्यार्थस्य विशेषेण समर्थनरूपोऽर्थान्तरन्यासः प्रकृतकथनरूपो यत्रेत्यादिः। यत्र यस्मादित्यर्थः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

एवं दशां प्राप्तस्य कथं जीवनं तत्राह,—कारणानीति। महान्ति इदानीमपि सजीवत्वोपपादकानि। सदृशानि अनुभूततुल्यानि दृष्टसंवादानि। यथेमौ जीवत इति प्रतिपद्येथास्तथा कारणानि वक्ष्यामीत्यन्वयः ॥ २३ ॥

तान्येव व्यतिरेकमुखेनाह,—न हीति। पतौ पत्यौ निहते सति योधानां मुखानि क्षणेन प्रभुं हनिष्यामः क्व गच्छतीत्येवं कोपेन व्याप्तानि न भवन्ति। हर्षपर्य्युत्सुकानि हर्षजनकमोहभ्रान्तिदर्शनात्-

इदं विमानं वैदेहि ! पुष्पकं नाम नामतः ।
दिव्यं त्वां धारयेन्नेदं यद्येतौ गतजीवितौ ॥ २५ ॥
हतवीरप्रधाना हि गतोत्साहा निरुद्यमा ।
सेना भ्रमति संख्येषु हतकर्णेव नौर्जले ॥ २६ ॥
इयं पुनरसम्भ्रान्ता निरुद्विग्ना तपस्विनि ! ।
सेना रक्षति काकुत्स्थौ मया प्रीत्या निवेदितौ ॥ २७ ॥
सा त्वं भव सुविस्रब्धा अनुमानैः सुखोदयैः ।
अहतौ पश्य काकुत्स्थौ स्नेहादेतत् ब्रवीमि ते ॥ २८ ॥
अनृतं नोक्तपूर्वं मे न च वक्ष्यामि, मैथिलि ! ।
चारित्रसुखशीलत्वात् प्रविष्टासि मनो मम ॥ २९ ॥

मुक्तानि न भवन्ति अपि तु रुदन्ति केवलम् । नैवं प्रकृतेऽतो जीवतीति निश्चिनु ॥ २४ ॥

इतोऽप्येवमेवेत्याह,—इदं विमानमिति ॥ २५ ॥

पुनर्लिङ्गान्तरमाह,—हतो वीरः शूरः प्रधानो राजा यस्याः सा भ्रमति इतस्ततो व्याकुला भवति । हतकर्णा हतकर्णधाराधिष्ठितफलका हतकर्णधारा वा ॥ २६ ॥

तस्य विपर्य्यये पर्य्यवसानं दर्शयति । इयं पुनरिति । निवेदितौ निवेदितजीवनौ तुभ्यं ज्ञातौ ॥ २७ ॥ २८ ॥

चारित्रेण पातिव्रत्येन सुखशीलत्वात् सुखावहत्वान्मन्मनःसुखावहस्वभावत्वान्मन्मनः प्रविष्टासि । हृदयङ्गमासीत्यर्थः । अत एतत्सर्वं स्वस्वामिनो रावणस्य विरुद्धमपि मया तवोक्तमिति भावः ॥ २९ ॥

नेमौ शक्यौ रणे जेतुं सेन्द्रैरपि सुरासुरैः।
तादृशं दर्शनं दृष्ट्वा मया चोदीरितं तव॥ ३०॥
इदन्तु सुमहच्चित्रं शरैः पश्यस्व मैथिलि!।
विसंज्ञौ पतितावेतौ नैव लक्ष्मीर्विमुञ्चति॥ ३१॥
प्रायेण गतसत्वानां पुरुषाणां गतायुषाम्।
दृश्यमानेषु वक्त्रेषु परं भवति वैकृतम्॥ ३२॥
त्यज शोकञ्च दुःखञ्च मोहञ्च जनकात्मजे!।
रामलक्ष्मणयोरर्थे नाद्य शक्यमजीवितुम्॥ ३३॥
श्रुत्वा तु वचनं तस्याः सीता सुरसुतोपमा।
कृताञ्जलिरुवाचेमामेवमस्त्विति मैथिली॥ ३४॥
विमानं पुष्पकं तत्तु सन्निवर्त्य मनोजवम्।
दीना त्रिजटया सीता लङ्कामेव प्रवेशिता॥ ३५॥
ततस्त्रिजटया सार्द्धं पुष्पकादवरुह्य सा।
अशोकवनिकामेव राक्षसीभिः प्रवेशिता॥ ३६॥
प्रविश्य सीता बहुवृक्षखण्डां
तां राक्षसेन्द्रस्य विहारभूमिम्।

तादृशं दर्शनं जीवनसूचकमनयोः सैनिकानाञ्चाकारं दृष्ट्वा मया तवानयोर्जीवनमुदीरितं निवेदितम्। दृश्यत इति दर्शनः। कर्मणि ल्युट्। राजभोजनाः शालय इति वत्॥ ३०॥

लक्ष्मीर्न वियुज्यत इति पाठेऽपि न मुञ्चतीत्येवार्थः॥ ३१॥ ३२॥

सम्प्रेक्ष्य संचिन्त्य च राजपुत्रौ
परं विषादं समुपाजगाम ॥ ३७ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

रामलक्ष्मणयोरर्थे शोकं त्यज । एवं प्रसन्नमुखाभ्यामजीवितुं जीवनराहित्येनावस्थातुमशक्यम् । अतो जीवतीति निश्चिन्विति शेषः ॥ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

## एकोनपञ्चाशः सर्गः ।

घोरेण शरबन्धेन बद्धौ दशरथात्मजौ ।
निःश्वसन्तौ यथा नागौ शयानौ रुधिरोक्षितौ ॥ १ ॥
सर्वे ते वानरश्रेष्ठाः ससुग्रीवमहाबलाः ।
परिवार्य्य महात्मानौ तस्थुः शोकपरिप्लुताः ॥ २ ॥
एतस्मिन्नन्तरे रामः प्रत्यबुध्यत वीर्य्यवान् ।
स्थिरत्वात् सत्त्वयोगाच्च शरैः सन्दानितोऽपि सन् ॥ ३ ॥
ततो दृष्ट्वा सरुधिरं विषण्णं गाढ़मर्पितम् ।
भ्रातरं दीनवदनं पर्य्यदेवयदातुरः ॥ ४ ॥
किं नु मे सीतया कार्य्यं लब्धया जीवितेन वा ।
शयानं योऽद्य पश्यामि भ्रातरं युधि निर्जितम् ॥ ५ ॥
शक्या सीतासमा नारी मर्त्यलोके विचिन्वता ।
न लक्ष्मणसमो भ्राता सचिवः साम्परायिकः ॥ ६ ॥

घोरेणेति ॥ १ ॥ २ ॥

स्थिरत्वात् अतिदृढ़गात्रत्वात् । सत्त्वयोगात् महाबलयुक्तत्वात् । सन्दानितोऽपि बद्धोऽपि ॥ ३ ॥

गाढ़मर्पितं शरैर्गाढ़बद्धम् ॥ ४ ॥ ५ ॥

परित्यच्यास्यहं प्राणान् वानराणान्तु पश्यताम्।
यदि पञ्चत्वमापन्नः सुमित्रानन्दवर्द्धनः॥ ७॥
किं नु वच्यामि कौशल्यां मातरं किन्नु कैकयीम्।
कथमम्बां सुमित्राञ्च पुत्रदर्शनलालसाम्॥ ८॥
विवत्सां वेपमानाञ्च वेपन्तीं कुररीमिव।
कथमाश्वासयिष्यामि यदि यास्यामि तं विना॥ ९॥
कथं वच्यामि शत्रुघ्नं भरतञ्च यशस्विनम्।
मया सह वनं यातो विना तेनाहमागतः॥ १०॥
उपालम्भं न शक्यामि सोढ़ुमम्बासुमित्रया।
इहैव देहं त्यच्यामि न हि जीवितुमुत्सहे॥ ११॥
धिङ्मां दुष्कृतकर्माणमनार्य्यं मत्कृते ह्यसौ।
लच्मणः पातितः शेते शरतल्पे गतासुवत्॥ १२॥
त्वं नित्यं सुविषण्णं मामाश्वासयसि लच्मण!।
गतासुर्नाद्य शक्तोऽसि मामार्त्तमभिभाषितुम्॥ १३॥
येनाद्य बहवो युद्धे निहता राचसाः चितौ।

सचिवः सहायः। साम्परायिको युद्धे साधुः। युद्धार्ह इति यावत्॥ ६॥ ७॥ ८॥ ९॥

यो मया सह वनं गतस्तेन लच्मणेन विना गतोऽहं किं वच्यामि॥ १०॥

अम्बा सुमित्रयेति। क्रियमाणमिति शेषः॥ ११॥ १२॥

तस्यामेवाद्य शूरस्त्वं शेषे विनिहतः शरैः ॥ १४ ॥
शयानः शरतल्पेऽस्मिन् सशोणितपरिस्रुतः।
शरभूतस्ततो भासि भास्करोऽस्तमिव व्रजन् ॥ १५ ॥
बाणाभिहतमर्मत्वान्न शक्नोषीह भाषितुम्।
रुजा चाब्रुवतो यस्य दृष्टिरागेण सूच्यते ॥ १६ ॥
यथैव मां वनं यान्तमनुयातो महाद्युतिः।
अहमप्यनुयास्यामि तथैवैनं यमक्षयम् ॥ १७ ॥
इष्टबन्धुजनो नित्यं माञ्च नित्यमनुव्रतः।
इमामद्य गतोऽवस्थां ममानार्य्यस्य दुर्नयैः ॥ १८ ॥
सुरुष्टेनापि वीरेण लक्ष्मणेन न संस्मरे।
परुषं विप्रियञ्चापि श्रावितन्तु कदाचन ॥ १९ ॥

गतासुर्गतासुरिव ॥ १३ ॥ १४ ॥

शरभूतः शरैर्व्याप्तशरीरत्वाच्छरस्रूपं प्राप्तः। अस्तं व्रजन् भास्कर इव। तत्तद्रन्ध्रनिःसरद्रुधिरव्याप्तशराः किरणस्थानीयाः ॥ १५ ॥

अब्रुवतोऽपि यस्य रुजा व्यथा दृष्ट्या रागेण अन्यया मुखशोभया च सूच्यते। दृष्टीत्यनेन दर्शनशक्तिमत्त्वं सूच्यते ॥ १६ ॥

यमक्षयं यमगृहं यास्यामीत्यन्वयः। यथायं मात्रादिषु स्नेहमपर्य्यालोच्यैव मामनुगतस्तथाहमपि तत् स्नेहं त्यक्त्वानुयास्यामीति भावः ॥ १७ ॥

इष्टो बन्धुजनो यस्य सः ॥ १८ ॥

विप्रियमहितं कदाचन श्रावितन्तु इति न संस्मरे न स्मरामीत्यर्थः ॥ १९ ॥

विससर्जैकवेगेन पञ्च बाणशतानि यः।
दृष्वस्त्रेष्वधिकस्तस्मात् कार्त्तवीर्य्याच्च लक्ष्मणः॥ २०॥
अस्त्रैरस्त्राणि यो हन्याच्छक्रस्यापि महात्मनः।
सोऽयमुर्व्यां हतः शेते महार्हशयनोचितः॥ २१॥
तत्तु मिथ्याप्रलप्तं मां प्रधक्ष्यति न संशय.।
यन्मया न कृतो राजा राक्षसानां विभीषणः॥ २२॥
अस्मिन् मुहूर्त्ते सुग्रीव! प्रतियातुमिवार्हसि।
सत्वहीनं मया राजन्! रावणोऽभिभविष्यति॥ २३॥
अङ्गदन्तु पुरस्कृत्य ससैन्यं सपरिच्छदम्।
सागरं तर सुग्रीव! नीलेन च नलेन च॥ २४॥
कृतं हि सुमहत् कर्म यदन्यैर्दुष्करं रणे।
ऋक्षराजेन तुष्यामि गोलाङ्गूलाधिपेन च॥ २५॥
अङ्गदेन कृतं कर्म मैन्देन द्विविदेन च।

य एकवेगेन पञ्च बाणशतानि विससर्ज कार्त्तवीर्य्यस्तस्मात् कार्त्तवीर्य्यात् सहस्रबाहोरयं द्विबाहुरेकेन वेगेन तावतो बाणान् विसृजन्नधिक इत्यर्थः॥ २०॥ २१॥

विभीषणो राजा न कृत इति यत् यतस्तस्मात्तद्विभीषणमभिषेक्ष्यामीति मिथ्याप्रलप्तं प्रलपितं मां प्रधक्ष्यति॥ २२॥

सत्वहीनं शोकवता मया बलहीनम्॥ २३॥

नीलेनेत्यादौ सहेति शेषः॥ २४॥

युद्धं केसरिणा संख्ये घोरं सम्पातिना कृतम् ॥ २६ ॥
गवयेन गवाक्षेण शरभेण गजेन च ।
अन्यैश्च हरिभिर्युद्धं दुर्द्धरं त्यक्तजीवितैः ॥ २७ ॥
न चातिक्रमितुं शक्यं दैवं सुग्रीव ! मानुषैः ।
यत्तु शक्यं वयस्येन सुहृदा वा परं मम ॥ २८ ॥
कृतं सुग्रीव ! तत् सर्वं भवता धर्मभीरुणा ।
मित्रकार्य्यं कृतमिदं भवद्भिर्वानरर्षभाः ! ॥ २९ ॥
अनुज्ञाता मया सर्वे यथेष्टं गन्तुमर्हथ ।
शुश्रुवुस्तस्य ये सर्वे वानराः परिदेवितम् ।
वर्त्तयाञ्चक्रिरेऽश्रूणि नेत्रैः कृष्णेतरेक्षणाः ॥ ३० ॥
ततः सर्वाण्यनीकानि स्थापयित्वा विभीषणः ।
आजगाम गदापाणिस्त्वरितं यत्र राघवः ॥ ३१ ॥

हनुमदादिभिर्मदर्थे यत् कृतं तेन तुष्यामि ॥ २५ ॥ २६ ॥

हरिभिर्युद्धं कृतमिति पूर्व्वेण सम्बन्धः ॥ २७ ॥

अतिप्रबलसहायेनापि दैवं दुर्जयमित्याह,—न चातिक्रमितुमिति। वयस्यः केवलसखा। सुहृदुपक्रियामूलसखा ॥ २८ ॥

अधर्मभीरुणेति च्छेद इति तीर्थः। तद्विफलमेव। धर्मभीरुणेति च्छेदेऽपि धर्मत्यागात् भीरुणेति व्याख्यातुं शक्यत्वात् ॥ २९ ॥

परिदेवितं परिदेवनप्रवृत्तं वचः। कृष्णेतरेक्षणाः पिङ्गाक्षाः ॥ ॥ ३० ॥ ३१ ॥

तं दृष्ट्वा त्वरितं यान्तं नीलाञ्जनचयोपमम् ।
वानरा दुद्रुवुः सर्वे मन्यमानास्तु रावणम् ॥ ३२ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
एकोनपञ्चाशः सर्गः ॥ ४९ ॥

तं दूरपलायितसेनाः परावर्त्य स्थापयित्वा गतम् । वानरा दुद्रुवुः । सुग्रीवसमीपस्था इति शेषः ॥ ३२ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

## पञ्चाशः सर्गः



अथोवाच महातेजा हरिराजो महाबलः ।
किमियं व्यथिता सेना मूढवातेव नौर्जले ॥ १ ॥
सुग्रीवस्य वचः श्रुत्वा वालिपुत्रोऽङ्गदोऽब्रवीत् ।
न त्वं पश्यसि रामञ्च लक्ष्मणञ्च महारथम् ॥ २ ॥
शरजालाचितौ वीरावुभौ दशरथात्मजौ ।
शरतल्पे महात्मानौ शयानौ रुधिरोक्षितौ ॥ ३ ॥
अथाब्रवीद्वानरेन्द्रः सुग्रीवः पुत्रमङ्गदम् ।
नानिमित्तमिदं मन्ये भवितव्यं भयेन तु ॥ ४ ॥

मूढवाता दिग्व्यामोहकरवात्या वातवती । मूढेति भावे निष्ठा ॥ १ ॥

सुग्रीवस्य वचः सेनापलायनप्रश्नहेतुरूपम् । अङ्गदस्तु प्रस्तुतमेव निमित्तमेवाह,—न त्वमिति । एवं विशेषणकौ दशरथात्मजौ न पश्यसि किम् । एतदेव निमित्तमिति वृथा प्रश्न इति भावः ॥ २ ॥ ३ ॥

सुग्रीवो नेदमिदानीं पलायननिमित्तमित्याह,—अथेति । इदं पलायननिमित्तं त्वदुक्तनिमित्तान्यन्निमित्तहीनमिति न मन्ये । किं तु केनचित् साम्प्रतिकेन पलायनहेतुना भयेन भवितव्यमित्यर्थः ॥ ४ ॥

विषण्णवदना ह्येते त्यक्तप्रहरणा दिशः ।
पलायन्तेऽत्र हरयस्त्रासादुत्फुल्ललोचनाः ॥ ५ ॥
अन्योन्यस्य न लज्जन्ते न निरीक्षन्ति पृष्ठतः ।
विप्रकर्षन्ति चान्योऽन्यं पतितं लङ्घयन्ति च ॥ ६ ॥
एतस्मिन्नन्तरे वीरो गदापाणिर्विभीषणः ।
सुग्रीवं वर्द्धयामास राघवञ्च जयाशिषा ॥ ७ ॥
विभीषणञ्च सुग्रीवो दृष्ट्वा वानरभीषणम् ।
ऋक्षराजं महात्मानं समीपस्थमुवाच ह ॥ ८ ॥
विभीषणोऽयं सम्प्राप्तो यं दृष्ट्वा वानरर्षभाः ।
द्रवन्त्यागतसन्त्रासा रावणात्मजशङ्कया ॥ ९ ॥
शीघ्रमेतान् सुसन्त्रस्तान् बहुधाविप्रधावितान् ।
पर्य्यवस्थापयाख्याहि विभीषणमुपस्थितम् ॥ १० ॥

तदेव स्पष्टयति । विषण्णेति । विषण्णवदनास्त्यक्तप्रहरणाश्च सन्त एतावत्पर्य्यन्तमिहैव स्थिताः । सम्प्रति तु इतो दिशः प्रति पलायन्ते तत्तु त्रासात् साम्प्रतिकादेव नान्यथेत्यर्थः ॥ ५ ॥

न लज्जन्ते शूरगर्हिते पलायने क्रियमाणे न लज्जां प्राप्नुवन्तीत्यर्थः । पृष्ठतः वर्त्तमानपदार्थानिति शेषः । विप्रकर्षन्ति । पलायनप्रतिरोधकानिति शेषः ॥ ६ ॥

वर्द्धयामास विजयीभवेति वचनेनेति भावः ॥ ७ ॥

वानरभीषणं वानराणां भयनिमित्तम् ॥ ८ ॥ ९ ॥

सुग्रीवेणैवमुक्तस्तु जाम्बवान् ऋक्षपार्थिवः।
वानरान् सान्त्वयामास सन्निवर्त्य प्रधावतः॥ ११॥
ते निवृत्ताः पुनः सर्वे वानरास्त्यक्तसाध्वसाः।
ऋक्षराजवचः श्रुत्वा तञ्च दृष्ट्वा विभीषणम्॥ १२॥
विभीषणस्तु रामस्य दृष्ट्वा गात्रं शरैश्चितम्।
लक्ष्मणस्य तु धर्मात्मा बभूव व्यथितस्तदा॥ १३॥
जलक्लिन्नेन हस्तेन तयोर्नेत्रे विमृज्य च।
शोकसम्पीड़ितमना रुरोद विललाप च॥ १४॥
इमौ तौ सत्वसम्पन्नौ विक्रान्तौ प्रियसंयुगौ।
इमामवस्थां गमितौ राक्षसैः कूटयोधिभिः॥ १५॥
भ्रातृपुत्रेण चैतेन दुष्पुत्रेण दुरात्मना।
राक्षस्या जिह्मया बुद्ध्या वञ्चितौ ऋजुविक्रमौ॥ १६॥
शरैरिमावलं विद्धौ रुधिरेण समुक्षितौ।
वसुधायामिमौ सुप्तौ दृश्येते शल्यकाविव॥ १७॥
ययोर्वीर्य्यमुपाश्रित्य प्रतिष्ठा काङ्क्षिता मया।
ताविमौ देहनाशाय प्रसुप्तौ पुरुषर्षभौ॥ १८॥

पर्य्यवस्थापय प्रतिष्ठापय॥ १०॥ ११॥ १२॥
लक्ष्मणस्य तु लक्ष्मणस्य च॥ १३॥ १४॥ १५॥ १६॥
शल्यकः श्वावित्॥ १७॥
प्रतिष्ठा राज्ये स्थितिः॥ १८॥

जीवन्नद्य विपन्नोऽस्मि नष्टराज्यमनोरथः।
प्राप्तप्रतिज्ञश्च रिपुः सकामो रावणः कृतः॥ १९ ॥
एवं विलपमानं तं परिष्वज्य विभीषणम्।
सुग्रीवः सत्त्वसम्पन्नो हरिराजोऽब्रवीदिदम्॥ २० ॥
राज्यं प्राप्स्यसि धर्मज्ञ! लङ्कायां नेह संशयः।
रावणः सह पुत्रेण स्वकामं नेह लप्स्यते॥ २१ ॥
गरुड़ाधिष्ठितावेतावुभौ राघवलक्ष्मणौ।
त्यक्त्वा मोहं वधिष्येते सगणं रावणं रणे॥ २२ ॥
तमेवं सान्त्वयित्वा तु समाश्वास्य तु राक्षसम्।
सुषेणं श्वशुरं पार्श्वे सुग्रीवस्तमुवाच ह॥ २३ ॥

अद्य जीवन्नपि विपन्नोऽस्मि मृतोऽस्मि। प्राप्तप्रतिज्ञः निर्वृत्त-सीतापरित्यागाभावप्रतिज्ञः। सकामः पूर्णमनोरथश्च पुत्रेण कृतः॥ ॥ १९ ॥ २० ॥

रावणः पुत्रेण सह स्वकामं स्वमनोरथम् इह लङ्कायां न लप्स्यते॥ २१ ॥

कुतस्तत्राह,—गरुड़ाधिष्ठिताविति। गरुड़ोपासकतया विख्याता-वित्यर्थः। तीर्थस्तु न रुजा पीड़ितावेताविति पठित्वा न मरणपर्य्यव-सायिरुजा पीड़िताविमौ किन्तु मोहमात्रं प्राप्तौ अतस्त्यक्त्वेत्येवं व्याचष्टे॥ २२ ॥

तमेवं सान्त्वयित्वा गरुड़ानुग्रहसम्भावनयेत्यर्थः। सान्त्वयित्वेत्यस्ये-

सह शूरैर्हरिगणैर्लब्धसंज्ञावरिन्दमौ ।
गच्छ त्वं भ्रातरौ गृह्य किष्किन्धां रामलक्ष्मणौ ॥ २४ ॥
अहन्तु रावणं हत्वा सपुत्रं सह बान्धवम् ।
मैथिलीमानयिष्यामि शक्रो नष्टामिव श्रियम् ॥ २५ ॥
श्रुत्वैतद्वानरेन्द्रस्य सुषेणो वाक्यमब्रवीत् ।
देवासुरं महायुद्धमनुभूतं पुरातनम् ॥ २६ ॥
तदास्म दानवा देवान् शरसंस्पर्शकोविदान् ।
निजघ्नुः शस्त्रविदुषश्छादयन्तो मुहुर्मुहुः ॥ २७ ॥
तानार्त्तान्नष्टसंज्ञांश्च गतासूंश्च बृहस्पतिः ।
विद्याभिर्मन्त्रयुक्ताभिरोषधीभिश्चिकित्सति ॥ २८ ॥

बाधकथनं समाश्वास्यत्विति । अनेन सुग्रीववाक्येन रामविषयं तस्य भगवदवतारत्वज्ञानं सूचितम् ॥ २३ ॥

यावल्लब्धसंज्ञौ भविष्यतस्तावदनयो रक्षार्थमेतौ गृहीत्वा शूरैर्हरिगणैः सह किष्किन्धां गच्छ ॥ २४ ॥ २५ ॥

एतद्वाक्यं रक्षणोपायबोधकं वाक्यम् । तदेवाह,—देवासुरमिति ॥ २६ ॥

स्पृश्यत इति स्पर्शो विषयः । शरसंस्पर्शे शरविषये लक्ष्यवेधनरूपे कोविदानपि शस्त्रविदुषोऽपि मुहुर्मुहुश्छादयन्तो माययेन्द्रजिद्वदात्मानं प्रच्छादयन्तो जघ्नुः ॥ २७ ॥

आर्त्तत्वादिधर्मवतोऽपि तान् बृहस्पतिर्विद्याभिर्गारुडादिध्यानरूपा मृतजीवनीभिश्चाद्दृष्टीभिरोषधीभिश्च चिकित्सति अचिकित्सत् ॥ २८ ॥

तान्यौषधान्यानयितुं क्षीरोदं यान्तु सागरम् ।
जवेन वानराः शीघ्रं सम्पातिपनसादयः ॥ २९ ॥
हरयस्तु विजानन्ति पार्वती ते महौषधी ।
सञ्जीवकरणीं दिव्यां विशल्यां देवनिर्मिताम् ॥ ३० ॥
चन्द्रश्च नाम द्रोणश्च क्षीरोदे सागरोत्तमे ।
अमृतं यत्र मथितं तत्र ते परमौषधी ॥ ३१ ॥
तौ तत्र विहितौ देवैः पर्वतौ तौ महोदधौ ।
अयं वायुसुतो राजन् ! हनूमांस्तत्र गच्छतु ॥ ३२ ॥
एतस्मिन्नन्तरे वायुर्मेघाश्चापि सविद्युतः ।
पर्य्यस्य सागरे तोयं कम्पयन्निव पर्वतान् ॥ ३३ ॥

अस्तु किं प्रकृते तत्राह,—तानीति ॥ २९ ॥

ननु स्थाने किन्नानयनं तत्राह,—हरयस्त्विति । सम्पात्यादयो हरयः पार्वतौ पर्वतप्रतिष्ठिते ते ओषधी विजानन्ति । पार्वती इति द्विवचनमार्षम् । तयोर्नामाह,—सञ्जीवेति । विशल्यां विशल्यकरणीम् । देवेन ब्रह्मणा निर्मिताम् ॥ ३० ॥

क्व पर्वते ते तत्राह,—चन्द्रश्चेति । क्षीरोदे तौ पर्वतौ स्तः । तयोश्च ओषध्यौ । कौ नाम सागरोत्तमस्तत्राह,—अमृतमिति ॥ ३१ ॥

यद्यपि पनसादयो जानन्ति तथापि शीघ्रमागमनार्थं वायुसुतो यातु ॥ ३२ ॥

एतस्मिन्नन्तरे ओषध्यानयनवार्त्ताकाले । सागरे तोयं पर्य्यस्य

महात पक्षवातेन सर्वद्वीपमहाद्रुमः।
निपेतुर्भग्नविटपाः सलिले लवणाम्भसि॥ ३४॥
अभवन् पन्नगास्त्रस्ता भोगिनस्तत्र वासिनः।
शीघ्रं सर्वाणि यादांसि जग्मुश्च लवणार्णवम्॥ ३५॥
ततो मुहूर्त्ताद्गरुड़ं वैनतेयं महाबलम्।
वानरा ददृशुः सर्वे ज्वलन्तमिव पावकम्॥ ३६॥
तमागतमभिप्रेक्ष्य नागास्ते विप्रदुद्रुवुः।
यैस्तु तौ पुरुषौ बद्धौ शरभूतैर्महाबलैः॥ ३७॥
ततः सुपर्णः काकुत्स्थौ स्पृष्ट्वा प्रत्यभिनन्द्य च।
विममर्श च पाणिभ्यां मुखे चन्द्रसमप्रभे॥ ३८॥
वैनतेयेन संस्पृष्टास्तयोः संरुरुहुर्व्रणाः।
सुवर्णे च तनू स्निग्धे तयोराशु बभूवतुः॥ ३९॥

अनिलहरीयोगि कृत्वा पर्वतान् कम्पयन् पक्षवायुरभूत् सविद्युतो मेघाश्चासन्॥ ३३॥

सर्वे द्वीपाः लवणसमुद्रान्तर्वर्त्तिनः॥ ३४॥

तत्र वासिनः मलयवासिनो भोगिनो महाकाया यादांसि सर्वाणि लवणार्णवं जग्मुः। भयादन्तर्मग्नानीत्यर्थः॥ ३५॥ ३६॥ ३७॥

प्रत्यभिनन्द्य विजयाशिषा प्रतिपूज्य। मुखे रामलक्ष्मणयोः॥ ३८॥

संरुरुहुः यथापूर्वं संरूढ़मांसा अभूवन्। सुवर्णे शोभनकान्तियुक्ते। तनू शरीरे॥ ३९॥

तेजो वीर्य्यं बलञ्चौज उत्साहश्च महागुणाः।
प्रदर्शनञ्च बुद्धिश्च स्मृतिश्च द्विगुणा तयोः॥ ४०॥
तावुत्थाप्य महातेजा गरुड़ो वासवोपमौ।
उभौ च सस्वजे हृष्टो रामश्चैनमुवाच ह॥ ४१॥
भवत्प्रसादाद्व्यसनं रावणिप्रभवं महत्।
उपायेन व्यतिक्रान्तौ शीघ्रञ्च बलिनौ कृतौ॥ ४२॥
यथा तातं दशरथं यथाऽजञ्च पितामहम्।
तथा भवन्तमासाद्य हृदयं मे प्रसीदति॥ ४३॥
को भवान् रूपसम्पन्नो दिव्यस्रगनुलेपनः।
वसानो विरजे वस्त्रे दिव्याभरणभूषितः॥ ४४॥

तेजः पराभिभवसामर्थ्यम्। वीर्य्यं पराक्रमः। बलं शारीरम्। ओजः कान्तिः। उत्साहः प्रसिद्धः। प्रदर्शनं शब्दानुमानाभ्यां परोक्षार्थनिश्चयः। बुद्धिरपरोक्षनिश्चयः। द्विगुणा वैनतेयस्पर्शात् पूर्वतोऽप्यधिका। अत्रान्यैर्देवैरवतीर्य्य भगवतो रामस्य मूलमूर्त्तेः साह्ययोपकारः सम्पादितः। गरुड़ेन तु स्वरूपत एवेति बोध्यम्॥ ४०॥ ४१॥

अतिक्रान्तौ लङ्घितवन्तौ॥ ४२॥

यथा तातं दशरथम्। स्वावतारोचितं काश्यपप्रजापत्यंशम्। अजञ्च पितामहम्। चतुर्मुखब्रह्मांशं मे हिरण्यगर्भात्मनस्तदंशम्॥ ४३॥

को भवानिति अयं प्रश्नोऽपि मनुष्यशरीरोचितव्यवहार एव तत् सत्यत्वप्रत्यायनार्थः। अत्र रामसमीपागमनपर्य्यन्तं पक्ष्याकारेणैवागत

तमुवाच महातेजा वैनतेयो महाबलः।
पतत्त्रिराजः प्रीतात्मा हर्षपर्य्याकुलेक्षणम्॥ ४५॥
अहं सखा ते काकुत्स्थ! प्रियः प्राणो बहिश्चरः।
गरुत्मानिह सम्प्राप्तो युवयोः साह्यकारणात्॥ ४६॥
असुरा वा महावीर्य्या वानरा वा महाबलाः।
सुराश्चापि सगन्धर्वाः पुरस्कृत्य शतक्रतुम्॥ ४७॥
नेमं मोक्षयितुं शक्ताः शरबन्धं सुदारुणम्।
मायाबलादिन्द्रजिता निर्मितं क्रूरकर्मणा॥ ४८॥
एते नागाः काद्रवेयास्तीक्ष्णदंष्ट्रा विषोल्बणाः।
रक्षोमायाप्रभावेण शरभूतास्त्वदाश्रयाः॥ ४९॥
सभाग्यश्चासि धर्मज्ञ! राम! सत्यपराक्रम!।

सन्निधिमात्रेण नागबन्धनञ्च निरस्य राघवस्पर्शनाद्यर्थं पुरुषाकारेण व्यवहृतवानिति बोध्यम्। तदाह,—रूपसम्पन्न इति। दिव्यरूपसम्पन्न इत्यर्थः॥ ४४॥

हर्षपर्य्याकुलेक्षणं राममुवाचेत्यन्वयः॥ ४५॥

अहं सखेति। सखित्वात् सुग्रीवादिवदेव साह्यकरणार्थमागत इति भावः॥ ४६॥

इदञ्च साहाय्यं मदेकसाध्यमित्याह,—असुरा वेति॥ ४७॥ ४८॥

रक्षोमायया शरभूता एते नागास्त्वदाश्रया इति बहुव्रीहिः। त्वां प्राप्ता इत्यर्थः॥ ४९॥

लक्ष्मणेन सह भ्रात्रा समरे रिपुघातिना ॥ ५० ॥
इमं श्रुत्वा तु विक्रान्तस्त्वरमाणोऽहमागतः ।
सहसैवावयोः स्नेहात् सखित्वमनुपालयन् ॥ ५१ ॥
मोक्षितौ च महाघोरादस्मात् सायकबन्धनात् ।
अप्रमादश्च कर्त्तव्यो युवाभ्यां नित्यमेव हि ॥ ५२ ॥
प्रकृत्या राक्षसाः सर्वे संग्रामे कूटयोधिनः ।
शूराणां शुद्धभावानां भवतामार्जवं बलम् ॥ ५३ ॥
तन्न विश्वसनीयं वो राक्षसानां रणाजिरे ।
एतेनैवोपमानेन नित्यं जिह्मा हि राक्षसाः ॥ ५४ ॥
एवमुक्त्वा तदा रामं सुपर्णः स महाबलः ।

मम दुर्नयैरित्यादिना यदात्मनिन्दनं कृतं तत्परिहरति । सभाग्य इति । अनुकूलतरशुभदैववानसि । समरे समरविषये ॥ ५० ॥

इमं वृत्तान्तं नागबन्धवृत्तान्तं श्रुत्वा । देवतानां मुखादिति शेषः । स्नेहादेवागतः ॥ ५१ ॥

स्नेहादेव च युवां मोक्षितौ मोचितौ । अप्रमादः सावधानता ॥ ॥ ५२ ॥ ५३ ॥

तन्न विश्वसनीयम् । यथा वयमृजवो धर्मपरास्तथा पुरुषत्वाविशेषादन्येऽपि तथैवेति कल्पितं रक्षोगतमार्जवं न विश्वसितव्यमित्यर्थः । उक्तमेवार्थमनुभवतः स्पष्टीकरोति । एतेनैवेति । इन्द्रजित्कापट्येनैवेत्यर्थः ॥ ५४ ॥

परिष्वज्य च सुस्निग्धमाप्रष्टुमुपचक्रमे ॥ ५५ ॥
सखे ! राघव ! धर्मज्ञ ! रिपूणामपि वत्सल ! ।
अभ्यनुज्ञातुमिच्छामि गमिष्यामि यथासुखम् ॥ ५६ ॥
न च कौतूहलं कार्य्यं सखित्वं प्रति राघव ! ।
कृतकर्मा रणे वीर ! सखित्वं प्रतिवेत्स्यसि ॥ ५७ ॥
बालवृद्धावशेषान्तु लङ्कां कृत्वा शरोर्मिभिः ।
रावणन्तु रिपुं हत्वा सीतां त्वमुपलप्स्यसे ॥ ५८ ॥
इत्येवमुक्त्वा वचनं सुपर्णः शीघ्रविक्रमः ।
रामञ्च नीरुजं कृत्वा मध्ये तेषां वनौकसाम् ॥ ५९ ॥
प्रदक्षिणं ततः कृत्वा परिष्वज्य च वीर्य्यवान् ।
जगामाकाशमाविश्य सुपर्णः पवनो यथा ॥ ६० ॥
नीरुजौ राघवौ दृष्ट्वा ततो वानरयूथपाः ।
सिंहनादं तदा नेदुर्लाङ्गूलं दुधुवुश्च ते ॥ ६१ ॥
ततो भेरीः समाजघ्नुर्मृदङ्गांश्चाप्यवादयन् ।
दध्मुः शङ्खान् सम्प्रहृष्टाः क्ष्वेलन्त्यपि यथा पुरम् ॥ ६२ ॥

आप्रष्टुं गमनानुज्ञां कारयितुम् ॥ ५५ ॥ ५६ ॥

मदुक्तसखित्वं प्रति लोकप्रतारणायापि विस्मयो न कार्य्यं इत्याह,—अनुवेत्स्यसि। एतैः सर्वैः सहेति शेषः ॥ ५७ ॥ ५८ ॥ ५९ ॥

प्रदक्षिणं कृत्वेत्यनेन दिव्यदेवतावतारो राम इति सर्वान् प्राकृतकपीन् प्रत्यपि बोधितम् ॥ ६० ॥ ६१ ॥

अपरे स्फोट्य विक्रान्ता वानरा नगयोधिनः ।
द्रुमानुत्पाट्य विविधांस्तस्थुः शतसहस्रशः ॥ ६३ ॥

विसृजन्तो महानादांस्त्रासयन्तो निशाचरान् ।
लङ्काद्वाराण्युपाजग्मुर्युद्धकामाः प्लवङ्गमाः ॥ ६४ ॥

तेषां सुभीमस्तुमुलो निनादो
बभूव शाखामृगयूथपानाम् ।
क्षये निदाघस्य यथा घनानां
नादः सुभीमो नदतां निशीथे ॥ ६५ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
पञ्चाशः सर्गः ॥ ५० ॥

यथापुरं यथापूर्वम् ॥ ६२ ॥ ६३ ॥ ६४ ॥

निशीथे यथा घनानां नादस्तथा वानराणां नाद इत्यर्थः । अत्र स्थाने दिनद्वयं युद्धावहार इत्याभिवेशः ॥ ६५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

---

# एकपञ्चाशः सर्गः

तेषान्तु तुमुलं शब्दं वानराणां महौजसाम् ।
नर्दतां राक्षसैः सार्द्धं तदा शुश्राव रावणः ॥ १ ॥
स्निग्धगम्भीरनिर्घोषं श्रुत्वा तं निनदं भृशम् ।
सचिवानां ततस्तेषां मध्ये वचनमब्रवीत् ॥ २ ॥
यथाऽसौ सम्प्रहृष्टानां वानराणामुपस्थितः ।
बहूनां सुमहान्नादो मेघानामिव गर्जताम् ॥ ३ ॥
सुव्यक्तं महती प्रीतिरेतेषां नात्र संशयः ।
तथा हि विपुलैर्नादैश्चुक्षुभे लवणार्णवः ॥ ४ ॥
तौ तु बद्धौ शरैस्तीक्ष्णैर्भ्रातरौ रामलक्ष्मणौ ।
अयञ्च सुमहान्नादः शङ्कां जनयतीव मे ॥ ५ ॥

अथ श्रुतवानरनादेन रावणेन धूम्राक्षप्रेषणम् । तेषामिति । राक्षसैर्विभीषणादिभिः ॥ १ ॥

स्निग्धगम्भीरत्वेन दुःखमूलरोदनादिशब्दव्यावृत्तिः ॥ २ ॥

यथा यस्मादित्यर्थः । एवमेषां नादः समुत्थितः ॥ ३ ॥

तस्मादेषां महती प्रीतिर्जातेति मन्ये । तत्रैव युक्त्यन्तरम् । तथा हीति ॥ ४ ॥

एवञ्च वचनञ्चोक्त्वा मन्त्रिणो राक्षसेश्वरः।
उवाच नैर्ऋतांस्तत्र समीपपरिवर्त्तिनः॥ ६॥
ज्ञायतां तूर्णमेतेषां सर्वेषाञ्च वनौकसाम्।
शोककाले समुत्पन्ने हर्षकारणमुत्थितम्॥ ७॥
तथोक्तास्ते सुसम्भ्रान्ताः प्राकारमधिरुह्य च।
ददृशुः पालितां सेनां सुग्रीवेण महात्मना॥ ८॥
तौ च मुक्तौ सुघोरेण शरबन्धेन राघवौ।
समुत्थितौ महाभागौ विषेदुः सर्वराक्षसाः॥ ९॥
सन्त्रस्तहृदयाः सर्वे प्राकारादवरुह्य ते।
विवर्णा राक्षसा घोरा राक्षसेन्द्रमुपस्थिताः॥ १०॥
तदप्रियं दीनमुखा रावणस्य च राक्षसाः।
कृतस्नं निवेदयामासुर्यथावद्वाक्यकोविदाः॥ ११॥
यौ ताविन्द्रजिता युद्धे भ्रातरौ रामलक्ष्मणौ।
निबद्धौ शरबन्धेन निष्प्रकम्पभुजौ कृतौ॥ १२॥
विमुक्तौ शरबन्धेन दृश्येते तौ रणाजिरे।
पाशानिव गजौ छित्वा गजेन्द्रसमविक्रमौ॥ १३॥

शङ्कां बन्धमोक्षशङ्कां जनयतीव जनयत्येव॥ ५॥ ६॥
किं हर्षकारणमुत्थितं तज्ज्ञायताम्॥ ७॥
प्राकारमधिरुह्येति। अनेनात्रावहारः सूचितः॥ ८॥

तच्छ्रुत्वा वचनं तेषां राक्षसेन्द्रो महाबलः ।
चिन्तारोषसमाक्रान्तो विवर्णवदनोऽभवत् ॥ १४ ॥
घोरैर्दत्तवरैर्बद्धौ शरैराशीविषोपमैः ।
अमोघैः सूर्य्यसङ्काशैः प्रमथ्येन्द्रजिता युधि ॥ १५ ॥
तदस्त्रबन्धमासाद्य यदि मुक्तौ रिपू मम ।
संशयस्थमिदं सर्वमनुपश्याम्यहं बलम् ॥ १६ ॥
निष्फलाः खलु संवृत्ताः शराः पावकतेजसः ।
आदत्तं यैस्तु संग्रामे रिपूणां जीवितं मम ॥ १७ ॥
एवमुक्त्वा तु संक्रुद्धो निःश्वसन्नुरगो यथा ।
अब्रवीद्रक्षसां मध्ये धूम्राक्षं नाम राक्षसम् ॥ १८ ॥
बलेन महता युक्तो राक्षसैर्भीमविक्रम ! ।
त्वं बधायाशु निर्याहि रामस्य सह वानरैः ॥ १९ ॥

समुत्थितौ दृष्ट्वेति शेषः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

दत्तवरैः वरं दत्तादत्तवरैस्तैः । चिरकालदुश्चरतपसा वरप्राप्तैरित्यर्थः । युधि प्रमथ्य बद्धावित्यन्वयः ॥ १५ ॥

संशयस्थं इन्द्रजित्बलमवष्टभ्यस्थितस्य मे एतत् बलस्य वैफल्यात् प्रायोऽस्माकमपजय इति मन्ये इत्यर्थः ॥ १६ ॥

तदेवाह,—निष्फला इति । यैः शरैरिन्द्रजित्प्रयुक्तैः संग्रामे मम रिपूणां जीवितमादत्तं त निष्फलाः संवृत्ताः खलु । तस्मात् संशयस्थमिदम् ॥ १७ ॥ १८ ॥ १९ ॥

एवमुक्तस्तु धूम्राक्षो राक्षसेन्द्रेण धीमता।
परिक्रम्य ततः शीघ्रं निर्जगाम नृपालयात् ॥ २० ॥
अभिनिष्क्रम्य तद्द्वारं बलाध्यक्षमुवाच ह।
त्वरयस्व बलं शीघ्रं किं चिरेण युयुत्सतः ॥ २१ ॥
धूम्राक्षवचनं श्रुत्वा बलाध्यक्षो बलानुगः।
बलमुद्योजयामास रावणस्याज्ञया भृशम् ॥ २२ ॥
ते बद्धघण्टा बलिनो घोररूपा निशाचराः।
विनर्दमानाः संहृष्टा धूम्राक्षं पर्य्यवारयन् ॥ २३ ॥
विविधायुधहस्ताश्च शूलमुद्गरपाणयः।
गदाभिः पट्टिशैर्दण्डैरायसैर्मुसलैरपि ॥ २४ ॥
परिघैर्भिन्दिपालैश्च भल्लैः पाशैः परश्वधैः।
निर्ययू राक्षसा घोरा नर्दन्तो जलदा यथा ॥ २५ ॥
रथैः कवचिनस्त्वन्ये ध्वजैश्च समलङ्कृतैः।
सुवर्णजालविहितैः खरैश्च विविधाननैः ॥ २६ ॥
हयैः परमशीघ्रैश्च गजैश्चैव मदोत्कटैः।

परिक्रम्य रावणं प्रदक्षिणीकृत्य ॥ २० ॥

तद्द्वारं रावणगृहद्वारम् अभिनिष्क्रम्य ततो निर्गम्य युयुत्सतः पुंसः किं चिरेण किं विलम्बेन। विलम्बो व्यर्थ इत्यर्थः ॥ २१ ॥ २२ ॥

बद्धघण्टाः प्रासशक्त्यादिष्विति शेषः ॥ २३ ॥

गदादिभिरुपलक्षिताः ॥ २४ ॥ २५ ॥

निर्ययुर्नैर्ऋतव्याघ्रा व्याघ्रा इव दुरासदाः ॥ २७ ॥
मृगसिंहमुखैर्युक्तं खरैः कनकभूषितैः।
आरुरोह रथं दिव्यं धूम्राक्षः खरनिःस्वनम् ॥ २८ ॥
स निर्यातो महावीर्य्यो धूम्राक्षो राक्षसैर्वृतः।
हसन् वै पश्चिमद्वाराद्धनूमान् यत्र तिष्ठति ॥ २९ ॥
रथप्रवरमास्थाय खरयुक्तं खरस्वनम्।
प्रयान्तन्तु महाघोरं राक्षसं भीमदर्शनम् ॥ ३० ॥
अन्तरिक्षगताः क्रूराः शकुनाः प्रत्यषेधयन्।
रथशीर्षे महाभीमो गृध्रश्च निपपात ह ॥ ३१ ॥
ध्वजाग्रे ग्रथिताश्चैव निपेतुः कुणपाशनाः।
रुधिरार्द्रो महान् श्वेतः कबन्धः पतितो भुवि ॥ ३२ ॥
विस्वरञ्चोत्सृजन्नादान् धूम्राक्षस्य निपातितः।
ववर्ष रुधिरं देवः सञ्चचाल च मेदिनी ॥ ३३ ॥

समलंकृतैरिति रथध्वजयोर्विशेषणम्। सुवर्णजालविहितैः तेन विहितालङ्कारैः ॥ २६ ॥ २७ ॥ २८ ॥

पश्चिमद्वारात् यत्र द्वारे हनूमान् रोधकस्तस्मादेव पश्चिमद्वाराद्धनूमता योद्धुं निर्गतः ॥ २९ ॥ ३० ॥

शकुनाः दुःशकुनाः। प्रत्यषेधयन्। मृत्युसूचनेनेति शेषः ॥ ३१ ॥

ग्रथिताः मालावत्परस्परसक्ताः कुणपाशना गृध्राः ॥ ३२ ॥

धूम्राक्षस्य समीपे निपातितो निपतितः। कबन्ध इति शेषः ॥ ३३ ॥

प्रतिलोमं ववौ वायुर्निर्घातसमनिःस्वनः ।
तिमिरौघावृतास्तत्र दिशश्च न चकाशिरे ॥ ३४ ॥
स तूत्पातांस्ततो दृष्ट्वा राक्षसानां भयावहान् ।
प्रादुर्भूतान् सुघोरांश्च धूम्राक्षो व्यथितोऽभवत् ।
मुमुहू राक्षसाः सर्वे धूम्राक्षस्य पुरःसराः ॥ ३५ ॥

ततः सुभीमो बहुभिर्निशाचरै-
र्वृतोऽभिनिष्क्रम्य रणोत्सुको बली ।
ददर्श तां राघवबाहुपालितां
महौघकल्पां बहुवानरीश्चमूम् ॥ ३६ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
एकपञ्चाशः सर्गः ॥ ५१ ॥

प्रतिलोमं प्रतिकूलम् ॥ ३४ ॥ ३५ ॥

अभिनिष्क्रम्य पुरादिति शेषः । महौघः प्रलयसमुद्रस्तत्-कल्पाम् ॥ ३६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

---

## द्विपञ्चाशः सर्गः

धूम्राक्षं प्रेक्ष्य निर्यान्तं राक्षसं भीमविक्रमम् ।
विनेदुर्वानराः सर्वे प्रहृष्टा युद्धकाङ्क्षिणः ॥ १ ॥
तेषां सुतुमुलं युद्धं संजज्ञे कपिरक्षसाम् ।
अन्योऽन्यं पादपैर्घोरैर्निघ्नतां शूलमुद्गरैः ॥ २ ॥
राक्षसैर्वानरा घोरा विनिकृत्ताः समन्ततः ।
वानरै राक्षसाश्चापि द्रुमैर्भूमिसमीकृताः ॥ ३ ॥
राक्षसास्त्वभिसंक्रुद्धा वानरान्निशितैः शरैः ।
विव्यधुर्घोरसङ्काशैः कङ्कपत्रैरजिह्मगैः ॥ ४ ॥
ते गदाभिश्च भीमाभिः पट्टिशैः कूटमुद्गरैः ।
घोरैश्च परिघैश्चित्रैस्त्रिशूलैश्चापि संश्रितैः ॥ ५ ॥
विदार्यमाणा रक्षोभिर्वानरास्ते महाबलाः ।
अमर्षजनितोद्धर्षाश्चक्रुः कर्माण्यभीतवत् ॥ ६ ॥

धूम्राक्षमिति ॥ १ ॥ २ ॥
भूमिसमीकृताः भूम्या समतां प्रापिता हता इति यावत् ॥ ३ ॥
घोरसङ्काशैः घोररूपैः ॥ ४ ॥
संश्रितैः गृहीतैः ॥ ५ ॥

शरनिर्भिन्नगात्रास्ते शूलनिर्भिन्नदेहिनः ।
जगृहुस्ते द्रुमांस्तत्र शिलाश्च हरियूथपाः ॥ ७ ॥
ते भीमवेगा हरयो नर्दमानास्ततस्ततः ।
ममन्थू राक्षसान् वीरान्नामानि च बभाषिरे ॥ ८ ॥
तद्बभूवाद्भुतं घोरं युद्धं वानररक्षसाम् ।
शिलाभिर्विविधाभिश्च बहुशाखैश्च पादपैः ॥ ९ ॥
राक्षसा मथिताः केचिद्वानरैर्जितकाशिभिः ।
ववमू रुधिरं केचिन्मुखैरुधिरभोजनाः ॥ १० ॥
पार्श्वेषु दारिताः केचित् केचिद्राशीकृता द्रुमैः ।
शिलाभिश्चूर्णिताः केचित् केचिद्दन्तैर्विदारिताः ॥ ११ ॥
ध्वजैर्विमथितैर्भग्नः खड्गैश्च विनिपातितैः ।
रथैर्विध्वंसिताः केचिद्व्यथिता रजनीचराः ॥ १२ ॥
गजेन्द्रैः पर्वताकारैः पर्वताग्रैर्वनौकसाम् ।
मथितैर्वाजिभिः कीर्णं सारोहैर्वसुधातलम् ॥ १३ ॥
वानरैर्भीमविक्रान्तैराप्लुत्योत्प्लुत्य वेगितैः ।

जनितोद्धर्षाः सञ्जातोत्साहाः । अभीतवन्निर्भयाः सन्तः ॥ ६ ॥
शूलनिर्भिन्नदेहिनः । इन्नन्तत्वमार्षम् ॥ ७ ॥ ८ ॥ ९ ॥
जितकाशिभिर्जितभयैर्जितश्वासैर्वा ॥ १० ॥
द्रुमै राशीकृताः । द्रुमप्रहारैर्हत्वा राशीकृता इत्यर्थः ॥ ११ ॥ १२ ॥
गजेन्द्रैर्मृतगजेन्द्रशरीरैः ॥ १३ ॥

राक्षसाः करजैस्तीक्ष्णैर्मुखेषु विनिदारिताः ॥ १४ ॥
विषण्णवदना भूयो विप्रकीर्णशिरोरुहाः।
मूढ़ाः शोणितगन्धेन निपेतुर्धरणीतले ॥ १५ ॥
अन्ये तु परमक्रुद्धा राक्षसा भीमविक्रमाः।
तलैरेवाभिधावन्ति वज्रस्पर्शसमैर्हरीन् ॥ १६ ॥
वानरैः पातयन्तस्ते वेगिता वेगवत्तरैः।
मुष्टिभिश्चरणैर्दन्तैः पादपैश्चावपोथिताः ॥ १७ ॥
सैन्यन्तु विद्रुतं दृष्ट्वा धूम्राक्षो राक्षसर्षभः।
रोषेण कदनञ्चक्रे वानराणां युयुत्सताम् ॥ १८ ॥
प्रासैः प्रमथिताः केचिद्वानराः शोणितस्रवाः।
मुद्गरैराहताः केचित्पतिता धरणीतले ॥ १९ ॥
परिघैर्मथिताः केचिद्भिन्दिपालैश्च दारिताः।
पट्टिशैर्मथिताः केचिद्विक्लवन्तो गतासवः ॥ २० ॥
केचिद्विनिहता भूमौ रुधिरार्द्रा वनौकसः।
केचिद्विद्राविता नष्टाः संक्रुद्धैराक्षसैर्युधि ॥ २१ ॥
विभिन्नहृदयाः केचिदेकपार्श्वेन शायिताः।

करजैर्नखैः ॥ १४ ॥
मूढ़ा मूर्च्छिताः ॥ १५ ॥ १६ ॥
अवपोथिता हिंसिताः ॥ १७ ॥ १८ ॥ १९ ॥
विक्लवन्तो विलग्नाः ॥ २० ॥ २१ ॥

विदारितास्त्रिशूलैश्च केचिदान्त्रैर्विनिःसृताः ॥ २२ ॥
तत् सुभीमं महत् युद्धं हरिराक्षससंकुलम् ।
प्रबभौ शस्त्रबहुलं शिलापादपसंकुलम् ॥ २३ ॥
धनुर्ज्यातन्त्रिमधुरं हिक्कातालसमन्वितम् ।
मन्दस्तनितगीतं तत् युद्धगान्धर्वमावभौ ॥ २४ ॥
धूम्राक्षस्तु धनुष्पाणिर्वानरान् रणमूर्द्धनि ।
हसन् विद्रावयामास दिशस्ताञ्छरवृष्टिभिः ॥ २५ ॥
धूम्राक्षेणार्दितं सैन्यं व्यथितं प्रेक्ष्य मारुतिः ।
अभ्यवर्त्तत संक्रुद्धः प्रगृह्य विपुलां शिलाम् ॥ २६ ॥
क्रोधात् द्विगुणताम्राक्षः पितुस्तुल्यपराक्रमः ।
शिलां तां पातयामास धूम्राक्षस्य रथं प्रति ॥ २७ ॥
आपतन्तीं शिलां दृष्ट्वा गदामुद्यम्य सम्भ्रमात् ।
रथादाप्लुत्य वेगेन वसुधायां व्यतिष्ठत ॥ २८ ॥

आन्त्रैर्विनिःसृताः । निःसृतान्त्रा इत्यर्थः । आन्त्राणि पुरीतत इति कतकः ॥ २२ ॥ २३ ॥

युद्धगान्धर्वं युद्धरूपसङ्गीतविद्या । तद्रूपकोपपादकं धनुरित्यादि । धनुर्ज्यारूपा या तन्त्री वीणा तया मधुरम् । तन्त्रिमधुरमिति ह्रस्व आर्षः । हिक्का अस्वक्षेपा तद्रूपतालेन युक्तम् । मन्दानां मन्दाख्यगज-विशेषाणां स्तनितं वृंहितमेव गीतं यत्र तत् ॥ २४ ॥ २५ ॥ २६ ॥ ॥ २७ ॥ २८ ॥

सा प्रमथ्य रथं तस्य निपपात शिला भुवि ।
सचक्रकूबरमुखं सध्वजं सशरासनम् ॥ २९ ॥
स त्यक्त्वा तु रथं तस्य हनूमान् मारुतात्मजः ।
रक्षसां कदनञ्चक्रे सस्कन्धविटपैर्द्रुमैः ॥ ३० ॥
विभिन्नशिरसो भूत्वा राक्षसा रुधिरोक्षिताः ।
द्रुमैः प्रमथिताश्चान्ये निपेतुर्धरणीतले ॥ ३१ ॥
विद्राव्य राक्षसं सैन्यं हनूमान् मारुतात्मजः ।
गिरेः शिखरमादाय धूम्राक्षमभिदुद्रुवे ॥ ३२ ॥
तमापतन्तं धूम्राक्षो गदामुद्यम्य वीर्य्यवान् ।
विनर्दमानः सहसा हनूमन्तमभिद्रवत् ॥ ३३ ॥
तस्य क्रुद्धस्य रोषेण गदां तां बहुकण्टकाम् ।
पातयामास धूम्राक्षो मस्तकेऽथ हनूमतः ॥ ३४ ॥
ताड़ितः स तया तत्र गदया भीमवेगया ।
स कपिर्मारुतबलस्तं प्रहारमचिन्तयन् ॥ ३५ ॥
धूम्राक्षस्य शिरो मध्ये गिरिशृङ्गमपातयत् ।

सा शिला तस्य चक्रादिसहितं रथं प्रमथ्य भुवि निपपात । कूबरो [illegible] । अवष्टम्भिकाले रथ त्यक्तशरासनसहितम् ॥ २९ ॥

[illegible] भग्नं रथम् । रक्षसां कदनञ्चक्रे । स्वसेनारक्षणार्थमिति शेषः । स्कन्धं स्थूलशाखा । विटपः सूक्ष्मा ॥ ३० ॥

भूत्वेत्यस्य पतिता इति शेषः ॥ ३१ ॥ ३२ ॥

स विस्फारितसर्वाङ्गो गिरिशृङ्गेण ताडितः ॥ ३६ ॥
पपात सहसा भूमौ विकीर्ण इव पर्वतः ।
धूम्राक्षं निहतं दृष्ट्वा हतशेषा निशाचराः ।
त्रस्ताः प्रविविशुर्लङ्कां वध्यमानाः प्लवङ्गमैः ॥ ३७ ॥

स तु पवनसुतो निहत्य शत्रून्
क्षतजवहाः सरितश्च संविकीर्य्य ।
रिपुवधजनितश्रमो महात्मा
मुदमगमत् कपिभिः सुपूज्यमानः ॥ ३८ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
द्विपञ्चाशः सर्गः ॥ ५२ ॥

अभिद्रवत् अभ्यद्रवत् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

## त्रिपञ्चाशः सर्गः

धूम्राक्षं निहतं श्रुत्वा रावणो राक्षसेश्वरः ।
क्रोधेन महताविष्टो निःश्वसन्नुरगो यथा ॥ १ ॥
दीर्घमुष्णं विनिःश्वस्य क्रोधेन कलुषीकृतः ।
अब्रवीद्राक्षसं क्रूरं वज्रदंष्ट्रं महाबलम् ॥ २ ॥
गच्छ त्वं वीर ! निर्य्याहि राक्षसैः परिवारितः ।
जहि दाशरथिं रामं सुग्रीवं वानरैः सह ॥ ३ ॥
तथेत्युक्त्वा द्रुततरं मायावी राक्षसेश्वरः ।
निर्जगाम बलैः सार्द्धं बहुभिः परिवारितः ॥ ४ ॥
नागैरश्वैः खरैरुष्ट्रैः संयुक्तः सुसमाहितः ।
पताकाध्वजचित्रैश्च बहुभिः समलङ्कृतः ॥ ५ ॥
ततो विचित्रकेयूरमुकुटेन विभूषितः ।
तनुत्रञ्च समावृत्य सधनुर्निर्य्ययौ द्रुतम् ॥ ६ ॥
पताकालङ्कृतं दीप्तं तप्तकाञ्चनभूषितम् ।

धूम्राक्षमिति ॥ १ ॥ २ ॥
गच्छ निर्य्याहीत्याभ्यां सर्वथा गन्तव्यमिति बोध्यते ॥ ३ ॥ ४ ॥
बहुभिर्बलाध्यक्षैरिति शेषः ॥ ५ ॥

रथं प्रदक्षिणं कृत्वा समारोहच्चमूपतिः ॥ ७ ॥
ऋष्टिभिस्तोमरैश्चित्रैः सुचणैश्च मुसलैरपि ।
भिन्दिपालैश्च चापैश्च शक्तिभिः पट्टिशैरपि ॥ ८ ॥
खड्गैश्चक्रैर्गदाभिश्च निशितैश्च परश्वधैः ।
पदातयश्च निर्य्यान्ति विविधाः शस्त्रपाणयः ॥ ९ ॥
विचित्रवाससः सर्व्वे दीप्ता राक्षसपुङ्गवाः ।
गजा मदोत्कटाः शूराश्चलन्त इव पर्वताः ॥ १० ॥
ते युद्धकुशलारूढास्तोमरांकुशपाणिभिः ।
अन्ये लक्षणसंयुक्ताः शूरारूढा महाबलाः ॥ ११ ॥
तद्राक्षसबलं सर्वं विप्रस्थितमशोभत ।
प्रावृट्काले यथा मेघा नर्द्दमानाः सविद्युतः ॥ १२ ॥
निःसृता दक्षिणद्वाराद‌ङ्गदो यत्र यूथपः ।
तेषां निष्क्रममाणानामशुभं समजायत ॥ १३ ॥

तनुत्रं कवचम् । समावृत्य आमुच्य ॥ ६ ॥ ७ ॥

ऋष्टिः सूक्ष्मखड्गः । ऋष्ट्याद्युपलक्षिताः पदातयो निर्य्यान्तीत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥

तोमरांकुशपाणिभीरूढा आरूढा युद्धकुशला ये गजास्ते च निर्य्याता इत्यन्वयः । लक्षणसंयुक्ता अन्ये अश्वाश्च शूरारूढा निर्य्याताः ॥ ११ ॥

विप्रस्थितं विशेषेण कृतप्रस्थानम् । सविद्युतः । नीलस्य रक्षोबलस्य स्वर्णभूषणबहुलत्वात् सविद्युन्मेघोपमेयत्वम् ॥ १२ ॥

निःसृताः । राक्षसा इति शेषः ॥ १३ ॥

आकाशाद्विघनात्तीव्रादुल्काकान्यपतंस्तदा।
वमन्तः पावकज्वालाः शिवा घोरा ववाशिरे ॥ १४ ॥
व्याहरन्त मृगा घोरा रक्षसां निधनं तदा।
समापतन्तो योधास्तु प्रास्खलंस्तत्र दारुणम् ॥ १५ ॥
एतानौत्पातिकान् दृष्ट्वा वज्रदंष्ट्रो महाबलः।
धैर्य्यमालम्ब्य तेजस्वी निर्जगाम रणोत्सुकः ॥ १६ ॥
तांस्तु विद्रवतो दृष्ट्वा वानरा जितकाशिनः।
प्रणेदुः सुमहानादान् दिशः शब्देन पूरयन् ॥ १७ ॥
ततः प्रवृत्तं तुमुलं हरीणां राक्षसैः सह।
घोराणां भीमरूपाणामन्योऽन्यवधकाङ्क्षिणाम् ॥ १८ ॥
निष्पतन्तो महोत्साहा भिन्नदेहशिरोधराः।
रुधिरोक्षितसर्वाङ्गान्यपतन् धरणीतले ॥ १९ ॥
केचिदन्योऽन्यमासाद्य शूराः परिघबाहवः।
चिक्षिपुर्विविधान् शस्त्रान् समरेष्वनिवर्त्तिनः ॥ २० ॥

दुर्निमित्तरूपमशुभमेवाह्याकाशादिति। विघनान्निर्मेघात् ॥ १४ ॥

घोरा मृगा रक्षसां निधनं व्याहरन्त व्याहरन् ॥ १५ ॥

औत्पातिकान् अशुभसूचकान् ॥ १६ ॥

विद्रवतः विशेषेण स्वसम्मुखमागच्छतः। पूरयन् पूरयन्तः। आर्ष-मेकवचनम् ॥ १७ ॥

तुमुलं व्यासङ्कटम् ॥ १८ ॥ १९ ॥ २० ॥

द्रुमाणाञ्च शिलानाञ्च शस्त्राणाञ्चापि निःस्वनः ।
श्रूयते सुमहांस्तत्र घोरो हृदयभेदनः ॥ २१ ॥
रथनेमिस्वनस्तत्र धनुषश्चापि घोरवत् ।
शङ्खभेरीमृदङ्गानां बभूव तुमुलः स्वनः ॥ २२ ॥
केचिदस्त्राणि सन्त्यज्य बाहुयुद्धमकुर्वत ।
तलैश्च चरणैश्चापि मुष्टिभिश्च द्रुमैरपि ॥ २३ ॥
जानुभिश्च हताः केचिद्भग्नदेहाश्च राक्षसाः ।
शिलाभिश्चूर्णिताः केचिद्वानरैर्युद्धदुर्मदैः ॥ २४ ॥
वज्रदंष्ट्रोऽथ तं दृष्ट्वा रणे त्रिासयन् हरीन् ।
चचार लोकसंहारे पाशहस्त इवान्तकः ॥ २५ ॥
बलवन्तोऽस्त्रविदुषो नानाप्रहरणा रणे ।
जघ्नुर्वानरसैन्यानि राक्षसाः क्रोधमूर्च्छिताः ॥ २६ ॥
जघ्नेतान् राक्षसान् सर्वान् धृष्टो वायुसुतो रणे ।
क्रोधेन द्विगुणाविष्टः संवर्त्तक इवानलः ॥ २७ ॥

हृदयभेदनः भयङ्कर इत्यर्थः ॥ २१ ॥ २२ ॥

अस्त्राणि सन्त्यज्य सर्वाण्यस्त्राणि प्रयुज्य तदनन्तरमस्त्राभावात् बाहुयुद्धमकुर्वत ॥ २३ ॥ २४ ॥

वज्रदंष्ट्रोऽथ तं दृष्ट्वा । स्वसेनाविनाशमित्यर्थः । लोकसंहारे तन्निमित्तम् ॥ २५ ॥

अस्त्रविदुषः । अस्त्रविद्वांस इत्यर्थः ॥ २६ ॥

तान् राक्षसगणान् सर्वान् वृक्षमुद्यम्य वीर्य्यवान् ।
अङ्गदः क्रोधताम्राक्षः सिंहः क्षुद्रमृगानिव ॥ २८ ॥
चकार कदनं घोरं शक्रतुल्यपराक्रमः ।
अङ्गदाभिहतास्तत्र राक्षसा भीमविक्रमाः ॥ २९ ॥
विभिन्नशिरसः पेतुर्निकृत्ता इव पादपाः ।
रथैश्चित्रैर्ध्वजैरश्वैः शरीरैर्हरिरक्षसाम् ॥ ३० ॥
रुधिरौघेण संच्छन्ना भूमिर्भयकरी तदा ।
हारकेयूरवस्त्रैश्च छत्रैश्च समलङ्कृता ॥ ३१ ॥
भूमिर्भाति रणे तत्र शारदीव यथा निशा ।
अङ्गदस्य च वेगेन तद्राक्षसबलं महत् ।
प्राकम्पत तदा तत्र पवनेनाम्बुदो यथा ॥ ३२ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
त्रिपञ्चाशः सर्गः ॥ ५३ ॥

संवर्त्तके प्रलयकाले । २७ ।

तान् राक्षसगणान्निजघानेति शेषः ॥ २८ ॥ २९ ॥ ३० ॥

भयकरी भयङ्करी अभूदिति शेषः । मुम भाव आर्षः ॥ ३१ ॥

पवनेनाम्बुदो यथेत्युत्तरं सर्गच्छेदः क्वचित् सोऽयुक्तो वृत्तभेद-प्रकरणभेदाद्यभावादिति कतकः ॥ ३२ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

## चतुःपञ्चाशः सर्गः ।

खरलस्य च घातेन अङ्गदस्य बलेन च ।
राक्षसः क्रोधमाविष्टो वज्रदंष्ट्रो महाबलः ॥ १ ॥
विस्फार्य्य च धनुर्घोरं शक्राशनिसमप्रभम् ।
वानराणामनीकानि प्राकिरच्छरवृष्टिभिः ॥ २ ॥
राक्षमाश्चापि मुख्यास्ते रथेस्थ समवस्थिताः ।
नानाप्रहरणाः शूराः प्रायुध्यन्त तदा रणे ॥ ३ ॥
वानराणाञ्च शूरास्तु ते सर्वे प्लवगर्षभाः ।
अयुध्यन्त शिलाहस्ताः समवेताः समन्ततः ॥ ४ ॥
तत्रायुधसहस्राणि तस्मिन्नायोधने भृशम् ।
राक्षसाः कपिमुख्येषु पातयाञ्चक्रिरे तदा ॥ ५ ॥
वानराश्चैव रक्षःसु गिरिवृक्षान् महाशिलाः ।
प्रवीराः पातयामासुर्मत्तवारणसन्निभाः ॥ ६ ॥

खरलस्य चेति ॥ १ ॥ २ ॥ ३ ॥
वानराणामिति निर्द्धारणे षष्ठी ॥ ४ ॥
तत्र वीरक्षयकारणे । तस्मिन् प्रसिद्धे आयोधने युद्धे ॥ ५ ॥ ६ ॥

शूराणां युध्यमानानां समरेष्वनिवर्त्तिनाम्।
तद्राक्षसगणानाञ्च सुयुद्धं समवर्त्तत ॥ ७ ॥
अभग्नशिरसः केचिच्छिन्नैः पादैश्च बाहुभिः।
शस्त्रैरर्दितदेहास्तु रुधिरेण समुक्षिताः ॥ ८ ॥
हरयो राक्षसाश्चैव शेरते गां समाश्रिताः।
कङ्कगृध्रबलाढ्याश्च गोमायुकुलसङ्कुलाः ॥ ९ ॥
कबन्धानि समुत्पेतुर्भीरूणां भीषणानि वै।
भुजपाणिशिरश्छिन्नाश्छिन्नकायाश्च भूतले ॥ १० ॥
वानरा राक्षसाश्चापि निपेतुस्तत्र भूतले।
ततो वानरसैन्येन हन्यमानं निशाचरम् ॥ ११ ॥
प्राभज्यत बलं सर्वं वज्रदंष्ट्रस्य पश्यतः।
राक्षसान् भयवित्रस्तान् हन्यमानान् प्लवङ्गमैः ॥ १२ ॥
दृष्ट्वा सरोषताम्राक्षो वज्रदंष्ट्रः प्रतापवान्।
प्रविवेश धनुष्पाणिस्त्रासयन् हरिवाहिनीम् ॥ १३ ॥

तद्राक्षसगणानाम्। तच्छब्देन वानराः। वानरराक्षसगणाना-मित्यर्थः ॥ ७ ॥

छिन्नैः पादैर्बाहुभिरुपलक्षिताः ॥ ८ ॥

बलाः वायसाः। कङ्कादिभिराढ्या व्याप्ता इत्यर्थः ॥ ९ ॥ १० ॥

निशाचरं नैशाचरमित्यर्थः ॥ ११ ॥

प्राभज्यत भग्नमभूत् ॥ १२ ॥ १३ ॥

शरैर्विदारयामास कङ्कपत्रैरजिह्मगैः ।
बिभेद वानरांस्तत्र सप्ताष्टौ नव पञ्च च ।
विव्याध परमक्रुद्धो वज्रदंष्ट्रः प्रतापवान् ॥ १४ ॥
त्रस्ताः सर्वे हरिगणाः शरैः सङ्कृत्तदेहिनः ।
अङ्गदं सम्प्रधावन्ति प्रजापतिमिव प्रजाः ॥ १५ ॥
ततो हरिगणान् भग्नान् दृष्ट्वा वालिसुतस्तदा ।
क्रोधेन वज्रदंष्ट्रं तमुदीक्षन्तमुदैक्षत ॥ १६ ॥
वज्रदंष्ट्रोऽङ्गदश्चोभौ यो युध्येते परस्परम् ।
चेरतुः परमक्रुद्धौ हरिमत्तगजाविव ॥ १७ ॥
ततः शतसहस्रेण हरिपुत्रं महाबलम् ।
जघान मर्मदेशेषु शरैरग्निशिखोपमैः ॥ १८ ॥
रुधिरोक्षितसर्वाङ्गो वालिसूनुर्महाबलः ।
चिक्षेप वज्रदंष्ट्राय वृक्षं भीमपराक्रमः ॥ १९ ॥
दृष्ट्वा पतन्तं तं वृक्षमसम्भ्रान्तश्च राक्षसः ।

सप्ताष्टौ नव पञ्च च वानरान् एकेनैव शरेण विभेदेत्यर्थः ॥ १४ ॥
सम्प्रधावन्ति धावन्ति स्म ॥ १५ ॥
क्रोधेनोदीक्षन्तं क्रोधेनोदैक्षत ॥ १६ ॥
यो युद्धेते पुनः पुनर्युद्धमकुरुतामित्यर्थः । हरिमत्तगजाविव । हरि-रिह शार्दूलः । सिंहेन गजस्य युद्धासम्भवात् । स्वप्नेऽपि सिंहदर्शनेन गजानां मरणादिति कतकः ॥ १७ ॥

चिच्छेद बहुधा सोऽपि मथितः प्रापतद्भुवि ॥ २० ॥
तं दृष्ट्वा वज्रदंष्ट्रस्य विक्रमं प्लवगर्षभः।
प्रगृह्य विपुलं शैलं चिक्षेप च ननाद च ॥ २१ ॥
तमापतन्तं दृष्ट्वा स रथादाप्लुत्य वीर्य्यवान्।
गदापाणिरसम्भ्रान्तः पृथिव्यां समतिष्ठत ॥ २२ ॥
अङ्गदेन शिला क्षिप्ता गत्वा तु रणमूर्द्धनि।
सचक्रकूबरं साश्वं प्रममाथ रथं तदा ॥ २३ ॥
ततोऽन्यच्छिखरं गृह्य विपुलं द्रुमभूषितम्।
वज्रदंष्ट्रस्य शिरसि पातयामास वानरः ॥ २४ ॥
अभवच्छोणितोद्गारी वज्रदंष्ट्रः सुमूर्च्छितः।
मुहूर्त्तमभवन्मूढो गदामालिङ्ग्य निःश्वसन् ॥ २५ ॥
स लब्धसंज्ञो गदया वालिपुत्रमवस्थितम्।
जघान परमक्रुद्धो वक्षोदेशे निशाचरः ॥ २६ ॥
गदां त्यक्त्वा ततस्तत्र मुष्टियुद्धमकुर्वत।
अन्योऽन्यं जघ्नतुस्तत्र तावुभौ हरिराक्षसौ ॥ २७ ॥
रुधिरोद्गारिणौ तौ तु प्रहारैर्जनितश्रमौ।
बभूवतुः सुविक्रान्तावङ्गारकबुधाविव ॥ २८ ॥

हरियुद्धं वालिपुत्रम् ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

ततः परमतेजस्वी अङ्गदः प्लवगर्षभः।
उत्पाट्य वृक्षं स्थितवानासीत् पुष्पफलैर्युतः॥ २९॥
जग्राह चार्षभञ्चर्म खड्गञ्च विपुलं शुभम्।
किङ्किणीजालसंच्छन्नं चर्मणा च परिष्कृतम्॥ ३०॥
चित्रांश्च रुचिरान्मार्गांश्चेरतुः कपिराक्षसौ।
जघ्नतुश्च तदान्योऽन्यं नर्दन्तौ जयकाङ्क्षिणौ॥ ३१॥
व्रणैः समुत्थैः शोभेतां पुष्पिताविव किंशुकौ।
युध्यमानौ परिश्रान्तौ जानुभ्यामवनीं गतौ॥ ३२॥
निमेषान्तरमात्रेण अङ्गदः कपिकुञ्जरः।
उदतिष्ठत दीप्ताक्षो दण्डाहत इवोरगः॥ ३३॥
निर्मलेन सुधौतेन खड्गेनास्य महच्छिरः।
जघान वज्रदंष्ट्रस्य वालिसूनुर्महाबलः॥ ३४॥
रुधिरोक्षितगात्रस्य बभूव पतितं द्विधा।
तच्च तस्य परीताक्षं शुभं खड्गहतं शिरः॥ ३५॥
वज्रदंष्ट्रं हतं दृष्ट्वा राक्षसा भयमोहिताः।
त्रस्ता ह्यभ्यद्रवन् लङ्कां वध्यमानाः प्लवङ्गमैः।

पुष्पफलैर्हस्तधृतवृक्षीयैस्तैर्युत आसीत्॥ २९॥
आर्षभं चर्म ऋषभचर्मनिर्मितं फलकम्। चर्मणा च परिष्कृतं कोशरूपेणेत्यर्थः। जग्राह वज्रदंष्ट्रोऽङ्गदश्चेति शेषः॥ ३०॥ ३१॥
व्रणैः समुत्थैः। तत् समुत्थितैरुधिरैरित्यर्थः॥ ३२॥ ३३॥

विषण्णवदना दीना ह्रिया किञ्चिदवाङ्मुखाः ॥ ३६ ॥

निहत्य तं वज्रधरः प्रतापवान्
स वालिसूनुः कपिसैन्यमध्ये ।
जगाम हर्षं महितो महाबलः
सहस्रनेत्रस्त्रिदशैरिवावृतः ॥ ३७ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
चतुःपञ्चाशः सर्गः ॥ ५४ ॥

खड्गेनाच्छिद्य गृहीतेन वज्रदंष्ट्रीयेण ॥ ३४ ॥ ३५ ॥ ३६ ॥
महितः पूजितः ॥ ३७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥

---

## पञ्चपञ्चाशः सर्गः ।

वज्रदंष्ट्रं हतं श्रुत्वा वालिपुत्त्रेण रावणः ।
बलाध्यक्षमुवाचेदं कृताञ्जलिमुपस्थितम् ॥ १ ॥
शीघ्रं निर्य्यान्तु दुर्द्धर्षा राक्षसा भीमविक्रमाः ।
अकम्पनं पुरस्कृत्य सर्व्वशस्त्रास्त्रकोविदम् ॥ २ ॥
एष शास्ता च गोप्ता च नेता च युधि सत्तमः ।
भूतिकामश्च मे नित्यं नित्यञ्च समरप्रियः ॥ ३ ॥
एष जेष्यति काकुत्स्थौ सुग्रीवञ्च महाबलम् ।
वानरांश्चापरान् घोरान् हनिष्यति न संशयः ॥ ४ ॥
परिगृह्य स तामाज्ञां रावणस्य महाबलः ।
बलं सम्प्रेरयामास तदा लघुपराक्रमः ॥ ५ ॥
ततो नानाप्रहरणा भीमाक्षा भीमदर्शनाः ।
निष्पेतू राक्षसा मुख्या बलाध्यक्षप्रचोदिताः ॥ ६ ॥

बलाध्यक्षं प्रहस्तम् ॥ १ ॥ २ ॥
शास्ता शत्रूणाम् । गोप्ता स्वबलस्य । नेता नायको युद्धस्य ॥
३ ॥ ४ ॥ ५ ॥ ६ ॥

रथमास्थाय विपुलं तप्तकाञ्चनभूषणम्।
मेघाभो मेघवर्णश्च मेघस्वनमहास्वनः ॥ ७ ॥
राक्षसैः संवृतो घोरैस्तदा निर्य्यात्यकम्पनः।
न हि कम्पयितुं शक्यः सुरैरपि महामृधे ॥ ८ ॥
अकम्पनस्ततस्तेषामादित्य इव तेजसा।
तस्य निर्धावमानस्य संरब्धस्य युयुत्सया ॥ ९ ॥
अकस्माद्दैन्यमागच्छद्धयानां रथवाहिनाम्।
विस्फुरन्नयनञ्चास्य सव्यं युद्धाभिनन्दिनः ॥ १० ॥
विवर्णो मुखवर्णश्च गद्गदश्चाभवत्स्वनः।
अभवत् सुदिने काले दुर्दिनं रूक्षमारुतम् ॥ ११ ॥
ऊचुः खगमृगाः सर्वे वाचः क्रूरा भयावहाः।
स सिंहोपचितस्कन्धः शार्दूलसमविक्रमः ॥ १२ ॥
तानुत्पातानचिन्त्यैव निर्जगाम रणाजिरम्।

मेघाभः मेघसमानदेहप्रमाणः। मेघवर्णस्तद्वन्नीलवर्णः। मेघस्य स्वन इव महान् स्वनो यस्य स तथा ॥ ७ ॥

निर्यातिं याति स्म ॥ ८ ॥

तेषां वानराणां तेजसा आदित्य इव दुष्प्रेक्ष्यो भूदिति शेषः ॥ ९ ॥

रथवहनकर्तॄणां हयानामकस्मान्निर्हेतुकमेव दैन्यमागच्छत्। मन इति शेषः ॥ १० ॥

सुदिने वर्षादिकृतदुर्दिनप्रसक्तिरहिते ॥ ११ ॥ १२ ॥

तथा निर्गच्छतस्तस्य रक्षसः सह राक्षसैः ॥ १३ ॥
बभूव सुमहान्नादः क्षोभयन्निव सागरम्।
तेन शब्देन वित्रस्ता वानराणां महाचमूः ॥ १४ ॥
द्रुमशैलप्रहाराणां योद्धुं समुपतिष्ठताम्।
तेषां युद्धं महारौद्रं संजज्ञे कपिरक्षसाम् ॥ १५ ॥
रामरावणयोरर्थे समभित्यक्तदेहिनः।
सर्वे ह्यतिबलाः शूराः सर्वे पर्वतसन्निभाः ॥ १६ ॥
हरयो राक्षसाश्चैव परस्परजिघांसया।
तेषां विनर्दतां शब्दः संयुगेऽतितरस्विनाम् ॥ १७ ॥
शुश्रुवे सुमहान् कोपादन्योऽन्यमभिगर्जताम्।
रजश्चारुणवर्णाभ सुभीममभवत् भृशम् ॥ १८ ॥
उद्धूतं हरिरक्षोभिः संरुरोध दिशो दश।
अन्योऽन्यं रजसा तेन कौशेयोद्धूतपाण्डुना ॥ १९ ॥
संवृतानि च भूतानि ददृशुर्न रणाजिरे।

अचिन्त्येत्यार्षम् ॥ १३ ॥ १४ ॥ १५ ॥

समभित्यक्ता देहिन आत्मानो यैस्ते। आत्मरक्षानिरपेक्षा इति यावत् ॥ १६ ॥ १७ ॥

अरुणवर्णाभं धूम्रवर्णस्य वस्तुन आभा यस्मिंस्तत्। अरुणशब्दो धूम्रपर्यायोऽपि ॥ १८ ॥

कौशेयोद्धूतपाण्डुना उद्धूतकौशेयवदीषत्पाण्डुरवर्णेन ॥ १९ ॥

न ध्वजो न पताका वा चर्म वा तुरगोऽपि वा ॥ २० ॥
आयुधं स्यन्दनो वापि ददृशे तेन रेणुना।
शब्दश्च सुमहांस्तेषां नर्दतामभिधावताम् ॥ २१ ॥
श्रूयते तुमुलो युद्धे न रूपाणि चकाशिरे।
हरीनेव सुसंरुष्टा हरयो जघ्नु राहवे ॥ २२ ॥
राक्षसा राक्षसांश्चापि निजघ्नुस्तिमिरे तदा।
ते परांश्च विनिघ्नन्तः स्वांश्च वानरराक्षसाः ॥ २३ ॥
रुधिरार्द्रां तदा चक्रुर्महीं पङ्कानुलेपनाम्।
ततस्तु रुधिरौघेण सिक्तं ह्यपगतं रजः ॥ २४ ॥
शरीरशवसङ्कीर्णा बभूव च वसुन्धरा।
द्रुमशक्तिगदाप्रासैः शिलापरिघतोमरैः ॥ २५ ॥
राक्षसा हरयस्तूर्णं जघ्नुरन्योऽन्यमोजसा।
बाहुभिः परिघाकारैर्युध्यन्तः पर्वतोपमान् ॥ २६ ॥
हरयो भीमकर्माणो राक्षसान् जघ्नुराहवे।
राक्षसास्त्वभिसंक्रुद्धाः प्रासतोमरपाणयः ॥ २७ ॥
कपीन्निजघ्निरे तत्र शस्त्रैः परमदारुणैः।

भूतानि कपिरक्षोलक्षणप्राणिनः ॥ २० ॥
आयुधादि न ददृशे इत्यन्वयः ॥ २१ ॥
शब्द एव श्रूयते। न च रूपाणि चकाशिरे। सुसंरुष्टाः सुतरां सम्यक् क्रुद्धाः ॥ २२ ॥ २३ ॥ २४ ॥

अकम्पनः सुसंक्रुद्धो राक्षसानाञ्चमूपतिः ॥ २८ ॥
संहर्षयति तान् सर्वान् राक्षसान् भीमविक्रमान् ।
हरयस्त्वपि रक्षांसि महाद्रुममहाश्मभिः ॥ २९ ॥
विदारयन्त्यभिक्रम्य शस्त्राण्याच्छिद्य वीर्य्यतः ।
एतस्मिन्नन्तरे वीरा हरयः कुमुदो नलः ॥ ३० ॥
मैन्दश्च परमक्रुद्धश्चक्रुर्वेगमनुत्तमम् ।..
ते तु वृक्षैर्महावीरा राक्षसानाञ्चमूमुखे ॥ ३१ ॥
कदनं सुमहच्चक्रुर्लीलया हरिपुङ्गवाः ।
ममन्थू राक्षसान् सर्वे नानाप्रहरणैर्भृशम् ॥ ३२ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

शरीरशवसङ्कीर्णा शवरूपैः शरीरैः सङ्कीर्णा ॥ २५ ॥ २६ ॥
॥ २७ ॥ २८ ॥

संहर्षयति समहर्षयत् ॥ २९ ॥

शस्त्राण्याच्छिद्य वानराः । परहस्तादिति शेषः ॥ ३० ॥ ३१ ॥

नानाप्रहरणैर्भृशमित्यत्र सर्गावच्छेदः प्रमादादिति कतकः ॥ ३२ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

# षट्पञ्चाशः सर्गः

तद्दृष्ट्वा सुमहत्कर्म कृतं वानरसत्तमैः ।
क्रोधमाहारयामास युधि तीव्रमकम्पनः ॥ १ ॥
क्रोधमूर्च्छितरूपस्तु धुन्वन् परमकार्मुकम् ।
दृष्ट्वा तु कर्म शत्रूणां सारथिं वाक्यमब्रवीत् ॥ २ ॥
तत्रैव तावत्त्वरितो रथं प्रापय सारथे ! ।
एते च बलिनो घ्नन्ति सुबहून् राक्षसान् रणे ॥ ३ ॥
एते च बलवन्तो वा भीमकोपाश्च वानराः ।
द्रुमशैलप्रहरणास्तिष्ठन्ति प्रमुखे मम ॥ ४ ॥
एतान्निहन्तुमिच्छामि समरश्लाघिनो ह्यहम् ।
एतैः प्रमथितं सर्वं रक्षसां दृश्यते बलम् ॥ ५ ॥
ततः प्रचलिताश्वेन रथेन रथिनां वरः ।
हरीनभ्यपतद्दूराच्छरजालैरकम्पनः ॥ ६ ॥

तदिति ॥ १ ॥ २ ॥ ३ ॥

एते चेत्यस्य यत्नेत्यादिः । बलवन्तो वा । वा शब्दो वै शब्दस्यार्थे ॥ ४ ॥

न स्थातुं वानराः शेकुः किं पुनर्योद्धुमाहवे।
अकम्पनशरैर्भग्नाः सर्वएवाभिदुद्रुवुः॥ ७॥
तान् मृत्युवशमापन्नानकम्पनशरानुगान्।
समीक्ष्य हनुमान् ज्ञातीनुपतस्थे महाबलः॥ ८॥
तं महाप्लवगं दृष्ट्वा सर्वे ते प्लवगर्षभाः।
समेत्य समरे वीराः सहिताः पर्य्यवारयन्॥ ९॥
व्यवस्थितं हनूमन्तं ते दृष्ट्वा प्लवगर्षभाः।
बभूवुर्बलवन्तो हि बलवन्तमुपाश्रिताः॥ १०॥
अकम्पनस्तु शैलाभं हनूमन्तमवस्थितम्।
महेन्द्र इव धाराभिः शरैरभिववर्ष ह॥ ११॥
अचिन्तयित्वा बाणौघान् शरीरे पातितान् कपिः।
अकम्पनवधार्थाय मनो दध्रे महाबलः॥ १२॥
स प्रहस्य महातेजा हनूमान् मारुतात्मजः।
अभिदुद्राव तद्रक्षः कम्पयन्निव मेदिनीम्॥ १३॥
तस्याथ नर्दमानस्य दीप्यमानस्य तेजसा।
बभूव रूपं दुर्द्धर्षं दीप्तस्येव विभावसोः॥ १४॥

एतान्निहन्तुमिच्छामि प्रथमतः स्वसेनारक्षणार्थं ततः परबलं हनिष्यामीति शेषः। तदेवाह,—एतैरिति॥ ५॥ ६॥ ७॥

ज्ञातीन् कुमुदनलादीन् उपतस्थे। स्वस्थानादिति शेषः॥ ८॥

ते प्लवगर्षभाः कुमुदादयः॥ ९॥

आत्मानं त्वप्रहरणं ज्ञात्वा क्रोधसमन्वितः।
शैलमुत्पाटयामास वेगेन हरिपुङ्गवः॥ १५॥
गृहीत्वा सुमहाशैलं पाणिनैकेन मारुतिः।
स विनद्य महानादं भ्रामयामास वीर्य्यवान्॥ १६॥
ततस्तमभिदुद्राव राक्षसेन्द्रमकम्पनम्।
पुरा हि नमुचिं संख्ये वज्रेणेव पुरन्दरः॥ १७॥
अकम्पनस्तु तद्दृष्ट्वा गिरिशृङ्गं समुद्यतम्।
दूरादेव महाबाणैरर्द्धचन्द्रैरदारयत्॥ १८॥
तं पर्वताग्रमाकाशे रक्षोबाणविदारितम्।
विकीर्णं पतितं दृष्ट्वा हनूमान् क्रोधमूर्च्छितः॥ १९॥
सोऽश्वकर्णं समासाद्य रोषदर्पान्वितो हरिः।
तूर्णमुत्पाटयामास महागिरिमिवोच्छ्रितम्॥ २०॥
तं गृहीत्वा महास्कन्धं सोऽश्वकर्णं महाद्युतिः।
प्रगृह्य परया प्रीत्या भ्रामयामास भूतले॥ २१॥

ते बलवन्तो बभूवुर्यतो बलवन्तमुपाश्रिताः॥ १०॥ ११॥ १२॥ ॥ १३॥ १४॥

अप्रहरणम् आयुधहीनम्॥ १५॥ १६॥

पुरा हीति प्रसिद्धौ॥ १७॥

तद्दृष्ट्वा हनूमन्मुक्तं शैलशृङ्गम्॥ १८॥

तं तदित्यर्थः। क्रोधमूर्च्छितोऽभूदिति शेषः॥ १९॥ २०॥ २१॥

प्रधावन्नुरुवेगेन बभञ्ज तरसा द्रुमान् ।
हनूमान् परमक्रुद्धश्चरणैर्दारयन् महीम् ॥ २२ ॥
गजांश्च सगजारोहान् सरथान् रथिनस्तथा ।
जघान हनुमान् भीमान् राक्षसांश्च पदातिगान् ॥ २३ ॥
तमन्तकमिव क्रुद्धं सद्रुमं प्राणहारिणम् ।
हनूमन्तमभिप्रेक्ष्य राक्षसा विप्रदुद्रुवुः ॥ २४ ॥
तमापतन्तं संक्रुद्धं राक्षसानां भयावहम् ।
ददर्शाकम्पनो वीरश्चुक्षोभ च ननाद च ॥ २५ ॥
स चतुर्दशभिर्बाणैर्निशितैर्देहदारणैः ।
निर्बिभेद महावीर्य्यं हनूमन्तमकम्पनः ॥ २६ ॥
स तथा विप्रकीर्णस्तु नाराचैः शितशक्तिभिः ।
हनूमान् ददृशे वीरः प्ररूढ इव सानुमान् ॥ २७ ॥
विरराज महावीर्य्यो महाकायो महाबलः ।
पुष्पिताशोकसङ्काशो विधूम इव पावकः ॥ २८ ॥
ततोऽन्यं वृक्षमुत्पाट्य कृत्वा वेगमनुत्तमम् ।
शिरस्यभिजघानाशु राक्षसेन्द्रमकम्पनम् ॥ २९ ॥
स वृक्षेण हतस्तेन सक्रोधेन महात्मना ।
राक्षसो वानरेन्द्रेण पपात च ममार च ॥ ३० ॥

चारयैः चरयान्यासैः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

तं दृष्ट्वा निहतं भूमौ राक्षसेन्द्रमकम्पनम्।
व्यथिता राक्षसाः सर्वे क्षितिकम्प इव द्रुमाः॥ ३१॥
त्यक्तप्रहरणाः सर्वे राक्षसास्ते पराजिताः।
लङ्कामभिययुस्त्रासाद्वानरैस्तैरभिद्रुताः॥ ३२॥
ते मुक्तकेशाः सम्भ्रान्ता भग्नमानाः पराजिताः।
भयाच्छ्रमजलैरङ्गैः प्रस्रवद्भिर्विदुद्रुवुः॥ ३३॥
अन्योऽन्यं ते प्रमथ्नन्तो विविशुर्नगरं भयात्।
पृष्ठतस्ते तु संमूढाः प्रेक्ष्यमाणा मुहुर्मुहुः॥ ३४॥
तेषु लङ्कां प्रविष्टेषु राक्षसेषु महाबलाः।
समेत्य हरयः सर्वे हनूमन्तमपूजयन्॥ ३५॥
सोऽपि प्रहृष्टस्तान् सर्वान् हरीन् सम्प्रत्यपूजयत्।
हनूमान् सत्वसम्पन्नो यथार्हमनुकूलतः॥ ३६॥
विनेदुश्च यथा प्राणं हरयो जितकाशिनः।
चकृषुश्च पुनस्तत्र सप्राणानेव राक्षसान्॥ ३७॥

प्ररूढः सानुमानिव। बहुशराचितशरीरत्वात् प्ररूढवृक्षवृक्षो गिरिरिव जनैर्दृष्ट इत्यर्थः॥ २७॥ २८॥ २९॥ ३०॥

क्षितिकम्पे भूकम्पकाले॥ ३१॥ ३२॥

श्रमजलैः स्वेदजलैः॥ ३३॥

भयादन्योऽन्यं प्रमथन्तः द्वारदेशे सम्मर्दं कुर्वाणाः॥ ३४॥ ३५॥

सोऽपि यथार्हं सम्प्रत्यपूजयत्॥ ३६॥

स वीरशोभामभजन् महाकपिः
समेत्य रक्षांसि निहत्य मारुतिः।
महासुरं भीममित्रनाशनं
विष्णुर्यथैवोरुबलश्चमूमुखे ॥ ३८ ॥
अपूजयन् देवगणास्तदा कपिं
स्वयञ्च रामोऽतिबलश्च लक्ष्मणः।
तथैव सुग्रीवमुखाः प्लवङ्गमा
विभीषणश्चैव महाबलस्तदा ॥ ३९ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
षट्पञ्चाशः सर्गः ॥ ५६ ॥

यथाप्राणं यावद्बलं सप्राणामेव चक्षुः। प्राणनाशार्थमिति शेषः ॥ ३७ ॥

यथा विष्णुर्बलबलं बलवन्तं महाबलं मधुकैटभादिरूपं हत्वा वीरशोभामभजत्तथैवेत्यर्थः ॥ ३८ ॥

रामादयोऽप्यपूजयन्नित्यनुकर्षः ॥ ३९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

## सप्तपञ्चाशः सर्गः ।



अकम्पनवधं श्रुत्वा क्रुद्धो वै राक्षसेश्वरः ।
किञ्चिद्दीनमुखश्चापि सचिवांस्तानुदैक्षत ॥ १ ॥
स तु ध्यात्वा मुहूर्त्तन्तु मन्त्रिभिः संविचार्य्य च ।
ततस्तु रावणः पूर्वदिवसे राक्षसाधिपः ।
पुरीं परिययौ लङ्कां सर्वान् गुल्मानवेक्षितुम् ॥ २ ॥
तां राक्षसगणैर्गुप्तां गुल्मैर्बहुभिरावृताम् ।
ददर्श नगरीं राजा पताकाध्वजमालिनीम् ॥ ३ ॥
रुद्धान्तु नगरीं दृष्ट्वा रावणो राक्षसेश्वरः ।
उवाचात्महितं काले प्रहस्तं युद्धकोविदम् ॥ ४ ॥
पुरस्योपनिविष्टस्य सहसा पीड़ितस्य ह ।
नान्ययुद्धात् प्रपश्यामि मोक्षं युद्धविशारदाः ॥ ५ ॥

अथ प्रहस्तनिर्गमः । अकम्पनवधमिति ॥ १ ॥
पूर्वदिवसे पूर्वाह्णे । सर्वान् गुल्मान् सेनाव्यूहविशेषान् ॥ २ ॥
॥ ३ ॥ ४ ॥
पुरस्योपनिविष्टस्य । अतिसमीपनिविष्टप्रभुबलस्येत्यर्थः । अतएव

अहं वा कुम्भकर्णो वा त्वं वा सेनापतिर्मम ।
इन्द्रजित् वा निकुम्भो वा वहेयुर्भारमीदृशम् ॥ ६ ॥
स त्वं बलमतः शीघ्रमादाय परिगृह्य च ।
विजयायाभिनिर्य्याहि यत्र सर्वे वनौकसः ॥ ७ ॥
निर्य्याणादेव तूर्णञ्च चलिता हरिवाहिनी ।
नर्दतां राक्षसेन्द्राणां श्रुत्वा नादं द्रविष्यति ॥ ८ ॥
चपला ह्यविनीताश्च चलचित्ताश्च वानराः ।
न सहिष्यन्ति ते नादं सिंहनादमिव द्विपाः ॥ ९ ॥
विद्रुते च बले तस्मिन् रामः सौमित्रिणा सह ।
अवशस्तु निरालम्बः प्रहस्त ! वशमेष्यति ॥ १० ॥
आपत् संशयिता श्रेयो नात्र निःसंशयीकृता ।
प्रतिलोमानुलोमं वा यत्तु नो मन्यसे हितम् ॥ ११ ॥

सहसा बलात्कारेण पीड़ितस्य । अन्ययुद्धादन्यकर्त्तृकयुद्धाद्धेतोर्मोक्ष-मुपरोधमोक्षं न पश्यामि ॥ ५ ॥ ६ ॥

अतः अस्मादुत्मात् ॥ ७ ॥

द्रविष्यति पलायिष्यते ॥ ८ ॥ ९ ॥

अवशः वशं प्रभुत्वं तद्रहितः । वशमिच्छाप्रभुत्वयोरिति विश्वः । अतएव निरालम्बः ॥ १० ॥

ननु युद्धे मज्जीवनेऽपि सन्देहात् कथं निरालम्बो वशमेष्यतीत्युच्यते तत्राह,—आपदिति । युद्धे आपत् स्मृतिः संशयिता सन्देहविषया ।

रावणेनैवमुक्तस्तु प्रहस्तो वाहिनीपतिः।
राक्षसेन्द्रमुवाचेदमसुरेन्द्रमिवोशना: ॥ १२ ॥
राजन्! मन्त्रितपूर्वं नः कुशलैः सह मन्त्रिभिः।
विवादश्चापि नो वृत्तः समवेक्ष्य परस्परम् ॥ १३ ॥
प्रदानेन तु सीतायाः श्रेयो व्यवसितं मया।
अप्रदाने पुनर्युद्धं दृष्टमेव तथैव नः ॥ १४ ॥
सोऽहं दानैश्च मानैश्च सततं पूजितस्त्वया।
सान्त्वैश्च विविधैः काले किं न कुर्य्यां हितं तव ॥ १५ ॥

श्रेयो विजयस्तु तव न संशयितो न सन्देहविषयः। तवातिबलत्वात् बहुशो दृष्टविजयत्वाच्च। इन्द्रजिद्वत् श्रेयःप्राप्तिरेवोत्कटकोटिका। किञ्च श्रेयो न सन्दिग्धम्। युद्धे जीवने मरणे च श्रेयःसत्त्वात्। जीवने राज्यं मृतावुत्तमलोकः। अतोऽत्र युद्धे प्रवृत्तिरेव निःसंशयीकृता। यत्रायुद्धे ध्रुवो मृत्युर्युद्धे जीवितसंशयः। तमेव कालं युद्धस्य प्रवदन्ति मनीषिण इत्यादिशास्त्रादिति भावः। मम त्वद्य युद्धमेव हितं प्रतिभाति। प्रकारान्तरमस्ति चेत् ब्रूहीत्याह,—प्रतिलोमेत्यादि। मनोऽनुकूलं वा भवतु प्रतिकूलं वा यत्तु नोऽहितं मन्यसे तद्वदेति शेषः ॥ ११ ॥ १२ ॥

कुशलैर्मन्त्रिभिर्विभीषणमाल्यवदादिभिर्यदा मन्त्रितं तदा नः परस्परं परस्परमतं समवेक्ष्य विवादोऽनैकमत्यं वृत्तम् ॥ १३ ॥

सीताप्रदानेनैव श्रेय इति च तदा व्यवसितं निश्चितम्। अप्रदाने च युद्धं दृष्टं तत्तथैव न इदानीं प्राप्तम् ॥ १४ ॥

न हि मे जीवितं रक्ष्यं पुत्रदारधनानि च ।
त्वं पश्य मां जुहूषन्तं त्वदर्थे जीवितं युधि ॥ १६ ॥
एवमुक्त्वा तु भर्त्तारं रावणं वाहिनीपतिः ।
उवाचेदं बलाध्यक्षान् प्रहस्तः पुरतः स्थितान् ॥ १७ ॥
समानयत मे शीघ्रं राक्षसानां महाबलम् ।
मद्बाणानान्तु वेगेन हतानान्तु रणाजिरे ॥ १८ ॥
अद्य तृप्यन्तु मांसादाः पक्षिणः काननौकसः ।
तस्य तद्वचनं श्रुत्वा बलाध्यक्षा महाबलाः ॥ १९ ॥
बलमुद्योजयामासुस्तस्मिन् राक्षसमन्दिरे ।
सा बभूव मुहूर्त्तेन भीमैर्नानाविधायुधैः ॥ २० ॥
लङ्का राक्षसवीरैस्तैर्गजैरिव समाकुला ।
हुताशनं तर्पयतां ब्राह्मणांश्च नमस्यताम् ॥ २१ ॥
आज्यगन्धप्रतिवहः सुरभिर्मारुतो ववौ ।
स्रजश्च विविधाकारा जगृहुस्त्वभिमन्त्रिताः ॥ २२ ॥
संग्रामसज्जाः संहृष्टा धारयन् राक्षसास्तदा ।

अतःपरन्तु यत्राममस्माकं युद्धं तदेव मयानुष्ठेयमित्याह,—सोऽहमिति । तव प्रियं न कुर्य्यां किम् । अपि तु कुर्य्यामेव ॥ १५ ॥

युधि जीवितं जुहूषन्तं हातुमिच्छन्तम् ॥ १६ ॥

बलाध्यक्षान् सर्वबलाध्यक्षेण स्वेन बलनियोजनाधिकृतपुरुषानित्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

सधनुष्का: कवचिनो वेगादुत्सृज्य राक्षसा: ॥ २३ ॥
रावणं प्रेक्ष्य राजानं प्रहस्तं पर्य्यवारयन्।
अथामन्त्र्य तु राजानं भेरीमाहत्य भैरवाम् ॥ २४ ॥
आरुरोह रथं युक्त: प्रहस्त: सज्जकल्पितम्।
हयैर्महाजवैर्युक्तं सम्यक्सूतं सुसंयतम् ॥ २५ ॥
महाजलदनिर्घोषं साक्षाच्चन्द्रार्कभास्वरम्।
उरगध्वजदुर्द्धर्षं सुवरूथं स्वपस्करम् ॥ २६ ॥
सुवर्णजालसंयुक्तं प्रहसन्तमिव श्रिया।
ततस्तं रथमास्थाय रावणार्पितशासन: ॥ २७ ॥
लङ्काया निर्य्ययौ तूर्णं बलेन महतावृत:।
ततो दुन्दुभिनिर्घोष: पर्जन्यनिनदोपम:।
वादित्राणाञ्च निनद: पूरयन्निव मेदिनीम् ॥ २८ ॥
शुश्रुवे शङ्खशब्दश्च प्रयाते वाहिनीपतौ।
निनदन्त: स्वरान् घोरान् राक्षसा जग्मुरग्रत: ॥ २९ ॥

संग्रामसज्जाः संग्रामाय सन्नद्धाः। धारयन् अधारयन्। अभिमन्त्रितस्रज इत्यनुकर्षः। उत्सृज्य वाहनानीति शेषः ॥ २३ ॥ २४ ॥

सज्जकल्पितं सर्वायुधसमेततया कल्पितम्। सम्यक् समीचिनः सूतो यस्य तम् ॥ २५ ॥

सुवरूथम्। वरूथो रथगुप्तिः। स्वपस्करं शोभनरथाङ्गम् ॥ ॥ २६ ॥ २७ ॥

भीमरूपा महाकायाः प्रहस्तस्य पुरःसराः ।
नरान्तकः कुम्भहनुर्महानादः समुन्नतः ।
प्रहस्तसचिवा ह्येते निर्य्ययुः परिवार्य्य तम् ॥ ३० ॥
व्यूढेनैव सुघोरेण पूर्वद्वारात् स निर्य्ययौ ।
गजयूथनिकाशेन बलेन महता वृतः ॥ ३१ ॥
सागरप्रतिमौघेन वृतस्तेन बलेन सः ।
प्रहस्तो निर्य्ययौ क्रुद्धः कालान्तकसमोपमः ॥ ३२ ॥
तस्य निर्य्याणघोषेण राक्षसानाञ्च नर्दताम् ।
लङ्कायां सर्वभूतानि विनेदुर्विकृतैः स्वरैः ॥ ३३ ॥
व्यभ्रमाकाशमाविश्य मांसशोणितभोजनाः ।
मण्डलान्यपसव्यानि खगाश्चक्रू रथं प्रति ॥ ३४ ॥
वर्मन्ति पावकज्वालाः शिवा घोरा ववाशिरे ।
अन्तरिक्षात् पपातोल्का वायुश्च परुषं ववौ ॥ ३५ ॥
अन्योऽन्यमभिसंरब्धा ग्रहाश्च न चकाशिरे ।
मेघाश्च खरनिर्घोषा रथस्योपरि रक्षसः ॥ ३६ ॥

दुन्दुभिनिर्घोष इत्यादेः शुश्रुवे इत्यनेनान्वयः ॥ २८ ॥ २९ ॥ ३० ॥ ॥ ३१ ॥ ३२ ॥ ३३ ॥

तस्य दुर्निमित्तान्याह,—व्यभ्रमित्यादि । मांसशोणितभोजनाः खगा अपसव्यानि मण्डलानि अपगता सव्यभागे विभ्रान्तियेषु मण्डलेषु

ववर्षू रुधिरञ्चास्य सिषिचुश्च पुर:सरान्।
केतुमूर्द्धनि गृध्रस्तु विलीनो दक्षिणामुख: ॥ ३७ ॥
नदन्नुभयत: पार्श्वं समग्रां श्रियमाहरत्।
सारथेर्बहुशश्चात्र संग्राममनिवर्त्तिन: ॥ ३८ ॥
प्रतोदो न्यपतद्धस्तात् सूतस्य हयसादिन:।
निर्य्याणश्री च या च स्यात् भास्वरा च सुदुर्लभा ॥ ३९ ॥
सा ननाश मुहूर्त्तेन समे च स्खलिता हया:।
प्रहस्तं तं हि निर्य्यान्तं प्रख्यातगुणपौरुषम्।
युधि नानाप्रहरणा कपिसेनाऽभ्यवर्त्तत ॥ ४० ॥
अथ घोष: सुतुमुलो हरीणां समजायत।
वृक्षाणां रुजताञ्चैव गुर्व्वीं वै गृह्णतां शिला: ॥ ४१ ॥
नदतां राक्षसानाञ्च वानराणाञ्च गर्जताम्।
उभे प्रमुदिते सैन्ये रक्षोगणवनौकसाम् ॥ ४२ ॥

भ्रामणेषु तान्यपसव्यानि प्रदक्षिणानि। गृध्रादीनां प्रदक्षिणमपि दुर्निमित्तमिति कतकः ॥ ३४ ॥ ३५ ॥ ३६ ॥

केतूपरिलीनत्वादिगुणको गृध्रो नदन् शब्दं कुर्वन्नुभयतः पार्श्वं कण्डूयमान इति शेषः। तथा कुर्वन्नस्य समग्रां सम्पूर्णां प्रभां मुखादि-शोभां जयश्रियञ्चाहरत् ॥ ३७ ॥

सूतस्य सूतवंशजस्य सारथेः। हयसादिनोऽश्वशिक्षकस्य। प्रतोदः तोत्रम् ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥

वेगितानां समर्थानामन्योऽन्यवधकाङ्क्षिणाम् ।
परस्परञ्चाह्वयतां निनादः श्रूयते महान् ॥ ४३ ॥

ततः प्रहस्तः कपिराजवाहिनी-
मभिप्रतस्थे विजयाय दुर्मतिः ।
विवृद्धवेगश्च विवेश्चिताश्चम्.
यथा मुमूर्षुः शलभो विभावसुम् ॥ ४४ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
सप्तपञ्चाशः सर्गः ॥ ५७ ॥

रक्षोगणबलौघवतामित्यस्य निनादः श्रूयत इत्युत्तरेण सम्बन्धः ॥ ॥ ४२ ॥ ४३ ॥ ४४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

## अष्टपञ्चाशः सर्गः ।

ततः प्रहस्तं निर्य्यान्तं दृष्ट्वा रणकृतोद्यमम् ।
उवाच सस्मितं रामो विभीषणमरिन्दमः ॥ १ ॥
क एष सुमहाकायो बलेन महता वृतः ।
आगच्छति महावेगः किंरूपबलपौरुषः ॥ २ ॥
आचक्ष्व मे महाबाहो वीर्य्यवन्तं निशाचरम् ।
राघवस्य वचः श्रुत्वा प्रत्युवाच विभीषणः ॥ ३ ॥
एष सेनापतिस्तस्य प्रहस्तो नाम राक्षसः ।
लङ्कायां राक्षसेन्द्रस्य त्रिभागबलसंवृतः ।
वीर्य्यवानस्त्रविच्छूरः सुप्रख्यातपराक्रमः ॥ ४ ॥
ततः प्रहस्तं निर्य्यान्तं भीमं भीमपराक्रमम् ।
गर्ज्जन्तं सुमहाकायं राक्षसैरभिसंवृतम् ॥ ५ ॥

तत इति । सस्मितम् एवं सेनया किमस्मान् भीषयतीति स्मितम् ॥ १ ॥ २ ॥ ३ ॥

लङ्कायामित्यादि । राक्षसेन्द्रसम्बन्धिलङ्कास्थबलस्य तृतीयभागेन संवृत इत्यर्थः ॥ ४ ॥ ५ ॥

ददर्श महती सेना वानराणां बलीयसाम्।
अभिसञ्जातघोषाणां प्रहस्तमभिगर्जताम्॥ ६॥
खड्गशक्त्यृष्टिशूलाश्च बाणानि मुसलानि च।
गदाश्च परिघाः प्रासा विविधाश्च परश्वधाः॥ ७॥
धनूंषि च विचित्राणि राक्षसानां जयैषिणाम्।
प्रगृहीतान्यराजन्त वानरानभिधावताम्॥ ८॥
जगृहुः पादपांश्चापि पुष्पितांस्तु गिरींस्तथा।
शिलाश्च विपुला दीर्घा योद्धुकामाः प्लवङ्गमाः॥ ९॥
तेषामन्योऽन्यमासाद्य संग्रामः सुमहानभूत्।
बहूनामश्मवृष्टिञ्च शरवर्षञ्च वर्षताम्॥ १०॥
बहवो राक्षसा युद्धे बहून् वानरपुङ्गवान्।
वानरा राक्षसांश्चापि निजघ्नुर्बहवो बहून्॥ ११॥
शूलैः प्रमथिताः केचित् केचित्तु परमायुधैः।
परिघैराहताः केचित् केचिच्छिन्नाः परश्वधैः॥ १२॥

प्रहस्तमभितदभिमुखेन गर्जतां वानराणां महती सेना निर्य्यान्तं प्रहस्तं ददर्शेति सम्बन्धः॥ ६॥ ७॥ ८॥

गिरींस्तथा जगृहुरित्यनुकर्षः। गिरिशृङ्गाणीति यावत्॥ ९॥ ॥ १०॥ ११॥

परमायुधैश्चक्रैः। चक्रन्तु परमायुधमिति कोशः॥ १२॥

निरुच्छ्वासाः पुनः केचित् पतिता जगतीतले।
विभिन्नहृदयाः केचिदिषुसन्धानसादिताः॥ १३॥
केचिद्‌द्विधाकृताः खड्गैः स्फुरन्तः पतिता भुवि।
वानरा राक्षसैः शूरैः पार्श्वतश्च विदारिताः॥ १४॥
वानरैश्चापि संक्रुद्धै राक्षसौघाः समन्ततः।
पादपैर्गिरिशृङ्गैश्च सम्पिष्टा वसुधातले॥ १५॥
वज्रस्पर्शतलैर्हस्तैर्मुष्टिभिश्च हता भृशम्।
वमन् शोणितमास्येभ्यो विशीर्णवदनेक्षणाः॥ १६॥
आर्त्तस्वनञ्च स्वनतां सिंहनादञ्च नर्दताम्!
बभूव तुमुलः शब्दो हरीणां रक्षसामपि॥ १७॥
वानरा राक्षसाः क्रुद्धा वीरमार्गमनुव्रताः।
विवृत्तवदनाः क्रूराश्चक्रुः कर्माण्यभीतवत्॥ १८॥
नरान्तकः कुम्भहनुर्महानादः समुन्नतः।
एते प्रहस्तसचिवाः सर्वे जघ्नुर्वनौकसः॥ १९॥

इषूणां सन्धानं सम्यग्‌विसर्जनं तेन सादिताः खण्डिताः। सन्धान-सन्धिता इति पाठे इषव एव सन्धाना निबन्धनरज्जवस्तैः सन्धिताः संस्यूता इत्यर्थः॥ १३॥

स्फुरन्तः उच्छलन्तः॥ १४॥ १५॥

वमन् वमन्त। वेमुरिति पाठान्तरम्॥ १६॥ १७॥

तेषां निपततां शीघ्रं निघ्नताञ्चापि वानरान्।
द्विविदो गिरिशृङ्गेण जघानैकं नरान्तकम् ॥ २० ॥
दुर्मुखः पुनरुत्थाय कपिः सविपुलद्रुमम्।
राक्षसं क्षिप्रहस्तन्तु समुन्नतमपोथयत् ॥ २१ ॥
जाम्बवांस्तु सुसंक्रुद्धः प्रगृह्य महतीं शिलाम्।
पातयामास तेजस्वी महानादस्य वक्षसि ॥ २२ ॥
अथ कुम्भहनुस्तत्र तारेणासाद्य वीर्यवान्।
वृक्षेण महता सद्यः प्राणान् सन्त्याजयद्रणे ॥ २३ ॥
अमृष्यमाणस्तत्कर्म प्रहस्तो रथमाश्रितः।
चकार कदनं घोरं धनुष्पाणिर्वनौकसाम् ॥ २४ ॥
आवर्त्त इव संयज्ञे सेनयोरुभयोस्तदा।
क्षुभितस्याप्रमेयस्य सागरस्येव निःस्वनः ॥ २५ ॥

वीरमार्गमनुव्रताः वीरमार्गात्पराङ्मुखत्वलक्षणास्तमनुव्रता अनुगताः। अभीतवत् अभीतार्हाणि ॥ १८ ॥ १९ ॥

तेषामिति। निर्धारणे षष्ठी ॥ २० ॥

समुन्नतं तदाख्यम्। अपोथयत् हतवान् ॥ २१ ॥

महानादस्य तदाख्यस्य ॥ २२ ॥

तारेणासाद्य सम्बध्य। युयुधे इति शेषः। ततः स तारस्तस्य कुम्भहनोर्महता वृक्षेण प्राणान् सन्त्याजयत् समत्याजयत् ॥ २३ ॥

तत्कर्म क्षणादेव सचिवचतुष्टयमारणकर्म ॥ २४ ॥

महता हि शरौघेण राक्षसो रणदुर्मदः ।
अर्दयामास संक्रुद्धो वानरान् परमाहवे ॥ २६ ॥
वानराणां शरीरैस्तु राक्षसानाञ्च मेदिनी ।
बभूवातिचिता घोरैः पर्वतैरिव संवृता । २७ ॥
सा महीरुधिरौघेण प्रच्छन्ना सम्प्रकाशते ।
सञ्छन्ना माधवे मासि पलाशैरिव पुष्पितैः ॥ २८ ॥
हतवीरौघवप्रान्तु भग्नायुधमहाद्रुमाम् ।
शोणितौघमहातोयां यमसागरगामिनीम् ॥ २९ ॥
यकृत्प्लीहमहापङ्कां विनिकीर्णान्त्रशैवलाम् ।
भिन्नकायशिरोमीनामंगावयवशाद्वलाम् ॥ ३० ॥
गृध्रहंसवराकीर्णां कङ्कसारससेविताम् ।
मेदःफेनसमाकीर्णामावर्त्तस्वननिःस्वनाम् ॥ ३१ ॥
तां कापुरुषदुस्तारां युद्धभूमिमयीं नदीम् ।
नदीमिव घनापाये हंससारससेविताम् ॥ ३२ ॥

उभयोः सेनयोरितस्ततो भ्रमणेनावर्त्त इव संयत्ते । क्षुभितस्य सागरस्य निःस्वन इव निःस्वनश्च यत्र ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

युद्धभूमिं नदीत्वेन वर्णयति । हतेत्यादि । वप्रं तटम् । यम एव सागरस्तद्गामिनीम् ॥ २९ ॥

यकृत्प्लीहा ... हृदयदक्षिणभागस्थमांसविशेषौ ॥ ३० ॥ ३१ ॥

राक्षसाः कपिमुख्यास्ते तेरुस्तां दुस्तरां नदीम् ।
यथा पद्मरजोध्वस्तां नलिनीं गजयूथपाः ॥ ३३ ॥
ततः सृजन्तं बाणौघान् प्रहस्तं स्यन्दने स्थितम् ।
ददर्श तरसा नीलो विधमन्तं प्लवङ्गमान् ॥ ३४ ॥
उद्धूत इव वायुः खे महदभ्रबलं बलात् ।
समीक्ष्याभिद्रुतं युद्धे प्रहस्तो वाहिनीपतिः ॥ ३५ ॥
रथेनादित्यवर्णेन नीलमेवाभिदुद्रुवे ।
स धनुर्धन्विनां श्रेष्ठो विकृष्य परमाहवे ॥ ३६ ॥
नीलाय व्यसृजद्बाणान् प्रहस्तो वाहिनीपतिः ।
ते प्रेत्य विशिखा नीलं विनिर्भिद्य समाहिताः ॥ ३७ ॥
महीं जग्मुर्महावेगा रोषिता इव पन्नगाः ।
नीलः शरैरभिहतो निशितैर्ज्वलनोपमैः ॥ ३८ ॥
स तं परमदुर्धर्षमापतन्तं महाकपिः ।
प्रहस्तं ताड़यामास वृक्षमुत्पाट्य वीर्य्यवान् ॥ ३८ ॥
स तेनाभिहतः क्रुद्धो नर्दन् राक्षसपुङ्गवः ।
ववर्ष शरवर्षाणि प्लवङ्गानां चमूपतौ ॥ ४० ॥

युद्धभूमिमयीं तद्रूपां नदीं प्रवर्त्तयित्वा घनापाये हंसादिसेवितां नदीमिव तां ते तेरु ॥ ३२ ॥

पद्मरजोयुतां यथा गजयूथपास्तेरुस्तद्वदित्यर्थः ॥ ३३ ॥

तत उद्यमानगुणं प्रहस्तं नीलो ददर्श ॥ ३४ ॥

तस्य बाणगणानेव राक्षसस्य दुरात्मनः।
अपारयन् वारयितुं प्रत्यगृह्णान्निमीलितः।
यथैव गोवृषो वर्षं शारदं शीघ्रमागतम् ॥ ४१ ॥
एवमेव प्रहस्तस्य शरवर्षान् दुरासदान्।
निमीलिताक्षः सहसा नीलः सेहे दुरासदान् ॥ ४२ ॥
रोषितः शरवर्षेण सालेन महता महान्।
प्रजघान हयान्नीलः प्रहस्तस्य महाबलः ॥ ४३ ॥
ततो रोषपरीतात्मा धनुस्तस्य दुरात्मनः।
बभञ्ज तरसा नीलो ननाद च पुनः पुनः ॥ ४४ ॥
विधनुः स कृतस्तेन प्रहस्तो वाहिनीपतिः।
प्रगृह्य मुसलं घोरं स्यन्दनादवपुप्लुवे ॥ ४५ ॥
तावुभौ वाहिनीमुख्यौ जातवैरौ तरस्विनौ।
स्थितौ क्षतजसिक्ताङ्गौ प्रभिन्नाविव कुञ्जरौ ॥ ४६ ॥

वाहिनीपतिः प्रहस्तः खे उद्धूतौ वायुमेघदभ्रवर्णामिव बलवदभ्रमिव युद्धेऽभिद्रुतं स्वं प्रत्याभिमुख्येनागच्छन्तं नीलं समीक्ष्य तं नीलमेवाभिदुद्रुवे ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

अपारयन् वारयितुमशक्तः सन्। शारदं वर्षम्। गोवृषस्य शरत्काले प्राबल्यं कालस्वभावात्। वर्षस्य त्वन्यथा। तत एव। तेन नातिक्लेशकरस्तस्य शरवर्ष इति सूचितम् ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ॥ ४५ ॥ ४६ ॥

उल्लिखन्तौ सुतीक्ष्णाभिर्दंष्ट्राभिरितरेतरम् ।
सिंहशार्दूलसदृशौ सिंहशार्दूलचेष्टितौ ॥ ४७ ॥
विक्रान्तविजयौ वीरौ समरेष्वनिवर्त्तिनौ ।
काङ्क्षमाणौ यशः प्राप्तुं वृत्रवासवयोरिव ॥ ४८ ॥
आजघान तदा नीलं ललाटे मुसलेन सः ।
प्रहस्तः परमायत्तस्ततः सुस्राव शोणितम् ॥ ४९ ॥
ततः शोणितदिग्धाङ्गः प्रगृह्य च महातरुम् ।
प्रहस्तस्योरसि क्रुद्धो विससर्ज महाकपिः ॥ ५० ॥
तमचिन्त्य प्रहारं स प्रगृह्य मुसलं महत् ।
अभिदुद्राव बलिनं बलान्नीलं प्लवङ्गमम् ।
तमुग्रवेगं संरब्धमापतन्तं महाकपिः ॥ ५१ ॥
ततः सम्प्रेक्ष्य जग्राह महावेगो महाशिलाम् ।
तस्य युद्धाभिकामस्य मृधे मुसलयोधिनः ॥ ५२ ॥
प्रहस्तस्य शिलां नीलो मूर्ध्नि तूर्णमपातयत् ।
नीलेन कपिमुख्येन विमुक्ता महती शिला ।
बिभेद बहुधा घोरा प्रहस्तस्य शिरस्तदा ॥ ५३ ॥

सुतीक्ष्णाभिर्दंष्ट्राभीराक्षसानामप्यक्लिदंष्ट्राप्राबल्यम् ॥ ४७ ॥
विक्रान्तविजयौ प्राप्तप्रायविजयौ ॥ ४८ ॥
परमायत्तः परमोद्युक्तः ॥ ४९ ॥ ५० ॥
अचिन्त्य अचिन्तयित्वा ॥ ५१ ॥ ५२ ॥

स गतासुर्गतश्रीको गतसत्त्वो गतेन्द्रियः।
पपात सहसा भूमौ छिन्नमूल इव द्रुमः॥ ५४॥
विभिन्नशिरसस्तस्य बहु सुस्राव शोणितम्।
शरीरादपि सुस्राव गिरेः प्रस्रवणो यथा॥ ५५॥
हते प्रहस्ते नीलेन तदकम्प्यं महाबलम्।
राक्षसानामहृष्टानां लङ्कामभिजगाम ह॥ ५६॥
न शेकुः समवस्थातुं निहते वाहिनीपतौ।
सेतुबन्धं समासाद्य विशीर्णं सलिलं यथा॥ ५७॥
हते तस्मिंश्चमूमुख्ये राक्षसास्ते निरुद्यमाः।
रक्षःपतिगृहं गत्वा ध्यानमूकत्वमागताः।
प्राप्ताः शोकार्णवं तीव्रं विसंज्ञा इव तेऽभवन्॥ ५८॥
ततस्तु नीलो विजयी महाबलः
प्रशस्यमानः सुकृतेन कर्मणा

तूर्णं मुसलप्रहारात् पूर्वमेवेत्यर्थः। प्रहस्तस्य शिरो बहुधा विभेद॥ ५३॥ ५४॥

विभिन्नशिरसो गिरेः प्रस्रवणो निर्झरः॥ ५५॥ ५६॥

विशीर्णं भग्नं सेतुबन्धमित्यन्वयः॥ ५७॥

ध्यानमूकत्वम्। ध्यानेन देवताध्यानेन ये मूकाः तैःनिनत्तेषां भावस्तत्त्वम्। भयदुःखमोहैः किमपि वक्तुं नाशक्नुवन्नित्यर्थः। तदेवाह,—प्राप्ता इति॥ ५८॥

समेत्य रामेण सलक्ष्मणेन
प्रहृष्टरूपस्तु बभूव यूथपः ॥ ५९ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
अष्टपञ्चाशः सर्गः ॥ ५८ ॥

सलक्ष्मणेन रामेण समेत्य प्रशस्यमानोऽवएव प्रहृष्टरूपोऽतिप्रहृष्टः । प्रशंसायां रूपप् ॥ ५९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे अष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

## एकोनषष्टितमः सर्गः ।

तस्मिन् हते राक्षससैन्यपाले
प्लवङ्गमानामृषभेण युद्धे ।
भीमायुधं सागरवेगतुल्यं
विदुद्रुवे राक्षसराजसैन्यम् ॥ १ ॥

गत्वा तु रक्षोधिपतेः शशंसुः
सेनापतिं पावकसूनुशस्तम् ।
तच्चापि तेषां वचनं निशम्य
रक्षोऽधिपः क्रोधवशं जगाम ॥ २ ॥

संख्ये प्रहस्तं निहतं निशम्य
क्रोधार्दितः शोकपरीतचेताः ।
उवाच तान् राक्षसयूथमुख्यान्
इन्द्रो यथा निर्जरयूथमुख्यान् ॥ ३ ॥

नावज्ञा रिपवे कार्य्या यैरिन्द्रबलसादनः ।

तस्मिन्निति । प्रहस्ते इत्यर्थः । प्लवङ्गमानामृषभेण नीलेन ॥ १ ॥
पावकसूनुशस्तं नीलेन हतम् ॥ २ ॥
निर्जराः देवाः ॥ ३ ॥

सूदितः सैन्यपालो मे सानुयात्रः सकुञ्जरः ॥ ४ ॥
सोऽहं रिपुविनाशाय विजयायाविचारयन् ।
स्वयमेव गमिष्यामि रणशीर्षं तदद्भुतम् ॥ ५ ॥
अद्य तद्वानरानीकं रामञ्च सहलक्ष्मणम् ।
निर्दहिष्यामि बाणौघैर्वनं दीप्तैरिवाग्निभिः ॥ ६ ॥

स एवमुक्त्वा ज्वलनप्रकाशं
रथं तुरङ्गोत्तमराजियुक्तम् ।
प्रकाशमानं वपुषा ज्वलन्तं
समारुरोहामरराजशत्रुः ॥ ७ ॥
स शङ्खभेरीपणवप्रणादै-
रास्फोटितक्ष्वेड़ितसिंहनादैः ।
पुण्यैः स्तवैश्चापि सुपूज्यमान-
स्तदा ययौ राक्षसराजमुख्यः ॥ ८ ॥

रिपवे रिपुभ्यः । तेषु रिपुषु अवज्ञा एते कपयः किं करिष्यन्तीत्येवं रूपा न कार्य्या । यैरिन्द्रबलसादनो मे सैन्यपालो वानररूपैः सूदितः ॥ ४ ॥

अविचारयन् रिपुबलं तृणीकुर्वन् । रणशीर्षं रणमूर्द्धानम् । युद्धभूमिमित्यर्थः ॥ ५ ॥ ६ ॥

तुरङ्गोत्तमराजियुक्तम् । अनेन बहुहयुक्तत्वं रथस्योक्तम् । वपुषा ज्वलन्तम् । अतएव स्वभासा प्रकाशमानम् ॥ ७ ॥

स शैलजीमूतनिकाशरूपै-
र्मांसाशनैः पावकदीप्तनेत्रैः ।
बभौ वृतो राक्षसराजमुख्यो
भूतैर्वृतो रुद्र इवामरेशः ॥ ९ ॥
ततो नगर्याः सहसा महौजा
निष्क्रम्य तद्वानरसैन्यमुग्रम् ।
महार्णवाभ्रस्तनितं ददर्श
समुद्यतं पादपशैलहस्तम् ॥ १० ॥
तद्राक्षसानीकमतिप्रचण्ड-
मालोक्य रामो भुजगेन्द्रबाहुः ।
विभीषणं शस्त्रभृतां वरिष्ठ-
मुवाच सेनानुगतः पृथुश्रीः ॥ ११ ॥
नानापताकाध्वजछत्रजुष्टं
प्रासासिशूलायुधशस्त्रजुष्टम् ।
कस्येदमक्षोभ्यमभीरुजुष्टं
सैन्यं महेन्द्रोपमनागजुष्टम् ॥ १२ ॥

आस्फोटितानि भुजास्फालनानि । क्ष्वेडितानि स्वशौर्यप्रकाशक-शब्दाः । आस्फोटितादीन्यत्र सैनिकानाम् ॥ ८ ॥ ९ ॥

महार्णवस्य अभ्रस्य महामेघस्येव च स्तनितं यस्य तत् ॥ १० ॥

सेनयानुगत सेनानुगतः ॥ ११ ॥

ततस्तु रामस्य निशम्य वाक्यं
विभीषणः शक्रसमानवीर्य्यः।
शशंस रामस्य बलप्रवेकं
महात्मनां राक्षसपुङ्गवानाम्॥ १३॥

योऽसौ गजस्कन्धगतो महात्मा
नवोदितार्कोपमताम्रवक्त्रः।
सङ्कम्पयन्नागशिरोऽभ्युपैति
ह्यकम्पनं त्वेनमवेहि राजन्!॥ १४॥

योऽसौ रथस्थो मृगराजकेतु-
र्धुन्वन् धनुः शक्रधनुःप्रकाशम्।
करीव भात्युग्रविवृत्तदंष्ट्रः
स इन्द्रजिन्नाम वरप्रधानः॥ १५॥

ध्वजकल्पे तुगभाव आर्षः। महेन्द्रोपमंनागजुष्टं महेन्द्रपर्वतसदृश-गजयुक्तम्। अभीरुभीरक्षोभिर्जुष्टम्॥ १२॥

बलप्रवेकं बलश्रेष्ठम्॥ १३॥

महात्मा महादेहः। अयमकम्पनः पूर्वहतादन्य इति बोध्यम्। स्वशरीरभारात् स्वारूढनागस्य शिरः सङ्कम्पयन्नेति॥ १४॥

उग्रा विवृत्ता दंष्ट्रा यस्य सः। तथा वरेण ब्रह्मदत्तवरेण प्रधानो राक्षसश्रेष्ठः॥ १५॥

यश्चैष विन्ध्यास्तमहेन्द्रकल्पो
धन्वी रथस्थोऽतिरथोऽतिवीरः।
विस्फारयंश्चापमतुल्यमानं
नाम्नातिकायोऽतिविवृद्धकायः॥ १६ ॥

योऽसौ नवार्कोदितताम्रचक्षु-
रारुह्य घण्टानिनदप्रणादम्।
गजं खरं गर्जति वै महात्मा
महोदरो नाम स एष वीरः॥ १७ ॥

योऽसौ हयं काञ्चनचित्रभाण्ड-
मारुह्य सन्ध्याभ्रगिरिप्रकाशः।
प्रासं समुद्यम्य मरीचिनद्धं
पिशाच एषोऽशनितुल्यवेगः॥ १८ ॥

यश्चैष शूलं निशितं प्रगृह्य
विद्युत्प्रभं किङ्करवज्रवेगम्।

विन्ध्याचलास्ताचलमहेन्द्रपर्वतकल्पः शरीरेण। अतुल्यमानमनुपमप्रमाणम् ॥ १६ ॥

घण्टानिनदैः प्रणादो यस्य तं खरं क्रूरं गजमारुह्य गर्जति ॥ १७ ॥

भाण्डमश्वाभरणम्। काञ्चनानि चित्रभाण्डानि यस्य तमश्वम्। पिशाचनामा ॥ १८ ॥

वृषेन्द्रमास्थाय शशिप्रकाश-
मायाति योऽसौ त्रिशिरा यशस्वी ॥ १९ ॥
असौ च जीमूतनिकाशरूप:
कुम्भ: पृथुव्यूढसुजातवक्षा: ।
समाहित: पन्नगराजकेतु-
र्विस्फारयन् याति धनुर्विधुन्वन् ॥ २० ॥
यश्चैष जाम्बूनदवज्रजुष्टं
दीप्तं सधूमं परिघं प्रगृह्य ।
आयाति रक्षोबलकेतुभूतो
योऽसौ निकुम्भोऽद्भुतवीरकर्मा ॥ २१ ॥
यश्चैष चापासिशरौघजुष्टं
पताकिनं पावकदीप्तरूपम् ।
रथं समास्थाय विभात्युदग्रो
नरान्तकोऽसौ नगशृङ्गयोधी ॥ २२ ॥

किन्नरभूतो बद्धवेगो यस्मिंस्तम्। त्रिशिरा अत्रापि कश्चित् त्रिशिराः ॥ १९ ॥

कुम्भसंज्ञामा ॥ २० ॥

जाम्बूनदवज्रजुष्टं जाम्बूनदेन वज्रैर्हीरकादिरत्नैर्युक्तम्। अतएव दीप्तम्। सधूमं नीलमणिकान्त्या सधूममिव ॥ २१ ॥

यस्यैष नानाविधघोररूपै-
र्व्याघ्रोष्ट्रनागेन्द्रमृगाश्ववक्त्रैः।
भूतैर्वृतो भाति विवृत्तनेत्रै
र्योऽसौ सुराणामपि दर्पहन्ता ॥ २३ ॥
यत्रैतदिन्दुप्रतिमं विभाति
च्छत्रं सितं सूक्ष्मशलाकमग्र्यम्।
अत्रैव रक्षोधिपतिर्महात्मा
भूतैर्वृतो रुद्र इवावभाति ॥ २४ ॥
असौ किरीटी चलकुण्डलास्यो
नगेन्द्रविन्ध्योपमभीमकायः।
महेन्द्रवैवस्वतदर्पहन्ता
रक्षोधिपः सूर्य्य इवावभाति ॥ २५ ॥
प्रत्युवाच ततो रामो विभीषणमरिन्दमः।

पावकवद्दीप्तं रूपं यस्य तम्। नगपृष्ठयोधी। प्रतियोद्धृभावात् भुजकण्डूनिवृत्त्यर्थमिति भावः ॥ २२ ॥

योऽसौ कोऽसौ तत्राह,—यः सुराणामपि दर्पहा रावण इति शेषः। भूतैर्भूतगणैः ॥ २३ ॥

क्वासौ तत्राह,—यत्रेति। यत्र देशे इन्दुप्रतिमत्वादिगुणकं छत्रं भाति अत्रैव रक्षोधिपतिः। भूतैर्भूतगणैः ॥ २४ ॥

अहो दीप्तमहातेजा रावणो राक्षसेश्वरः ॥ २६ ॥
आदित्य इव दुष्प्रेक्ष्यो रश्मिभिर्भाति रावणः ।
न व्यक्तं लक्षये ह्यस्य रूपं तेजःसमावृतम् ॥ २७ ॥
देवदानववीराणां वपुर्नैवंविधं भवेत् ।
यादृशं राक्षसेन्द्रस्य वपुरेतद्विराजते ॥ २८ ॥
सर्वे पर्वतसङ्काशाः सर्वे पर्वतयोधिनः ।
सर्वे दीप्तायुधधरा योधास्तस्य महात्मनः ॥ २९ ॥
विभाति रक्षोराजोऽसौ प्रदीप्तैर्भीमदर्शनैः ।
भूतैः परिवृतैस्तीक्ष्णैर्देहवद्भिरिवान्तकः ॥ ३० ॥
दिष्ट्यायमद्य पापात्मा मम दृष्टिपथं गतः ।
अद्य क्रोधं विमोक्ष्यामि सीताहरणसम्भवम् ॥ ३१ ॥
एवमुक्त्वा ततो रामो धनुरादाय वीर्य्यवान् ।
लक्ष्मणानुचरस्तस्थौ समुद्धृत्य शरोत्तमम् ॥ ३२ ॥

ततः स रक्षोऽधिपतिर्महात्मा
रक्षांसि तान्याह महाबलानि ।

नगेन्द्रो यो विन्ध्यस्तद्वद्भीमः कायो यस्य सः ॥ २५ ॥ २६ ॥

न व्यक्तं लक्षये इत्यत्र हेतुः । तेजःसमावृतमिति । रूपं सूक्ष्मावयवसंस्थानम् ॥ २७ ॥ २८ ॥ २९ ॥

देहवद्भिः प्रशस्तदेहैः ॥ ३० ॥ ३१ ॥ ३२ ॥

द्वारेषु चर्य्यागृहगोपुरेषु
सुनिर्वृतास्तिष्ठत निर्विशङ्काः ॥ ३३ ॥
इहागतं मां सहितं भवद्भि-
र्वनौकसश्छिद्रमिदं विदित्वा।
शून्यां पुरीं दुष्प्रसहां प्रमथ्य
प्रधर्षयेयुः सहसा समेताः ॥ ३४ ॥
विसर्जयित्वा सचिवांस्ततस्तान्
गतेषु रक्षःसु यथानियोगम्।
व्यदारयद्वानरसागरौघं
महाझषः पूर्णमिवार्णवौघम् ॥ ३५ ॥
तमापतन्तं सहसा समीक्ष्य
दीप्तेषुचापं युधि राक्षसेन्द्रम्।
महत् समुत्पाट्य महीधराग्रं
दुद्राव रक्षोऽधिपतिं हरीशः ॥ ३६ ॥

द्वारेषु लङ्कायाश्चतुर्ष्वपि द्वारेषु। चर्य्या महामार्गाः। गृहं मूला-यतनम्। तस्य गोपुराणि बहिर्द्वारप्रासादाः। सुनिर्वृताः सुखिनः। निर्विशङ्का निर्भयाः ॥ ३३ ॥

इदं छिद्रं रणभूमौ सपरिवारस्यागमनरूपम् ॥ ३४ ॥

अर्णवौघः समुद्रजलसमूहम् ॥ ३५ ॥

तच्छैलशृङ्गं बहुवृक्षसानु
प्रगृह्य चिक्षेप निशाचराय।
तमापतन्तं सहसा समीक्ष्य
चिच्छेद बाणैस्तपनीयपुङ्खैः॥ ३७॥

तस्मिन् प्रवृद्धोत्तमसानुवृक्षे
शृङ्गे विदीर्णे पतिते पृथिव्याम्।
महाहिकल्पं शरमन्तकाभं
समाददे राक्षसलोकनाथः॥ ३८॥

स तं गृहीत्वाऽनिलतुल्यवेगं
सविस्फुलिङ्गज्वलनप्रकाशम्।
बाणं महेन्द्राशनितुल्यवेगं
चिक्षेप सुग्रीववधाय रुष्टः॥ ३९॥

स सायको रावणबाहुमुक्तः
शक्राशनिस्पर्शवपुःप्रकाशम्।
सुग्रीवमासाद्य विभेद वेगा-
द्गुहेरिता क्रौञ्चमिवोग्रशक्तिः॥ ४०॥

दीप्ता इवचञ्चापश्च यस्य तम्॥ ३६॥
शृङ्गशब्दोऽर्धर्चादिः पुंस्यपि॥ ३७॥ ३८॥ ३९॥

स सायकार्त्तो विपरीतचेताः
कूजन् पृथिव्यां निपपात वीरः।
तं वीक्ष्य भूमौ पतितं विसंज्ञं
नेदुः प्रहृष्टा युधि यातुधानाः॥ ४१॥

ततो गवाक्षो गवयः सुषेण-
स्त्वृषभो ज्योतिर्मुखो नलश्च।
शैलान् समुत्पाट्य विवृद्धकायाः
प्रदुद्रुवुस्तं प्रति राक्षसेन्द्रम्॥ ४२॥

तेषां प्रहारान् स चकार मोघान्
रक्षोऽधिपो बाणशतैः शिताग्रैः।
तान् वानरेन्द्रानपि बाणजालै-
र्बिभेद जाम्बूनदचित्रपुङ्खैः॥ ४३॥

ततस्तु तद्वानरसैन्यमुग्रं
प्रच्छादयामास स बाणजालैः।
ते वध्यमाना: पतिताश्च वीरा
नानद्यमाना भयशल्यविद्धाः।

---

शक्राशनिस्पर्शवच्छरीरः। सुग्रीवमासाद्य प्राप्य कर्धांशमिव। गुहेरितोग्रशक्तिः क्रौञ्चमिव॥ ४०॥

विपरीतचेताः अचेता इति यावत्॥ ४१॥ ४२॥ ४३॥

शाखामृगा रावणसायकार्त्ता
जग्मुः शरण्यं शरणं स्म रामं ॥ ४४ ॥
ततो महात्मा स धनुर्धनुष्मा-
नादाय रामः सहसा जगाम ।
तं लक्ष्मणः प्राञ्जलिरभ्युपेत्य
उवाच रामं परमार्थयुक्तम् ॥ ४५ ॥
काममार्य्य ! सुपर्य्याप्तो वधायास्य दुरात्मनः ।
विधमिष्याम्यहञ्चैतमनुजानीहि मां विभो ! ॥ ४६ ॥
तमब्रवीन्महातेजा रामः सत्यपराक्रमः ।
गच्छ यत्नपरश्चापि भव लक्ष्मण ! संयुगे ॥ ४७ ॥
रावणो हि महावीर्य्यो रणेऽद्भुतपराक्रमः ।
त्रैलोक्येनापि संक्रुद्धो दुष्प्रसह्यो न संशयः ॥ ४८ ॥
तस्य च्छिद्राणि मार्गस्व स्वच्छिद्राणि च लक्षय ।
चक्षुषा धनुषात्मानं गोपायस्व समाहितः ॥ ४९ ॥
राघवस्य वचः श्रुत्वा सम्परिष्वज्य पूज्य च ।

भयमेव शल्यं तेन विद्धाः । शरण्यं रामं शरणं जग्मुः ॥ ४४ ॥
धनुष्मान् प्रशस्तधनुष्कः सः धनुरादायेत्यन्वयः ॥ ४५ ॥
पर्य्याप्तोऽहमिति शेषः ॥ ४६ ॥ ४७ ॥
त्रैलोक्येनापि । तद्वर्त्तिदेवादिसमूहैरित्यर्थः ॥ ४८ ॥

अभिवाद्य च रामाय ययौ सौमित्रिराहवे ॥ ५० ॥

स रावणं वारणहस्तबाहुं
दर्श भीमोद्यतदीप्तचापम्।
प्रच्छादयन्तं शरवृष्टिजालै-
स्तान् वानरान् भिन्नविकीर्णदेहान् ॥ ५१ ॥

तमालोक्य महातेजा हनूमान् मारुतात्मजः
निवार्य्य शरजालानि विदुद्राव स रावणम् ॥ ५२ ॥
रथं तस्य समासाद्य बाहुमुद्यम्य दक्षिणम्।
त्रासयन् रावणं धीमान् हनूमान् वाक्यमब्रवीत् ॥ ५३ ॥
देवदानवगन्धर्वैर्यक्षैश्च सह राक्षसैः।
अवध्यत्वं त्वया प्राप्तं वानरेभ्यस्तु ते भयम् ॥ ५४ ॥
एष मे दक्षिणो बाहुः पञ्चशाखः समुद्यतः।
विधमिष्यति ते देहे भूतात्मानं चिरोषितम् ॥ ५५ ॥
श्रुत्वा हनुमतो वाक्यं रावणो भीमविक्रमः।
संरक्तनयनः क्रोधादिदं वचनमब्रवीत् ॥ ५६ ॥

छिद्राणि प्रहारावसरान्। स्वच्छिद्राणि चेत्यस्य गोपायेति शेषः। चक्षुषा स्वच्छिद्रञ्च लक्षय सम्यगवलोकय। ततो धनुषा अनुव्यापारेणात्मानं रक्ष ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥

पञ्चशाखः पञ्चाङ्गुलियुक्तः। तव देहे चिरोषितं भूतात्मानं तव देहाद्विधमिष्यति अपहरिष्यति ॥ ५५ ॥ ५६ ॥

क्षिप्रं प्रहर निःशङ्कं स्थिरां कीर्त्तिमवाप्नुहि ।
ततस्त्वां ज्ञातविक्रान्तं नाशयिष्यामि वानर ! ॥ ५७ ॥
रावणस्य वचः श्रुत्वा वायुसूनुर्वचोऽब्रवीत् ।
प्रहृतं हि मया पूर्वमक्षं तव सुतं स्मर ॥ ५८ ॥
एवमुक्तो महातेजा रावणो राक्षसेश्वरः ।
आजघानानिलसुतं तलेनोरसि वीर्य्यवान् ।
स तलाभिहतस्तेन चचाल च मुहुर्मुहुः ॥ ५९ ॥
स्थितो मुहूर्त्तं तेजस्वी स्थैर्य्यं कृत्वा महामतिः ।
आजघान च संक्रुद्धस्तलेनैवामरद्विषम् ॥ ६० ॥
ततः स तेनाभिहतो वानरेण महात्मना ।
दशग्रीवः समाधूतो यथा भूमिचलेऽचलः ॥ ६१ ॥
संग्रामे तं तथा दृष्ट्वा रावणं तलताड़ितम् ।

कीर्त्तिं हनूमानपि रावणं प्रहृतवानित्येवं रूपां कीर्त्तिम् । ज्ञात-विक्रान्तं ज्ञातपराक्रमम् ॥ ५७ ॥

रावणस्य वच इति । ज्ञातविक्रमं नाशयिष्यामीत्येवं रूपम् । पूर्वं मया प्रहृतमक्षं तन्नामानं सुतं स्मर । मत्पराक्रमज्ञानायेति शेषः । पूर्वमेव ज्ञातत्वादिदानीं किमपि मद्विक्रमविषये ज्ञातव्यं नास्तीति भावः ॥ ५८ ॥ ५९ ॥ ६० ॥

समाधूतः कम्पितः । भूमिचले भूमिकम्पे ॥ ६१ ॥

ऋषयो वानराः सिद्धा नेदुर्देवाः सुरासुरैः॥ ६२ ॥
अथाश्वस्य महातेजा रावणो वाक्यमब्रवीत्।
साधु वानर ! वीर्य्येण श्लाघनीयोऽसि मे रिपुः॥ ६३ ॥
रावणेनैव मुक्तस्तु मारुतिर्वाक्यमब्रवीत्।
धिगस्तु मम वीर्य्यस्य यत्त्वं जीवसि रावण ! ॥ ६४ ॥
सकृत्तु प्रहरेदानीं दुर्बुद्धे ! किं विकत्थसे।
ततस्त्वां मामको मुष्टिर्नयिष्यति यमक्षयम्॥ ६५ ॥
ततो मारुतिवाक्येन कोपस्तस्य प्रजज्वले।
संरक्तनयनो यत्नात् मुष्टिमावृत्त्य दक्षिणम्।
पातयामास वेगेन वानरोरसि वीर्य्यवान्॥ ६६ ॥
हनूमान् वक्षसि व्यूढ़े सञ्चचाल पुनः पुनः।
विह्वलन्तं तदा दृष्ट्वा हनूमन्तं महाबलम्॥ ६७ ॥
रथेनातिरथः शीघ्रं नीलं प्रति समभ्यगात्।
राक्षसानामधिपतिर्दशग्रीवः प्रतापवान्॥ ६८ ॥
पन्नगप्रतिमैर्भीमैः परमर्माभिभेदनैः।

तथा ताड़ितं विसंज्ञतापर्य्यन्तताड़नदुःखवन्तम्। नेदुः सन्तोषादिति शेषः॥ ६२॥ ६३॥

विर्य्यस्य धिक्। वीर्य्यं धिगित्यर्थः। यत्त्वं जीवसि। मत्ताड़ितोऽपीत्यर्थः॥ ६४॥ ६५॥ ६६॥

शरैरादीपयामास नीलं हरिचमूपतिम् ॥ ६९ ॥
स शरौघसमायस्तो नीलो हरिचमूपतिः।
करेणैकेन शैलाग्रं रक्षोऽधिपतयेऽसृजत् ॥ ७० ॥
हनूमानपि तेजस्वी समाश्वस्तो महामनाः।
विप्रेक्षमाणो युद्धेप्सुः सरोषमिदमब्रवीत् ॥ ७१ ॥
नीलेन सह संयुक्तं रावणं राक्षसेश्वरम्।
अन्येन युध्यमानस्य न युक्तमभिधावनम् ॥ ७२ ॥
रावणोऽथ महातेजास्तं शृङ्गं सप्तभिः शरैः।
आजघान सुतीक्ष्णाग्रैस्तद्विशीर्णं पपात ह ॥ ७३ ॥
तद्विशीर्णं गिरेः शृङ्गं दृष्ट्वा हरिचमूपतिः।
कालाग्निरिव जज्वाल कोपेन परवीरहा ॥ ७४ ॥
सोऽश्वकर्णद्रुमान् शालांश्चूतांश्चापि सुपुष्पितान्।
अन्यांश्च विविधान् वृक्षान्नीलश्चिक्षेप संयुगे ॥ ७५ ॥
स तान् वृक्षान् समासाद्य प्रतिचिच्छेद रावणः।

व्यूढेऽतिविशाले वक्षसि। इतो हनूमान् सञ्चचाल ॥ ६७ ॥
॥ ६८ ॥ ६९ ॥

रक्षोऽधिपतयेऽसृजत्। तत्प्रहारं दत्तवानित्यर्थः। समायस्तः खेदितः ॥ ७० ॥

समाश्वस्तः नीलेन सह युद्धकाले प्राप्तसमाश्वासः। पुनर्युद्धेप्सु-

अभ्यवर्षच्च घोरेण शरवर्षेण पावकिम् ॥ ७६ ॥
अभिसृष्टः शरौघेण मेघेनेव महाबलः ।
ह्रस्वं कृत्वा ततो रूपं ध्वजाग्रे निपपात ह ॥ ७७ ॥
पावकात्मजमालोक्य ध्वजाग्रे समवस्थितम् ।
जज्वाल रावणः क्रोधात्ततो नीलो ननाद च ॥ ७८ ॥
ध्वजाग्रे धनुषश्चाग्रे किरीटाग्रे च तं हरिम् ।
लक्ष्मणोऽथ हनूमांश्च रामश्चापि सुविस्मिताः ॥ ७९ ॥
रावणोऽपि महातेजाः कपिलाघवविस्मितः ।
अस्त्रमाहारयामास दीप्तमाग्नेयमद्भुतम् ॥ ८० ॥
ततस्ते चुक्रुशुर्हृष्टा लब्धलक्षाः प्लवङ्गमाः ।
नीललाघवसम्भ्रान्तं दृष्ट्वा रावणमाहवे ॥ ८१ ॥

नीलेन सह युद्धाय संसक्तं रावणं विप्रेक्षमाणो रावणं प्रति अन्येन युध्यमानस्याभिधावनमयुक्तमितीदं वचोऽब्रवीत् ॥ ७१ ॥ ७२ ॥ ७३ ॥ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥

ध्वजाग्रादिषु तं दृष्ट्वेति शेषः । रावणकिरीटे स्थितेर्युद्धे केनापि दुष्करत्वाल्लक्ष्मणादयस्त्रयोऽपि विस्मिताः ॥ ७९ ॥

न केवलं स्वपक्ष्या एवापि तु शत्रू रावणोऽपीत्याह,—रावणोऽपीति ॥ ८० ॥

नीललाघवसम्भ्रान्तं रावणं दृष्ट्वा लब्धलक्षाः लब्धहर्षविषया अतएव हृष्टाः प्लवङ्गमाश्चुक्रुशुः ॥ ८१ ॥

वानराणाञ्च नादेन संरब्धो रावणस्तदा ।
सम्भ्रमाविष्टहृदयो न किञ्चित् प्रत्यपद्यत ॥ ८२ ॥
आग्नेयेनापि संयुक्तं गृहीत्वा रावणः शरम् ।
ध्वजशीर्षस्थितं नीलमुदैक्षत निशाचरः ॥ ८३ ॥
ततोऽब्रवीन्महातेजा रावणो राक्षसेश्वरः ।
कपे ! लाघवयुक्तोऽसि मायया परया सह ॥ ८४ ॥
जीवितं खलु रक्षस्व यदि शक्तोऽसि वानर ! ।
तानि तान्यात्मरूपाणि सृजसि त्वमनेकशः ॥ ८५ ॥
तथापि त्वां मया मुक्तः सायकोऽस्त्रप्रयोजितः ।
जीवितं परिरक्षन्तं जीवितात् भ्रंशयिष्यति ॥ ८६ ॥
एवमुक्त्वा महाबाहू रावणो राक्षसेश्वरः ।
सन्धाय बाणमस्त्रेण चमूपतिमताड़यत् ॥ ८७ ॥
सोऽस्त्रमुक्तेन बाणेन नीलो वक्षसि ताड़ितः ।
निर्दह्यमानः सहसा स पपात महीतले ॥ ८८ ॥

संरब्धः क्रुद्धः ॥ ८२ ॥ ८३ ॥

मायया वञ्चनया ॥ ८४ ॥

आत्मरूपाणि आत्मयोग्यानि स्वपराक्रमोचितानि तानि कर्माणि यद्यपि सृजसि ॥ ८५ ॥

तथापि मया मुक्तोऽस्त्रप्रयोजितोऽयं सायकस्त्वां जीवितात् भ्रंशयिष्यति ॥ ८६ ॥ ८७ ॥ ८८ ॥

पितृमाहात्म्यसंयोगादात्मनश्चापि तेजसा।
जानुभ्यामपतत् भूमौ न तु प्राणैर्वियुज्यत॥ ८९॥
विसंज्ञं वानरं दृष्ट्वा दशग्रीवो रणोत्सुकः।
रथेनाम्बुदनादेन सौमित्रिमभिदुद्रुवे॥ ९०॥
आसाद्य रणमध्ये तु वारयित्वा स्थितो ज्वलन्।
धनुर्विस्फारयामास राक्षसेन्द्रः प्रतापवान्॥ ९१॥
तमाह सौमित्रिरदीनसत्त्वो
विस्फारयन्तं धनुरप्रमेयम्।
अवेहि मामद्य निशाचरेन्द्र!
न वानरांस्त्वं प्रतियोद्धुमर्हसि॥ ९२॥
स तस्य वाक्यं प्रतिपूर्णघोषं
ज्याशब्दमुग्रञ्च निशम्य राजा।
आसाद्य सौमित्रिमुपस्थितन्तं
रोषान्वितं वाचमुवाच रक्षः॥ ९३॥
दिष्ट्याऽसि मे राघवदृष्टिमार्गं
प्राप्तोऽन्तगामी विपरीतबुद्धिः।

पितुरधर्ममाहात्म्यसंयोगात्। न ह्यमरक्षाभिमन्त्रितो बाणोऽग्नि दग्धुमर्हति। वियुज्यत व्ययुज्यत॥ ८९॥ ९०॥
तं सौमित्रिं वारयित्वेति। सर्वं कपिबलमिति शेषः॥ ९१॥
अवेहि स्पष्टम्॥ ९२॥ ९३॥

अस्मिन् क्षणे यास्यसि मृत्युलोकं
संसाद्यमानो मम बाणजालैः ॥ ९४ ॥
तमाह सौमित्रिरविस्मयानो
गर्जन्तमुद्वृत्तशिताग्रदंष्ट्रम् ।
राजन्न गर्जन्ति महाप्रभावा
विकत्थसे पापकृतां वरिष्ठ ! ॥ ९५ ॥
जानामि वीर्य्यं तव राक्षसेन्द्र !
बलं प्रतापञ्च पराक्रमञ्च ।
अवस्थितोऽहं शरचापपाणि-
रागच्छ किं मोघविकत्थनेन ॥ ९६ ॥
स एवमुक्तः कुपितः ससर्ज
रक्षोऽधिपः सप्त शरान् सुपुङ्खान् ।
तान् लक्ष्मणः काञ्चनचित्रपुङ्खै-
श्चिच्छेद बाणैर्निशिताग्रधारैः ॥ ९७ ॥

अन्तगामी अन्तं नाशं प्राप्स्यतीत्यन्तगामी । भविष्यति णिनिः । मया सह युद्धाय प्रार्थनाशार्थंमागमनाद्विपरीतबुद्धिर्दुर्बुद्धिः । संसाद्यमानः पीड्यमानः ॥ ९४ ॥

अविस्मयानः तद्विक्रमादिदर्शनेऽपि स्मयरहितः । उद्वृत्ता अतितैक्ष्ण्यादतिस्थौल्याद्दुत्कटा शिता तीक्ष्णाग्रदंष्ट्रा यस्य ॥ ९५ ॥

तान् प्रेक्षमाणः सहसा निकृत्ता-
न्निकृत्तभोगानिव पन्नगेन्द्रान्।
लङ्केश्वरः क्रोधवशं जगाम
ससर्ज चान्यान्निशितान् पृषत्कान्॥ ९८॥

स बाणवर्षन्तु ववर्ष तीव्रं
रामानुजः कार्मुकसम्प्रयुक्तम्।
क्षुरार्द्धचन्द्रोत्तमकर्णिभल्लैः
शरांश्च चिच्छेद न चुक्षुभे च॥ ९९॥

स बाणजालान्यपि तानि तानि
मोघानि पश्यंस्त्रिदशारिराजः।
विसिस्मिये लक्ष्मणलाघवेन
पुनश्च बाणान्निशितान्मुमोच॥ १००॥

स लक्ष्मणश्चापि शितान् शिताग्रान्
महेन्द्रतुल्योऽशनिभीमवेगान्।
सन्धाय चापे ज्वलनप्रकाशान्
ससर्ज रक्षोऽधिपतेर्वधाय॥ १०१॥

जानामीति। चौर्य्यसीताहरणेनैवेति भावः। मोघविकत्थनेन व्यर्थात्मश्लाघनेन॥ ९६॥ ९७॥ ९८॥

स रामानुजो रावणोपरि बाणवर्षं ववर्ष। तदीयान् शरांश्च क्षु-

स तान् प्रचिच्छेद हि राक्षसेन्द्रः
शितान् शरान् लक्ष्मणमाजघान।
शरेण कालाग्निसमप्रभेण
स्वयम्भुदत्तेन ललाटदेशे॥ १०२॥

स लक्ष्मणो रावणसायकार्त्त-
श्चचाल चापं शिथिलं प्रगृह्य।
पुनश्च संज्ञां प्रतिलभ्य कृच्छ्रा-
च्चिच्छेद चापं त्रिदशेन्द्रशत्रोः॥ १०३॥

निकृत्तचापं त्रिभिराजघान
बाणैस्तदा दाशरथिः शिताग्रैः।
स सायकार्त्तो विचचाल राजा
कृच्छ्राच्च संज्ञां पुनराससाद॥ १०४॥

स कृत्तचापः शरताड़ितश्च
मेदार्द्रगात्रो रुधिरावसिक्तः।
जग्राह शक्तिं स्वयमुग्रशक्तिः
स्वयम्भुदत्तां युधि देवशत्रुः॥ १०५॥

रादिभिश्चिच्छेद न बुबुभे च। चाप स्वस्थानतश्चचाल॥ ९९॥ १००॥
॥१०१॥१०२॥१०३॥१०४॥

मेदार्द्रगात्र इति सन्धिरार्षः। अथ रावणः प्राणान्तापदं प्राप्तः

स तां सधूमानलसन्निकाशां
वित्रासनीं संयति वानराणाम्।
चिक्षेप शक्तिं तरसा ज्वलन्तीं
सौमित्रये राक्षसराष्ट्रनाथः॥ १०६॥

तामापतन्तीं भरतानुजोऽस्त्रै-
र्जघान बाणैश्च हुताग्निकल्पैः।
तथापि सा तस्य विवेश शक्ति-
र्भुजान्तरं दाशरथेर्विशालम्॥ १०७॥

स शक्तिमान् शक्तिसमाहतः सन्
जज्वाल भूमौ स रघुप्रवीरः।
तं विह्वलन्तं सहसाभ्युपेत्य
जग्राह राजा तरसा भुजाभ्याम्॥ १०८॥

प्रकारान्तरेण जीवननिर्वाहमसम्भाव्य ब्रह्मदत्ताममोघां शक्तिं जग्राहे-त्याह,—जग्राहेति॥ १०५॥

सधूमानलसन्निकाशां सधूमानलसदृशीम्। राक्षसराष्ट्रनाथो रावणः॥ १०६॥

तथापि सेति। ब्राह्मत्वेनामोघत्वादित्यर्थः॥ १०७॥

शक्तिमानपि महाबलवानपि शक्तिसमाहतः सन् जज्वाल। पपा-तेति पाठान्तरम्। विह्वलन्तं विकलं भवन्तं राजा रावणस्तरसा बलेन बाहुभ्यां भुजाभ्यां जग्राह। इन्द्रजिद्बद्धयोरपि पुनरुत्थानदर्शनादि-

हिमवान् मन्दरो मेरुस्त्रैलोक्यं वा सहामरैः।
शक्यं भुजाभ्यामुद्धर्त्तुं न शक्यो भरतानुजः॥ १०९॥
शक्त्या ब्राह्म्या तु सौमित्रिस्ताड़ितोऽपि स्तनान्तरे।
विष्णोरमीमांस्यं भागमात्मानं प्रत्यनुस्मरत्॥ ११०॥
ततो दानवदर्पघ्नं सौमित्रिं देवकण्टकः।
तं पीड़यित्वा बाहुभ्यां न प्रभुर्लङ्घने भवेत्॥ १११॥

दानीमपि पुनरुज्जीवनभयेन गृहीत्वा समुद्रे प्रक्षेपणीयस्तत्र गते रामोऽसहायो नङ्क्ष्यत्येवेत्याशयेनायमारम्भः॥ १०८॥

न चोद्धर्त्तुमशक्तोदित्याह,—हिमवानिति। येन रावणेन सुरासुरैः सहिता हिमवदादयोऽपि भुजाभ्यामुद्धर्त्तुं शक्यमभूत्तेन भरतानुजः संख्ये उद्धर्त्तुं शक्यो नाभूत्॥ १०९॥

कुतस्तत्राह,—शक्त्येति। अमोघया ब्रह्मदत्ततया। स्तनान्तरे आहतः सौमित्रिर्विष्णोरमीमांस्यं निःसंशयविष्णुभागत्ववत्तमियत्तया चिन्तयितुमशक्यं वा विष्णोर्भागमात्मानं प्रत्यनुस्मरत् अन्वस्मरत्। न हि स्वीयं स्वं हिनस्तीत्याशयेन ब्रह्मशक्तिमूलापस्तायार्थं भगवत्तेऽंशः एवाहमस्मीति ध्यातवान्। नटवदङ्गीकृतमनुष्यत्वस्येतरेषां दृढ़प्रतीत्यर्थं परं न सर्वदा तथा ध्यानम्। एवञ्च ब्रह्मभावनया लक्ष्मणेन स्वशरीरस्य गरीयस्त्वमापादितमित्युक्तं भवति॥ ११०॥

तत इति। तथानुसन्धानमहिमत इत्यर्थः। अथानन्तरमुच्यमानविशेषणमेनं सौमित्रिं बाहुभ्यां पीड़यित्वा। लङ्घने चालनेऽपि न प्रभुरभवत् न समर्थोऽभवत्। किं पुनरुद्धरणे इति भावः॥ १११॥

ततः क्रुद्धो वायुसुतो रावणं समभिद्रवत्।
आजघानोरसि क्रुद्धो वज्रकल्पेन मुष्टिना ॥ ११२ ॥
तेन मुष्टिप्रहारेण रावणो राक्षसेश्वरः।
जानुभ्यामगमद्भूमौ चचाल च पपात च ॥ ११३ ॥
आस्यैश्च नेत्रैः श्रवणैः पपात रुधिरं बहु।
विघूर्णमानो निश्चेष्टो रथोपस्थ उपाविशत् ॥ ११४ ॥
विसंज्ञो मूर्च्छितश्चासीन्न च स्थानं समालभत्।
विसंज्ञं रावणं दृष्ट्वा समरे भीमविक्रमम् ॥ ११५ ॥
ऋषयो वानराश्चैव नेदुर्देवाश्च सासुराः।
हनूमानथ तेजस्वी लक्ष्मणं रावणार्दितम् ॥ ११६ ॥
आनयद्राघवाभ्याशं बाहुभ्यां परिगृह्य तम्।

ततः सौमित्रिक्षेपणात् क्रुद्धो वायुसुत इत्यर्थः ॥ ११२ ॥

जानुभ्यां रथपृष्ठरूपायां भूमौ अगमत्। एवं भूमौ पपात। चचाल चलितसंज्ञोऽभूदित्यर्थः ॥ ११३ ॥

आस्यैरिति बहुत्वं दशाननत्वात्। अस्रोति शेषः। यतो रुधिरं पपात अतो विघूर्णमान इत्यादि ॥ ११४ ॥

विसंज्ञो गतचेतनः मूर्च्छितः स्वविषयग्रहणसामर्थ्याभावादिकरणग्रामः। न च स्थानमवस्थितिस्थानं समालभत् आलब्धवान् ॥ ११५ ॥

नेदुः सन्तोषादिति शेषः। सासुराः। रावणस्य देववदसुरेष्वपि अपकारत्वेन तेषामपि वैरित्वात् ॥ ११६ ॥

वायुसूनोः सुहृत्त्वेन भक्त्या परमया च सः ।
शत्रूणामप्यकम्प्योऽपि लघुत्वमगमत्कपेः ॥ ११७ ॥
तं समुत्सृज्य सा शक्तिः सौमित्रिं युधि निर्जितम् ।
रावणस्य रथे तस्मिन् स्थानं पुनरुपागमत् ॥ ११८ ॥
रावणोऽपि महातेजाः प्राप्य संज्ञां महाहवे ।
आददे निशितान् बाणान् जग्राह च महद्धनुः ॥ ११९ ॥
आश्वस्तश्च विशल्यश्च लक्ष्मणः शत्रुसूदनः ।
विष्णोर्भागममीमांस्यमात्मानं प्रत्यनुस्मरन् ॥ १२० ॥

राघवाभ्याशमानयदित्युक्तम्। कथमेवं सुग्रहत्वं लक्ष्मणस्येत्यत आह,—वायुसूनोरिति । सुहृत्त्वेन सखित्वेन परमभक्त्या च लक्ष्मणः शत्रूणामप्रकम्प्योऽपि वायुसूनोर्लघुत्वमगमत् । शत्रूणामित्यनेन लक्ष्मणोद्धरणसमये रावणस्यानुचरैः साहाय्यं कृतमिति गम्यते । इदञ्च भक्तमात्रसुग्रहत्वं भगवतो भगवदवताराणाञ्च स्वभावसिद्धमेवेति बोध्यम् । एतच्च रामलक्ष्मणयोरज्ञानशक्तिमत्त्वतात्पर्य्यतया भासमानानि वचनानि मानुषवेषनिर्वहणमात्रपराणीति बोध्यम् । तदुक्तं भागवते । मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः । कुतोऽन्यथास्युरमतः स्वआत्मन् सीताकृतानि व्यसनानीश्वरस्येति । मर्त्यशिक्षणं तत्प्रवर्त्तकमित्यर्थः । आत्मनि ईश्वरस्येत्यनेन लाघवगौरवप्राप्त्योरविरोध उक्तः ॥ ११७ ॥

तं समुत्सृज्य । अक्षतेन ध्यानात्तत् समुत्सर्गः । स्थानं स्थितिम् ॥ ११८ ॥ ११९ ॥

निपातितमहावीरां वानराणां महाचमूम्।
राघवस्तु रणे दृष्ट्वा रावणं समभिद्रवत्॥ १२१॥
अथैनमनुसंक्रम्य हनुमान् वाक्यमब्रवीत्।
मम पृष्ठं समारुह्य राक्षसं शास्तुमर्हसि॥ १२२॥
विष्णुर्यथा गरुत्मन्तमारुह्यामरवैरिणम्।
तच्छ्रुत्वा राघवो वाक्यं वायुपुत्रेण भाषितम्॥ १२३॥
अथारुरोह सहसा हनूमन्तं महाकपिम्।
रथस्थं रावणं संख्ये ददर्श मनुजाधिपः॥ १२४॥
तमालोक्य महातेजाः प्रदुद्राव स रावणम्।
वैरोचनमिव क्रुद्धो विष्णुरभ्युद्यतायुधः॥ १२५॥
ज्याशब्दमकरोत्तीव्रं वज्रनिष्पेषनिष्ठुरम्।
गिरा गम्भीरया रामो राक्षसेन्द्रमुवाच ह॥ १२६॥
तिष्ठ तिष्ठ मम त्वं हि कृत्वा विप्रियमीदृशम्।
क्व नु राक्षसशार्दूल! गत्वा मोक्षमवाप्स्यसि॥ १२७॥
यदीन्द्रवैवस्वतभास्करान् वा
स्वयम्भुवैश्वानरशङ्करान् वा।

पुनर्विष्णोर्भागमात्मानं स्मरन्नाश्वस्तः प्राणाश्वासेन्द्रियग्रामः। विशल्योनीरुक्सर्वगात्र आसीदिति शेषः। २०॥

समभिद्रवच्छीघ्रमभ्यद्रवत्॥ १२१॥ १२२॥ १२३॥ १२४॥

दुद्राव शीघ्रमगमत्॥ १२५॥ १२६॥

गमिष्यसि त्वं दशधा दिशो वा
तथापि मे नाद्य गतो विमोक्ष्यसे ॥ १२८ ॥
यश्चैष शक्त्या निहतस्त्वयाद्य
गच्छन् विषादं सहसाभ्युपेत्य ।
स एष रक्षोगणराज ! मृत्युः
सपुत्रपौत्रस्य तवाद्य युद्धे ॥ १२९ ॥
एतेन चात्यद्भुतदर्शनानि
शरैर्जनस्थानकृतालयानि ।
चतुर्दशान्यात्तवरायुधानि
रक्षःसहस्राणि निषूदितानि ॥ १३० ॥
राघवस्य वचः श्रुत्वा राक्षसेन्द्रो महाबलः ।

क्व गत्वेति योजना । न प्राप्नोषीत्यर्थः ॥ १२७ ॥

तदेवाह,—यदीति । यद्यपीन्द्रादीन् शरणं गमिष्यसि । दशधा दिशो दशप्रकारा दिशो वा तदन्तान् वा अद्य गमिष्यसि तथापि तत्र गतोऽपि मे मत्तो न विमोक्ष्यसे । दश वा दिशो वा इति पाठे दशापि दिश इत्यर्थः । वा शब्दोऽप्यर्थे ॥ १२८ ॥

एवं परमक्रोधे हेतुमाह,—य इति । अद्य त्वया युद्धं गच्छन्नसौ लक्ष्मणस्त्वया शक्त्या निहतस्ताड़ितः सन् सहसा विषादं गतोऽतोऽभ्युपेत्य प्रतिज्ञाय स एषोऽहं तद्दुःखशान्तये सपुत्रपौत्रस्य ते संख्ये मृत्युर्भविष्यामीति शेषः ॥ १२९ ॥

वायुपुत्रं महावेगं वहन्तं राघवं रणे ॥ १२१ ॥
रोषेण महताविष्टः पूर्ववैरमनुस्मरन् ।
आजघान शरैर्दीप्तैः कालानलशिखोपमैः ॥ १२२ ॥
राक्षसेनाहते तस्य ताड़ितस्यापि सायकैः ।
स्वभावतेजोयुक्तस्य भूयस्तेजोऽभ्यवर्द्धत ॥ १२३ ॥
ततो रामो महातेजा रावणेन कृतव्रणम् ।
दृष्ट्वा प्लवगशार्दूलं क्रोधस्य वशमेयिवान् ॥ १२४ ॥

तस्याभिसङ्क्रम्य रथं सचक्रं
साश्वध्वजच्छत्रमहापताकम् ।
ससारथिं साशनिशूलखड्गं
रामः प्रचिच्छेद शितैः शराग्रैः ॥ १२५ ॥
अथेन्द्रशत्रुं तरसा जघान
बाणेन वज्राशनिसन्निभेन ।
भुजान्तरे व्यूढसुजातरूपे
वज्रेण मेरुं भगवानिवेन्द्रः ॥ १२६ ॥

एतेन मया तावन्ति रक्षांसि निषूदितानि ॥ १२० ॥ १२१ ॥ ॥ १२२ ॥

भूयस्तेजः शौर्य्यं विवृद्धमभूत् ॥ १२३ ॥ १२४ ॥

अभिसङ्क्रम्य संयुक्तो भूत्वा ॥ १२५ ॥

यो वज्रपाताशनिसन्निपाता-
न्न चुक्षुभे नापि चचाल राजा ।
स रामबाणाभिहतो भृशार्त्त-
श्चचाल चापञ्च मुमोच वीरः ॥ १३७ ॥

तं विह्वलन्तं प्रसमीक्ष्य रामः
समाददे दीप्तमथार्द्धचन्द्रम् ।
तेनार्कवर्णं सहसा किरीटं
चिच्छेद रक्षोधिपतेर्महात्मा ॥ १३८ ॥

तन्निर्विषाशीविषसन्निकाशं
शान्तार्च्चिषं सूर्य्यमिवाप्रकाशम् ।
गतश्रियं कृत्तकिरीटकूट-
मुवाच रामो युधि राक्षसेन्द्रम् ॥ १३९ ॥

कृतं त्वया कर्म महत्सुभीमं
हतप्रवीरश्च कृतस्त्वयाहम् ।
तस्मात् परिश्रान्त इति व्यवस्य

व्यूढं विशालम् । सुजातरूपं राजार्हमहाभरणचन्दनादिभिः प्रशस्ताकारं तस्मिन् ॥ १३६ ॥

वज्रपातश्चाशनिसन्निपातश्चेति समाहारैकवत् ॥ १३७ ॥ १३८ ॥

न त्वां शरैर्मृत्युवशं नयामि ॥ १४० ॥
प्रयाहि जानामि रणार्दितस्त्वं
प्रविश्य रात्रिञ्चरराज ! लङ्काम् ।
आश्वस्य निर्याहि रथी सधन्वी
तदा बलं प्रेक्ष्यसि मे रथस्थः ॥ १४१ ॥
स एवमुक्तो हतदर्पहर्षो
निकृत्तचापः सहताश्वसूतः ।
शरार्दितो भग्नमहाकिरीटो
विवेश लङ्कां सहसा स्म राजा ॥ १४२ ॥
तस्मिन् प्रविष्टे रजनीचरेन्द्रे
महाबले दानवदेवशत्रौ ।
हरीन् विशल्यान् सह लक्ष्मणेन
चकार रामः परमाहवाग्रे ॥ १४३ ॥
तस्मिन् प्रभग्ने त्रिदशेन्द्रशत्रौ
सुरासुरा भूतगणा दिशश्च ।

किरीटकूटं किरीटसमूहम् । १३९ ।

हताः प्रवीरा यस्य तथा तस्मात् युद्धधर्मज्ञानात्। स्वस्य ख्याता । १४० ॥

समागराः सर्वं महोरगाश्च
तथैव भूम्यम्बुचराः प्रहृष्टाः ॥ १४४ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
एकोनषष्टितमः सर्गः ॥ ५९ ॥

इतो रणात् प्रयाहीति योजना । जानामि अनुजानामि । प्रेष्यसि प्रेक्षिष्यसि ॥ १४१ ॥ १४२ ॥ १४३ ॥ १४४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

---

## षष्टितमः सर्गः

स प्रविश्य पुरीं लङ्कां रामबाणभयार्दितः ।
भग्नदर्पस्तदा राजा बभूव व्यथितेन्द्रियः ॥ १ ॥
मातङ्ग इव सिंहेन गरुडेनेव पन्नगः ।
अभिभूतोऽभवद्राजा राघवेण महात्मना ॥ २ ॥
ब्रह्मदण्डप्रतीकानां विद्युच्चलितवर्चसाम् ।
स्मरन् राघवबाणानां विव्यथे राक्षसेश्वरः ॥ ३ ॥
स काञ्चनमयं दिव्यमाश्रित्य परमासनम् ।
विप्रेक्षमाणो रक्षांसि रावणो वाक्यमब्रवीत् ॥ ४ ॥
सर्वं तत् खलु मे मोघं तत्तप्तं परमं तपः ।
यत् समानो महेन्द्रेण मानुषेण विनिर्जितः ॥ ५ ॥
इदं तत् ब्रह्मणो घोरं वाक्यं मामभ्युपस्थितम् ।

स इति ॥ १ ॥ २ ॥

ब्रह्मदण्डो युगान्तसमुत्थितोऽग्निवर्णो धूमकेतुः । यद्वा । ब्रह्मास्त्रम् । अमोघत्वेन साम्यम् राघवबाणानामिति कर्मणि षष्ठी ॥ ३ ॥ ४ ॥

महेन्द्रेण समान इति यत् तदपि मोघं निरर्थकम् । तत्र हेतुः मानुषेणेति ॥ ५ ॥

मानुषेभ्यो विजानीहि भयं त्वमिति तत्तथा ॥ ६ ॥
देवदानवगन्धर्वैर्यक्षराक्षसपन्नगैः ।
अवध्यत्वं मया प्रोक्तं मनुषेभ्यो न याचितम् ॥ ७ ॥
तमिमं मानुषं मन्ये रामं दशरथात्मजम् ।
इक्ष्वाकुकुलजातेन अनरण्येन यत् पुरा ॥ ८ ॥
उत्पत्स्यति हि मद्वंशे पुरुषो राक्षसाधम ! ।
यस्त्वां सपुत्रं सामात्यं सबलं साश्वसारथिम् ॥ ९ ॥
निहनिष्यति संग्रामे त्वां कुलाधम दुर्मते ! ।
शप्तोऽहं वेदवत्या च यथा सा धर्षिता पुरा ॥ १० ॥
सेयं सीता महाभागा जाता जनकनन्दिनी ।
उमा नन्दीश्वरश्चापि रम्भा वरुणकन्यका ॥ ११ ॥

मनुषेभ्यस्तव भयमिति यदुक्तं तद्घोरं वाक्यं तदर्थो मामुपस्थितम् । तत्तथा सम्पत्स्यते चेति शेषः ॥ ६ ॥

ननु भगवता तथा भयोपदेशः कुतस्तत्राह,—देवेत्यादि । यस्मान् मनुष्येभ्यो न याचितं तस्मात्तेभ्यो भयं जानीहीत्युक्तमित्यन्वयः ॥ ७ ॥

यो मानुषो भयहेतुरुक्तस्तमिमं दशरथात्मजमेव मन्ये । तत्रेदृशनिश्चये हेतुमाह,—इक्ष्वाकुकुलेत्यादि ॥ ८ ॥

कुलाधम स्वकुलाधम राक्षसकुलाधमेति यावत् । इतीति शेषः । शप्तोऽहमित्यनुभयान्वयि । वेदवत्या च शप्त इत्यन्वयः । शापहेतुमाह,—यथा यतः । सा धर्षिता ॥ ९ ॥ १० ॥

यथोक्तास्तन्मया प्राप्तं न मिथ्या ऋषिभाषितम्।
एतदेव समागम्य यत्नं कर्त्तुमिहार्हथ ॥ १२ ॥
राक्षसाश्चापि तिष्ठन्तु चर्य्यां गोपुरमूर्द्धसु।
स चाप्रतिमगाम्भीर्य्यो देवदानवदर्पहा ॥ १३ ॥
ब्रह्मशापाभिभूतस्तु कुम्भकर्णो विबोध्यताम्।

सेयं वेदवत्येव जनकनन्दिनीत्यर्थः। भयकारणं शापान्तरमाह,—उमेति ॥ ११ ॥

यथोक्तामन्नाशनिमित्तं शापं यथोक्तवन्तस्तदद्य मया प्राप्तम्। यदूचुस्तन्मयेति पाठान्तरम्। तत्रोमाशापः कैलासशिखरचालनवेलायां रावणस्य स्त्रीनिमित्तं मरणमित्येवंरूप इत्याहुः। नन्दीश्वरशापस्तु। यस्माद्वानरमूर्त्तिं मां दृष्ट्वा राक्षसदुर्मते। मौर्ख्यान्मामवजानीषे परिहासञ्च कुर्वसि। तस्मान्मद्रूपसंयुक्ता मद्वीर्य्यसमतेजसः। उत्पत्स्यन्ति वधार्थं हि कुलस्य तव वानरा इति। रम्भेत्यनेन रम्भानिमित्तनलकूबरशाप उच्यते। यदा त्वकामां कामार्त्तो धर्षयिष्यसि योषितम्। मूर्द्धा ते सप्तधा रक्षः शकलीभविता तदेति। वरुणकन्यका पुञ्जिकस्थला। तन्निमित्तश्च ब्रह्मशापः स्त्रीधर्षणे मरणरूपः। तदुक्तस्यावश्यप्राप्तौ हेतुर्न मिथ्येति। ऋषिपदेन तपोयुक्ता उच्यन्ते। एतदेवोक्तं मद्भयनिमित्तं समागम्य ज्ञात्वा यत्नमित्यादि। भयस्य निश्चितत्वान्निवृत्तियत्नं कुरुतेत्यर्थः ॥ १२ ॥

कोऽसौ यत्नो योऽस्माभिः कार्य्यस्तत्राह,—राक्षसा इति। चर्य्यां। गोपुरे व्याख्याते। अप्रतिमगाम्भीर्य्योऽनुपमगाम्भीर्य्यः ॥ १३ ॥

समरे जितमात्मानं प्रहस्तञ्च निषूदितम् ॥ १४ ॥
ज्ञात्वा रक्षो भीमबलमादिदेश महाबलः ।
द्वारेषु यत्नः क्रियतां प्राकारश्चाधिरुह्यताम् ॥ १५ ॥
निद्रावशसमाविष्टः कुम्भकर्णो विबोध्यताम् ।
सुखं स्वपिति निश्चिन्तः कामोपहतचेतनः ॥ १६ ॥
नव सप्तदशाष्टौ च मासान् स्वपिति राक्षसः ।
मन्त्रं कृत्वा प्रसुप्तोऽयमितस्तु नवमेऽहनि ॥ १७ ॥

कुम्भकर्णविबोधनाशयं कविराह,—समरे इति । आत्मानं पराजितं प्रहस्तञ्च निषूदितम् ॥ १४ ॥

ज्ञात्वा एवं स्वस्य बलक्षये सहायार्हं भीमबलं रक्षः कुम्भकर्णं ज्ञात्वा भीमं बलमादिदेशेत्यावृत्त्यान्वयः । कुम्भकर्णबोधनार्थमिति शेषः ॥ १५ ॥ १६ ॥

एतदुत्तरं स हि संख्ये इत्येव श्लोक इति कतकस्वरसः । क्वचित्तु सार्द्धश्लोकद्वयमधिकं पठ्यते । द्वारेष्वित्यादि । नव सप्तदशाष्टौ च मासान् स्वपिति राक्षस इति । इदं निद्रायामनियमपरं वाक्यम् । शयित्वा शेष षण्मासानेकाहं जागरिष्यत इति तु षण्मासादर्वाक् न कदापि जागरणम् । तदुत्तरमपि तदेकाहमेवेति जागरण एव कालनियमपरं न तु शयने नियमपरम् । स्वप्तुं वर्षाण्यनेकानि देवदेवममेप्सितमिति तद्वरप्रार्थनश्लोकोत्तरे वक्ष्यमाणत्वात् । तत्रैव रामं प्रत्यगस्त्यवाक्याच्च । तत्र निद्रां समाविष्टः कुम्भकर्णो महाबलः । बहून्यब्दसहस्राणि शयानो न च बुध्यत इति । केचित्तु नव सप्त षोडश ।

स हि संख्ये महाबाहुः ककुदं सर्वरक्षसाम्।
वानरान् राजपुत्रौ च क्षिप्रमेव हनिष्यति ॥ १८ ॥
एष केतुः परं संख्ये मुख्यो वै सर्वरक्षसाम्।
कुम्भकर्णः सदा शेते मूढो ग्राम्यसुखे रतः ॥ १९ ॥
रामेणाभिनिरस्तस्य संग्रामेऽस्मिन् सुदारुणे।
भविष्यति न मे शोकः कुम्भकर्णे विबोधिते ॥ २० ॥
किं करिष्याम्यहं तेन शक्रतुल्यबलेन हि।
ईदृशे व्यसने घोरे यो न साह्याय कल्पते ॥ २१ ॥
ते तु तद्वचनं श्रुत्वा राक्षसेन्द्रस्य राक्षसाः।
जग्मुः परमसम्भ्रान्ताः कुम्भकर्णनिवेशनम् ॥ २२ ॥

तन्मध्ये दशानामष्टौ त्वागतेऽवशिष्टषण्मासान् स्वपितीत्यर्थ इत्याहुः। तथा सत्युत्तरं मन्त्रं कृत्वा प्रसुप्तोऽयमितस्तु नवमेऽहनीत्यर्द्धं पद्यते तत् यत्र तस्य हतो युद्धप्रारम्भदिनात् प्राक्तने नवमेऽहनीति व्याख्यानं तदसङ्गतमेव। अयं ते सुमहान् कालः शयानस्य महाबलेत्यनेन षण्-मासादधिकत्वस्य साम्प्रतनिद्रायां प्रतीतेः। अहः शब्दो वत्सरपर्याय-परो वा। एतच्चाग्रे स्फुटीकरिष्यते। १७।

उक्तमेवाभिप्रायं रावण आह,—स हीति। सर्वरक्षसां ककुदं श्रेष्ठम्। नित्यनपुंसकं ककुदमिति। तेन स महाबाहुरित्यनेन सामा-नाधिकरण्यमविरुद्धम्। १८ ॥

परं केतुः ख्यातिप्रकाशकवीर्य इत्यर्थः। १९। २०।

ते रावणसमादिष्टा मांसशोणितभोजनाः ।
गन्धं माल्यं महद्भक्ष्यमादाय सहसा ययुः ॥ २३ ॥
तां प्रविश्य महाद्वारां सर्वतो योजनायताम् ।
कुम्भकर्णगुहां रम्यां पुष्पगन्धप्रवाहिनीम् ॥ २४ ॥
कुम्भकर्णस्य निःश्वासादवधूता महाबलाः ।
प्रतिष्ठमानाः कृच्छ्रेण यत्नात् प्रविविशुर्गुहाम् ॥ २५ ॥
तां प्रविश्य गुहां रम्यां रत्नकाञ्चनकुट्टिमाम् ।
ददृशुर्नैर्ऋतव्याघ्राः शयानं भीमविक्रमम् ॥ २६ ॥
ते तु तं विकृतं सुप्तं विकीर्णमिव पर्वतम् ।
कुम्भकर्णं महानिद्रं समेताः प्रत्यबोधयन् ॥ २७ ॥
ऊर्द्ध्वलोमाञ्चिततनुं श्वसन्तमिव पन्नगम् ।
भ्रामयन्तं विनिःश्वासैः शयानं भीमविक्रमम् ॥ २८ ॥
भीमनासापुटन्तन्तु पातालविपुलाननम् ।

ननु त्वद्दुःखनाशसमर्थस्यापि कथमुद्बोधनमुचितं भवेत्तत्राह,— किं करिष्यामीति । व्यसने दुःखे ॥ २१ ॥ २२ ॥ २३ ॥

सर्वतः प्राक् प्रत्यक् दक्षिणोत्तरतश्चेत्यर्थः । कुम्भकर्णगुहां पाताल-वद्देवनिर्मितं भूबिलमित्यर्थः ॥ २४ ॥

प्रतिष्ठमानाः परिवृत्य गच्छन्तः ॥ २५ ॥

रत्नकाञ्चनकुट्टिमां रत्नकाञ्चननिबद्धभूतलयुक्ताम् ॥ २६ ॥ २७ ॥

शयने न्यस्तसर्वाङ्गं मेदोरुधिरगन्धिनम् ॥ २६ ॥
काञ्चनाङ्गदनद्धाङ्गं किरीटेनार्कवर्चसम्।
ददृशुर्नैरृतव्याघ्रं कुम्भकर्णमरिन्दमम् ॥ ३० ॥
ततश्चक्रुर्महात्मानः कुम्भकर्णस्य चाग्रतः।
भूतानां मेरुसङ्काशं राशिं परमतर्पणम् ॥ ३१ ॥
मृगाणां महिषाणाञ्च वराहाणाञ्च सञ्चयान्।
चक्रुर्नैरृतशार्दूला राशिमन्नस्य चाद्भुतम् ॥ ३२ ॥
ततः शोणितकुम्भांश्च मांसानि विविधानि च।
पुरस्तात् कुम्भकर्णस्य चक्रुस्त्रिदशशत्रवः ॥ ३३ ॥
लिलिपुश्च परार्घ्येण चन्दनेन परन्तपम्।
दिव्यैराश्वासयामासुर्माल्यैर्गन्धैश्च गन्धिभिः ॥ ३४ ॥
धूपगन्धांश्च ससृजुस्तुष्टुवुश्च परन्तपम्।
जलदा इव चानेदुर्यातुधानास्ततस्ततः ॥ ३५ ॥
शङ्खांश्च पूरयामासुः शशाङ्कसदृशप्रभान्।
तुमुलं युगपच्चापि विनेदुश्चाप्यमर्षिताः ॥ ३६ ॥

ऊर्द्धलोमाञ्चिततनुम् ऊर्द्धलोमयुक्तशरीरम्। श्वामयन्तं परि-वर्त्तयन्तं जनानिति शेषः ॥ २८ ॥ २६ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

अथ क्रमेण मन्दमध्यतीव्रानुपायानाह,—लिलिपुरिति। लेपनञ्चक्रुः। आश्वासयामासुः आप्याययामासुः ॥ ३४ ॥ ३५ ॥ ३६ ॥

नेदुरास्फोटयामासुश्चिक्षिपुस्ते निशाचराः ।
कुम्भकर्णविबोधार्थञ्चक्रुस्ते विपुलं स्वरम् ॥ ३७ ॥

स शङ्खभेरीपणवप्रणादं
सास्फोटितक्ष्वेलितसिंहनादम् ।
दिशो द्रवन्तस्त्रिदिवं किरन्तः
श्रुत्वा विहङ्गाः सहसा निपेतुः ॥ ३८ ॥
यदा भृशार्त्तैर्निनदैर्महात्मा
न कुम्भकर्णो बुबुधे प्रसुप्तः ।
ततो भुशुण्डीमुसलानि सर्वे
रक्षोगणास्ते जगृहुर्गदाश्च ॥ ३९ ॥
तं शैलशृङ्गैर्मुसलैर्गदाभि-
र्वक्षस्थले मुद्गरमुष्टिभिश्च ।
सुखप्रसुप्तं भुवि कुम्भकर्णं
रक्षांस्युदग्राणि तदा निजघ्नुः ॥ ४० ॥

तस्य निःश्वासवातेन कुम्भकर्णस्य रक्षसः ।
राक्षसाः कुम्भकर्णस्य स्थातुं शेकुर्न चाग्रतः ॥ ४१ ॥

नेदुरिति । चिक्षिपुः हस्तैस्तच्छरीरस्य प्रणोदनञ्चक्रुः ॥ ३७ ॥
त्रिदिवं व्योम । किरन्तः उद्गच्छन्तः ॥ ३८ ॥
भुशुण्डीः मुद्गरविशेषान् ॥ ३९ ॥ ४० ॥ ४१ ॥

ततः परिहिता गाढं राक्षसा भीमविक्रमाः।
मृदङ्गपणवान् भेरीः शङ्खकुम्भगणांस्तथा॥ ४२॥
दश राक्षससाहस्रं युगपत् पर्य्यवारयन्।
नीलाञ्जनचयाकारास्ते तु तं प्रत्यबोधयन्॥ ४३॥
अभिघ्नन्तो नदन्तश्च न च सम्बुबुधे तदा।
यदा चैनं न शेकुस्ते प्रतिबोधयितुं तदा॥ ४४॥
ततो गुरुतरं यत्नं दारुणं समुपाक्रमन्।
अश्वानुष्ट्रान् खरान्नागान् जघ्नुर्दण्डकशाङ्कुशैः॥ ४५॥
भेरीशङ्खमृदङ्गांश्च सर्वप्राणैरवादयन्।
निजघ्नुश्चास्य गात्राणि महाकाष्ठकटङ्करैः॥ ४६॥
मुद्गरैर्मुसलैश्चापि सर्वप्राणसमुद्यतैः।
तेन नादेन महता लङ्का सर्वा प्रपूरिता।
सपर्वतवना सर्वा सोऽपि नैव प्रबध्यते॥ ४७॥

गाढ़परिहिताः परिहितवाससः। कुम्भगणान् कुम्भवाद्यानि वादयामासुरिति शेषः। ततः प्रपूरिता गाढं राक्षसैर्भीमविक्रमैरिति प्राञ्चः पाठः। तत्र गुहेति शेषः। उत्तरार्द्धे राक्षसा इत्यादिः॥ ४२॥

दशराक्षससाहस्रं दशराक्षससहस्राणि॥ ४३॥ ४४॥

जघ्नुः तदुपरि सञ्चारेण तदुद्बोधनार्थमिति शेषः॥ ४५॥

सर्वप्राणैः सर्वबलेन। महाकाष्ठानां स्थूणादीनां कटङ्करैः समूहैः। कटङ्कटैरिति पाठः। कटङ्कटः स्तम्भभेद इति तीर्थः॥ ४६॥ ४७॥

ततो भेरीसहस्रन्तु युगपत् समहन्यत ।
मृष्टकाञ्चनकोणानामसक्तानां समन्ततः ॥ ४८ ॥
एवमप्यतिनिद्रस्तु यदा नैव प्रबुध्यत ।
शापस्य वशमापन्नस्ततः क्रुद्धा निशाचराः ॥ ४९ ॥
ततः कोपसमाविष्टाः सर्वे भीमपराक्रमाः ।
तद्रक्षो बोधयिष्यन्तश्चक्रुरन्ये पराक्रमम् ॥ ५० ॥
अन्ये भेरीः समाजघ्नुरन्ये चक्रुर्महास्वनम् ।
केशानन्ये प्रलुलुपुः कर्णानन्ये दशन्ति च ॥ ५१ ॥
उदकुम्भशतानन्ये समसिञ्चन्त कर्णयोः ।
न कुम्भकर्णः पस्पन्दे महानिद्रावशं गतः ॥ ५२ ॥
अन्ये च बलिनस्तस्य कूटमुद्गरपाणयः ।
मूर्ध्नि वक्षसि गात्रेषु पातयन् कूटमुद्गरान् ॥ ५३ ॥
रज्जुबन्धनबद्धाभिः शतघ्नीभिश्च सर्वशः ।
बध्यमानो महाकायो न प्राबुध्यत राक्षसः ॥ ५४ ॥
वारणानां सहस्रञ्च शरीरेऽस्य प्रधावितम् ।

मृष्टकाञ्चनकोणानां मृष्टकाञ्चननिर्मिताः कोणा वादनदण्डा यासां तादृशीनां भेरीणां सहस्रमित्यर्थः । आर्षः समासः ॥ ४८ ॥

शापस्य ब्रह्मशापस्य ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

पातयन् अपातयन् ॥ ५३ ॥ ५४ ॥

कुम्भकर्णस्तदा बुध्वा स्पर्शं परमबुध्यत ॥ ५५ ॥

स पात्यमानैर्गिरिशृङ्गवृक्षै-
रचिन्तयंस्तान् विपुलान् प्रहारान् ।
निद्राक्षयात् क्षुद्भयपीड़ितश्च
विजृम्भमाणः सहसोत्पपात ॥ ५६ ॥

स नागभोगाचलशृङ्गकल्पौ
विक्षिप्य बाहू जितवज्रसारौ ।
विवृत्य वक्त्रं वड़वामुखाभं
निशाचरोऽसौ विकृतं जजृम्भे ॥ ५७ ॥

तस्य जाजृम्भमाणस्य वक्त्रं पातालसन्निभम् ।
ददृशे मेरुशृङ्गाग्रे दिवाकर इवोदितः ॥ ५८ ॥

स जृम्भमाणोऽतिबलः प्रबुद्धस्तु निशाचरः ।
निःश्वासश्चास्य संजज्ञे पर्वतादिव मारुतः ॥ ५९ ॥

रूपमुत्तिष्ठतस्तस्य कुम्भकर्णस्य तद्बभौ ।
युगान्ते सर्वभूतानि कालस्येव दिधक्षतः ॥ ६० ॥

परं स्पर्शं स्पर्शनज्ञानं प्राप्याबुध्यत ॥ ५५ ॥

उक्तार्थानुवादः सपात्यमानैरिति ॥ ५६ ॥ ५७ ॥

जाजृम्भमाणस्य पुनःपुनर्जृम्भां कुर्वतः। वक्त्रमन्तः पातालसन्निभं ददृशे। उपरि तु मेरुशृङ्गाग्रे उदितो दिवाकर इव ददृशे। महाशरीरत्वात् ॥ ५८ ॥ ५९ ॥ ६० ॥

तस्याग्निदीप्तसदृशे विद्युत्सदृशवर्चसी।
ददृशाते महानेत्रे दीप्ताविव महाग्रहौ ॥ ६१ ॥
ततस्त्वदर्शयन् सर्वान् भक्ष्यांश्च विविधान् बहून्।
वराहान् महिषांश्चैव बभक्ष स महाबलः ॥ ६२ ॥
आदत् बुभुक्षितो मांसं शोणितं तृषितो पिबत्।
मेदः कुम्भांश्च मद्यांश्च पपौ शक्ररिपुस्तदा ॥ ६३ ॥
ततस्तृप्त इति ज्ञात्वा समुत्पेतुर्निशाचराः।
शिरोभिश्च प्रणम्यैनं सर्वतः पर्य्यवारयन् ॥ ६४ ॥
निद्राविशदनेत्रस्तु कलुषीकृतलोचनः।
चारयन् सर्वतो दृष्टिं तानुवाच निशाचरान् ॥ ६५ ॥
स सर्वान् सान्त्वयामास नैर्ऋतान्नैर्ऋतर्षभः।
बोधनाद्विस्मितश्चापि राक्षसानिदमब्रवीत् ॥ ६६ ॥
किमर्थमहमाहत्य भवद्भिः प्रतिबोधितः।

अग्निदीप्तसदृशे दीप्ताग्निसदृशे ॥ ६१ ॥
अदर्शयन्। राक्षसा इति शेषः। दर्शितांश्च तान् स बभक्ष ॥६२॥
आदत्। अदेर्लङ् ॥ ६३ ॥
समुत्पेतुः सम्मुखमाजग्मुः ॥ ६४ ॥
निद्रया विशदे ईषदुन्मीलिते नेत्रे यस्य सः ॥ ६५ ॥
विस्मित इति। स्वभावतो निद्रापगमाभावेनाकालबोधनादिति भावः ॥ ६६ ॥

कच्चित् सुकुशलं राज्ञो भयं वा नेह किञ्चन ॥ ६७ ॥
अथवा ध्रुवमन्येभ्यो भयं परमुपस्थितम्।
यदर्थमेव त्वरितैर्भवद्भिः प्रतिबोधितः ॥ ६८ ॥
अद्य राक्षसराजस्य भयमुत्पाटयाम्यहम्।
दारयिष्ये महेन्द्रं वा शीतयिष्ये तथानलम् ॥ ६९ ॥
न ह्यल्पकारणे सुप्तं बोधयिष्यति मादृशम्।
तदाख्यातार्थतत्त्वेन मत्प्रबोधनकारणम् ॥ ७० ॥
एवं ब्रुवाणं संरब्धं कुम्भकर्णमरिन्दमम्।
यूपाक्षः सचिवो राज्ञः कृताञ्जलिरभाषत ॥ ७१ ॥
न नो देवकृतं किञ्चिद्भयमस्ति कदाचन।
मानुषान्नोभयं राजंस्तुमुलं सम्प्रबाधते ॥ ७२ ॥
न दैत्यदानवेभ्यो वा भयमस्ति न नः क्वचित्।
यादृशं मानुषं राजन्! भयमस्मानुपस्थितम् ॥ ७३ ॥
वानरैः पर्वताकारैर्लङ्केयं परिवारिता।
सीताहरणसन्तप्ताद्रामान्नस्तुमुलं भयम् ॥ ७४ ॥
एकेन वानरेणेयं पूर्वं दग्धा महापुरी।

आदृत्य आदरपूर्वम्। यत्नपूर्वमिति यावत् ॥ ६७ ॥
अन्येभ्यः शत्रुभ्यः। यदर्थं यद्भयनिवृत्तये ॥ ६८ ॥ ६९ ॥
अर्थतत्त्वेन याथार्थ्येन ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥

कुमारो निहतश्चाक्षः सानुयात्रः सकुञ्जरः ॥ ७५ ॥
स्वयं रक्षोऽधिपश्चापि पौलस्त्यो देवकण्टकः ।
अजेति संयुगे मुक्तो रामेणादित्यवर्च्चसा ॥ ७६ ॥
यन्न देवैः कृतो राजा नापि दैत्यैर्न दानवैः ।
कृतः स इह रामेण विमुक्तः प्राणसंशयात् ॥ ७७ ॥
स यूपाक्षवचः श्रुत्वा भ्रातुर्युधि पराभवम् ।
कुम्भकर्णो विवृत्ताक्षो यूपाक्षमिदमब्रवीत् ॥ ७८ ॥
सर्वमद्यैव यूपाक्ष ! हरिसैन्यं सलक्ष्मणम् ।
राघवञ्च रणे जित्वा ततो द्रक्ष्यामि रावणम् ॥ ७९ ॥
राक्षसांस्तर्पयिष्यामि हरीणां मांसशोणितैः ।
रामलक्ष्मणयोश्चापि स्वयं पास्यामि शोणितम् ॥ ८० ॥

तत्तस्य वाक्यं ब्रुवतो निशम्य
सगर्वितं रोषविवृद्धदोषम् ।
महोदरो नैर्ऋतयोधमुख्यः
कृताञ्जलिर्वाक्यमिदं बभाषे ॥ ८१ ॥

नन्विन्द्रादिभिरपि दुष्करपीडनमस्मत्पुरं कथं वानरैः पीड़ितं तत्राह,—एकेनेति ॥ ७५ ॥

संयुगे मुक्तः जीवन् सृत इत्युक्तेति शेषः ॥ ७६ ॥

यन्न कृतः यामवस्थां न प्रापितः । स रामेण कृतस्तामवस्थां प्रापितः प्राणसंशयात्तयावस्थया प्राप्तो विमुक्तश्च ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥

रावणस्य वचः श्रुत्वा गुणदोषौ विमृश्य च।
पश्चादपि महाबाहो! शत्रून् युधि विजेष्यसि ॥ ८२ ॥
महोदरवचः श्रुत्वा राक्षसैः परिवारितः।
कुम्भकर्णो महातेजाः सम्प्रतस्थे महाबलः ॥ ८३ ॥
समुत्थाप्य भीमाक्षं भीमरूपपराक्रमम्।
राक्षसास्त्वरिता जग्मुर्दशग्रीवनिवेशनम् ॥ ८४ ॥
तेऽभिगम्य दशग्रीवमासीनं परमासने।
ऊचुर्बद्धाञ्जलिपुटाः सर्व एव निशाचराः ॥ ८५ ॥
कुम्भकर्णः प्रबुद्धोऽसौ भ्राता ते राक्षसेश्वर!।
कथं तत्रैव निर्यातु द्रक्ष्यसे तमिहागतम् ॥ ८६ ॥
रावणस्त्वब्रवीत् हृष्टो राक्षसांस्तानुपस्थितान्।
द्रष्टुमेनमिहेच्छामि यथान्यायञ्च पूज्यताम् ॥ ८७ ॥
तथेत्युक्त्वा तु ते सर्वे पुनरागम्य राक्षसाः।
कुम्भकर्णमिदं वाक्यमूचू रावणचोदिताः ॥ ८८ ॥
द्रष्टुं त्वां काङ्क्षते राजा सर्वराक्षसपुङ्गवः।
गमने क्रियतां बुद्धिर्भ्रातरं सम्प्रहर्षय ॥ ८९ ॥

सगर्वितं सगर्वम्। दोषेण विरुद्धो दोषो दुर्नयरूपो यस्य तत् ॥ ८१ ॥ ८२ ॥

सम्प्रतस्थे प्रस्थातुमुपचक्रमे ॥ ८३ ॥ ८४ ॥ ८५ ॥

तत्रैव शिबिरे युद्धाय निर्यातु। आहो स्विदिहागतं द्रक्ष्यसे ॥ ८६ ॥

कुम्भकर्णस्तु दुर्द्धर्षो भ्रातुराज्ञाय शासनम्।
तथेत्युक्त्वा महावीर्य्यः शयनादुत्पपात ह ॥ ८० ॥
प्रक्षाल्य वदनं हृष्टः स्नातः परमहर्षितः।
पिपासुस्त्वरयामास पानं बलसमीरणम् ॥ ८१ ॥
ततस्ते त्वरितास्तत्र राक्षसा रावणाज्ञया।
मद्यं भक्ष्यांश्च विविधान् क्षिप्रमेवोपहारयन् ॥ ८२ ॥
पीत्वा घटसहस्रे द्वे गमनायोपचक्रमे।
ईषत् समुत्कटो मत्तस्तेजोबलसमन्वितः ॥ ८३ ॥
कुम्भकर्णो बभौ रुष्टः कालान्तकयमोपमः।
भ्रातुः स भवनं गच्छन् रक्षोबलसमन्वितः।
कुम्भकर्णः पदन्यासैरकम्पयत मेदिनीम् ॥ ८४ ॥

स राजमार्गं वपुषा प्रकाशयन्
सहस्ररश्मिर्धरणीमिवांशुभिः।
जगाम तत्राञ्जलिमालया वृतः
शतक्रतुर्गेहमिव स्वयम्भुवः ॥ ८५ ॥

पूज्यतां स इति शेषः ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥
बलसमीरणं बलवृद्धिकरम् ॥ ९१ ॥
उपहारयन् उपाहारयन् ॥ ९२ ॥
ईषत् समुत्कटो मत्तः। तावत् मधुपानेनापीषदेव समुत्कटो मत्तोऽभवदित्यर्थः ॥ ९३ ॥ ९४ ॥

तं राजमार्गस्थममित्रघातिनं
वनौकसस्ते सहसा बहिःस्थिताः।
दृष्ट्वाप्रमेयं गिरिशृङ्गकल्पं
वितत्रसुस्ते सह यूथपालैः ॥ ८६ ॥
केचिच्छरण्यं शरणं स्म रामं
व्रजन्ति केचिद्व्यथिताः पतन्ति।
केचिद्दिशश्च व्यथिताः पतन्ति
केचिद्भयार्त्ता भुवि शेरते स्म ॥ ८७ ॥
तमद्रिशृङ्गप्रतिमं किरीटिनं
स्पृशन्तमादित्यमिवात्मतेजसा।
वनौकसः प्रेक्ष्य विवृद्धमद्भुतं
भयार्दिता दुद्रुविरे यतस्ततः ॥ ८८ ॥

## इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे षष्टितमः सर्गः ॥ ६० ॥

वपुषा देहकान्त्या ॥ ८५ ॥

अप्रमेयत्वे हेतुर्गिरिशृङ्गकल्पत्वम् ॥ ८६ ॥ ८७ ॥

आत्मतेजसा आदित्यं स्पृशन्तमिव; तत्सदृशमिति यावत्। प्रायो दिनषट्केनास्य जागरः ॥ ८८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्धकाण्डे षष्टितमः सर्गः ॥ ६० ॥

## एकषष्टितमः सर्गः ।



ततो रामो महातेजा धनुरादाय वीर्य्यवान् ।
किरीटिनं महाकायं कुम्भकर्णं ददर्श ह ॥ १ ॥
तं दृष्ट्वा राक्षसश्रेष्ठं पर्व्वताकारदर्शनम् ।
क्रममाणमिवाकाशं पुरा नारायणं यथा ॥ २ ॥
सतोयाम्बुदसङ्काशं काञ्चनाङ्गदभूषणम् ।
दृष्ट्वा पुनः प्रदुद्राव वानराणां महाचमूः ॥ ३ ॥
विद्रुतां वाहिनीं दृष्ट्वा वर्द्धमानञ्च राक्षसम् ।
सविस्मितमिदं रामो विभीषणमुवाच ह ॥ ४ ॥
कोऽसौ पर्व्वतसङ्काशः किरीटी हरिलोचनः ।
लङ्कायां दृश्यते वीरः सविद्युदिव तोयदः ॥ ५ ॥
पृथिव्यां केतुभूतोऽसौ महानेकोऽत्र दृश्यते ।
यं दृष्ट्वा वानराः सर्व्वे विद्रवन्ति यतस्ततः ॥ ६ ॥
आचक्ष्व सुमहान् कोऽसौ रक्षो वा यदि वासुरः ।

ततो राम इति ॥ १ ॥
पर्व्वताकारं दर्शनं यस्य तं दृष्ट्वा यत्तो बभूवेति शेषः ॥ २
सतोयेति । सजलमेघसङ्काशमित्यर्थः ॥ ३ ॥ ४ ॥

न मयैवंविधं भूतं दृष्टपूर्वं कदाचन ॥ ७ ॥
संपृष्टो राजपुत्रेण रामेणाक्लिष्टकर्मणा।
विभीषणो महाप्राज्ञः काकुत्स्थमिदमब्रवीत् ॥ ८ ॥
येन वैवस्वतो युद्धे वासवश्च पराजितः।
सैष विश्रवसः पुत्रः कुम्भकर्णः प्रतापवान्।
अस्य प्रमाणसदृशो राक्षसोऽन्यो न विद्यते ॥ ९ ॥

एतेन देवा युधि दानवाश्च
यक्षा भुजङ्गाः पिशिताशनाश्च।
गन्धर्वविद्याधरपन्नगाश्च
सहस्रशो राघव! सम्प्रभग्नाः ॥ १० ॥

शूलपाणिं विरूपाक्षं कुम्भकर्णं महाबलम्।
हन्तुं न शेकुस्त्रिदशाः कालोऽयमिति मोहिताः ॥ ११ ॥
प्रकृत्या ह्येष तेजस्वी कुम्भकर्णो महाबलः।
अन्येषां राक्षसेन्द्राणां वरदानकृतं बलम् ॥ १२ ॥
बालेन जातमात्रेण क्षुधार्त्तेन महात्मना।
भक्षितानि सहस्राणि प्रजानां सुबहून्यपि ॥ १३ ॥
तेषु संभक्ष्यमाणेषु प्रजाभयनिपीड़िताः।
यान्ति स्म शरणं शक्रं तमप्यर्थं न्यवेदयन् ॥ १४ ॥

हरिलोचन कपिलनेत्रः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ १० ॥ ११ ॥

स कुम्भकर्णं कुपितो महेन्द्रो
जघान वज्रेण शितेन वज्री ।
स शक्रवज्राभिहतो महात्मा
चचाल कोपाच्च भृशं ननाद ॥ १५ ॥

तस्य नानद्यमानस्य कुम्भकर्णस्य रक्षसः ।
श्रुत्वा निनादं वित्रस्ताः प्रजा भूयो वितत्रसुः ॥ १६ ॥
ततः क्रुद्धो महेन्द्रस्य कुम्भकर्णो महाबलः ।
निष्कृष्यैरावताद्दन्तं जघानोरसि वासवम् ॥ १७ ॥
कुम्भकर्णप्रहारार्त्तो विजज्वाल स वासवः ।
ततो विषेदुः सहसा देवा ब्रह्मर्षिदानवाः ॥ १८ ॥
कुम्भकर्णस्य दौरात्म्यं शशंसुस्ते प्रजापतेः ।
प्रजानां भक्षणञ्चापि शशंसुस्ते दिवौकसाम् ।
आश्रमध्वंसनञ्चापि परस्त्रीहरणं तथा ॥ १९ ॥
एवं प्रजा यदि त्वेष भक्षयिष्यति नित्यशः ।
अचिरेणैव कालेन शून्यो लोको भविष्यति ॥ २० ॥
वासवस्य वचः श्रुत्वा सर्वलोकपितामहः ।

प्रकृत्येति । स्वभावतः पराभिभवसामर्थ्यवान् ॥ १२ ॥ १३ ॥ १४ ॥ ॥ १५ ॥ १६ ॥ १७ ॥

विजज्वाल रुधिरप्रवाहैर्ज्वालाव्याप्त इव बभूव ॥ १८ ॥ १९ ॥

नित्यशः प्रतिदिनम् ॥ २० ॥

रक्षांस्यावाहयामास कुम्भकर्णं ददर्श ह ॥ २१ ॥
कुम्भकर्णं समीक्ष्यैव वितत्रास प्रजापतिः ।
कुम्भकर्णमथाश्वस्तः स्वयम्भूरिदमब्रवीत् ॥ २२ ॥
ध्रुवं लोकविनाशाय पौलस्त्येनासि निर्मितः ।
तस्मात्त्वमद्यप्रभृति मृतकल्पः शयिष्यसे ॥ २३ ॥
ब्रह्मशापाभिभूतोऽथ निपपाताग्रतः प्रभोः ।
ततः परमसम्भ्रान्तो रावणो वाक्यमब्रवीत् ॥ २४ ॥
प्रवृद्धः काञ्चनो वृक्षः फलकाले निकृन्त्यते ।
न नप्तारं स्वकं न्याय्यं शप्तुमेवं प्रजापते ! ॥ २५ ॥

रक्षांस्यावाहयामास। गायत्रीलक्षणेन मन्त्रेणाजुहावेत्यर्थः ॥ २१ ॥

आश्वस्तो जातविस्रम्भः परमसम्भ्रान्त इति यावत् ॥ २२ ॥

पौलस्त्येन विश्रवसा। मृतकल्पः शयिष्यसे इति। अयं शापः। स्वप्तुं वर्षाण्यनेकानि देवदेवममेप्सितम्। एवमस्त्विति तच्छ्रुत्वा प्रहृष्टास्ते दिवौकस इति तपश्चर्यानन्तरं प्रार्थनालब्धबहुवार्षिकनिद्रा-समनन्तरकाल इति बोध्यम्। मृतकल्पः शयिष्यस इति शापस्य तप-श्चर्याद्यसम्भवात्। पूर्वं जातमात्रेणेत्युक्तिस्तु तपोविघ्नितया जात-मात्रेणेत्यर्थिका ॥ २३ ॥ २४ ॥

प्रवृद्धः प्रवर्द्धित इत्यर्थः। काञ्चनः काञ्चनफलकः। फलकाले काञ्चनरूपफलप्राप्तिकाले। निकृन्त्यते छिद्यते। साक्षात् स्वकं नप्तार-मेवं शप्तुं न न्याय्यम् ॥ २५ ॥

न मिथ्यावचनश्च त्वं स्वप्स्यत्येव न संशयः।
कालस्तु क्रियतामस्य शयने जागरणे तथा ॥ २६ ॥
रावणस्य वचः श्रुत्वा स्वयम्भूरिदमब्रवीत्।
शयिता ह्येष षण्मासमेकाहं जागरिष्यति ॥ २७ ॥
एकेनाह्ना त्वसौ वीरश्चरन् भूमिं बुभुक्षितः।
व्यात्तास्यो भक्षयेल्लोकान् संवृद्ध इव पावकः ॥ २८ ॥
सोऽसौ व्यसनमापन्नः कुम्भकर्णमबोधयत्।
त्वत्पराक्रमभीतश्च राजा सम्प्रति रावणः ॥ २९ ॥

पुनरपि रावण आह,—न मिथ्येति। अतोऽयं स्वप्स्यत्येव न संशयः। जागरणे जागरणे। गुणाभाव आर्षः। कालः काल-नियमः ॥ २६ ॥

षण्मासं त्ववश्यं शयिता न तु ततोऽन्यूनम्। अधिकन्तु न निवार्य्यते। तद्‌बीजमुक्तम्। जागरणं त्वेकाहमेव। सत्यत्याहिते कार्य्ये इति शेषः। अतएवेन्द्रलोकजयाय रावणस्य कुम्भकर्णेन सहगमने प्रथमदिने मधुपुरे वास उक्तो द्वितीयदिने कैलासे यत्र रम्भायां बलात्कारेणास्य प्रवृत्तिस्तदनन्तरं कुम्भकर्णस्तु दुष्टात्मा नानाप्रहरणो-द्यत इत्यादिना तृतीयदिवसादिषु युद्धमुक्तम्। तेन युद्धप्रसङ्गेऽनेक-दिनमपि जागरणं प्रतीयते ॥ २७ ॥ २८ ॥

इदानीं तस्याकाले बोधननिमित्तमाह,—सोऽसाविति ॥ २९ गतम्।

स एष निर्गतो वीरः शिबिरात् भीमविक्रमः।
वानरान् भृशसंक्रुद्धो भक्षयन् परिधावति॥ ३०॥
कुम्भकर्णं प्रतीक्ष्यैव हरयोऽद्य प्रदुद्रुवुः।
कथमेनं रणे क्रुद्धं वारयिष्यन्ति वानराः॥ ३१॥
उच्यतां वानराः सर्वे यन्त्रमेतत् समुच्छ्रितम्।
इति विज्ञाय हरयो भविष्यन्तीह निर्भयाः॥ ३२॥
विभीषणवचः श्रुत्वा हेतुमत् सुमुखोद्गतम्।
उवाच राघवो वाक्यं नीलं सेनापतिं तदा॥ ३३॥
गच्छ सैन्यानि सर्वाणि व्यूह्य तिष्ठस्व पावके!।

शिबिरात् स्वगृहात्। भक्षयन्। हेता भृता। भक्षार्थमित्यर्थः॥ ३०॥

पुनारामः पृच्छति। कथमेनमिति॥ ३०॥

विभीषण उत्तरमाह,—उच्यतामिति। समुच्छ्रितं रावणेन। मायया विभीषिकार्थं निर्मितं किञ्चिद्यन्त्रमात्रम्। अतो न किञ्चिदेतदित्येव वानरा उच्यतां मया स्वामिभिश्च। न तु रावणानुजत्वादिकमित्यर्थः। एवञ्च कार्य्यसिद्धिरित्याह,—इतीति। इह एतस्मिन् विषये॥ ३२॥

हेतुमद्युक्तिमत्। सुमुखोद्गतं वानरलोकस्य सौमुख्यसम्पादनार्थोपदिष्टं वचः प्रागुक्तं श्रुत्वा नीलं प्रति वाक्यमुवाच॥ ३३॥

म. काञ्चन मेवं भ्रम

द्वाराण्यादाय लङ्कायाश्चर्यश्चास्थाय संक्रमान् ॥ ३४ ॥
शैलशृङ्गाणि वृक्षांश्च शिलाश्चाप्युपसंहरन् ।
भवन्तः सायुधाः सर्वे वानराः शैलपाणयः ॥ ३५ ॥
राघवेण समादिष्टो नीलो हरिचमूपतिः ।
शशास वानरानीकं यथावत् कपिकुञ्जरः ॥ ३६ ॥
ततो गवाक्षः शरभो हनूमानङ्गदस्तथा ।
शैलशृङ्गाणि शैलाभा गृहीत्वा द्वारमभ्ययुः ॥ ३७ ॥
रामवाक्यमुपश्रुत्य हरयो जितकाशिनः ।
पादपैरर्दयन् वीरा वानराः परवाहिनीम् ॥ ३८ ॥
ततो हरीणां तदनीकमुग्रं
रराज शैलोद्यतवृक्षहस्तम् ।

यथापूर्वं द्वारनिरोधे नियुक्ता । गच्छेति । अनेन रावणपला-यनोत्तरं मध्येऽवष्टारः सूचितः ॥ ३४ ॥

शैलशृङ्गादीन्युपसंहरन् उपसंहरन्तः सञ्चिन्वन्तो भवन्तस्तिष्ठ-न्त्विति शेषः ॥ ३५ ॥ ३६ ॥ ३७ ॥

रामवाक्यं यन्त्रमात्रमिदमित्येवं रूपम् । जितकाशिनो निर्भयाः । परवाहिनीं पुरात् बहिः पुरीपरिसररक्षिणीं राक्षससेनामि-त्यर्थः ॥ ३८ ॥

शैलोद्यतेति उद्यतशैलं वृक्षहस्तञ्च । गिरेः समीपानुगतम् ।

गिरेः समीपानुगतं यथैव
महन्महाम्भोधरजालमुग्रम् ॥ ३९ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
एकषष्टितमः सर्गः ॥ ६१ ॥

पर्वताग्रवर्त्तिलङ्कायाः परितो वर्त्तमानत्वात्तत्त्वम् । महन्महादेश्रव्यापिसंस्थानवत् ॥ ३९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

---

## द्विषष्टितमः सर्गः ।



स तु राक्षसशार्दूलो निद्रामदसमाकुलः ।
राजमार्गं श्रिया जुष्टं ययौ विपुलविक्रमः ॥ १ ॥

राक्षसानां सहस्रैश्च वृतः परमदुर्जयः ।
गृहेभ्यः पुष्पवर्षेण कीर्य्यमाणस्तदा ययौ ॥ २ ॥

स हेमजालविततं भानुभास्वरदर्शनम् ।
ददर्श विपुलं रम्यं राक्षसेन्द्रनिवेशनम् ॥ ३ ॥

स तत्तदा सूर्य्य इवाभ्रजालं
प्रविश्य रक्षोऽधिपतेर्निवेशनम् ।
ददर्श दूरेऽग्रजमासनस्थं
स्वयम्भुवं शक्र इवासनस्थम् ॥ ४ ॥

भ्रातुः स भवनं गत्वा रक्षोगणसमन्वितः ।
कुम्भकर्णः पदन्यासैरकम्पयत मेदिनीम् ॥ ५ ॥

अथ रावणेन कुम्भकर्णनियोजनम् । सत्विति ॥ १ ॥
गृहेभ्यस्तत्तद्गृहवर्त्तिस्त्रीहस्तेभ्यः । निर्गतेनेति शेषः ॥ २ ॥
भानुवत् सूर्य्यवत् भास्वरं दर्शनं यस्य तत् । भानुभिः सूर्य्यकिरणै-

सोऽभिगम्य गृहं भ्रातुः कक्ष्यामभिविगाह्य च।
ददर्शोद्विग्नमासीनं विमाने पुष्पके गुरुम्॥ ६॥
अथ दृष्ट्वा दशग्रीवः कुम्भकर्णमुपस्थितम्।
तूर्णमुत्थाय संहृष्टः सन्निकर्षमुपानयत्॥ ७॥
अथासीनस्य पर्य्यङ्के कुम्भकर्णो महाबलः।
भ्रातुर्ववन्दे चरणौ किं कृत्यमिति चाब्रवीत्॥ ८॥
पुनः स मुदितोत्पत्य रावणः परिषस्वजे।
स भ्रात्रा सम्परिष्वक्तो यथावच्चाभिनन्दितः॥ ९॥
कुम्भकर्णः शुभं दिव्यं प्रतिपेदे वरासनम्।
स तदासनमाश्रित्य कुम्भकर्णो महाबलः॥ १०॥
संरक्तनयनः क्रोधाद्रावणं वाक्यमब्रवीत्।
किमर्थमहमादृत्य त्वया राजन्! प्रबोधितः॥ ११॥

भास्वरं दर्शनं यस्येति च। रवेषु सूर्य्यकिरणसम्बन्धादधिकतेजोवत्त्वं गृहस्येति भावः। इदमेव युक्तम्॥ २॥ ३॥ ४॥ ५॥

कक्ष्यामभिविगाह्य द्वाराणि तीर्त्वा॥ ६॥

उपस्थितं प्राप्तम्॥ ७॥ ८॥

स मुदितोत्पत्य। स रावणो मुदितः समुत्पत्यासनादुत्थायेत्यर्थः। सन्धिरार्षः॥ ९॥ १०॥

क्रोधादकाले उद्बोधनकोपात्। कोपादिति पाठान्तरम्। तदेव दर्शयति। किमर्थमिति। आदृत्य यत्नं कृत्वा॥ ११॥

शंस कस्माद्भयं तेऽत्र को वा प्रेतो भविष्यति ।
भ्रातरं रावणः क्रुद्धं कुम्भकर्णमवस्थितम् ।
रोषेण परिवृत्ताभ्यां नेत्राभ्यां वाक्यमब्रवीत् ॥ १२ ॥
अयं ते सुमहान् कालः शयानस्य महाबल ! ।
सुषुप्तस्त्वं न जानीषे मम रामकृतं भयम् ॥ १३ ॥
एष दाशरथिः श्रीमान् सुग्रीवसहितो बली ।
समुद्रं लङ्घयित्वा तु कुलं नः परिकृन्तति ॥ १४ ॥
हन्त पश्य स्वलङ्कायां वनान्युपवनानि च ।
सेतुना सुखमागत्य वानरैकार्णवं कृतम् ॥ १५ ॥

प्रेतो भविष्यति । मया निहत इति शेषः । रोषेणेषत्परिवृत्ताभ्यां नेत्राभ्यामुपलक्षितं कुम्भकर्णमिदं वाक्यमब्रवीत् ॥ १२ ॥

सुमहान् कालो गत इति शेषः । मया सम्मन्त्र्य गमनानन्तरमिति भावः । सुमहानित्यनेन ब्रह्मकृतावधिभूतषण्मासादप्यधिकः कालो गत इति सूच्यते । शयिता ह्येष षण्मासानेकाहं जागरिष्यत इति तु षण्मासादर्वाक् जागरणाभावपरम् । मन्त्रं कृत्वा प्रसुप्तोऽयमितस्तु नवमेऽहनीति यद्यन्तु प्रक्षिप्तं तत्राहःपदं मासपरं वेत्युक्तम् । अन्यथा षण्मासादर्वाक् कदापि जागरणाभावेन तावत्कालस्य तत्स्वापे नियतत्वात्ततोऽर्वाङ्मासद्वयादिमध्ये एतत्प्रवृत्तौ सुमहानित्युक्तेरसङ्गत्यापत्तेः । अनेन मन्त्रं कृत्वा सुप्तस्याष्टनवमासरूपः कालो गत इति गम्यते । अनेनापि युद्धस्य षण्मासाधिककालव्यापिता सूचिता भवतीति ज्ञायते ॥ १३ ॥ १४ ॥

ये राचसा मुख्यतमा हतास्ते वानरैर्युधि।
वानराणां चयं युद्धे न पश्यामि कथञ्चन।
न चापि वानरा युद्धे जितपूर्वाः कदाचन ॥ १६ ॥
तदेतद्भयमुत्पन्नं चायस्वेह महाबल!।
नाशय त्वमिमानद्य तदर्थं बोधितो भवान् ॥ १७ ॥
सर्वचपितकोशञ्च स त्व मभ्युपपद्य माम्।
त्रायस्वेमां पुरीं लङ्कां बालवृद्धावशेषिताम् ॥ १८ ॥
भ्रातुरर्थं महाबाहो! कुरु कर्म सुदुष्करम्।
मयैवं नोक्तपूर्वो हि भ्राता कश्चित् परन्तप ॥ १९ ॥
त्वय्यस्ति मम च स्नेहः परा सम्भावना च मे।
देवासुरेषु युद्धेषु बहुशो राचसर्षभ!।
त्वया देवाः प्रतिव्यूह्य निर्जिताश्चामरा युधि ॥ २० ॥

स्वलङ्कायां स्वीयद्वीपे। वानरैकार्णवं हतं कानरमयैकार्णवत् कृतम् ॥ १५ ॥

वानराणां चयं न पश्यामि। तिष्ठतु चयो युद्धे मदीयै रचोभिर्जितपूर्वा अपि न दृश्यन्ते ॥ १६ ॥ १७ ॥

सर्वं चपिताः नाशिताः कोशा ऐश्वर्य्याणि यस्य तं मामभ्युपपद्यानुगृह्य चायस्व ॥ १८ ॥ १९ ॥

परा सम्भावनाकार्य्यसिद्धिप्रत्याशा मे त्वय्यस्तीति शेषः। प्रतिव्यूह्य प्रातिभव्यं कृत्वा ॥ २० ॥

तदेतत् सर्वमातिष्ठ वीर्य्यं भीमपराक्रम ! ।
न हि ते सर्वभूतेषु दृश्यते सदृशो बली ॥ २१ ॥

कुरुष्व मे प्रियहितमेतदुत्तमं
यथाप्रियं प्रियरण ! बान्धवप्रिय ! ।
स्वतेजसा व्यपय सपत्नवाहिनीं
शरद्घनं पवन इवोद्यतो महान् ॥ २२ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
द्विषष्टितमः सर्गः ॥ ६२ ॥

वीर्य्यं मा तिष्ठ वीर्य्यमवलम्बस्व ॥ २१ ॥
हे प्रियरण हे बान्धवप्रिय यथाप्रियं स्वप्रीत्यनुसारेण प्रियहित-मुत्तमं हितं कुरुष्व । २२ ।

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

---

# त्रिषष्टितमः सर्गः

तस्य राक्षसराजस्य निशम्य परिदेवितम्।
कुम्भकर्णो बभाषेदं वचनं प्रजहास च ॥ १ ॥
दृष्टो दोषो हि योऽस्माभिः पुरा मन्त्रविनिर्णये
हितेष्वनभियुक्तेन सोऽयमासादितस्त्वया ॥ २ ॥
शीघ्रं खल्वभ्युपेतं त्वां फलं पापस्य कर्मणः।
निरयेष्वेव पतनं यथा दुष्कृतकर्मणः ॥ ३ ॥

प्रजहास च। विभीषणवचोऽनङ्गीकारफलं प्राप्तं दुरात्मनेति हासः ॥ १ ॥

तदेव प्रकाशयति। दृष्ट इति। मन्त्रविनिर्णये विभीषणेन सह मन्त्रविचारकाले। हितेषु हितवादिषु। अनभियुक्तेन अश्रद्दधानेन। सोऽयमासादितः। मया विभीषणेन च दृष्टः सर्वनाशप्राप्तिरूपदोष इत्यर्थः ॥ २ ॥

लोके क्रमेण दोषं पुरुषाः प्रपद्यन्ते। त्वां त्वत्युत्कटैः पुण्यपापैरिहैव फलमश्नुत इति न्यायेन शीघ्रमेव परदारग्रहणरूपदुष्कर्मणः फलं प्राप्तमित्याह,—शीघ्रमिति। अभ्युपेतं प्राप्तं जातम्। यथा पापस्य प्रथमं निरयेष्वेव पतनं तद्वत् ॥ ३ ॥

प्रथमं वै महाराज ! कृत्यमेतदचिन्तितम् ।
केवलं वीर्य्यदर्पेण नानुबन्धो विचारितः ॥ ४ ॥
यः पश्चात् पूर्वकार्य्याणि कुर्य्यादैश्वर्य्यमास्थितः ।
पूर्वञ्चोत्तरकार्य्याणि न स वेद नयानयौ ॥ ५ ॥
देशकालविहीनानि कर्म्माणि विपरीतवत् ।
क्रियमाणानि दुष्यन्ति हवींष्यप्रयतेष्विव ॥ ६ ॥
त्रयाणां पञ्चधा योगं कर्मणां यः प्रपश्यते ।
सचिवैः समयं कृत्वा स सम्यग्वर्त्तते पथि ॥ ७ ॥

प्रथमम् एतत् कृत्यं सर्वनाशप्राप्तिरूपं केवलं वीर्य्यदर्पेण चिन्तितम् । अनुबन्धो दोषोत्पादोऽपि न विचारितः । इदं दुष्टं कर्म तस्य चैवं फलं भावीति इयमपि न विचारितमित्यर्थः । दोषोत्पादेऽनुबन्धः स्यादित्यमरः ॥ ४ ॥

पूर्वकार्य्याणि पूर्वकर्त्तव्यकार्य्याणि यः पश्चात् कुर्य्यात् । तथोत्तरकार्य्याणि च पूर्वम् । स नयानयौ न वेद । अत्र पूर्वकार्य्यं विचारः । पश्चात् कार्य्यं सीताहरणम् ॥ ५ ॥

तदेव प्रपञ्चयति । देशेति । उचितदेशकालरहितानि विपरीतकालदेशप्रयुक्तानि तत्तत्कर्तृतत्कर्मवत् दुष्यन्ति दुःखाय भवन्ति । अप्रयतेषु असावधानेषु असंस्कृतेष्वग्निषु च हवींषीव ॥ ६ ॥

अथ यथाकालदेशप्रयुक्तात् सिद्धिमाह,—त्रयाणामिति । क्षयवृद्धिस्थानलक्षणानां निश्चयपूर्वं कर्त्तव्यानां कर्मणां सामादीनां योगं

यथागमञ्च यो राजा समयञ्च चिकीर्षति ।
बुध्यते सचिवैर्बुद्ध्या सुहृदश्चानुपश्यति ॥ ८ ॥
धर्ममर्थं हि कामं वा सर्वान वा रक्षसां पते ! ।
भजते पुरुषः काले त्रीणि द्वन्द्वानि वा पुनः ॥ ९ ॥

प्रयोगं सचिवैः सह पञ्चधा पञ्चप्रकारं समयं प्रयाणसाधनविचारं कृत्वा यः प्रपद्यते स सम्यक् पथि वर्त्तते समीचीने नीतिमार्गे वर्त्तते । तानि पञ्चप्रकारसाधनानि । कर्म्मणामारम्भोपायः १ पुरुषद्रव्यसम्पत् २ देशकालविभागः ३ विपत्तिप्रतीकारः ४ कार्य्यसिद्धिश्चेति ५ सम्यगित्यव्ययम् ॥ ७ ॥

एवं वर्त्तमानस्य प्रथमं बुद्धिसिद्धिः फलमित्याह,—यथागममिति । यथागमं नीतिशास्त्रमनतिक्रम्य यो राजा सचिवैः सह समयं चिकीर्षति । न्यायादिकालोचितसामादिकर्मविचारमुक्तपञ्चप्रकारतत्प्रयोगसाधनसम्पत्तिविचारञ्च कर्त्तुमिच्छति । तद्यथा । आत्मोपचयपरहानिसमये दण्डोपयोगियानम् । आत्मपरयोर्बलसाम्ये सन्धानम् । परोपचयात्महानिसमये दानपूर्वं समाश्रयणमिति । बुद्ध्या स्वबुद्ध्या सचिवैः सह सुहृदश्चानुपश्यति । अयं सुहृत् हितवक्ता अयं प्रभोः सुखमात्रजननेच्छया वदति न सुहृदित्यनुपश्यति कार्य्यवशेन विचारयति स बुध्यते कर्त्तव्याकर्त्तव्यविवेकबुद्धिं प्राप्नोति ॥ ८ ॥

अथ बुद्धिफलं पुरुषार्थसिद्धिरित्याह,—धर्ममिति । हिरवार्थे । कामं । तत्र प्रातर्धर्मसेवा ततोऽपराह्णेऽर्थसेवा रात्रौ कामसेवेति स्व स्व काले त्रीणि धर्मादीनि भजते । युवराजादिस्तु द्वन्द्वानि वा द्वन्द्वा-

त्रिषु चैतेषु यच्छ्रेष्ठं श्रुत्वा तन्नावबुध्यते ।
राजा वा राजमात्रो वा व्यर्थं तस्य बहुश्रुतम् ॥ १० ॥
उपप्रदानं सान्त्वञ्च भेदं काले च विक्रमम् ।
योगञ्च रक्षसां श्रेष्ठ ! तावुभौ च नयानयौ ॥ ११ ॥
काले धर्मार्थकामान्यः सम्मन्त्र्य सचिवैः सह ।
निषेवेतात्मवान् लोके न स व्यसनमाप्नुयात् ॥ १२ ॥
हितानुबन्धमालोक्य कुर्य्यात् कार्य्यमिहात्मनः ।
राजा सहार्थतत्त्वज्ञैः सचिवैर्बुद्धिजीविभिः ॥ १३ ॥

न्येव धर्मकामद्विकान्येव भजते। अर्थान्तरभेदात् बहुत्वम्। सेवत इत्यर्थः ॥ ९ ॥

अथ धर्मविरुद्धे कामे प्राप्ते धर्मएव सेव्य इत्याह,—त्रिष्विति। एतेषु त्रिषु धर्मादिषु सर्वमूलत्वाद्यत् श्रेष्ठं धर्मरूपं वस्तु तदाप्तेभ्यः श्रुत्वापि नावबुध्यते विरोधे धर्मस्यैवानुष्ठेयत्वं न बुध्यते। यो राजा महाराजो राजमात्रं युवराजः। तस्य बहुश्रुतं व्यर्थम् ॥ १० ॥

सान्त्वं साम। एवं दानादिचतुष्कम्। योगमुक्तपञ्चविधप्रयोगसाधनसम्पादनम्। तावुभौ नयानयौ प्रसिद्धौ। प्रयोगाप्रयोगकालौ धर्मादींश्च काले सचिवैः सह सम्मन्त्र्यात्मवान् जितेन्द्रियो भूत्वा निषेवतेऽनुतिष्ठति। स व्यसनं नाप्नुयात् ॥ ११ ॥ १२ ॥

किञ्च स एव राजापि भवतीत्याह,—हितानुबन्धमिति। य उच्यमानगुणैः सचिवैः सह हितानुबन्धं शुभमुदर्कफलमालोक्य विचार्य्यात्मनः कार्य्यं कुर्य्यात् स राजा भवतीत्यन्वयः ॥ १३ ॥

अनभिज्ञाय शास्त्रार्थान् पुरुषाः पशुबुद्धयः।
प्रागल्भ्याद्वक्तुमिच्छन्ति मन्त्रिष्वभ्यन्तरीकृताः॥ १४॥
अशास्त्रविदुषान्तेषां कार्य्यं नाभिहितं वचः।
अर्थशास्त्रानभिज्ञानां विपुलां श्रियमिच्छताम्॥ १५॥
अहितञ्च हिताकारं धार्ष्ट्याज्जल्पन्ति ये नराः।
अवश्यं मन्त्रबाह्यास्ते कर्त्तव्याः कृत्यदूषकाः॥ १६॥
विनाशयन्तो भर्त्तारं सहिताः शत्रुभिर्बुधैः।
विपरीतानि कृत्यानि कारयन्तीह मन्त्रिणः॥ १७॥

अथोत्तममन्त्रिविभीषणादिमतमपहाय दुर्मन्त्रिभिर्मन्त्रणम् मूलः सर्वा-नर्थ इत्याह,—अनभिज्ञायेति। प्रागल्भ्याच्छब्दरचनामात्रसाम-र्थ्यात्॥ १४॥

अशास्त्रविदुषामित्यस्यैव व्याख्या अर्थशास्त्रानभिज्ञानामिति। अथापि विपुलां श्रियं केवलं हठादेवेच्छतां वचनं न कार्य्यमित्य-न्वयः॥ १५॥

राजभिर्मन्त्रकाले दुर्मन्त्रिनिरासः सर्वथा कार्य्य इत्याह,— अहितञ्चेति। धार्ष्ट्यात्साहसाद्य जल्पन्ति ते मन्त्रबाह्या अवश्यं कर्त्तव्याः॥ १६॥

विनाशयन्त इति। केचन दुर्मन्त्रिणो भर्त्तारं त्वां नाशयन्तः। हेतौ शता। तव निमित्तम्। विपरीतानि कृत्यानि कारयन्ति। केचित् सुमन्त्रिणो दुर्मन्त्रफलं तव नाशं पश्यन्तो बुधैः सर्वैरेव शत्रुभिः सहिताः स्वरक्षणं कुर्वन्तीति शेषः॥ १७॥

तान् भर्त्ता मित्रसङ्काशानमित्रान् मन्त्रनिर्णये।
व्यवहारेण जानीयात् सचिवानुपसंहितान् ॥ १८ ॥
चपलस्येह कृत्यानि सहसानुप्रधावतः।
छिद्रमन्ये प्रपद्यन्ते क्रौञ्चस्य खमिव द्विजाः ॥ १९ ॥
यो हि शत्रुमवज्ञाय आत्मानं नाभिरक्षति।
अवाप्नोति हि सोऽनर्थान् स्थानाच्च व्यवरोप्यते ॥ २० ॥
यदुक्तमिह ते पूर्वं प्रियया मेऽनुजेन च।
तदेव नोऽहितं वाक्यं यथेच्छसि तथा कुरु ॥ २१ ॥
तत्तु श्रुत्वा दशग्रीवः कुम्भकर्णस्य भाषितम्।
भ्रुकुटिञ्चैव सञ्चक्रे क्रुद्धश्चैनमभाषत ॥ २२ ॥

सुमन्त्रित्वदुर्मन्त्रित्वनिर्णयः कथं तत्राह,—तानिति। मन्त्रनिर्णये चिकीर्षिते तान् मित्रसङ्काशान् अमित्रान्। उपसंहितान् उत्कोचा-दिना शत्रुवशीकृतान् सचिवसङ्काशान् व्यवहारेण तत्तन्मन्त्रजार्थ-क्रियालक्षणव्यवहारेण जानीयात् ॥ १८ ॥

चपलस्य आपातसुखजनकवचनसन्तुष्टस्य सहसा अविचारेण कृत्यानि अनुप्रधावतः कुर्वतः अन्ये शत्रवः छिद्रं रन्ध्रं प्रपद्यन्ते। द्विजाः पक्षिणः स्कन्दशक्तिविदारितक्रौञ्चाख्याचलस्य खं रन्ध्र-मिव ॥ १९ ॥

अवज्ञाय अवमत्य। स्थानाद्राजपदव्याः। व्यवरोप्यते निव-र्त्यते ॥ २० ॥

मान्यो गुरुरिवाचार्य्यः किं मां त्वमनुशासति।
किमेवं वाक्श्रमं कृत्वा यद्युक्तं तद्विधीयताम्॥ २३॥
विभ्रमाच्चित्तमोहाद्वा बलवीर्य्याश्रयेण वा।
नाभिपन्नमिदानीं यद्व्यर्था तस्य पुनः कथा॥ २४॥
अस्मिन् काले तु यद्युक्तं तदिदानीं विचिन्त्यताम्।
ममापनयजं दुःखं विक्रमेण समीकुरु॥ २५॥
यदि खल्वस्ति मे स्नेहो विक्रमं वाधिगच्छसि।
यदि कार्य्यं ममैतत्ते हृदि कार्य्यतमं मतम्॥ २६॥

प्रियया मन्दोदर्य्या। मेऽनुजो विभीषणः। समानार्थे च तयोर्वाक्ये इति मन्दोदरीवाक्यं न पृथगुक्तम्। २१॥ २२॥

अहं तव गुरुरिव निषेककर्त्तेव आचार्य्य इव द्वितीयजन्मद इव च मान्यः। एवं वाक्श्रमं कृत्वा किं फलं न किमपि। अतोऽत्र काले यद्युक्तं तद्विधीयताम्॥ २३॥

किञ्च त्वदुक्तं सत्यमेव। तथापि गते जले सेतुबन्धवदेषा कथा व्यर्थेत्यनुष्ठेयमनुतिष्ठेत्याह,—विभ्रमादिति। विभ्रमो विपरीतज्ञानम्। चित्तमोहोऽज्ञानम्। तदादिदोषेण युष्मदुक्तं हितं तत्काले नाभिपन्नं नाङ्गीकृतमिदानीमतीतकालस्य पुनः कथा व्यर्थेत्यर्थः॥ २४॥

यदेवमतोऽस्मिन्निति। अपनयजम् अनीतिजम्। विक्रमेण वीर्य्येन॥ २५॥

विक्रमं वेत्यस्य स्मिन्नित्यादिः। एतत् कार्य्यं युद्धानुष्ठानरूपं

स सुहृद्यो विपन्नार्थं दीनमभ्युपपद्यते ।
स बन्धुर्योऽपनीतेषु साहाय्यायोपकल्पते ॥ २७ ॥
तमथैवं ब्रुवाणं स वचनं धीरदारुणम् ।
रुष्टोऽयमिति विज्ञाय शनैः श्लक्ष्णमुवाच ह ॥ २८ ॥
अतीव हि समालक्ष्य भ्रातरं क्षुभितेन्द्रियम् ।
कुम्भकर्णः शनैर्वाक्यं बभाषे परिसान्त्वयन् ॥ २९ ॥
शृणु राजन्नवहितो मम वाक्यमरिन्दम ! ।
अलं राक्षसराजेन्द्र ! सन्तापमुपपद्य ते ।
रोषञ्च सम्परित्यज्य स्वस्थो भवितुमर्हसि ॥ ३० ॥
नैतन्मनसि कर्त्तव्यं मयि जीवति पार्थिव ! ।
तमहं नाशयिष्यामि यत् कृते परितप्यसे ॥ ३१ ॥

यदि कार्य्यतममतिशयेनानुष्ठातुं योग्यं कार्य्यमिति तव सम्मतं तदा युद्धं कुर्विति सम्बन्धः ॥ ३६ ॥

किञ्च यदि सुहृत्त्वं तदाऽवश्यमेवेदं कार्य्यमित्याह,—स इति । विपन्नार्थं विनष्टसर्वकार्य्यम् । अतएव दीनम् । अभ्युपपद्यतेऽनुगृह्णाति । स एव सुहृत् । बन्धुत्वेप्येतदेव माप्यमित्याह,—स इति । अपनीतेषु अपनीतिमार्गस्थेषु ॥ २७ ॥

धीरदारुणम् । इच्छा चेत् कुर्वित्युक्तेर्धीरत्वम् । स सुहृद्य इत्युक्तेर्दारुणत्वम् ॥ २८ ॥ २९ ॥

सन्तापमुपपद्य प्राप्य अलं तापो न कार्य्य इत्यर्थः ॥ ३० ॥

अवश्यञ्च हितं वाच्यं सर्वावस्थां गतं मया।
बन्धुभावादभिहितं भ्रातृस्नेहाच्च पार्थिव ! ॥ २२ ॥
सदृशं यत्तु कालेऽस्मिन् कर्त्तुं स्नेहेन बन्धुना।
शत्रूणां कदनं पश्य क्रियमाणं मया रणे ॥ २३ ॥
अद्य पश्य महाबाहो ! मया समरमूर्द्धनि।
हते रामे सह भ्रात्रा द्रवन्तीं हरिवाहिनीम् ॥ २४ ॥
अद्य रामस्य ततुं दृष्ट्वा मयानीतं रणाच्छिरः।
सुखीभव महाबाहो ! सीता भवतु दुःखिता ॥ २५ ॥
अद्य रामस्य पश्यन्तु निधनं सुमहत्प्रियम्।
लङ्कायां राक्षसाः सर्वे ये ते निहतबान्धवाः ॥ २६ ॥
अद्य शोकपरीतानां स्वबन्धुवधशोचिनाम्।
शत्रोर्युधि विनाशेन करोम्यश्रुप्रमार्जनम् ॥ २७ ॥
अद्य पर्वतसङ्काशं ससूर्य्यमिव तोयदम्।
विकीर्णं पश्य समरे सुग्रीवं प्लवगेश्वरम् ॥ २८ ॥

एतद्दैन्यं यत् कृते यन्निमित्तम् ॥ २१ ॥

सर्वावस्थां सुखदुःखादिसर्वावस्थां गतं प्राप्तं त्वां प्रतीति शेषः। विष्णोरभक्तिकावस्था सर्वावस्थेति गीयत इत्यन्ये ॥ २२ ॥

यन्मम पराक्रमस्य सदृशम् अस्मिन् काले च स्निग्धेन बन्धुना कर्त्तुं योग्यं तन्मया क्रियमाणां शत्रूणां कदनं पश्य ॥ २३ ॥ २४ ॥ २५ ॥ ॥ २६ ॥ २७ ॥ २८ ॥

कथञ्च राक्षसैरेभिर्मया च परिरक्षितः ।
जिघांसुभिर्दाशरथिं व्यथसे त्वं सदानघ ! ॥ ३९ ॥
मां निहत्य किल त्वां हि निहनिष्यति राघवः ।
नाहमात्मनि सन्तापं गच्छेयं राक्षसाधिप ! ॥ ४० ॥
कामं त्विदानीमपि मां व्यादिश त्वं परन्तप ! ।
न परः प्रेक्षणीयस्ते युद्धायातुलविक्रम ! ॥ ४१ ॥
अहमुत्सादयिष्यामि शत्रूंस्तव महाबलान् ।
यदि शक्रो यदि यमो यदि पावकमारुतौ ॥ ४२ ॥
तानहं योधयिष्यामि कुबेरवरुणावपि ।
गिरिमात्रशरीरस्य शितशूलधरस्य मे ॥ ४३ ॥
नर्दतस्तीक्ष्णदंष्ट्रस्य बिभीयाद्वै पुरन्दरः ।
अथवा त्यक्तशस्त्रस्य मृद्गतस्तरसा रिपून् ॥ ४४ ॥
न मे प्रतिमुखः कश्चित् स्थातुं शक्तो जिजीविषुः ।
नैव शक्त्या न गदया नासिना निशितैः शरैः ॥ ४५ ॥
हस्ताभ्यामेव संरभ्य हनिष्यामि सवज्रिणम् ।

दाशरथिं जिघांसुभिरस्माभिः परिरक्षितोऽपि कथं व्यथसे ॥ ३९ ॥ अथाहेतुर्नास्तीत्याह,—मामिति । मां निहत्य तदनन्तरं किल त्वां निहनिष्यति । तच्च ममैव हननं तेनाशक्यम् । अतएवाह,—नात्मनि स्वविषये सन्तापं रामविषयं भयं गच्छेयम् ॥ ४० ॥ ४१ ॥ ४२ ॥ ॥ ४३ ॥ ४४ ॥ ४५ ॥

यदि मे मुष्टिवेगं स राघवोऽद्य सहिष्यति ॥ ४६ ॥
ततः पास्यन्ति बाणौघा रुधिरं राघवस्य मे ।
चिन्तया तप्यसे राजन् ! किमर्थं मयि तिष्ठति ॥ ४७ ॥
सोऽहं शत्रुविनाशाय तव निर्य्यातुमुद्यतः ।
मुञ्च रामाद्भयं घोरं निहनिष्यामि संयुगे ॥ ४८ ॥
राघवं लक्ष्मणञ्चैव सुग्रीवञ्च महाबलम् ।
हनूमन्तञ्च रक्षोघ्नं येन लङ्का प्रदीपिता ॥ ४९ ॥
हरींश्च भक्षयिष्यामि संयुगे समुपस्थिते ।
असाधारणमिच्छामि तव दातुं महद्यशः ॥ ५० ॥
यदि चेन्द्राद्भयं राजन् ! यदि चापि स्वयम्भुवः ।
अपि देवाः शयिष्यन्ते मयि क्रुद्धे महीतले ॥ ५१ ॥
यमञ्च शमयिष्यामि भक्षयिष्यामि पावकम् ।
आदित्यं पातयिष्यामि सनक्षत्रं महीतले ॥ ५२ ॥
शतक्रतुं वधिष्यामि पास्यामि वरुणालयम् ।

मे मुष्टिवेगं राघवो यदि सहिष्यति तदा मे बाणौघा राघवस्य रुधिरं पास्यन्ति । तत् सहनमेव तस्याशक्यमिति भावः ॥ ४६ ॥ ४७ ॥ ॥ ४८ ॥ ४९ ॥ ५० ॥

इन्द्रादिभ्योऽपि यदि भयं तथापि तवासाधारणं यशो जयजं दातुमिच्छामि । तद्भयहेतवो देवादयोऽपि मयि क्रुद्धे महीतले शयिष्यन्ति । किं पुनर्नरवानरा इत्यर्थः ॥ ५१ ॥ ५२ ॥

पर्वतांश्चूर्णयिष्यामि दारयिष्यामि मेदिनीम् ॥ ५३ ॥
दीर्घकालं प्रसुप्तस्य कुम्भकर्णस्य विक्रमम् ।
अद्य पश्यन्तु भूतानि भक्ष्यमाणानि सर्वशः ।
न त्विदं त्रिदिवं सर्वमाहारो मम पूर्य्यते ॥ ५४ ॥

वधेन ते दाशरथेः सुखावहं
सुखं समाहर्त्तुमहं व्रजामि ।
निहत्य रामं सह लक्ष्मणेन
खादामि सर्वान् हरियूथमुख्यान् ॥ ५५ ॥

रमस्व राजन् ! पिब चाद्य वारुणीं
कुरुष्व कृत्यानि विनीय दुःखम् ।
मयाद्य रामे गमिते यमक्षयं
चिराय सीता वशगा भविष्यति ॥ ५६ ॥

## इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

वक्ष्यमाणयं समुद्रम् ॥ ५३ ॥ ५४ ॥
सुखावहम् उत्तरोत्तरमधिकसुखजनकं सुखम् ॥ ५५ ॥ ५६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्धकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

## चतुःषष्टितमः सर्गः

तदुक्तमतिकायस्य बलिनो बाहुशालिनः ।
कुम्भकर्णस्य वचनं श्रुत्वोवाच महोदरः ॥ १ ॥
कुम्भकर्ण ! कुले जातो धृष्टः प्राकृतदर्शनः ।
अवलिप्तो न शक्नोषि कृत्यं सर्वत्र वेदितुम् ॥ २ ॥
न हि राजा न जानीते कुम्भकर्ण ! नयानयौ ।
त्वन्तु कैशोरकात् धृष्टः केवलं वक्तुमिच्छसि ॥ ३ ॥
स्थानं वृद्धिञ्च हानिञ्च देशकालविधानवित् ।

अथाविचारकारी रावण इति यदुक्तमसहाय एव योत्स्यामीति च तदुभयं दूषयति महोदर इत्याह,—तदिति । अतिकायस्य कुम्भकर्णस्य तत्तेन प्रकारेणोक्तं वचनं श्रुत्वा महोदर उवाच ॥ १ ॥

कुले महाकुले जातोऽपि धृष्टोऽवलिप्तस्त्वं प्राकृतदर्शनः सन् सर्वकृत्यं कर्त्तव्यं वेदितुं न शक्नोषि ॥ २ ॥

न स वेद नयानयाविति कुम्भकर्णोक्तं दूषयति । न हीति । राजा नयानयौ उचितकृत्याकृत्ये न जानाति इति न किन्तु जानीत एवेत्यर्थः । त्वन्तु कैशोरकात् बाल्यात् धृष्टः सन्नेवं वक्तुमिच्छसि । केवलं कर्त्तुमिच्छसि इति पाठे असहायतया रामेण युद्धमिति शेषः ॥ ३ ॥

आत्मनश्च परेषाञ्च बुध्यते राक्षसर्षभः ॥ ४ ॥
यत्त्वशक्यं बलवता वक्तुं प्राकृतबुद्धिना ।
अनुपासितवृद्धेन कः कुर्य्यात्तादृशं नरः ॥ ५ ॥
यांस्तु धर्मार्थकामांस्त्वं ब्रवीषि पृथगाश्रयान् ।
अवबोद्धुं स्वभावेन न हि लक्षणमस्ति तान् ॥ ६ ॥
कर्म चैव हि सर्वेषां कारणानां प्रयोजनम् ।
श्रेयःपापीयसाञ्चात्र फलं भवति कर्मणाम् ॥ ७ ॥

राजा तु सर्वं वत्तीत्याह,—स्थानमिति । स्थानवृद्धिक्षयरा-हित्येन यथाप्राप्तस्वरूपेऽवस्थानम् । आत्मनो वृद्धिं परेषां हानिञ्च राजा बुध्यते । किञ्च देशकालविधानविद्देशकालयोरुचितकर्त्तव्य-वित् ॥ ४ ॥

सर्वथा राज्ञोऽविवेको नास्तीत्याह,—यत्त्वशक्यमिति । अनुपासित-वृद्धेनातएव प्राकृतबुद्धिना केवलं बलवता यत्तु कर्त्तुमशक्यं तादृशं को बुधो राजा कुर्य्यात् न कोऽपि ॥ ५ ॥

एतावता प्रथमं वै महाराजकृत्यमेतदचिन्तितम् । केवलं वीर्य्य-दर्पेण नानुबन्धो विचारित इति कुम्भकर्णोक्तं दूषणं परिहृतम् । अथ त्रिषु चैतेषु यच्छ्रेष्ठमित्यादिना धर्म एव सेव्यो न तु कामस्तद्विरुद्ध इति यदुक्तं तत्राहयांस्त्विति । यांश्च धर्मादीन् पृथगाश्रया धर्मादयः परस्परविरुद्धा नैकानुष्ठेया इति ब्रवीषि तान् धर्मादीन् स्वभावेन तत्त्वतोऽवबोद्धुं ते लक्षणं सामर्थ्यं न ह्यस्ति ॥ ६ ॥

कुत इत्यत्र सर्वस्याप्येकानुष्ठेयत्वादेवेत्याह,—कर्म चैवेति । सर्वेषां

निःश्रेयसफलावेव धर्मार्थावितरावपि।
अधर्मानर्थयोः प्राप्तं फलञ्च प्रात्यवायिकम् ॥ ८ ॥
ऐहलौकिकपारक्यं कर्म पुंभिर्निषेव्यते।
कर्माण्यपि तु कल्यानि लभते काममास्थितः ॥ ९ ॥

कारणानां सुखसाधनानां त्रिवर्गलक्षणानां कर्मैव प्रयोजनं प्रयोजक-मुत्पादकम्। न ह्यक्रियस्य कश्चन पुरुषार्थो धर्मादिः। एवमेकपुरुष-यत्नसाध्यानां श्रेयःपापीयसां कर्मणां शुभाशुभव्यापाराणां फलमप्येक-स्मिन्नेव कर्त्तरि भवति। एवञ्च विरुद्धयोरपि धर्मकामयोरेकानुष्ठेयो न तु तद्विरुद्धः काम इति त्वदुक्तमयुक्तमिति भावः॥ ७॥

तत्र पुरुषयत्नसाध्येष्वप्येषु धर्मार्थयोः कामात् कश्चिद्विशेषोऽस्ती-त्याह,—निःश्रेयसेति। धर्मार्थौ निःश्रेयसफलावेव सन्तौ कामनाविशे-षेणेतरावपि स्वर्गाभ्युदयफलावपि भवतः। अत्र धर्मशब्देनार्थनिर-पेक्षो जपध्यानादिः। अर्थशब्देन चार्थसाध्यो यागदानादिः। यज्ञो दानं तपश्चैव पावनानि मनीषिणामिति भगवद्वचनात्। तेषां चित्त-शुद्धिद्वारा मोक्षसाधनत्वमस्ति। कामस्तु न कदापि निःश्रेयसफल इति भावः। तयोरपरमपि कामाद्विशेषमाह,—अधर्मानर्थयोरिति। जपादिरूपे क्रियामये वा नित्यधर्मे लुप्ते सति अधर्मानर्थौ प्राप्तौ भवतस्तयोश्च सतोः प्रात्यवायिकं विहिताकरणप्रयुक्तप्रत्यवायजन्यं फलं पुंसः प्राप्तं भवति। न तु काम्याकरणे प्रत्यवाय इति भावः॥ ८॥

कीदृशं तत् फलं तत्राह,—ऐहलौकिकेति। इह लोके परत्र च भवं कर्म कर्मफलम्। इह अन्नदारिद्र्यादिरूपं परत्र नरकयातनादि

तत्र क्लृप्तमिदं राज्ञा हृदि कार्य्यं मतञ्च नः ।

रूपं निषेव्यते अनुभूयते । एवं धर्मफलमपि । अथ कामस्य धर्मार्थाभ्यां वैलक्षण्यमाह,—कर्माणीति । कामं तत्पुरुषार्थसिद्धिमुद्दिश्य कर्माणि यत्नेनाश्रितोऽनुतिष्ठन्नपि कल्याणि शुभानि तु विशिष्य अत्रापि साक्षाल्लभते न तु धर्मार्थवत् कालान्तरे लोकान्तरे वा । एवञ्च धर्मार्थकामा एकेनैव सेव्याः । धर्मविरुद्धो यदि कामस्तदा स स्वतपो विक्रमादिना समाधेयः । न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रियन्त इति न्यायादिति भावः ॥ ६ ॥

इदानीमनभिज्ञाय शास्त्रार्थमित्यादिना दुर्मन्त्रिसम्बन्धस्याज्य इत्युक्तं तत्परिहरति । तत्रेति । तत्र त्रयाणाम् एकानुष्ठेयत्वे सिद्धे सति राज्ञा इदं कामपुरुषार्थसाधनं कार्य्यं कर्त्तुं योग्यम् । तथा हृदि क्लृप्तं निश्चितञ्च नोऽस्माकं मन्त्रिणां मतमनुमतञ्च । बलवद्विषये न्याय्यत्वस्योक्तत्वात् । अतो राज्ञि नास्मासु च किञ्चिदचातुर्य्यम् । अथ साहसप्रवृत्तिरूपं प्रागुक्तदोषमुद्धरति । शूरो ह्यति । शूराे हि प्रसिद्धं साहसं बलवतो बलात् प्रवृत्तिरूपम् । अत्रेतदनुष्ठाने किमिवापनीयते कोपनयो न कोऽपि । उचितमेव कृतमित्यर्थः । यत्तु सौर्य्येणोक्तम् । धर्माधर्मयोर्हिताहितसाधनत्वं निश्चित्य परदाराहरणरूपाधर्मात् राज्ञो दुःखमित्युक्तं तद्धर्माधर्मयोर्हिताहितफलनियमाभावादसङ्गतमित्याह,—यांस्तु धर्मार्थेति । पृथगाश्रयान् पृथक्फलजनकान् वदसि तान् स्वभावेनावबोद्धुं स्वरूपतो ज्ञातुं लक्ष्यतेऽनेनेति लक्ष्यं कारणञ्च नास्ति । सुखफलकयागादिधर्मानुष्ठानेऽपि तात्कालिकशरीरायासदर्शनात् । दुःखजनकपरदारगमनादावपि

अत्रौ हि साहसं यत्तत् किमिवात्रापनीयते ॥ १० ॥

तात्कालिकसुखदर्शनाच्चेति भावः। तदेव प्रदर्शयति। कर्म चेति। सर्वेषां कारणानां सुखानामित्यर्थः। कर्म कर्ममात्रं प्रयोजनं प्रयोजकम्। साधकमित्यर्थः। अत्रास्मिन् पुण्यकर्मणि फलं भवति। अश्रेयोऽपीति शेषः। पापीयसां कर्मणां श्रेयः सुखञ्च फलं भवति। एतदेव विशदयति। निःश्रेयसेति। धर्मार्थौ तत्साधनीभूते कर्मणी। इतरौ अधर्मानर्थौ तत्साधनभूते कर्मणीति यावत्। निःश्रेयसफलावेव। चतुर्विधकर्माण्यपि श्रेयस्कराण्येवेत्यर्थः। किन्तु कदाचिदधर्मानर्थयोः प्रात्यवायिकं प्रत्यवायकारणकं दुःखं फलं सुखञ्च। प्राप्यत इति प्राप्तिः। कर्मणि क्तिन्। प्राप्यं भवतीत्यर्थः। एतेनाधर्मानर्थयोः सुखदुःखोभयफलत्वमुक्तम्। धर्मार्थयोरव्यवस्थितफलमुक्त्वा कामस्याप्याह,—ऐहलौकिकेति। इहलोकपरलोकोपयोगिकर्म धर्मार्थरूपं निषेव्यते तत् फलञ्चानुभूयते। तथा काममाश्रितोऽपि यथेच्छाचारोऽपि कल्याणि शुभानि कर्माणि कर्मफलानि लभते। एवञ्च विहितमेव शुभदं निषिद्धमशुभदमिति नियमो नेति भावः। एतत् पक्षानुसारेणैव सीताहरणं रावणेन कृतमस्माभिश्चानुमतमित्याह,—तत्रेति। तथा सति इदं कार्य्यं सीताहरणरूपं राज्ञा हृदि निश्चितमस्माभिरनुमतञ्च। किञ्च शत्रुविषये रावणेन यत्साहसं कृतं तत् किमिव न किमिव। न किमपीत्यर्थः। अत्र साहसविषये अपनीयतां पृथक्कृत्य प्रदर्श्यताम्। अत्र पक्षे रावणेनाविचार्य्य कृतं किमपि दर्शयितुं न शक्यमित्यर्थ इति पक्षश्लोकोव्याख्यानम्। तन्न। धर्माद्दुःखस्याधर्मात् सुखस्य सर्वासम्मतत्वात्। यदपि उक्तं यागादौ नान्तरीयकं दुःखमिति

एकस्यैवाभियाने तु हेतुर्यः प्राहृतस्त्वया।
तच्चाप्यनुपपन्नं ते वक्ष्यामि यदसाधु च ॥ ११ ॥
येन पूर्वं जनस्थाने बहवोऽतिबलास्तदा।
राक्षसा राघवध्वस्ताः कथमेको जयिष्यसि ॥ १२ ॥
ये पूर्वं निर्जितास्तेन जनस्थाने महौजसः।
राक्षसांस्तान् पुरे सर्वान् भीतानद्य न पश्यसि ॥ १३ ॥
तं सिंहमिव संक्रुद्धं रामं दशरथात्मजम्।
सर्पं सुप्तमहो बुध्वा प्रबोधयितुमिच्छसि ॥ १४ ॥
ज्वलन्तं तेजसा नित्यं क्रोधेन च दुरासदम्।

तत्र तस्य धर्मस्य फलं किन्तु प्राक्तनकर्मान्तरस्यैव। एवमधर्मविषयेऽपि। अनया रीत्या सर्वं पलालप्रायतया दूष्यतां मतिमद्भिरित्यलम् ॥ १० ॥

अथेदानीमेव मां राजन् व्यादिश अहमुत्सादयिष्यानीत्यादिनाऽसहायतया यो रिपुसंहारवाद उक्तस्तं दूषयति। एकस्यैवेति। एकस्यासहायस्यैवाभियाने यो हेतुः स्वबललक्षणः प्राहृत उक्तस्तच्चापि यदनुपपन्नम् उपपत्तिरहितम् अतएवासाधुवचोऽस्ति तत्ते वक्ष्यामि ॥ ११ ॥

अनुपपत्तिमेवाह,—येनेति। येनातिबला हतास्तं राघवमित्यन्वयः ॥ १२ ॥

जनस्थाने तेन ये निर्जिता विद्राविताास्तानद्यापि भीतानत्र पुरे विद्यमानान् राक्षसान्न पश्यसि किम् ॥ १३ ॥

कस्तं मृत्युमिवासह्यमासादयितुमर्हति ॥ १५ ॥
संशयस्थमिदं सर्वं शत्रोः प्रतिसमासने ।
एकस्य गमनं तात ! न हि मे रोचते शुभम् ॥ १६ ॥
हीनार्थस्तु समृद्धार्थं को रिपुं प्राकृतं यथा ।
निश्चितं जीवितत्यागे वशमानेतुमिच्छति ॥ १७ ॥
यस्य नास्ति मनुष्येषु सदृशो राक्षसोत्तम ! ।
कथमाशंससे योद्धुं तुल्येनेन्द्रविवस्वतोः ॥ १८ ॥
एवमुक्त्वा तु संरब्धं कुम्भकर्णं महोदरः ।
उवाच रक्षसां मध्ये रावणं लोकरावणम् ॥ १९ ॥
लब्ध्वा पुरस्ताद्वैदेहीं किमर्थं त्वं विलम्बसे ।
यदीच्छसि तदा सीता वशगा ते भविष्यति ॥ २० ॥

सिंहमिव सुप्तं सर्पमिव च बुध्वापि प्रबोधयितुमिच्छसि। अहो ते मौर्ख्यमिति भावः ॥ १४ ॥ १५ ॥

इदं सर्वं बलं शत्रोः प्रतिसमासने प्रतिमुखावस्थाने संशयस्थं संशयितजीवनविषयम्। अत एकस्य गमनं न मे रोचत इत्यन्वयः ॥ १६ ॥

हीनार्थः हीनबलोऽसहायः सन् कः पुमान् समृद्धार्थं ससहायं जीवितत्यागे निश्चितं स्वप्राणां स्तृणीकृत्य शत्रुसंहारादिदृढोद्योगं रिपुं प्राकृतं यथा प्राकृतमिवोत्कृष्टविशेषरहितमिव वशमानेतुमिच्छति ॥ १७ ॥ १८ ॥ १९ ॥

दृष्टः कश्चिदुपायो मे सीतोपस्थानकारकः ।
रुचितश्चेत् त्वया बुद्ध्या राक्षसेन्द्र ! ततः शृणु ॥ २१ ॥
अहं द्विजिह्वः संह्रादी कुम्भकर्णो वितर्दनः ।
पञ्च रामवधायैते निर्य्यान्तीत्यवघोषय ॥ २२ ॥
ततो गत्वा वयं युद्धं दास्यामस्तस्य यत्नतः ।
जेष्यामो यदि ते शत्रून्नोपायैः कार्य्यमस्ति नः ॥ २३ ॥
अथ जीवति नः शत्रुर्वयञ्च कृतसंयुगाः ।
ततः समभिपत्स्यामो मनसा यत् समीचितम् ॥ २४ ॥

पूर्वमेव वैदेहीं लब्ध्वापि त्वं किमर्थं विलम्बसे तद्भोगायेति शेषः। भोगार्थं सीतया वशगया भाव्यमिति यदीच्छसि तदा सीता ते वशगा भविष्यति ॥ २० ॥

कुतस्तत्राह,—दृष्ट इति। सीतोपस्थानस्य सीतानुकूल्यस्य कारकः साधनं कश्चिदुपायो मे मया दृष्टोऽस्ति तं शृणु। तं श्रुत्वा त्वया बुद्ध्या पर्य्यालोच्य रुचितश्चेत्तमनुतिष्ठेति शेषः ॥ २१ ॥

तमुपायमाह,—अहमिति। पञ्चैते निर्य्यान्तीत्यवघोषय ॥ २२ ॥

ततो गत्वा तस्य रामस्य युद्धं दास्यामः। यदि दैवात्तव शत्रून् जेष्यामस्तदा नोऽस्माकमुपायैः सीतावशीकरणोपायानुष्ठानैर्न किञ्चित् कार्य्यमस्ति। रामं प्रत्याशानिवृत्त्या स्वत एव तदानुकूल्यस्य सिद्धत्वा-दिति भावः ॥ २३ ॥

अथ पक्षान्तरे। नोऽस्माकं शत्रुरस्माभिरसाध्यनाशत्वाद्यदि

वयं युद्धादिहैष्यामो रुधिरेण समुक्षिताः।
विदार्य्य स्वतनुं बाणै रामनामाङ्कितैः शरैः॥ २५॥
भक्षितो राघवोऽस्माभिर्लक्ष्मणश्चेति वादिनः।
ततः पादौ ग्रहीष्यामस्त्वन्नः कामं प्रपूरय॥ २६॥
ततोऽवघोषय पुरे गजस्कन्धेन पार्थिव!।
हतो रामः सह भ्रात्रा ससैन्य इति सर्वतः॥ २७॥
प्रीतो नाम ततो भूत्वा भृत्यानां त्वमरिन्दम!।
भोगांश्च परिवारांश्च कामान् वसु च दापय॥ २८॥
ततो माल्यानि वासांसि वीराणामनुलेपनम्।
देयञ्च बहुयोधेभ्यः स्वयञ्च मुदितः पिब॥ २९॥

जीवति। हतसंयुगा वयञ्च यदि जीवाम ततो मनसा यत्समीक्षितं तत्समभिपत्स्यामः प्राप्स्यामः॥ २४॥

किं तत्तत्राह,—वयमिति। स्वतनुं रामनामाङ्कितैर्बाणैर्विदार्य्य कृतविदारणां सम्पाद्य यावत् प्राणसङ्कटं युद्धेत्यर्थः। एवं युद्धात्रुधिरोक्षिता युद्धात् परावृत्येहैष्यामः॥ २५॥

इति वादिनः इत्येवं मिथ्यावादिनः। त्वं नः कामं पूरय जित्वा आगतानिव सम्मानय॥ २६॥ २७॥

प्रीतो नाम। नामेत्यपरमार्थे। प्रीत इव भूत्वेत्यर्थः। परिवारान् दासीदासान्॥ २८॥

ततोऽस्मिन् बहुलीभूते कौलीने सर्वतो गते।
भक्षितः ससुहृद्रामो राक्षसैरिति विश्रुते॥ ३०॥
प्रविश्याश्वास्य चापि त्वं सीतां रहसि सान्त्वयन्।
धनधान्यैश्च कामैश्च रत्नैश्चैनां प्रलोभय॥ ३१॥
अनयोपधया राजन्! भूयः शोकानुबन्धया।
अकामा त्वद्वशं सीता नष्टनाथा गमिष्यति॥ ३२॥
रमणीयं हि भर्त्तारं विनष्टमधिगम्य सा।
नैराश्यात् स्त्रीलघुत्वाच्च त्वद्वशं प्रतिपत्स्यते॥ ३३॥
सा पुरा सुखसंवृद्धा सुखार्हा दुःखकर्शिता।
त्वय्यधीनं सुखं ज्ञात्वा सर्वथैव गमिष्यति॥ ३४॥

योधेभ्यो बहुदेयं देहीति शेषः। मुदितः पिब मुदित इव पिब॥ २९॥

कौलीने जनवादे रामादयो भक्षिता इत्येवं रूपे विश्रुते लोकमुखतः सीतयेति शेषः॥ ३०॥

आश्वास्य भर्तृविपत्तिदुःखितामिति शेषः॥ ३१॥

उपधया वञ्चनया। भूयोऽधिकं सीतायाः शोकोऽनुबन्धो यस्यामुपधायान्तया। अकामा तादृश्यपि॥ ३२॥

रमणीयम् अनुवर्त्तितुं योग्यम्॥ ३३॥

गमिष्यति त्वद्वशत्वमिति शेषः॥ ३४॥

एतत् सुनीतं मम दर्शनेन
रामं हि दृष्ट्वैव भवेदनर्थः।
इहैव ते सेत्स्यति मोत्सुकोऽभू-
र्महानयुद्धेन सुखस्य लाभः॥ ३५॥

अनष्टसैन्यो ह्यनवाप्तसंशयो
रिपुं त्वयुद्धेन जयन् जनाधिप!।
यशश्च पुण्यञ्च महान् महीपतिः
श्रियञ्च कीर्त्तिञ्च चिरं समश्नुते॥ ३६॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
चतुःषष्टितमः सर्गः॥ ६४॥

एतन्मम दर्शनेन मया सुनीतं निश्चितः सुखोपायः। युद्धन्तु नोपाय इत्याह,—रामं दृष्ट्वैव तद्दर्शनमात्रेणैवानर्थो वधो भवेत्। यदेवमतो युद्धे रामदर्शनार्थं मोत्सुकोऽभूः। इहैव स्थितस्य ते महान् सुखस्य लाभो युद्धे न सेत्स्यति॥ ३५॥

स्वोक्तोपायानुष्ठानमेव ते सुखावहमित्युपसंहरति। अनष्टेति॥ ३६॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे चतुःषष्टितमः सर्गः॥ ६४॥

## पञ्चषष्टितमः सर्गः ।



स तथोक्तस्तु निर्भर्त्स्य कुम्भकर्णो महोदरम् ।
अब्रवीद्राक्षसश्रेष्ठं भ्रातरं रावणं ततः ॥ १ ॥
सोऽहं तव भयं घोरं वधात्तस्य दुरात्मनः ।
रामस्याद्य प्रमार्जामि निर्वैरो हि सुखीभव ॥ २ ॥
गर्जन्ति न वृथा शूरा निर्जला इव तोयदाः ।
पश्य सम्पद्यमानन्तु गर्जितं युधि कर्मणा ॥ ३ ॥
न मर्षयन्ति चात्मानं सम्भावयितुमात्मना ।
अदर्शयित्वा शूरास्तु कर्म कुर्वन्ति दुष्करम् ॥ ४ ॥
विक्लवानां ह्यबुद्धीनां राज्ञां पण्डितमानिनाम् ।

स तथोक्त इति । युद्धं न कर्त्तव्यमित्युक्तः ॥ १ ॥

निर्वैरः अशत्रुः ॥ २ ॥

वृथा न गर्जन्ति शत्रोरसमक्षं स्वशौर्य्यं वृथा न कथ्यन्ते । युधि कर्मणा सम्पद्यमानन्तु मे गर्जितं पश्य ॥ ३ ॥

आत्मना आत्मानं सम्भावयितुं श्लाघयितुं न मर्षयन्ति न सहन्ते नेच्छन्तीति यावत् । अपि तु अदर्शयित्वा वाचा स्वसामर्थ्यमप्रकाश्य दुष्करं कर्म कुर्वन्ति ॥ ४ ॥

रोचते त्वद्वचो नित्यं कथ्यमानं महोदर ! ॥ ५ ॥
युद्धे कापुरुषैर्नित्यं भवद्भिः प्रियवादिभिः ।
राजानमनुगच्छद्भिः सर्व्वं कृत्यं विनाशितम् ॥ ६ ॥
राजशेषा कृता लङ्का चीणः कोशो बलं हतम् ।
राजानमिममासाद्य सुहृच्चिह्नममित्रकम् ॥ ७ ॥
एष निर्य्याम्यहं युद्धमुद्यतः शत्रुनिर्जये ।
दुर्नयं भवतामद्य समीकर्त्तु महाहवे ॥ ८ ॥

अशूरत्वरूपवैक्लव्यादिगुणानां त्वद्वचो युद्धनिवृत्तिपरं रोचते । न तु वीराणामित्यर्थः । प्रहवतां सादितमिदं त्वद्विधानामिति पाठे । विक्लवत्वादिगुणानां त्वद्विधानां वचः प्रहवतामिदं सादितम् । ईदृशं दुःखं प्राप्तं भवतीत्यर्थ इति तीर्थः ॥ ५ ॥

एवमादिपापिष्ठमन्त्रैरयं राजा नाशित इत्याह,—युद्ध इति । युद्धे प्राप्तकाले सति कापुरुषैः कुत्सितैर्भीरुभिः पुरुषैः । प्राङ्मन्त्र-काले प्रियवादिभिः । अतएव तदा राजानमनुगच्छद्भिर्भवद्भिः । एतद्राज्ञः सर्व्वं कृत्यं नाशितमित्यर्थः ॥ ६ ॥

किं नाशितं तदाह,—राजशेषेति । यदेवमतो राजानमिम-मासाद्य सुहृच्चिह्नं सौहार्दप्रच्छादितम् । अमित्रकममित्रकार्य्यं कृत-मिति शेषः ॥ ७ ॥

किं वृथा प्रलापेन इदानीं युद्धस्यैव न्याय्यत्वात्तदेव करोमी-त्याह,—एष इति । युद्धं प्रत्युद्यतोऽहम् । शत्रुनिर्जये तन्निमित्तं

एवमुक्तवतो वाक्यं कुम्भकर्णस्य धीमतः ।
प्रत्युवाच ततो वाक्यं प्रहसन् राक्षसाधिपः ॥ ९ ॥
महोदरोऽयं रामात्तु परित्रस्तो न संशयः ।
न हि रोचयते तात ! युद्धं युद्धविशारद ! ॥ १० ॥
कश्चिन्मे त्वत्समो नास्ति सौहृदेन बलेन च ।
गच्छ शत्रुवधाय त्वं कुम्भकर्ण ! जयाय च ॥ ११ ॥
शयानः शत्रुनाशार्थं भवान् सम्बोधितो मया ।
अयं हि कालः सुमहान् राक्षसानामरिन्दम ! ॥ १२ ॥
गच्छ शूलमादाय पाशहस्त इवान्तकः ।
वानरान् राजपुत्रौ च भक्षयादित्यतेजसौ ॥ १३ ॥
समालोक्य तु ते रूपं विद्रविष्यन्ति वानराः ।
रामलक्ष्मणयोश्चापि हृदये प्रस्फुटिष्यतः ॥ १४ ॥
एवमुक्त्वा महातेजाः कुम्भकर्णं महाबलम् ।
पुनर्जातमिवात्मानं मेने राक्षसपुङ्गवः ॥ १५ ॥

निष्यामि । भवतां दुर्मन्त्रिणां दुर्नयं दुर्मन्त्रमूलानर्थमाहवेन समीकर्तुं यामीत्यनुकर्षः ॥ ८ ॥

धीमत इति । शुलेति शेषः ॥ ९ ॥

प्रहासाशयं स्वयमेवाह,—महोदरोऽसमिति । तातेत्युपलालने ॥ १० ॥
॥ ११ ॥

अयं कालो युद्धगमनायेति शेषः ॥ १२ ॥ १३ ॥

कुम्भकर्णबलाभिज्ञो जानंस्तस्य पराक्रमम्।
बभूव मुदितो राजा शशाङ्क इव निर्मलः॥ १६॥
इत्येवमुक्तः संहृष्टो निर्जगाम महाबलः।
राज्ञस्तु वचनं श्रुत्वा योद्धुमुद्युक्तवांस्तदा॥ १७॥
आददे निशितं शूलं वेगाच्छत्रुनिबर्हणः।
सर्वं कालायसं दीप्तं तप्तकाञ्चनभूषणम्॥ १८॥
इन्द्राशनिसमप्रख्यं वज्रप्रतिमगौरवम्।
देवदानवगन्धर्वयक्षपन्नगसूदनम्॥ १९॥
रक्तमाल्यमहादामं स्वतश्चोद्गतपावकम्।
आदाय विपुलं शूलं शत्रुशोणितरञ्जितम्॥ २०॥
कुम्भकर्णो महातेजा रावणं वाक्यमब्रवीत्।
गमिष्याम्यहमेकाकी तिष्ठत्विह बलं महत्॥ २१॥
अद्य तान् क्षुधितः क्रुद्धो भक्षयिष्यामि वानरान्।
कुम्भकर्णवचः श्रुत्वा रावणो वाक्यमब्रवीत्॥ २२॥
सैन्यैः परिवृतो गच्छ शूलमुद्गरपाणिभिः।

प्रस्फुटिष्यतः विदीर्णा भविष्यतः॥ १४॥ १५॥ १६॥ १७॥

सर्वं कालायसम्। सर्वेष्ववयवेषु दण्डादिष्वपि कालायसनिर्मितम्॥ १८॥

इन्द्राशनिसमा प्रख्या कान्तिर्यस्य तम्॥ १९॥

वानरा हि महात्मानः शूराः सुव्यवसायिनः ॥ २३ ॥
एकाकिनं प्रमत्तं वा नयेयुर्दशनैः क्षयम् ।
तस्मात् परमदुर्धर्षैः सैन्यैः परिवृतो व्रज ।
रक्षसामहितं सर्वं शत्रुपक्षं निषूदय ॥ २४ ॥
अथासनात्समुत्पत्य स्रजं मणिकृतान्तराम् ।
आबबन्ध महातेजाः कुम्भकर्णस्य रावणः ॥ २५ ॥
अङ्गदान्यङ्गुलीवेष्टान् वराण्याभरणानि च ।
हारञ्च शशिसङ्काशमाबबन्ध महात्मनः ॥ २६ ॥
दिव्यानि च सुगन्धीनि माल्यदामानि रावणः ।
गात्रेषु सज्जयामास श्रोत्रयोश्चास्य कुण्डले ॥ २७ ॥
काञ्चनाङ्गदकेयूरनिष्काभरणभूषितः ।
कुम्भकर्णो बृहत्कर्णः सुहुतोऽग्निरिवाबभौ ॥ २८ ॥
श्रोणीसूत्रेण महता मेचकेन विराजता ।
अमृतोत्पादने नद्धो भुजङ्गेनेव मन्दरः ॥ २९ ॥

रत्नमाल्यान्येव महादामानि यस्य तम् । स्रतस्रोद्धूतपावकम् उद्धूतार्चिषम् ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

स्रजं काञ्चनीं मणिकृतान्तरां मणिरचितमध्यदेशाम् ॥ २५ ॥

अङ्गुलीवेष्टान् अङ्गुलीयकानि ॥ २६ ॥ २७ ॥

निष्कमुरोभूषणम् ॥ २८ ॥

श्रोणीसूत्रं कटिसूत्रम् ॥ २९ ॥

सकाञ्चनं भारसहं निवातं
विद्युत्प्रभं दीप्तमिवात्मभासा।
आबध्यमानः कवचं रराज
सन्ध्याभ्रसंवीत इवाद्रिराजः॥ ३०॥
सर्वाभरणसर्वाङ्गः शूलपाणिः स राक्षसः।
त्रिविक्रमकृतोत्साहो नारायण इवाबभौ॥ ३१॥
भ्रातरं सम्परिष्वज्य कृत्वा चापि प्रदक्षिणम्।
प्रणम्य शिरसा तस्मै प्रतस्थे स महाबलः॥ ३२॥
तमाशीर्भिः प्रशस्ताभिः प्रेषयामास रावणः।
शङ्खदुन्दुभिनिर्घोषैः सैन्यैश्चापि वरायुधैः॥ ३३॥
तं गजैश्च तुरङ्गैश्च स्यन्दनैश्चाम्बुदस्वनैः।
अनुजग्मुर्महात्मानो रथिनो रथिनां वरम्॥ ३४॥
सर्पैरुष्ट्रैः खरैश्चैव सिंहद्विपमृगद्विजैः।
अनुजग्मुश्च तं घोरं कुम्भकर्णं महाबलम्॥ ३५॥

भारसहं युद्धेऽभिघातसहम्। निवातम्। शस्त्राभेद्यन्तु यद्वर्म तन्निवातमुदाहृतम्। आबध्यमानः आबध्नन्। आर्षो विकरण-व्यत्ययः॥ ३०॥

सर्वाभरणसर्वाङ्गः सर्वाभरणयुक्तसर्वाङ्गः। नद्धाङ्ग इति पाठान्त-रम्। त्रिषु विक्रमेषु पादन्यासेषु कृतोत्साहः॥ ३१॥ ३२॥ ३३॥

अम्बुदस्वनैः स्यन्दनैश्च सह प्रेषयामासेति योजना॥ ३४॥

स पुष्पवर्षैरवकीर्य्यमाणो
धृतातपत्रः शितशूलपाणिः ।
महोत्कटः शोणितगन्धमत्तो
विनिर्ययौ दानवदेवशत्रुः ॥ ३६ ॥

पदातयश्च बहवो महासारा महाबलाः ।
अन्वयू राक्षसा भीमा भीमाक्षाः शस्त्रपाणयः ॥ ३७ ॥
रक्ताक्षाः सुबहुव्यामा नीलाञ्जनचयोपमाः ।
शूलानुद्यम्य खड्गांश्च निशितांश्च परश्वधान् ॥ ३८ ॥
भिन्दिपालांश्च परिघान् गदाश्च मुशलानि च ।
तालस्कन्धांश्च विपुलान् क्षेपणीयान् दुरासदान् ॥ ३९ ॥
अथान्यद्वपुरादाय दारुणं घोरदर्शनम् ।
निष्पपात महातेजाः कुम्भकर्णो महाबलः ॥ ४० ॥
धनुःशतपरीणाहः स षट्शतसमुच्छ्रितः ।
रौद्रः शकटचक्राक्षो महापर्वतसन्निभः ॥ ४१ ॥
सन्निपत्य च रक्षांसि दग्धशैलोपमो महान् ।

अनुजग्मुरिति । रावणप्रेषिता इति शेषः । सर्पादिभिर्वाहनैर्जग्मुः ॥ ३५ ॥ ३६ ॥ ३७ ॥

स करयोर्बाह्वोस्ततयोस्तिर्य्यगन्तरालं व्यामः । सुबहुव्यामाः सुतरां बहुव्यामप्रमाणाः ॥ ३८ ॥ ३९ ॥

अथान्यत् सालङ्कारसौम्यादन्यत् ॥ ४० ॥

कुम्भकर्णो महावक्त्रः प्रहसन्निदमब्रवीत् ॥ ४२ ॥
अद्य वानरमुख्यानां तानि यूथानि भागशः।
निर्दहिष्यामि संक्रुद्धः पतङ्गानिव पावकः ॥ ४३ ॥
नापराध्यन्ति मे कामं वानरा वनचारिणः।
जातिरस्मद्विधानां सा पुरोद्यानविभूषणम् ॥ ४४ ॥
पुररोधस्य मूलन्तु राघवः सहलक्ष्मणः।
हते तस्मिन् हतं सर्वं तं वधिष्यामि संयुगे ॥ ४५ ॥
एवं तस्य ब्रुवाणस्य कुम्भकर्णस्य रक्षसः।
नादं चक्रुर्महाघोरं कम्पयन्त इवार्णवम् ॥ ४६ ॥
तस्य निष्पततस्तूर्णं कुम्भकर्णस्य धीमतः।
बभूवुर्घोररूपाणि निमित्तानि समन्ततः ॥ ४७ ॥

तस्यैव प्रदर्शनम्। धनुःशतेति। परिणाहो विशालता तिर्य्यग्देहप्रमाणमिदम्। षट्शतधनुःप्रमाण ऊर्द्ध्वोच्छ्रायः ॥ ४१ ॥

सन्निपत्य व्यूह्य ॥ ४२ ॥ ४३ ॥

वानरमुख्यानां यूथानि हनिष्यामीत्युक्त्वा निरपराधास्ते न हन्तव्याः किन्तु राम एव सर्वापराधमूलं हन्तव्य इत्याह,—नापराध्यन्तीति। ते नापराध्यन्ति। स्वत इति शेषः। किन्तु सा जातिर्वानरजातिरस्मद्विधानां पुरोद्यानानां विभूषणमलङ्कारः ॥ ४४ ॥

अतस्तैः सह पुररोधस्य मूलं राघव एव हन्तव्यस्तस्मिन् हते सर्वं हतं भवति। अतस्तमेव युधि वधिष्यामि ॥ ४५ ॥

उल्काशनियुता मेघा बभूवुर्गर्दभारुणाः ।
ससागरवना चैव वसुधा समकम्पत ॥ ४८ ॥
घोररूपाः शिवा नेदुः सज्वालकवलैर्मुखैः ।
मण्डलान्यपसव्यानि बबन्धुश्च विहङ्गमाः ॥ ४९ ॥
निष्पपात च गृध्रोऽस्य शूले वै पथि गच्छतः ।
प्रास्फुरन्नयनञ्चास्य सव्यो बाहुरकम्पत ॥ ५० ॥
निष्पपात तदा चोल्का ज्वलन्ती भीमनिःस्वना ।
आदित्यो निष्प्रभश्चासीन्न वाति च सुखोऽनिलः ॥ ५१ ॥
अचिन्तयन् महोत्पातानुदितान् रोमहर्षणान् ।
निर्य्ययौ कुम्भकर्णस्तु कृतान्तबलचोदितः ॥ ५२ ॥
स लङ्घयित्वा प्राकारं पद्भ्यां पर्वतसन्निभः ।
स ददर्श घनप्रख्यं वानरानीकमद्भुतम् ॥ ५३ ॥
ते दृष्ट्वा राक्षसश्रेष्ठं वानराः पर्वतोपमम् ।
वायुनुन्ना इव घना ययुः सर्वा दिशस्तदा ॥ ५४ ॥

रक्षसः । वाक्यं श्रुत्वेति शेषः । नादयन्तः राक्षसा इति शेषः ॥ ४६ ॥ ४७ ॥

गर्दभारुणाः गर्दभधूम्राः ॥ ४८ ॥

सज्वालकवलैः साङ्गारपिण्डैः ॥ ४९ ॥

नयनं वामम् ॥ ५० ॥ ५१ ॥

अचिन्तयन् अगणयन् ॥ ५२ ॥

तद्वानरानीकमतिप्रचण्डं

दिशो द्रवद्भिन्नमिवाभ्रजालम् ।

स कुम्भकर्णः समवेक्ष्य हर्षा-

न्ननाद भूयो घनवद्घनाभः ॥ ५५ ॥

ते तस्य घोरं निनदं निशम्य

यथा निनादं दिवि वारिदस्य ।

पेतुर्धरण्यां बहवः प्लवङ्गा

निकृत्तमूला इव शालवृक्षाः ॥ ५६ ॥

विपुलपरिघवान् स कुम्भकर्णो

रिपुनिधनाय विनिःसृतो महात्मा ।

कपिगणभयमाददत्सुभीमं

प्रभुरिव किङ्करदण्डवान् युगान्ते ॥ ५७ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे

पञ्चषष्टितमः सर्गः ॥ ६५ ॥

तदहनत्त्वमवाहनाभावात् पद्भ्यामिति ॥ ५२ ॥ ५४ ॥ ५५ ॥ ५६ ॥

विपुलपरिघवानिति । शूलवदिदमप्यस्यायुधम् । किङ्करदण्डवान् किङ्कराः संहारपरिकराः कालदण्डा अस्य सन्ति तथा । युगान्ते प्रभुः कालाग्निरुद्र इव विनिःसृतः ॥ ५७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके

युद्धकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

# षट्षष्टितमः सर्गः



स लङ्घयित्वा प्राकारं गिरिकूटोपमो महान् ।
निर्य्ययौ नगरात्तूर्णं कुम्भकर्णो महाबलः ॥ १ ॥
ननाद च महानादं समुद्रमभिनादयन् ।
विजयन्निव निर्घातान् विधमन्निव पर्वतान् ॥ २ ॥
तमवध्यं मघवता यमेन वरुणेन वा ।
प्रेक्ष्य भीमाक्षमायान्तं वानरा विप्रदुद्रुवुः ॥ ३ ॥
तांस्तु विप्रद्रुतान् दृष्ट्वा राजपुत्रोऽङ्गदोऽब्रवीत् ।
नलं नीलं गवाक्षञ्च कुमुदञ्च महाबलम् ॥ ४ ॥
आत्मनस्तानि विस्मृत्य वीर्य्याण्यभिजनानि च ।
क्व गच्छत भयत्रस्ताः प्राकृता हरयो यथा ॥ ५ ॥
साधु सौम्या ! निवर्त्तध्वं किं प्राणान् परिरक्षथ ।
नालं युद्धाय वै रक्षो महतीयं विभीषिका ॥ ६ ॥
महतीमुत्थितामेनां राक्षसानां विभीषिकाम् ।

स इति ॥ १ ॥
निर्घातान् अशनिनिर्घोषान् ॥ २ ॥ ३ ॥ ४ ॥
आत्मनः आत्मसम्बन्धीनि वीर्य्याणि पराक्रमान् ॥ ५ ॥

विक्रमादिर्धमिष्यामो निवर्त्तध्वं प्लवङ्गमाः ॥ ७ ॥
कृच्छ्रेण तु समाश्वस्य सङ्गम्य च ततस्ततः।
वृक्षान् गृहीत्वा हरयः सम्प्रतस्थू रणाजिरे ॥ ८ ॥
ते निवर्त्य तु संरब्धाः कुम्भकर्णं वनौकसः।
निर्जघ्नुः परमक्रुद्धाः समदा इव कुञ्जराः ॥ ९ ॥
प्रांशुभिर्गिरिशृङ्गैश्च शिलाभिश्च महाबलाः।
पादपैः पुष्पिताग्रैश्च हन्यमानो न कम्पते ॥ १० ॥
तस्य गात्रेषु पतिता भिद्यन्ते बहवः शिलाः।
पादपाः पुष्पिताग्राश्च भग्नाः पेतुर्महीतले ॥ ११ ॥
सोऽपि सैन्यानि संक्रुद्धो वानराणां महौजसाम्।
ममन्थ परमायत्तो वनान्यग्निरिवोत्थितः ॥ १२ ॥
लोहितार्द्रास्तु बहवः शेरते वानरर्षभाः।
निरस्ताः पतिता भूमौ ताम्रपुष्पा इव द्रुमाः ॥ १३ ॥
लङ्घयन्तः प्रधावन्तो वानरा नावलोकयन्।
केचित् समुद्रे पतिताः केचित् गहनमाश्रिताः ॥ १४ ॥
वध्यमानास्तु ते वीरा राक्षसेन च लीलया।

एतदर्थो युद्धायास्माभिर्नालं न समर्थम् ॥ ६ ॥ ७ ॥ ८ ॥
निवर्त्य निवृत्ता भूत्वा ॥ ९ ॥
पांसुभिरच ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

सागरं येन ते तीर्णाः पथा तेनैव दुद्रुवुः ॥ १५ ॥
ते स्थलानि तदा निम्नं विवर्णवदना भयात्।
ऋक्षा वृक्षान् समारूढ़ाः केचित् पर्वतमाश्रिताः ॥ १६ ॥
निपेतुः केचिदपरे केचिन्नैवावतस्थिरे।
केचिद्भूमौ निपतिताः केचित्सुप्ता मृता इव ॥ १७ ॥
तां समीक्ष्याङ्गदो भग्नान् वानरानिदमब्रवीत्।
अवतिष्ठत युध्यामो निवर्त्तध्वं प्लवङ्गमाः ॥ १८ ॥
भग्नानां वो न पश्यामि परिक्रम्य महीमिमाम्।
स्थानं सर्वे निवर्त्तध्वं किं प्राणान् परिरक्षथ ॥ १९ ॥
निरायुधानां क्रमतामसङ्गगतिपौरुषाः।
दारा ह्युपहसिष्यन्ति स वै घातः सुजीवताम् ॥ २० ॥

नावलोकयन् अग्रपृष्ठदेशं नालोकितवन्तः ॥ १४ ॥ १५ ॥
स्थलानि प्रदुद्रुवुरित्यनुकर्षः ॥ १६ ॥
निपेतुः। युद्धार्थमिति शेषः ॥ १७ ॥ १८ ॥

युद्धे भग्नानां वो युष्माकं सर्वां महीं परिक्रम्यापि गत्वापि स्थानं प्रतिष्ठां न पश्यामि। सुग्रीवाज्ञां विनागतानां वध एव सर्वथेति भावः। अतः सर्वे निवर्त्तध्वम् ॥ १९ ॥

हे ऽसङ्गगतिपौरुषाः निरायुधानां पाषाणवृक्षाद्यायुधरहितानां द्रवतां दारा उपहसिष्यन्ति। स स्वदारोपहासो जीवतां युष्माकं घातो मृत्योरप्यधिकदुःखदो भविष्यति ॥ २० ॥

कुलेषु जाताः सर्वेऽस्मिन् विस्तीर्णेषु महत्सु च।
क गच्छत भयत्रस्ताः प्राकृता हरयो यथा।
अनार्य्याः खलु यद्भीतास्त्यक्त्वा वीर्य्यं प्रधावत॥ २१॥
विकत्थनानि वो यानि भवद्भिर्जनसंसदि।
तानि वः क नु यातानि सोदग्राणि हितानि च॥ २२॥
भीरोः प्रवादाः श्रूयन्ते यस्तु जीवति धिक्कृतः।
मार्गः सत्पुरुषैर्जुष्टः सेव्यतां त्यज्यतां भयम्॥ २३॥
शयामहे वा निहताः पृथिव्यामल्पजीविताः।
प्राप्नुयामो ब्रह्मलोकं दुष्प्रापञ्च कुयोधिभिः॥ २४॥

यद्यस्माद्वीर्य्यं पराक्रमं त्यक्त्वा भीताः सन्तः प्रधावत ततोऽनार्य्याः स्वामिद्रोहिणः खलु॥ २१॥

वो युष्माकं जनसंसदि यानि विकत्थनानि सोदग्राणि स्वस्वोदग्रताप्रतिपादनसहितानि च स्वामिहितकराणि च कृतानि तानि सर्वाण्ययायुध्यतां क यातानि॥ २२॥

यः सत्पुरुषैर्धिक्कृतो जीवति तस्य जीवनं धिगित्येवं भीरूणां वीरैः क्रियमाणाः प्रवादा धिक्काररूपाः श्रूयन्ते मरणादप्यधिकदुःखदाः। अतो भयं त्यज्यताम्। सत्पुरुषैर्जुष्टो मार्गो युद्धं सेव्यताम्॥ २३॥

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीमित्याशयवानाह,—शयामहे इति श्लोकद्वयेन। यदि दैवगत्या निहताः शयामहे तदा कुयोधिभिर्दुष्प्राप्यं ब्रह्मलोकं प्राप्नुयामः। वाशब्दो व्यवस्थितविकल्पे॥ २४॥

अवाप्नुयाम: कीर्त्तिं वा निहत्वा शत्रुमाहवे।
निहता वीरलोकस्य भोच्यामो वसु वानरा: ॥ २५ ॥
न कुम्भकर्ण: काकुत्स्थं दृष्ट्वा जीवन् गमिष्यति।
दीप्यमानमिवासाद्य पतङ्गो ज्वलनं यथा ॥ २६ ॥
पलायनेन चोद्दिष्टा: प्राणान् रक्षामहे वयम्।
एकेन बहवो भग्ना यशोनाशं गमिष्यति॥ २७ ॥
एवं ब्रुवाणं तं शूरमङ्गदं कनकाङ्गदम्।
द्रवमाणास्ततो वाक्यमूचु: शूरविगर्हितम् ॥ २८ ॥
कृतं न: कदनं घोरं कुम्भकर्णेन रक्षसा।
न स्थानकालो गच्छामो दयितं जीवितं हि न: ॥ २९ ॥
एतावदुक्त्वा वचनं सर्वे ते भेजिरे दिश:।

शत्रुमाहवे निहत्वा निहत्य कीर्त्तिं वा प्राप्नुयामः। उक्तमर्थं दार्ढ्याय पुनराह,—निहता इति। निहतास्तेद्वीरलोकस्य वीरैः सूर्य्यद्वारा प्राप्यस्य ब्रह्मलोकस्य वसु धनं हिरण्यगर्भभूमानन्दं भोच्यामोऽनुभविष्यामः। जीवितं वीरलोकस्य मोच्याम इति पाठोऽपाङ्क्तः। नापि तत्रार्थसामञ्जस्यम्। तत्र हि ब्रह्मलोकस्य वसुमूल्यभूतं जीवितं मोच्याम इत्यर्थं तीर्थ आह ॥ २५ ॥

ननु कथमपि जयप्रत्याशाभावेन स्थित्वा न प्रयोजनमत आह,—न कुम्भकर्ण इति ॥ २६ ॥

उद्दिष्टा महावीरेषु गणिता बहवो वयमेकेन भग्नाः पलायनेन

भीमं भीमाक्षमायान्तं दृष्ट्वा वानरयूथपाः ॥ ३० ॥
द्रवमाणास्तु ते वीरा अङ्गदेन वलीमुखाः ।
सान्त्वनैश्चानुमानैश्च ततः सर्वे निवर्त्तिताः ॥ ३१ ॥
प्रहर्षमुपनीताश्च वालिपुत्रेण धीमता ।
आज्ञाप्रतीक्षास्तस्थुश्च सर्वे वानरयूथपाः ॥ ३२ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
षट्षष्टितमः सर्गः ॥ ६६ ॥

यदि प्राणान् रक्षामहे तदा यशोनाशं गमिष्यति। यदोद्दिष्टा एते पलायिता इति जनैर्निर्दिष्टा इत्यर्थः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥
अनुमानैर्नागपाशमुक्तिमप्रतालभेदरूपैर्जयानुमापकैः ॥ ३१ ॥
आज्ञाप्रतीक्षा युद्धानुज्ञाप्रतीक्षाः ॥ ३२ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

---

# सप्तषष्टितमः सर्गः ।

---

ते निवृत्ता महाकायाः श्रुत्वाङ्गदवचस्तदा ।
नैष्ठिकीं बुद्धिमास्थाय सर्वे संग्रामकाङ्क्षिणः ॥ १ ॥
समुदीरितवीर्य्यास्ते समारोपितविक्रमाः ।
पर्य्यवस्थापिता वाक्यैरङ्गदेन बलीयसा ॥ २ ॥
प्रयाताश्च गता हर्षं मरणे कृतनिश्चयाः ।
चक्रुः सुतुमुलं युद्धं वानरास्त्यक्तजीविताः ॥ ३ ॥
अथ वृक्षान् महाकायाः सानूनि सुमहान्ति च ।
वानरास्तूर्णमुद्यम्य कुम्भकर्णमभिद्रवन् ॥ ४ ॥
कुम्भकर्णः सुसंक्रुद्धो गदामुद्यम्य वीर्य्यवान् ।
धर्षयन् स महाकायः समन्ताद्व्यक्षिपद्रिपून् ॥ ५ ॥
शतानि सप्त चाष्टौ च सहस्राणि च वानराः ।
प्रकीर्णाः शेरते भूमौ कुम्भकर्णेन ताड़िताः ॥ ६ ॥

अत्र सर्गावच्छेदोऽसाम्प्रदायिकः । एकप्रकरणत्वात् । वृत्तभेदाभावाच्चेति कतकः । उक्तार्थानुवादस्ते निवृत्ता इति । नैष्ठिकीं स्थिराम् । निष्ठानाशस्तत्सम्बन्धिनीं मरणपर्य्यवसायिनीमित्यर्थः ॥ १ ॥

समुदीरितवीर्य्याः समुदीरितविक्रमाः कथितात्मीयपूर्वपराक्रमाः ।

षोड़शाष्टौ च दश च विंशत्त्रिंशत्तथैव च।
परिक्षिप्य च बाहुभ्यां खादन् स परिधावति।
भक्षयन् भृशसंक्रुद्धो गरुड़ः पन्नगानिव ॥ ७ ॥
कृच्छ्रेण च समाश्वस्ताः सङ्गम्य च ततस्ततः।
वृक्षाद्रिहस्ता हरयस्तस्थुः संग्राममूर्धनि ॥ ८ ॥
ततः पर्वतमुत्पाट्य द्विविदः प्लवगर्षभः।
दुद्राव गिरिशृङ्गाभं विलम्ब इव तोयदः ॥ ९ ॥
तं समुत्पाट्य चिक्षेप कुम्भकर्णाय वानरः।
तमप्राप्य महाकायं तस्य सैन्येऽपतत्ततः ॥ १० ॥
ममर्दाश्वान् गजांश्चापि रथांश्चापि गजोत्तमान्।
तानि चान्यानि रक्षांसि एकश्चान्यत् गिरेः शिरः ॥ ११ ॥
तच्छैलवेगाभिहतं हताश्वं हतसारथिम्।
रक्षसां रुधिरक्लिन्नं बभूवायोधनं महत् ॥ १२ ॥

समारोपितविक्रमा इति गृहीतविक्रमाः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ॥ ७ ॥ ८ ॥

विशेषेण लम्बत इति विलम्बः ॥ ९ ॥

तमप्राप्य तं कुम्भकर्णम्। तस्य कुम्भकर्णस्य सैन्ये ॥ १० ॥

तानि प्रसिद्धानि च रक्षांस्युद्दिश्य अन्यदेकं गिरेः शिरः प्रक्षिप्तचिक्षेप ॥ ११ ॥ १२ ॥

रथिनो वानरेन्द्राणां शरैः कालान्तकोपमैः ।
शिरांसि नदतां जह्रुः सहसा भीमनिःस्वनाः ॥ १३ ॥
वानराश्च महात्मानः समुत्पाट्य महाद्रुमान् ।
रथानश्वान् गजानुष्ट्रान् राक्षसानभ्यसूदयन् ॥ १४ ॥
हनूमान् शैलशृङ्गाणि शिलाश्च विविधान् द्रुमान् ।
ववर्ष कुम्भकर्णस्य शिरस्यम्बरमास्थितः ॥ १५ ॥
तानि पर्वतशृङ्गाणि शूलेन स बिभेद ह ।
बभञ्ज वृक्षवर्षञ्च कुम्भकर्णो महाबलः ॥ १६ ॥
ततो हरीणां तदनीकमुग्रं
दुद्राव शूलं निशितं प्रगृह्य ।
तस्थौ स तस्यापततः पुरस्तान्
महीधराग्रं हनुमान् प्रगृह्य ॥ १७ ॥
सकुम्भकर्णं कुपितो जघान
वेगेन शैलोत्तमभीमकायम् ।
सञ्चुक्षुभे तेन तदाभिभूतो
मेदार्द्रगात्रो रुधिरावसिक्तः ॥ १८ ॥

रथिनो राक्षसाः शरैर्वानरेन्द्राणां शिरांसि जह्रुः ॥ १३ ॥ १४ ॥
॥ १५ ॥ १६ ॥
हरीणामनीकं कर्म । तस्य कुम्भकर्णस्य पुरस्तात् ॥ १७ ॥

स शूलमाविध्य तड़ित्प्रकाशं
गिरिर्यथा प्रज्वलिताग्निशृङ्गम्।
बाह्वन्तरे मारुतिमाजघान
गुहोऽचलं क्रौञ्चमिवोग्रशक्त्या ॥ १८ ॥
स शूलनिर्भिन्नमहाभुजान्तरः
प्रविह्वलः शोणितमुद्वमन् रुषा।
ननाद भीमं हनुमान् महाहवे
युगान्तमेघस्तनितस्वनोपमम् ॥ २० ॥
ततो विनेदुः सहसा प्रहृष्टा
रक्षोगणास्तं व्यथितं समीक्ष्य।
प्लवङ्गमास्तु व्यथिता भयार्त्ताः
प्रदुद्रुवुः संयति कुम्भकर्णात् ॥ २१ ॥

ततस्तु नीलो बलवान् पर्य्यवस्थापयन्बलम्।
विचिक्षेप शैलाग्रं कुम्भकर्णाय धीमते ॥ २२ ॥
तदापतन्तं सम्प्रेक्ष्य मुष्टिनाभिजघान ह।
मुष्टिप्रहाराभिहतं तच्छैलाग्रं व्यशीर्य्यत।
सविस्फुलिङ्गं सज्वालं निपपात महीतले ॥ २३ ॥
ऋषभः शरभो नीलो गवाक्षो गन्धमादनः।

तेन हनुमन्मुक्तगिरिप्रक्षेपेण सञ्चुक्षुभे ॥ १८ ॥ १९ ॥

पञ्च वानरशार्दूलाः कुम्भकर्णमुपाद्रवन् ॥ २४ ॥
शैलैर्वृक्षैस्तलैः पादैर्मुष्टिभिश्च महाबलाः।
कुम्भकर्णं महाकायं निजघ्नुः सर्वतो युधि ॥ २५ ॥
स्पर्शानिव प्रहारांस्तान् वेदयानो न विव्यथे।
ऋषभन्तु महावेगं बाहुभ्यां परिषस्वजे ॥ २६ ॥
कुम्भकर्णभुजाभ्यान्तु पीड़ितो वानरर्षभः।
निपपातर्षभो भीमः प्रमुखागतशोणितः ॥ २७ ॥
मुष्टिना शरभं हत्वा जानुना नीलमाहवे।
आजघान गवाक्षन्तु तलेनेन्द्ररिपुस्तदा ॥ २८ ॥
दत्तप्रहारव्यथिता मुमुहुः शोणितोक्षिताः।
निपेतुस्ते तु मेदिन्यां निकृत्ता इव किंशुकाः ॥ २९ ॥
तेषु वानरमुख्येषु पातितेषु महात्मसु।
वानराणां सहस्राणि कुम्भकर्णं प्रदुद्रुवुः ॥ ३० ॥
तं शैलमिव शैलाभाः सर्वे तु प्लवगर्षभाः।
समारुह्य समुत्पत्य ददंशुः प्लवगर्षभाः ॥ ३१ ॥
तं नखैर्दशनैश्चापि मुष्टिभिर्बाहुभिस्तथा।

ननाद भीमं शूलाभिघातजवजेति शेषः। युगान्ते मेघस्तनितस्य यः स्वनस्तदुपमम् ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥
स्पर्शानिव मालादिस्पर्शानिव वेदयानोजानन् ॥ २६ ॥

कुम्भकर्णं महाबाहुं निजघ्नुः प्लवगर्षभाः ॥ २२ ॥
स वानरसहस्रैस्तु विचितः पर्वतोपमः ।
रराज राक्षसव्याघ्रो गिरिरात्मरुहैरिव ॥ २३ ॥
बाहुभ्यां वानरान् सर्वान् प्रगृह्य स महाबलः ।
भक्षयामास संक्रुद्धो गरुडः पन्नगानिव ॥ २४ ॥
प्रक्षिप्ताः कुम्भकर्णेन वक्त्रे पातालसन्निभे ।
नासापुटाभ्यां सञ्जग्मुः कर्णाभ्याञ्चैव वानराः ॥ २५ ॥
भक्षयन् भृशसंक्रुद्धो हरीन् पर्वतसन्निभः ।
बभञ्ज वानरान् सर्वान् संक्रुद्धो राक्षसोत्तमः ॥ २६ ॥
मांसशोणितसंक्लेदां कुर्वन् भूमिं स राक्षसः ।
चचार हरिसैन्येषु कालाग्निरिव मूर्च्छितः ॥ २७ ॥
वज्रहस्तो यथा शक्रः पाशहस्त इवान्तकः ।
शूलहस्तो बभौ युद्धे कुम्भकर्णो महाबलः ॥ २८ ॥
यथा शुष्काण्यरण्यानि ग्रीष्मे दहति पावकः ।
तथा वानरसैन्यानि कुम्भकर्णो ददाह सः ॥ २९ ॥
ततस्ते वध्यमानास्तु हतयूथाः प्लवङ्गमाः ।
वानरा भयसंविग्ना विनेदुर्विकृतैः स्वरैः ॥ ४० ॥

प्रमुखेति । प्रकर्षेण मुखे आगतं शोणितं यस्य सः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

अनेकशो वध्यमानाः कुम्भकर्णेन वानराः ।
राघवं शरणं जग्मुर्व्यथिता भिन्नचेतसः ॥ ४१ ॥
प्रभग्नान् वानरान् दृष्ट्वा वज्रहस्तात्मजात्मजः ।
अभ्यधावत वेगेन कुम्भकर्णं महाहवे ॥ ४२ ॥
शैलशृङ्गं महत् गृह्य विनदन् स मुहुर्मुहुः ।
त्रासयन् राक्षसान् सर्वान् कुम्भकर्णपदानुगान् ॥ ४३ ॥
चिक्षेप शैलशिखरं कुम्भकर्णस्य मूर्धनि ।
स तेनाभिहतो मूर्ध्नि शैलेनेन्द्ररिपुस्तदा ॥ ४४ ॥
कुम्भकर्णः प्रजज्वाल क्रोधेन महता तदा ।
सोऽभ्यधावत वेगेन वालिपुत्रममर्षणम् ॥ ४५ ॥
कुम्भकर्णो महानादस्त्रासयन् सर्ववानरान् ।
शूलं ससर्ज वै रोषादङ्गदे तु महाबलः ॥ ४६ ॥
तदापतन्तं बलवान् युद्धमार्गविशारदः ।
लाघवान्मोचयामास बलवान् वानरर्षभः ॥ ४७ ॥
उत्पत्य चैनं तरसा तलेनोरस्यताड़यत् ।
स तेनाभिहतः कोपात् प्रमुमोहाचलोपमः ॥ ४८ ॥
स लब्धसंज्ञोऽतिबलो मुष्टिं संगृह्य राक्षसः ।

विचितो व्याघ्रः । मूर्च्छित इति पाठान्तरम् । आत्मबहैर्दन्तैः ॥ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥
वज्रहस्तात्मजस्य वालिनः पुत्रोऽङ्गदः ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

अपहासेन चिक्षेप विसंज्ञः स पपात ह ॥ ४९ ॥
तस्मिन् प्लवगशार्दूले विसंज्ञे पतिते भुवि।
तच्छूलं समुपादाय सुग्रीवमभिदुद्रुवे ॥ ५० ॥
तमापतन्तं सम्प्रेक्ष्य कुम्भकर्णं महाबलम्।
उत्पपात तदा वीरः सुग्रीवो वानराधिपः ॥ ५१ ॥
स पर्वताग्रमुत्क्षिप्य समाविध्य महाबलः।
अभिदुद्राव वेगेन कुम्भकर्णं महाबलम् ॥ ५२ ॥
तमापतन्तं सम्प्रेक्ष्य कुम्भकर्णः प्लवङ्गमम्।
तस्थौ विवृत्तसर्वाङ्गो वानरेन्द्रस्य सम्मुखः ॥ ५३ ॥
कपिशोणितदिग्धाङ्गं भक्षयन्तं महाकपीन्।
कुम्भकर्णं स्थितं दृष्ट्वा सुग्रीवो वाक्यमब्रवीत् ॥ ५४ ॥
पातिताश्च त्वया वीराः कृतं कर्म सुदुष्करम्।
भक्षितानि च सैन्यानि प्राप्तं ते परमं यशः ॥ ५५ ॥
त्यज तद्वानरानीकं प्राकृतैः किं करिष्यसि।
सहस्वैकं निपातं मे पर्वतस्यास्य राक्षस ! ॥ ५६
तद्वाक्यं हरिराजस्य सत्वधैर्य्यसमन्वितम्।
श्रुत्वा राक्षसशार्दूलः कुम्भकर्णोऽब्रवीद्वचः ॥ ५७ ॥

तदापतन्तम्। पुंस्त्वमार्षम् ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥

प्रजापतेस्तु पौत्रस्त्वं तथैवर्चरजःसुतः ।
धृतिपौरुषसम्पन्नस्तस्माद्गर्जसि वानर ! ॥ ५८ ॥

स कुम्भकर्णस्य वचो निशम्य
व्याविध्य शैलं सहसा मुमोच ।
तेनाजघानोरसि कुम्भकर्णं
शैलेन वज्राशनिसन्निभेन ॥ ५९ ॥

तच्छैलशृङ्गं सहसा विभिन्नं
भुजान्तरे तस्य तदा विशाले ।
ततो विषेदुः सहसा प्लवङ्गा
रक्षोगणाश्चापि मुदा विनेदुः ॥ ६० ॥

स शैलशृङ्गाभिहतश्चुकोप
ननाद रोषाच्च विवृत्य वक्त्रं ।
व्याविध्य शूलञ्च तड़ित्प्रकाशं
चिक्षेप हर्य्यृक्षपतेर्वधाय ॥ ६१ ॥

तत् कुम्भकर्णस्य भुजप्रणुन्नं
शूलं शितं काञ्चनदामयष्टिम् ।
क्षिप्रं समुत्पत्य निगृह्य दोर्भ्यां
बभञ्ज वेगेन सुतोऽनिलस्य ॥ ६२ ॥

प्रजापतेः पौत्रः । चतुर्मुखजृम्भणजनितऋक्षरजःपुत्रत्वात् सुग्रीवस्य ब्रह्मपौत्रत्वम् ॥ ५८ ॥

कृत भारसहस्रस्य शूलं कालायसं महत्।
बभञ्ज जानुमारोप्य तदा हृष्टः प्लवङ्गमः॥ ६३॥
शूलं भग्नं हनुमता दृष्ट्वा वानरवाहिनी।
हृष्टा ननाद बहुशः सर्वतश्चापि दुद्रुवे॥ ६४॥
बभूवाथ परित्रस्तो राक्षसो विमुखोऽभवत्।
सिंहनादञ्च ते चक्रुः प्रहृष्टा वनगोचराः।
मारुतिं पूजयाञ्चक्रुर्दृष्ट्वा शूलं तथागतम्॥ ६५॥

स तत्तथा भग्नमवेक्ष्य शूलं
चुकोप रक्षोऽधिपतिर्महात्मा।
उत्पाट्य लङ्कामलयात् स शृङ्गं
जघान सुग्रीवमुपेत्य तेन॥ ६६॥
सशैलशृङ्गाभिहतो विसंज्ञः
पपात भूमौ युधि वानरेन्द्रः।
तं वीक्ष्य भूमौ पतितं विसंज्ञं
नेदुः प्रहृष्टा युधि यातुधानाः॥ ६७॥
समभ्युपेत्याद्भुतघोरवीर्य्यं
स कुम्भकर्णो युधि वानरेन्द्रम्।

व्याविध्य सन्तोल्य॥ ५९॥ ६०॥ ६१॥ ६२॥ ६३॥ ६४॥ ६५॥
लङ्कामलयात् लङ्कासमीपवर्त्तिमलयात॥ ६६॥ ६७॥

जहार सुग्रीवमभिप्रगृह्य
यथानिलो मेघमिव प्रचण्डः ॥ ६८ ॥
स तं महामेघनिकाशरूपं
उत्पाट्य गच्छन् युधि कुम्भकर्णः ।
रराज मेरुप्रतिमानरूपो
मेरुर्यथा व्युच्छ्रितघोरशृङ्गः ॥ ६९ ॥
ततस्तमादाय जगाम वीरः
संस्तूयमानो युधि राक्षसेन्द्रः ।
शृण्वन्निनादं त्रिदिवालयानां
प्लवङ्गराजग्रहविस्मितानाम् ॥ ७० ॥
ततस्तमादाय तदा स मेने
हरीन्द्रमिन्द्रोपममिन्द्रवीर्य्यः ।
अस्मिन् हृते सर्वमिदं हृतं स्यात्
सराघवं सैन्यमितीन्द्रशत्रुः ॥ ७१ ॥

विद्रुतां वाहिनीं दृष्ट्वा वानराणामितस्ततः ।
कुम्भकर्णेन सुग्रीवं गृहीतञ्चापि वानरम् ॥ ७२ ॥
हनूमांश्चिन्तयामास मतिमान् मारुतात्मजः ।
एवं गृहीते सुग्रीवे किं कर्त्तव्यं मया भवेत् ॥ ७३ ॥

अभिगृह्य कक्षपुटे कृत्वा जहार सैन्यमध्यादन्यदेशं निनाय ॥ ६८ ॥
विशेषेण उच्छ्रितान्युन्नतानि घोराणि शृङ्गाणि यस्य सः ॥ ६९ ॥

यत्त्विह न्याय्यं मया कर्त्तुं तत् करिष्याम्यसंशयम्।
भूत्वा पर्वतसंकाशो नाशयिष्यामि राक्षसम् ॥ ७४ ॥

मया हते संयति कुम्भकर्णे
महाबले मुष्टिविशीर्णदेहे।
विमोक्षिते वानरपार्थिवे च
भवन्तु हृष्टाः प्लवगाः समग्राः ॥ ७५ ॥

अथवा स्वयमप्येष मोक्षं प्राप्स्यति वानरः।
गृहीतोऽयं यदि भवेत् त्रिदशैः सासुरोरगैः ॥ ७६ ॥

मन्ये न तावदात्मानं बुध्यते वानराधिपः।
शैलप्रहाराभिहतः कुम्भकर्णेन संयुगे ॥ ७७ ॥

अयं मुहूर्त्तात् सुग्रीवो लब्धसंज्ञो महाहवे।
आत्मनो वानराणाञ्च यत्पथ्यं तत् करिष्यति ॥ ७८ ॥

ततस्तमादाय जगामेति। लङ्कामिति शेषः। त्रिदिवालयानां निनादं दुःखजं प्रत्यवन् ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥

अथवैष वानरः वानरराजो महाबलत्वात् स्वयमेव कुम्भकर्णान्मोक्षं प्राप्स्यति। यदि न मोचयिष्यत्यात्मानं तदा मोचयितव्यो मयेति क्षणमात्रं प्रतीक्ष्य स्थितः। सासुरोरगैस्त्रिदशैर्गृहीतोऽपि यद्ययं भवेत्तथापि महाबलत्वात् स्वयमेव मोक्षं प्राप्स्यति। किं पुनरनेन राक्षसापसदेनेति भावः ॥ ७६ ॥

कथं तर्हि नेदानीं मोचयतीत्यत्राह,—मन्ये इति। मोहवशादात्मानं परेण गृहीतं न बुध्यत इति मन्ये इत्यर्थः ॥ ७७ ॥ ७८ ॥

मया तु मोचितस्यास्य सुग्रीवस्य महात्मनः।
अप्रीतिश्च भवेत् कष्टा कीर्त्तिनाशश्च शाश्वतः॥ ७९ ॥
तस्मान् मुहूर्त्तं काङ्क्षिष्ये विक्रमं मोचितस्य तु।
भिन्नञ्च वानरानीकं तावदाश्वासयाम्यहम्॥ ८० ॥
इत्येवं चिन्तयित्वाथ हनूमान् मारुतात्मजः।
भूयः संस्तम्भयामास वानराणां महाचमूम्॥ ८१ ॥

स कुम्भकर्णोऽथ विवेश लङ्कां
स्फुरन्तमादाय महाहरिं तम्।
विमानचर्य्यागृहगोपुरस्थैः
पुष्पाग्र्यवर्षैरभिपूज्यमानः॥ ८२ ॥

लाजगन्धोदवर्षस्तु सेव्यमानः शनैः शनैः।
राजवीथ्यास्तु शीतलात् संज्ञां प्राप महाबलः॥ ८३ ॥

ततः स संज्ञामुपलभ्य कृच्छ्राद्
बलीयसस्तस्य भुजान्तरस्थः।

कृच्छ्रगतत्वेऽपि मया नायं मोचयितुमुचित इत्याह,—मया त्विति।
। ७९ ।

काङ्क्षिष्ये प्रतीक्षिष्ये। तस्मात् त्वयं प्रतीक्षिष्ये इति पाठान्तरम्। मोचितस्य कृतमोचनस्य विक्रमन्तु द्रक्ष्यामीति शेषः। ८०। ८१।

पुष्पाग्र्यवर्षैरुत्तमपुष्पवर्षैः॥ ८२।

अवेक्षमाणः पुरराजमार्ग
विचिन्तयामास मुहुर्महात्मा ॥ ८४ ॥
एवं गृहीतेन कथं नु नाम
शक्यं मया संप्रतिकर्त्तुमद्य।
तथा करिष्यामि यथा हरीणां
भविष्यतीष्टञ्च हितञ्च कार्य्यम् ॥ ८५ ॥
ततः कराग्रैः सहसा समेत्य
राजा हरीणाममरेन्द्रशत्रोः।
खरैश्च कर्णौ दशनैश्च नासां
ददंश पार्दैर्विददार पार्श्वौ ॥ ८६ ॥
स कुम्भकर्णो हृतकर्णनासो
विदारितस्तेन रदैर्नखैश्च।
रोषाभिभूतः क्षतजार्द्रगात्रः
सुग्रीवमाविध्य पिपेष भूमौ ॥ ८७ ॥

लाजगन्धोदवर्षैः सिच्यमानः। दैवगत्या मोहनिवृत्तये। सुग्रीव इति शेषः ॥ ८३ ॥ ८४ ॥

सम्प्रतिकर्त्तुं सम्यक् प्रतिकर्त्तुम् ॥ ८५ ॥

खरैस्तीक्ष्णैः कराग्रैर्नखैः कर्णौ। लुलुञ्चेति शेषः। पादैः पादनखैः ॥ ८६ ॥ ८७ ॥

स भूतले भीमबलाभिपिष्टः
सुरारिभिस्तैरभिहन्यमानः ।
जगाम खं कन्दुकवज्जवेन
पुनश्च रामेण समाजगाम ॥ ८८ ॥

कर्णनासाविहीनस्तु कुम्भकर्णो महाबलः ।
रराज शोणितोत्सिक्तो गिरिः प्रस्रवणैरिव ॥ ८९ ॥

शोणितार्द्रो महाकायो राक्षसो भीमदर्शनः ।
अमर्षाच्छोणितोद्गारी शुशुभे रावणानुजः ॥ ९० ॥

नीलाञ्जनचयप्रख्यः स सन्ध्य इव तोयदः ।
युद्धायाभिमुखो भीमो मनश्चक्रे निशाचरः ॥ ९१ ॥

गते च तस्मिन् सुरराजशत्रुः
क्रोधात् प्रदुद्राव रणाय भूयः ।
अनायुधोऽस्मीति विचिन्त्य रौद्रो
घोरं तदा मुद्गरमाससाद ॥ ९२ ॥

ततः स पुर्य्याः सहसा महात्मा
निष्क्रम्य तद्वानरसैन्यमुग्रम् ।
बभक्ष रक्षो युधि कुम्भकर्णः
प्रजा युगान्ताग्निरिव प्रवृद्धः ॥ ९३ ॥

सुरारिभिः राक्षसैः ॥ ८८ ॥ ८९ ॥ ९० ॥

नीलाञ्जनेत्यनेन लिप्यञ्जनादिव्यावृत्तिः ॥ ९१ ॥ ९२ ॥ ९३ ॥

बुभुक्षितः शोणितमांसगृध्नुः
प्रविश्य तद्वानरसैन्यमुग्रम्।
चखाद रक्षांसि हरीन् पिशाचान्
ऋक्षांश्च मोहाद् युधि कुम्भकर्णः।
यथैव मृत्युर्हरते युगान्ते
स भक्षयामास हरींश्च मुख्यान्॥ ९४॥

एकं द्वौ त्रीन् बहून् क्रुद्धो वानरान् सह राक्षसैः।
समादायैकहस्तेन प्रचिक्षेप त्वरन् मुखे॥ ९५॥
संप्रस्रवंस्तदा मेदः शोणितञ्च महाबलः।
वध्यमानो नगेन्द्राग्रैर्भक्षयामास वानरान्॥ ९६॥
ते भक्ष्यमाणा हरयो रामं जग्मुस्तदा गतिम्।
कुम्भकर्णो भृशं क्रुद्धः कपीन् खादन् प्रधावति॥ ९७॥
शतानि सप्त चाष्टौ च विंशन्त्रिंशत्तथैव च।
संपरिष्वज्य बाहुभ्यां खादन् विपरिधावति॥ ९८॥

रक्ष आदेरपि खादने हेतुर्मोहादिति। मद्यादिनेव रक्तपानजमद-वैवश्यादिति भावः। यथा मृत्युर्हरते तथा स भक्षयामासेत्यर्थः॥ ॥ ९४॥ ९५॥

सम्प्रस्रवन्। अडभाव आर्षः। भक्षितवानरसम्बन्धिशोणितादि॥ ९६॥

गतिं शरणम्॥ ९७॥ ९८॥

मेदोवसाशोणितदिग्धगात्रः
कर्णावसक्तग्रथितान्त्रमालः ।
ववर्ष शूलानि सुतीक्ष्णदंष्ट्रः
कालो युगान्तस्थ इव प्रवृद्धः ॥ ९९ ॥
तस्मिन् काले सुमित्रायाः पुत्रः परबलार्दनः ।
चकार लक्ष्मणः क्रुद्धो युद्धं परपुरञ्जयः ॥ १०० ॥
स कुम्भकर्णस्य शरान् शरीरे सप्त वीर्य्यवान् ।
निचखानाददे चान्यान् विससर्ज च लक्ष्मणः ॥ १०१ ॥
पीड्यमानस्तदास्त्रन्तु विशेषं तत् स राक्षसः ।
ततश्चकोप बलवान् सुमित्रानन्दवर्द्धनः ॥ १०२ ॥
अथास्य कवचं शुभ्रं जाम्बूनदमयं शुभम् ।
प्रच्छादयामास शरैः सन्ध्याभ्रमिव मारुतः ॥ १०३ ॥
नीलाञ्जनचयप्रख्यः शरैः काञ्चनभूषणैः ।
आपीड्यमानः शुशुभे मेघैः सूर्य्य इवांशुमान् ॥ १०४ ॥
ततः स राक्षसो भीमः सुमित्रानन्दवर्द्धनम् ।
सावज्ञमेव प्रोवाच वाक्यं मेघौघनिःस्वनः ॥ १०५ ॥

कर्णावसक्तेत्यनेनाधोभागे एव कर्णालम्बनं सुग्रीवेण कृतमिति गम्यते। कर्णावसक्ता ग्रथिताः परस्परसंलग्ना अन्त्रमाला यस्य सः ॥ ॥ ९९ ॥ १०० ॥ १०१ ॥

अन्तकस्याप्यकष्टेन युधि जेतारमाहवे।
युध्यता मामभीतेन ख्यापिता वीरता त्वया ॥ १०६ ॥
प्रगृहीतायुधस्येह मृत्योरिव महामृधे।
तिष्ठन्नप्यग्रतः पूज्यः किन्तु युद्धप्रदायकः ॥ १०७ ॥
ऐरावतं समारूढो वृतः सर्व्वामरैः प्रभुः।
नैव शक्रोऽपि समरे स्थितपूर्व्वः कदाचन ॥ १०८ ॥
अद्य त्वयाहं सौमित्रे! बालेनापि पराक्रमैः।
तोषितो गन्तुमिच्छामि त्वामनुज्ञाप्य राघवम् ॥ १०९ ॥
यन्तु वीर्य्यबलोत्साहैस्तोषितोऽहं रणे त्वया।
राममेवैकमिच्छामि हन्तुं यस्मिन् हते हतम् ॥ ११० ॥
रामे मयाद्य निहते येऽन्ये स्थास्यन्ति संयुगे।
तानहं योधयिष्यामि स्वबलेन प्रमाथिना ॥ १११ ॥
इत्युक्तवाक्यं तद्रक्षः प्रोवाच स्तुतिसंहितम्।
मृधे घोरतरं वाक्यं सौमित्रिः प्रहसन्निव ॥ ११२ ॥
यस्त्वं शक्रादिभिर्देवैरसह्यः प्राप्य पौरुषम्।
तत्सत्यं नान्यथा वीर! दृष्टस्तेऽद्य पराक्रमः ॥ ११३ ॥
एष दाशरथी रामस्तिष्ठत्यद्रिरिवाचलः।
इति श्रुत्वा ह्यनादृत्य लक्ष्मणं स निशाचरः ॥ ११४ ॥

यौध्यमानः स राक्षसवृन्दस्थं विशेषमस्थान्तरेण विगतशेषबला-

अतिक्रम्य च सौमित्रिं कुम्भकर्णो महाबलः ।
राममेवाभिदुद्राव कम्पयन्निव मेदिनीम् ॥ ११५ ॥
अथ दाशरथी रामो रौद्रमस्त्रं प्रयोजयन् ।
कुम्भकर्णस्य हृदये ससर्ज निशितान् शरान् ॥ ११६ ॥
तस्य रामेण विद्धस्य सहसाभिप्रधावतः ।
अङ्गारमिश्राः क्रुद्धस्य मुखान्निश्चेरुरर्चिषः ॥ ११७ ॥
रामास्त्रविद्धो घोरं वै नर्दन् राक्षसपुङ्गवः ।
अभ्यधावत तं क्रुद्धो हरीन् विद्रावयन् रणे ॥ ११८ ॥
तस्योरसि निमग्नास्ते शरा बर्हिणवाससः ।
हस्ताच्चास्य परिभ्रष्टा गदा चोर्व्यां पपात ह ॥ ११९ ॥
आयुधानि च सर्वाणि विप्रकीर्य्यन्त भूतले ।
स निरायुधमात्मानं यदा मेने महाबलः ॥ १२० ॥
मुष्टिभ्यां च कराभ्यां च चकार कदनं महत् ।
स बाणैरतिविद्धाङ्गः क्षतजेन समुक्षितः ।
रुधिरं परिसुस्राव गिरिः प्रस्रवणं यथा ॥ १२१ ॥

इत्यर्थः ॥ १०२ ॥ १०३ ॥ १०४ ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥
॥ १०९ ॥ ११० ॥ १११ ॥ ११२ ॥ ११३ ॥ ११४ ॥ ११५ ॥ ११६ ॥ ११७ ॥
अभ्यधावत । तं रामं विरुध्येति शेषः ॥ ११८ ॥
ते रौद्रास्त्रप्रयोजिताः शराः ॥ ११९ ॥ १२० ॥

स तीव्रेण च कोपेन रुधिरेण च मूर्च्छितः।
वानरान् राक्षसान् ऋक्षान् खादन् स परिधावति ॥ १२२ ॥
अथ शृङ्गं समाविध्य भीमं भीमपराक्रमः।
चिक्षेप राममुद्दिश्य बलवानन्तकोपमः।
अप्राप्तमन्तरा रामः सप्तभिस्तमजिह्मगैः ॥ १२३ ॥
ततस्तु रामो धर्मात्मा तस्य शृङ्गं महत्तदा।
शरैः काञ्चनचित्राङ्गैश्चिच्छेद भरताग्रजः ॥ १२४ ॥
तन्मेरुशिखराकारं द्योतमानमिव श्रिया।
द्वे शते वानराणाञ्च पतमानमपातयत् ॥ १२५ ॥
तस्मिन् काले स धर्मात्मा, लक्ष्मणो, राममब्रवीत्।
कुम्भकर्णवधे युक्तो योगान् परिमृशन् बहून् ॥ १२६ ॥
नैवायं वानरान् राजन्! न विजानाति राक्षसान्।
मत्तः शोणितगन्धेन स्वान् परांश्चैव खादते ॥ १२७ ॥
साध्वेनमधिरोहन्तु सर्वतो वानरर्षभाः।
यूथपाश्च यथामुख्यास्तिष्ठन्त्वस्मिन् समन्ततः ॥ १२८ ॥
अद्यायं दुर्मतिः काले गुरुभारप्रपीड़ितः।

प्रस्रवणां निर्झरः ॥ १२१ ॥ १२२ ॥ १२३ ॥

ततो धर्मात्मा रामस्तस्य महत्शृङ्गमन्तरा मध्ये मार्गं सप्तभि-रजिह्मगत्वादिगुणविशिष्टैः शरैश्चिच्छेद ॥ १२४ ॥ १२५ ॥

प्रचरन् राक्षसो भूमौ नान्यान् हन्यात् प्लवङ्गमान् ॥ १२८ ॥
तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः ।
ते समारुरुहुर्हृष्टाः कुम्भकर्णं महाबलाः ॥ १३० ॥
कुम्भकर्णस्तु संक्रुद्धः समारूढैः प्लवङ्गमैः ।
व्यधूनयत्तान् वेगेन दुष्टहस्तीव हस्तिपान् ॥ १३१ ॥
तान् दृष्ट्वा निर्धुतान् रामो रुष्टोयमिति राक्षसम् ।
समुत्पपात वेगेन धनुरुत्तममाददे ॥ १३२ ॥
क्रोधरक्तेक्षणो धीरो निर्दहन्निव चक्षुषा ।
राघवो राक्षसं वेगादभिदुद्राव वेगितः ॥ १३३ ॥
यूथपान् हर्षयन् सर्वान् कुम्भकर्णबलार्दितान् ॥ १३४ ॥

स चापमादाय भुजङ्गकल्पं
दृढज्यमुग्रं तपनीयचित्रम् ।
हरीन् समाश्वास्य समुत्पपात
रामो निबद्धोत्तमतूणबाणः ॥ १३५ ॥

सवानरगणैस्तैस्तु वृतः परमदुर्जयैः ।

---

योगानुपायान् । अनेन वधकाले नाम्नायसाहित्यं रामस्य गम्यते ॥
॥ १२६ ॥ १२७ ॥ १२८ ॥ १२९ ॥ १३० ॥ १३१ ॥ १३२ ॥
राक्षसं रुष्टोऽयमिति मत्वा वेगेन समुत्पपात ॥ १३२ ॥ १३३ ॥
॥ १३४ ॥ १३५ ॥

लक्ष्मणानुचरो वीरः सम्मतस्ते महाबलः ॥ १३६ ॥
स ददर्श महात्मानं किरीटिनमरिन्दमम्।
शोणिताष्टतरक्ताक्षं कुम्भकर्णं महाबलम् ॥ १३७ ॥
सर्वान् समभिधावन्तं यथा रुष्टं दिग्गजम्।
मार्गमाणं हरीन् क्रुद्धं राक्षसैः परिवारितम् ॥ १३८ ॥
विन्ध्यमन्दरसङ्काशं काञ्चनाङ्गदभूषणम्।
स्रवन्तं रुधिरं वक्त्राद्वर्षं मेघमिवोत्थितम् ॥ १३९ ॥
जिह्वया परिलिह्यन्तं सृक्कणी शोणितोक्षिते।
मृद्नन्तं वानरानीकं कालान्तकयमोपमम् ॥ १४० ॥
तं दृष्ट्वा राक्षसश्रेष्ठं प्रदीप्तानलवर्चसम्।
विस्फारयामास तदा कार्मुकं पुरुषर्षभः ॥ १४१ ॥
स तस्य चापनिर्घोषात् कुपितो राक्षसर्षभः।
अमृष्यमाणस्तं घोषमभिदुद्राव राघवम् ॥ १४२ ॥

ततस्तु धीरोद्धतमेघकल्पं
भुजङ्गराजोत्तमभोगबाहुः।

लक्ष्मणानुचरः। बहुव्रीहिः। लक्ष्मणसहितः। १३६। १३७।
। १३८ ॥ १३९ ॥

कालान्तकयमानामवस्थाकृतो भेद इति तीर्थः। १४०। १४१।
। १४२।

तमापतन्तं धरणीधराभ-
मुवाच रामो युधि कुम्भकर्णम् । १४३ ॥
आगच्छ रक्षोधिप ! मा विषाद-
मवस्थितोऽहं प्रगृहीतचापः ।
अवेहि मां राक्षसवंशनाशनं
यस्त्वं मुहूर्त्ताद्भविता विचेताः ॥ १४४ ॥

रामोऽयमिति विज्ञाय जहास विकृतस्वनम् ।
अभ्यधावत संक्रुद्धो हरीन् विद्रावयन् रणे ॥ १४५ ॥
दारयन्निव सर्वेषां हृदयानि वनौकसाम् ।
प्रहस्य विकृतं भीमं स मेघस्तनितोपमम् ॥ १४६ ॥
कुम्भकर्णो महातेजा राघवं वाक्यमब्रवीत् ।
नाहं विराधो विज्ञेयो न कबन्धः खरो न च ।
न वाली न च मारीचः कुम्भकर्णः समागतः ॥ १४७ ॥
पश्य मे मुद्गरं भीमं सर्वं कालायसं महत् ।
अनेन निर्जिता देवा दानवाश्च पुरा मया ॥ १४८ ॥

भुजङ्गराजस्य शेषस्योत्तमो भोगस्तद्वत् बाहुर्यस्य सः ॥ १४३ ॥

हे रक्षोऽधिप विषादं मा आगच्छ। योऽहं प्रगृहीतचापः स्थितस्तं मा राममवेहि। तस्मान्मामेवागच्छ। मुहूर्त्तात्त्वं विचेताः निर्जीवो भवितेति युधि रामः कुम्भकर्णमुवाचेत्यन्वयः ॥ १४४ ॥

विकर्णनासं इति मां नावज्ञातुं त्वमर्हसि।
स्वल्पापि हि न मे पीड़ा कर्णनासाविनाशनात्॥ १४९ ॥
दर्शयेक्ष्वाकुशार्दूल! वीर्य्यं गात्रेषु मेऽनघ!।
ततस्त्वां भक्षयिष्यामि दृष्टपौरुषविक्रमम्॥ १५० ॥

स कुम्भकर्णस्य वचो निशम्य
रामः सपुङ्खान् विससर्ज बाणान्।
तैराहतो वज्रसमप्रवेगै-
र्न चुक्षुभे न व्यथते सुरारिः॥ १५१ ॥
यैः सायकैः सालवरा निकृत्ता
बाली हतो वानरपुङ्गवश्च।
ते कुम्भकर्णस्य तदा शरीरं
वज्रोपमा न व्यथयांप्रचक्रुः॥ १५२ ॥

रामोऽयमिति विज्ञाय। रामवचसेति शेषः॥ १४५॥ १४६॥
॥ १४७॥ १४८॥

विकर्णनास इत्येतावन्मात्रेण मामवज्ञातुं दुर्बल इत्यवगन्तुं नार्हसि। न हि विराधादिवदहं जीवया त्वया सुयोधः अतो मयि यत्नवान् भवेत्यर्थः। ननु कथं न दुर्बलस्तत्राह,—स्वल्पापीति॥ १४९॥
॥ १५०॥

न व्यथते न विव्यथे॥ १५१॥

व्यथयांप्रचक्रुरित्यार्षं आमन्तस्य व्यवहितप्रयोगः॥ १५२॥

स वारिधारा इव सायकांस्तान्
पिबन् शरीरेण महेन्द्रशत्रुः ।
जघान रामस्य शरप्रवेगं
व्याविध्य तं मुद्गरमुग्रवेगम् ॥ १५३ ॥
ततस्तु रक्षः क्षतजावलिप्तं
वित्रासनं देवमहाचमूनाम् ।
व्याविध्य तं मुद्गरमुग्रवेगं
विद्रावयामास चमूं हरीणाम् ॥ १५४ ॥
वायव्यमादाय ततो वरास्त्रं
रामः प्रचिक्षेप निशाचराय ।
समुद्गरं तेन जहार बाहुं
स कृत्तबाहुस्तुमुलं ननाद ॥ १५५ ॥
स तस्य बाहुर्गिरिशृङ्गकल्पः
समुद्गरो राघवबाणकृत्तः ।

वारिधाराः पर्वत इव सायकान् शरीरेण पिबन्निति योजना । एतेन सर्वे सायकाः शरीरे मग्ना अपि न व्यथयन्तीति दर्शितम् । उग्रवेगं तं मुद्गरं व्याविध्य भ्रामयित्वा रामस्य शरप्रवेगं जघान ॥ ॥ १५३ ॥

ततो रामं मुक्त्वा हरीणाञ्चमूं विद्रावयामास ॥ १५४ ॥

पपात तस्मिन् हरिराजसैन्ये
जघान तां वानरवाहिनीञ्च ॥ १५६ ॥
ते वानरा भग्नहतावशेषाः
पर्य्यन्तमाश्रित्य तदा विषसाः।
प्रपीड़िताङ्गा ददृशुः सुघोरं
नरेन्द्ररक्षोऽधिपसन्निपातम् ॥ १५७ ॥
स कुम्भकर्णोऽस्त्रनिकृत्तबाहु-
र्महाश्छिकृत्ताग्र इवाचलेन्द्रः।
उत्पाटयामास करेण वृक्षं
ततोऽभिदुद्राव रणे नरेन्द्रम् ॥ १५८ ॥
तं तस्य बाहुं सहतालवृक्षं
समुद्यतं पन्नगभोगकल्पम्।
ऐन्द्रास्त्रयुक्तेन जघान रामो
बाणेन जाम्बूनदचित्रितेन ॥ १५९ ॥

समुद्गरं मुद्गरसहितम्। तेन वायव्यास्त्रेण ॥ १५५ ॥ १५६ ॥

भग्नहतावशेषाः भग्नसमुद्गरपतितबाहुहतावशिष्टाः। पर्य्यन्तमाश्रित्य समुद्गरबाहुपातप्रदेशसमीपमाश्रित्य। विषसाः स्थिताः ॥ ॥ १५७ ॥

करेण इतरेण ॥ १५८ ॥ १५९ ॥

स कुम्भकर्णस्य भुजो निकृत्तः
पपात भूमौ गिरिसन्निकाशः ।
विचेष्टमानो निजघान वृक्षान्
शैलान् शिला वानरराक्षसांश्च ॥ १६० ॥
तं छिन्नबाहुं समवेक्ष्य रामः
समापतन्तं सहसा नदन्तम् ।
द्वावर्धचन्द्रौ निशितौ प्रगृह्य
चिच्छेद पादौ युधि राक्षसस्य ॥ १६१ ॥
तौ तस्य पादौ प्रदिशो दिशश्च
गिरेर्गुहाश्चैव महार्णवञ्च ।
लङ्काञ्च सेनां कपिराक्षसानां
विनादयन्तौ विनिपेततुश्च ॥ १६२ ॥
निकृत्तबाहुर्विनिकृत्तपादो
विदार्य्य वक्त्रं वड़वामुखाभम् ।
दुद्राव रामं सहसाभिगर्जन्
राहुर्यथा चन्द्रमिवान्तरिक्षे ॥ १६३ ॥

विचेष्टमानः । भूमामिति शेषः ॥ १६० ॥ १६१ ॥
विनादयन्तौ दिगादीन् प्रतिध्वनयन्तौ ॥ १६२ ॥ १६३ ॥

अपूरयत्तस्य मुखं शिताग्रै
राम: शरैर्हेमपिनद्धपुङ्खैः।
सम्पूर्णवक्त्रो न शशाक वक्तुं
चुकूज कृच्छ्रेण मुमूर्च्छ चापि ॥ १६४ ॥
अथाददे सूर्य्यमरीचिकल्पं
स ब्रह्मदण्डान्तककालकल्पम्।
अरिष्टमैन्द्रं निशितं सुपुङ्खं
राम: शरं मारुततुल्यवेगम् ॥ १६५ ॥
तं वज्रजाम्बूनदचारुपुङ्खं
प्रदीप्तसूर्य्यज्वलनप्रकाशम्।
महेन्द्रवज्राशनितुल्यवेगं
राम: प्रचिक्षेप निशाचराय ॥ १६६ ॥
स सायको राघवबाहुचोदितो
दिश: स्वभासा दश सम्प्रकाशयन्।
विधूमवैश्वानरभीमदर्शनो
जगाम शक्राशनिभीमविक्रमम् ॥ १६७ ॥

चुकूज। अवसान शब्देनति शेषः ॥ १६४ ॥
अरिष्टं रिपूणामशुभदम् ॥ १६५ ॥ १६६ ॥

स तन्महापर्वतकूटसन्निभं
सुवृत्तदंष्ट्रं ज्वलचारुकुण्डलम्।
चकर्त्त रक्षोऽधिपतेः शिरस्तदा
यथैव वृत्रस्य पुरा पुरन्दरः॥ १६८॥

कुम्भकर्णशिरो भाति कुण्डलालङ्कृतं महत्।
आदित्येऽभ्युदितेऽरात्रौ मध्यस्थ इव चन्द्रमाः॥ १६९॥

तद्रामबाणाभिहतं पपात
रक्षःशिरः पर्वतसन्निकाशम्।
बभञ्ज चर्यागृहगोपुराणि
प्राकारमुच्चं तमपातयच्च॥ १७०॥
तच्चातिकायं हि महत्प्रकाशं
रक्षस्तदा तोयनिधौ पपात।

शक्राशन्योरिव शक्राशनेरिव वा भीमो विक्रमो यस्य तं कुम्भकर्णं जगाम॥ १६७॥

चले गते चारू रमणीये कुण्डले यस्मात्तज्ज्वलचारुकुण्डलम्॥
॥ १६८॥

कुम्भकर्णशिर इति। कुण्डलाभ्यामलङ्कृतं विनाशितम्। अलं भूषणपर्याप्तिशक्तिवारणवाचकमित्यमरः। कुम्भकर्णस्य शिरः। अरात्रौ प्रातःकाले आदित्ये उदिते गगनमध्यस्थचन्द्रमा इव निष्प्रभं भातीत्यर्थः। अयं श्लोकः प्रक्षिप्त इति बहवः॥ १६९॥

ग्राहान् परान् मीनवरान् भुजङ्गमान्
ममर्द भूमिञ्च तथा विवेश ॥ १७१ ॥
तस्मिन् हते ब्राह्मणदेवशत्रौ
महाबले संयति कुम्भकर्णे ।
चचाल भूर्भूमिधराश्च सर्वे
हर्षाच्च देवास्तुमुलं प्रणेदुः ॥ १७२ ॥
ततस्तु देवर्षिमहर्षिपन्नगाः
सुराश्च भूतानि सुपर्णगुह्यकाः ।
सयक्षगन्धर्वगणा नभोगताः
प्रहर्षिता रामपराक्रमेण ॥ १७३ ॥

उच्चं प्राकारं लङ्कायाः इति शेषः। शिरः कर्त्तनवेगोत्थितं लङ्कायां पपात। देहस्तु कर्त्तनवेगविलुठन् समुद्रे पपात पतितः। यद्यपि तं ब्रह्मास्त्रेण सौमित्रिर्ददाराद्रिवरोपमम्। स पपात महावीरो दिव्यास्त्राभिहतो रणे। तं दृष्ट्वा वृत्रसङ्काशं कुम्भकर्णं तरस्विनम्। गतासुं पतितं भूमौ राक्षसाः प्राद्रवन् भयादिति महाभारतोक्त्या लक्ष्मणतः कुम्भकर्णबधः प्रतीयते तथापि न विरोधः। रामलक्ष्मणाभ्यां मिलित्वा तद्वधकारणात्। अतएव पूर्वं लक्ष्मणानुचर इत्यत्र लक्ष्मणसहित इति व्याख्यातम्। प्राधान्यात्त्वत्र रामस्यैव तद्धन्तृत्वोक्तिः। लक्ष्मणसाहित्येन हननात्तु व्यासो लक्ष्मणस्य हन्तृत्वमुक्तवान् ॥ १७० ॥ १७१ ॥ १७२ ॥ ॥ १७३ ॥

ततस्तु ते तस्य वधेन भूरिणा
मनस्विनो नैर्ऋतराजबान्धवाः ।
विनेदुरुच्चैर्व्यथिता रघूत्तमं
हरिं समीक्ष्येव यथा मतङ्गजाः ॥ १७४ ॥

स देवलोकस्य तमो निहत्य
सूर्य्यो यथा राहुमुखाद्विमुक्तः ।
तथा व्यभासीद्धरिसैन्यमध्ये
निहत्य रामो युधि कुम्भकर्णम् ॥ १७५ ॥

प्रहर्षमीयुर्बहवश्च वानराः
प्रबुद्धपद्मप्रतिमैरिवाननैः ।
अपूजयन् राघवमिष्टभागिनं
हते रिपौ भीमबले नृपात्मजम् ॥ १७६ ॥

स कुम्भकर्णं सुरसैन्यमर्दनं
महत्सु युद्धेषु कदाचनाजितम् ।

भूरिणा महता ॥ १७४ ॥

देवलोकस्य आकाशस्य । मध्ये इति शेषः । व्यभासीत् विशेषेण भाति स्म ॥ १७५ ॥

प्रबुद्धपद्मप्रतिमैरिव प्रबुद्धपद्मैरिव । अतो नेवशब्दवैयर्थ्यम् । इष्टभागिनम् इष्टप्राप्तिमन्तम् ॥ १७६ ॥

मनन्द हत्वा भरताग्रजो रणे
महासुरं वृत्रमिवामराधिपः ॥ १७७ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
सप्तषष्टितमः सर्गः ॥ ६७ ॥

कदाचन न कदाप्यजय्यवन्तम् । १७७ ।

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

---

## अष्टषष्टितमः सर्गः ।



कुम्भकर्णं हतं दृष्ट्वा राघवेण महात्मना ।
राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन् ॥ १ ॥
राजन् ! स कालसङ्काशः संयुक्तः कालकर्मणा ।
विद्राव्य वानरीं सेनां भक्षयित्वा च वानरान् ॥ २ ॥
प्रतपित्वा मुहूर्त्तन्तु प्रशान्तो रामतेजसा ।
कायेनार्द्धप्रविष्टेन समुद्रं भीमदर्शनम् ॥ ३ ॥
निकृत्तनासाकर्णेन विक्षरद्रुधिरेण च ।
रुध्वा द्वारं शरीरेण लङ्कायाः पर्वतोपमः ॥ ४ ॥

कुम्भकर्णमिति ॥ १ ॥

कालसङ्काशः कुम्भकर्णः । कालकर्म मृत्युः । समुद्रमर्द्धंप्रविष्टेन कबन्धरूपेण कायेनोपलक्षितः । मुहूर्त्तं प्रतपित्वा विक्रम्य ॥ २ ॥ ३ ॥

निकृत्तनासा कर्णत्वादिगुणेन शरीरेण शिरो लम्बेन लङ्कादारं रुध्वा पर्वतोपमः कुम्भकर्णो रामतेजसा प्रशान्त इति पूर्वश्लोकेनान्वयः ॥ ४ ॥

कुम्भकर्णस्तव भ्राता काकुत्स्थशरपीड़ितः ।
अगण्डभूतो विवृतो दावदग्ध इव द्रुमः ॥ ५ ॥
श्रुत्वा विनिहतं सङ्ख्ये कुम्भकर्णं महाबलम् ।
रावणः शोकसन्तप्तो मुमोह च पपात च ॥ ६ ॥
पितृव्यं निहतं श्रुत्वा देवान्तकनरान्तकौ ।
त्रिशिरश्चातिकायश्च रुरुदुः शोकपीड़िताः ॥ ७ ॥
भ्रातरं निहतं श्रुत्वा रामेणाक्लिष्टकर्मणा ।
महोदरमहापार्श्वौ शोकाक्रान्तौ बभूवतुः ॥ ८ ॥
ततः कृच्छ्रात् समासाद्य संज्ञां राक्षसपुङ्गवः ।
कुम्भकर्णवधाद्दीनो विललापाकुलेन्द्रियः ॥ ९ ॥
हा वीर ! रिपुदर्पघ्न ! कुम्भकर्ण ! महाबल ! ।
त्वं मां विहाय वै दैवाद्यातोऽसि यमसादनम् ॥ १० ॥
मम शल्यमनुद्धृत्य बान्धवानां महाबल ! ।
शत्रुसैन्यं प्रताप्यैकः क्व मां सन्त्यज्य गच्छसि ॥ ११ ॥

अगण्डभूतः । अशिरःपाणिपादस्तु कबन्धोऽगण्ड उच्यते । विवृतो विवृतकायः । अवकाशत्वात् । दावदग्धो द्रुम इव प्रशान्त इत्यन्वयः ॥ ५ । ६ ॥

देवान्तकादयो रावणपुत्राः ॥ ७ ॥

महोदरमहापार्श्वौ विमातृजौ भ्रातरौ तस्य ॥ ८ ॥ ९ ॥ १० ॥

इदानीं खल्वहं नास्मि यस्य मे पतितो भुजः।
दक्षिणोऽयं समाश्रित्य न बिभेमि सुरासुरात् ॥ १२ ॥
कथमेवंविधो वीरो देवदानवदर्पहा।
कालाग्निप्रतिमो ह्यद्य राघवेण रणे हतः ॥ १३ ॥
यस्य ते वज्रनिष्पेषो न कुर्य्याद्व्यसनं सदा।
स कथं रामबाणार्त्तः प्रसुप्तोऽसि महीतले ॥ १४ ॥
एते देवगणाः सार्द्धमृषिभिर्गगने स्थिताः।
निहतं त्वां रणे दृष्ट्वा निनदन्ति प्रहर्षिताः ॥ १५ ॥
ध्रुवमद्यैव संहृष्टा लब्धलक्षाः प्लवङ्गमाः।
आरोक्ष्यन्तीह दुर्गाणि लङ्काद्वाराणि सर्वशः ॥ १६ ॥
राज्येन नास्ति मे कार्य्यं किं करिष्यामि सीतया।
कुम्भकर्णविहीनस्य जीविते नास्ति मे मतिः ॥ १७ ॥
यद्यहं भ्रातृहन्तारं न हन्मि युधि राघवम्।

बान्धवानाञ्च प्रत्यमनुकृत्येत्यन्वयः ॥ ११ ॥

अहं नास्मि। अहमपि मृतप्राय इत्यर्थः। सुरासुरात् सुरासुरेभ्यः ॥ १२ ॥ १३ ॥

वज्रनिष्पेषवदाघातोऽपि यस्य व्यसनं दुःखं न कुर्य्यात् ॥ १४ ॥ ॥ १५ ॥

लब्धलक्षाः लब्धावसराः ॥ १६ ॥

ननु मे मरणं श्रेयो न चेदं व्यर्थजीवितम् ॥ १८ ॥
अद्यैव तं गमिष्यामि देशं यत्रानुजो मम।
न हि भ्रातॄन् समुत्सृज्य क्षणं जीवितुमुत्सहे ॥ १९ ॥
देवा हि मां हसिष्यन्ति दृष्ट्वा पूर्वापकारिणम्।
कथमिन्द्रं जयिष्यामि कुम्भकर्ण! हते त्वयि ॥ २० ॥
तदिदं मामनुप्राप्तं विभीषणवचः शुभम्।
यदज्ञानान्मया तस्य न गृहीतं महात्मनः ॥ २१ ॥
विभीषणवचस्तावत् कुम्भकर्णप्रहस्तयोः।
विनाशोऽयं समुत्पन्नो मां व्रीडयति दारुणः ॥ २२ ॥
तस्यायं कर्मणः प्राप्तो विपाको मम शोकदः।
यन्मया धार्मिकः श्रीमान् स निरस्तो विभीषणः ॥ २३ ॥

इति बहुविधमाकुलान्तरात्मा
कृपणमतीव विलप्य कुम्भकर्णम्।

जीविते नास्ति मे मतिः। सजीवतयावस्थाने बुद्धिर्नास्तीत्यर्थः॥ ॥ १७ ॥ १८ ॥

भ्रातृनित्यनेन खरादयोऽप्यनुस्मृता इति ज्ञायते॥ १९ ॥ २० ॥ २१ ॥

यावद्यदारभ्य कुम्भकर्णप्रहस्तयोरयं विनाश उत्पन्नस्तावत्तदारभ्य विभीषणवचो मां व्रीडयतीत्यर्थः। इदं भ्रातृवचो न गृहीतमिति लज्जितोऽस्मीत्यर्थः॥ २२ ॥

न्यपतदपि दशाननो भयार्त्त-
स्तमनुजमिन्द्ररिपुं विदित्वा ॥ २४ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
अष्टषष्टितमः सर्गः ॥ ६८ ॥

अपि च धार्मिकस्य निष्कासमफलमिदमित्याह,—तस्यायमित्यादि ॥ २३ ॥ २४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे अष्टषष्टितमः सर्गः ॥ ६८ ॥

---

## एकोनसप्ततितमः सर्गः।

एवं विलपमानस्य रावणस्य दुरात्मनः।
श्रुत्वा शोकाभिभूतस्य त्रिशिरा वाक्यमब्रवीत् ॥ १ ॥
एवमेव महावीर्य्यो हतो नस्तात मध्यमः।
न तु सत्पुरुषा राजन्! विलपन्ति यथा भवान् ॥ २ ॥
नूनं त्रिभुवनस्यापि पर्य्याप्तस्त्वमसि प्रभो!।
स कस्मात् प्राकृत इव शोचस्यात्मानमीदृशम् ॥ ३ ॥
ब्रह्मदत्तास्ति ते शक्तिः कवचं सायको धनुः।
सहस्रखरसंयुक्तो रथो मेघसमस्वनः ॥ ४ ॥
त्वयासकृद्धि शस्त्रेण विशस्ता देवदानवाः।

एवमिति। विलपमानस्य विलपतः श्रुत्वा विलापमिति शेषः ॥ १ ॥

एवमेव देवदानवदर्पहा कालाग्निप्रतिम इत्याद्युक्तप्रकारेण महावीर्य्यो हतो दैवादिति शेषः। सत्पुरुषाः शूराः ॥ २ ॥

ईदृशं त्रैलोक्यविजयसमर्थम्। शोचसि शोकवन्तं करोषि ॥ ३ ॥ ४ ॥

स सर्वायुधसम्पन्नो राघवं शास्तुमर्हसि ॥ ५ ॥
कामं तिष्ठ महाराज ! निर्गमिष्याम्यहं रणे ।
उद्धरिष्यामि ते शत्रून् गरुड़: पन्नगानिव ॥ ६ ॥
शम्बरो देवराजेन नरको विष्णुना यथा ।
तथाद्य शयिता रामो मया युधि निपातित: ॥ ७ ॥
श्रुत्वा त्रिशिरसो वाक्यं रावणो राक्षसाधिपः ।
पुनर्जातमिवात्मानं मन्यते कालचोदित: ॥ ८ ॥
श्रुत्वा त्रिशिरसो वाक्यं देवान्तकनरान्तकौ ।
अतिकायश्च तेजस्वी बभूवुर्युद्धहर्षिता: ॥ ९ ॥
ततोऽहमहमित्येव गर्जन्तो नैर्ऋतर्षभा: ।
रावणस्य सुता वीरा: शक्रतुल्यपराक्रमा: ॥ १० ॥

असक्तस्त्वया विंशस्ता इत्यन्वयः। वित्रस्ता इति पाठे वित्रासिता इत्यर्थः ॥ ५ ॥ ६ ॥

नरको विष्णुनेति। अयं सिंहिकायां विप्रचित्तेर्जातो नरको भौमान्नरकात् कृष्णहतादन्य इति तीर्थः ॥ ७ ॥

पुनर्जातमिवात्मानं मन्यते। त्रिशिरसो वचनमात्रेण सन्तुष्टो बभूव। ननु कुम्भकर्णसाध्येऽर्थे कथं रावणस्य तस्माज्जयप्रत्याशया सन्तोषस्तत्राह,—कालचोदित इति। समासन्नकालात्मकभगवत्प्रे-रणया पुनस्तस्य युद्धबुद्ध्यनुपरम इत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥

अन्तरिक्षगताः सर्वे सर्वे मायाविशारदाः।
सर्वे त्रिदशदर्पघ्नाः सर्वे समरदुर्मदाः॥ ११॥
सर्वे सुबलसम्पन्नाः सर्वे विस्तीर्णकीर्त्तयः।
सर्वे समरमासाद्य न श्रूयन्ते स्म निर्जिताः॥ १२॥
देवैरपि सगन्धर्वैः सकिन्नरमहोरगैः।
सर्वेऽस्त्रविदुषो वीराः सर्वे युद्धविशारदाः॥ १३॥
सर्वे प्रवरविज्ञानाः सर्वे लब्धवरास्तथा॥ १४॥

स तैस्तथा भास्करतुल्यदर्शनैः
सुतैर्वृतः शत्रुबलश्रियार्दनैः।
रराज राजा मघवान् यथामरै-
र्वृतो महादानवदर्पनाशनैः॥ १५॥

स पुत्रान् सम्परिष्वज्य भूषयित्वा च भूषणैः।
आशीर्भिश्च प्रशस्ताभिः प्रेषयामास वै रणे॥ १६॥
युद्धोन्मत्तञ्च मत्तञ्च भ्रातरौ चापि रावणः।

अन्तरिक्षे गतं गमनं येषां ते॥ ११॥
विस्तीर्णकीर्त्तयः विशालकीर्त्तयः॥ १२॥ १३॥
प्रवरविज्ञानाः श्रेष्ठज्ञानवन्तः॥ १४॥
शत्रूणां बलस्य श्रीयाश्चार्दनैरित्यर्थे श्रियार्दनैरित्यार्षम्॥ १५॥
आशीर्भिरित्यस्य संयुज्येति शेषः॥ १६॥

रक्षणार्थं कुमाराणां प्रेषयामास संयुगे ॥ १७ ॥
तेऽभिवाद्य महात्मानं रावणं लोकरावणम् ।
कृत्वा प्रदक्षिणञ्चैव महाकायाः प्रतस्थिरे ॥ १८ ॥
सर्वौषधीभिर्गन्धैश्च समालभ्य महाबलाः ।
निर्जग्मुर्नैरृतश्रेष्ठाः षडेते युद्धकाङ्क्षिणः ॥ १९ ॥
त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ ।
महोदरमहापार्श्वौ निर्जग्मुः कालचोदिताः ॥ २० ॥
ततः सुदर्शनं नागं नीलजीमूतसन्निभम् ।
ऐरावतकुले जातमारुरोह महोदरः ॥ २१ ॥
सर्वायुधसमायुक्तस्तूणीभिश्चाप्यलङ्कृतः ।
रराज गजमास्थाय सवितेवास्तमूर्द्धनि ॥ २२ ॥
हयोत्तमसमायुक्तं सर्वायुधसमाकुलम् ।
आरुरोह रथश्रेष्ठं त्रिशिरा रावणात्मजः ॥ २३ ॥
त्रिशिरा रथमास्थाय विरराज धनुर्धरः ।

यद्वोन्मत्तमत्तशब्दौ महोदरमहापार्श्वयोः पर्य्यायनामनी ॥ १७ ॥ १८

सर्वौषधीभिः आयुधप्रहारनिवारकौषधिविशेषैः ॥ १९ ॥ २० ॥ २१ ॥

सवितेवास्तमूर्द्धनीत्यनेन शीघ्रं नाशः सूचितः ॥ २२ ॥ २३ ॥

सविद्युदुल्कः सज्वालः सेन्द्रचाप इवाम्बुदः॥ २४ ॥

त्रिभिः किरीटैस्त्रिशिराः शुशुभे स रथोत्तमे।

हिमवानिव शैलेन्द्रस्त्रिभिः काञ्चनपर्वतैः॥ २५ ॥

अतिकायोऽतितेजस्वी राक्षसेन्द्रसुतस्तदा।

आरुरोह रथश्रेष्ठं श्रेष्ठः सर्वधनुष्मताम्॥ २६ ॥

सुचक्राक्षं सुसंयुक्तं सानुकर्षं सकूबरम्।

तूणीबाणासनैर्दीप्तं प्रासासिपरिघाकुलम्॥ २७ ॥

स काञ्चनविचित्रेण किरीटेन विराजता।

भूषणैश्च बभौ मेरुः प्रभाभिरिव भासयन्॥ २८ ॥

स रराज रथे तस्मिन् राजसूनुर्महाबलः।

वृतो नैर्ऋतशार्दूलैर्वज्रपाणिरिवामरैः॥ २९ ॥

हयमुच्चैःश्रवःप्रख्यं श्वेतं कनकभूषणम्।

मनोजवं महाकायमारुरोह नरान्तकः॥ ३० ॥

गृहीत्वा प्रासमुल्काभं विरराज नरान्तकः।

शक्तिमादाय तेजस्वी गुहः शिखिगतो यथा॥ ३१ ॥

विद्युद्भिरुल्काभिः सहितः॥ २४ ॥

काञ्चनपर्वतैः शिखरभूतैर्युक्तो हिमवानिव॥ २५॥ २६॥

सुसंयुक्तं सुसंयुक्ताश्वम्। सानुकर्षं रथाद्धोपरि कूबराधारतया स्थापितो दारुनिर्घोषोऽनुकर्षः अनुकर्षो दार्वधस्थमित्यमरः। सकूबरम्। कूबरस्तु युगन्धरः २७॥ २८॥ २९॥ ३०॥ ३१॥

देवान्तकः समादाय परिघं हेमभूषणम् ।
परिगृह्य गिरिं दोर्भ्यां वपुर्विष्णोर्विडम्बयन् ॥ ३२ ॥
महापार्श्वो महातेजा गदामादाय वीर्य्यवान् ।
विरराज गदापाणिः कुबेर इव संयुगे ॥ ३३ ॥
ते प्रतस्थुर्महात्मानोऽमरावत्याः सुरा इव ।
तान् गजैश्च तुरङ्गैश्च रथैश्चाम्बुदनिःस्वनैः ॥ ३४ ॥
अनूत्पेतुर्महात्मानो राक्षसाः प्रवरायुधाः ।
ते विरेजुर्महात्मानः कुमाराः सूर्य्यवर्चसः ॥ ३५ ॥
किरीटिनः श्रिया जुष्टा ग्रहा दीप्ता इवाम्बरे ।
प्रगृहीता बभौ तेषां वस्त्राणामावलिः सिता ॥ ३६ ॥
शरदभ्रप्रतीकाशा हंसावलिरिवाम्बरे ।
मरणं वापि निश्चित्य शत्रूणां वा पराजयम् ॥ ३७ ॥

परिघं समादाय स्थितो देवान्तको दोर्भ्यां गिरिं समुद्रमथन मन्दरगिरिं परिगृह्य स्थितस्य विष्णोर्वपुर्विडम्बयन् . विरराजेत्यनुकर्षः ॥ ३२ ॥ ३३ ॥

अमरावत्याः सुरा इव लङ्कायाः प्रतस्थुरित्यन्वयः ॥ ३४ ॥ ३५ ॥ ॥ ३६ ॥

निश्चित्य निश्चयेन मरणं शत्रुपराजयं वा करिष्याम इति शेषः ॥ ३७ ॥

इति कृत्वा मतिं वीराः सञ्जग्मुः संयुगार्थिनः।
जगर्जुश्च प्रणेदुश्च चिक्षिपुश्चापि सायकान्॥ ३८॥

जगृहुश्च महात्मानो निर्य्याता युद्धदुर्मदाः।
क्ष्वेडितास्फोटितानां वै सञ्चचालेव मेदिनी॥ ३९॥

रक्षसां सिंहनादैश्च संस्फोटितमिवाम्बरम्।
तेऽभिनिष्क्रम्य मुदिता राक्षसेन्द्रा महाबलाः॥ ४०॥

ददृशुर्वानरानीकं समुद्यतशिलानगम्।
हरयोऽपि महात्मानो ददृशू राक्षसं बलम्॥ ४१॥

हस्त्यश्वरथसम्बाधं किङ्किणीशतनादितम्।
नीलजीमूतसङ्काशं समुद्यतमहायुधम्॥ ४२॥

दीप्तानलरविप्रख्यैर्नैर्ऋतैः सर्वतो वृतम्।
तत् दृष्ट्वा बलमायान्तं लब्धलक्षाः प्लवङ्गमाः॥ ४३॥

समुद्यतमहाशैलाः सम्प्रणेदुर्मुहुर्मुहुः।
अमृष्यमाणा रक्षांसि प्रतिनर्दन्त वानराः॥ ४४॥

चिक्षिपुः प्रभुविषयाक्षेपवचनान्यूचुः। सायकानित्यस्य जगृहुरित्यनेनान्वयः॥ ३८॥

क्ष्वेडितास्फोटितानाञ्च तैरित्यर्थः॥ ३९॥ ४०॥

समुद्यतशिलानगं समुद्यताः शिला नगा वृक्षाश्च येन तत्॥ ४१॥

॥ ४२॥ ४३॥

ततः समुत्कृष्टरवं निशम्य
रक्षोगणा वानरयूथपानाम्।
अमृष्यमाणाः परहर्षमुग्रं
महाबला भीमतरं प्रणेदुः ॥ ४५ ॥

ते राक्षसबलं घोरं प्रविश्य हरियूथपाः।
विचेरुरुद्यतैः शैलैर्नगाः शिखरिणो यथा ॥ ४६ ॥
केचिदाकाशमाविश्य केचिदुर्व्यां प्लवङ्गमाः।
रक्षःसैन्येषु संक्रुद्धाः केचिद्द्रुमशिलायुधाः ॥ ४७ ॥
द्रुमांश्च विपुलस्कन्धान् गृह्य वानरपुङ्गवाः।
तद्युद्धमभवद्घोरं रक्षोवानरसङ्कुलम् ॥ ४८ ॥
ते पादपशिलाशैलैश्चक्रुर्वृष्टिमनूपमाम्।
बाणौघैर्वार्य्यमाणाश्च हरयो भीमविक्रमाः ॥ ४९ ॥
सिंहनादान् विनेदुश्च रणे राक्षसवानराः।
शिलाभिश्चूर्णयामासुर्यातुधानान् प्लवङ्गमाः ॥ ५० ॥
निर्जघ्नुः संयुगे क्रुद्धाः कवचाभरणावृतान्।
केचिद्रथगतान् वीरान् गजवाजिगतानपि ॥ ५१ ॥

प्रतिनर्दन्त प्रत्यनर्दन्त ॥ ४४ ॥
परहर्षं शत्रुहर्षम् अमृष्यमाणाः ॥ ४५ ॥ ४६ ॥
केचित् द्रुमशिलायुधा इति स्वभावोक्तिः। तादृशा प्लवङ्गमा रक्षः

निजघ्नुः सहसा वीरान् यातुधानान् प्लवङ्गमाः।
शैलशृङ्गान्विताङ्गास्ते मुष्टिभिर्वान्तलोचनाः॥ ५२॥
चेलुः पेतुश्च नेदुश्च तत्र राक्षसपुङ्गवाः।
राक्षसाश्च शरैस्तीक्ष्णैर्बिभिदुः कपिकुञ्जरान्॥ ५३॥
शूलमुद्गरखड्गैश्च जघ्नुः प्रासैश्च शक्तिभिः।
अन्योऽन्यं पातयामासुः परस्परजयैषिणः॥ ५४॥
रिपुशोणितदिग्धाङ्गास्तत्र वानरराक्षसाः।
ततः शैलैश्च खड्गैश्च विसृष्टैर्हरिराक्षसैः॥ ५५॥
मुहूर्त्तेनावृता भूमिरभवच्छोणितोक्षिता।
विकीर्णैः पर्वताकारैरक्षोभिरभिमर्दितैः।
आसीद्वसुमती पूर्णा तदा युद्धमदान्वितैः॥ ५६॥
आक्षिप्ताः क्षिप्यमाणाश्च भग्नशैलैश्च वानरैः।
पुनरङ्गैस्तदा चक्रुर्वानरा युद्धमद्भुतम्॥ ५७॥
वानरान् वानरैरेव जघ्नुस्ते नैर्ऋतर्षभाः।
राक्षसान् राक्षसैरेव जघ्नुस्ते वानरा अपि॥ ५८॥

सैन्येषु संक्रुद्धा आकाशमाविश्य चेरुः। केचिद्विपुलस्कन्धान् द्रुमान् गृहीत्वोर्व्यां चेरुः॥ ४७॥ ४८॥ ४९॥ ५०॥ ५१॥

शैलशृङ्गान्विताङ्गाः गिरिशिखरैर्व्याप्ताङ्गाः। मुष्टिभिर्मुष्टिप्रहारै-र्वान्तलोचनाः बहिर्निर्गतलोचनाः॥ ५२॥ ५३॥ ५४॥ ५५॥ ५६॥

आक्षिप्ताः क्षिप्यमाणा इति नियुद्धप्रकारकथनम्। भग्नशैलैश्च

आक्षिप्य च शिलाः शैलान् जघ्नुस्ते राक्षसास्तदा ।
तेषाञ्चाच्छिद्य शस्त्राणि जघ्नूरक्षांसि वानराः ॥ ५९ ॥
निर्जघ्नुः शैलशृङ्गैश्च बिभिदुश्च परस्परम् ।
सिंहनादान् विनेदुश्च रणे राक्षसवानराः ॥ ६० ॥
छिन्नवर्मतनुत्राणा राक्षसा वानरैर्हताः ।
रुधिरं प्रस्रुतास्तत्र रससारमिव द्रुमाः ॥ ६१ ॥
रथेन च रथञ्चापि वारणेनापि वारणम् ।
हयेन च हयं केचिन्निर्जघ्नुर्वानरा रणे ॥ ६२ ॥
क्षुरप्रैरर्द्धचन्द्रैश्च भल्लैश्च निशितैः शरैः ।
राक्षसा वानरेन्द्राणां बिभिदुः पादपान् शिलाः ॥ ६३ ॥
विकीर्णैः पर्वतास्तैश्च द्रुमच्छिन्नैश्च संयुगे ।
हतैश्च कपिरक्षोभिर्दुर्गमा वसुधाभवत् ॥ ६४ ॥
ते वानरा गर्वितहृष्टचेष्टाः
संग्राममासाद्य भयं विमुच्य ।

वानरैः राक्षसभक्षयुद्धसाधनशैलादिभिरत एव पुनरङ्गैर्हस्तपादादिभिरासन्ना भूत्वा युद्धचक्रुः ॥ ५७ ॥ ५८ ॥

आक्षिप्य बलात् गृहीत्वा । ५९ । ६० ।

प्रस्रुताः स्रुतवन्तः । रससारो निर्य्यासः ॥ ६१ ॥ ६२ । ६३ ॥

पर्वतास्तैर्निरस्तपर्वतैः । द्रुमच्छिन्नैः छिन्नद्रुमैः । विकीर्णा व्याप्ता ॥ ६४ ॥

युद्धं स्म सर्वं सह राक्षसैस्ते
नानायुधाश्चक्रुरदीनसत्त्वाः ॥ ६५ ॥
तस्मिन् प्रवृत्ते तुमुले विमर्दे
प्रहृष्यमाणेषु वलीमुखेषु।
निपात्यमानेषु च राक्षसेषु
महर्षयो देवगणाश्च नेदुः ॥ ६६ ॥
ततो हयं मारुततुल्यवेग-
मारुह्य शक्तिं निशितां प्रगृह्य।
नरान्तको वानरसैन्यमुग्रं
महार्णवं मीन इवाविवेश ॥ ६७ ॥
स वानरान् सप्तशतानि वीरः
प्रासेन दीप्तेन विनिर्बिभेद।
एकः क्षणेनेन्द्ररिपुर्महात्मा
जघान सैन्यं हरिपुङ्गवानाम् ॥ ६८ ॥
ददृशुश्च महात्मानं हयपृष्ठप्रतिष्ठितम्।
चरन्तं हरिसैन्येषु विद्याधरमहर्षयः ॥ ६९ ॥

गर्वितहृष्टचेष्टाः सञ्जातगर्वा हृष्टा चेष्टा येषां ते। नानायुधाः द्रुमशैलदन्तनखादिनानाप्रहरणायुताः ॥ ६५ ॥

प्रहृष्यमाणेषु प्रहृष्यत्सु। वलीमुखेषु वानरेषु ॥ ६६ ॥ ६७ ॥ ६८ ॥ ॥ ६९ ॥

स तस्य ददृशे मार्गो मांसशोणितकर्दमः।
पतितैः पर्व्वताकारैर्व्वानरैरभिसंवृतः॥ ७० ॥
यावद्विक्रमितुं बुद्धिश्चक्रुः प्लवगपुङ्गवाः।
तावदेतानतिक्रम्य निर्बिभेद नरान्तकः॥ ७१ ॥
ददाह हरिसैन्यानि वनानीव विभावसुः।
यावदुत्पाटयामासुर्वृक्षान् शैलान् वनौकसः॥ ७२ ॥
तावत्प्रासहताः पेतुर्वज्रकृत्ता इवाचलाः।
ज्वलन्तं प्रासमुद्यम्य संग्रामान्ते नरान्तकः॥ ७३ ॥
दिक्षु सर्व्वासु बलवान् विचचार नरान्तकः।
प्रमृद्गन् सर्व्वतो युद्धे प्रावृट्काले यथानिलः॥ ७४ ॥
न शेकुर्धावितुं वीरा न स्थातुं स्पन्दितुं कुतः।
उत्पतन्तं स्थितं यान्तं सर्व्वान् विव्याध वीर्य्यवान्॥ ७५ ॥
एकेनान्तककल्पेन प्रासेनादित्यतेजसा।
भग्नानि हरिसैन्यानि निपेतुर्धरणीतले॥ ७६ ॥
वज्रनिष्पेषसदृशं प्रासस्याभिनिपातनम्।
न शेकुर्व्वानराः सोढुं ते विनेदुर्महास्वनम्॥ ७७ ॥
पततां हरिवीराणां रूपाणि प्रचकाशिरे।
वज्रभिन्नाग्रकूटानां शैलानां पततामिव॥ ७८ ॥

मार्गो युद्धार्थं गमनमार्गः। पतितैर्वानरैरभिसंवृतो मांसशो।णित-

ये तु पूर्व महात्मानः कुम्भकर्णेन पातिताः ।
ते स्वस्था वानरश्रेष्ठाः सुग्रीवमुपतस्थिरे ॥ ७९ ॥
प्रेक्षमाणः स सुग्रीवो ददृशे हरिवाहिनीम् ।
नरान्तकभयत्रस्तां विद्रवन्तीं यतस्ततः ॥ ८० ॥
विद्रुतां वाहिनीं दृष्ट्वा स ददर्श नरान्तकम् ।
गृहीतप्रासमायान्तं हयपृष्ठप्रतिष्ठितम् ॥ ८१ ॥
दृष्ट्वोवाच महातेजाः सुग्रीवो वानराधिपः ।
कुमारमङ्गदं वीरं शक्रतुल्यपराक्रमम् ॥ ८२ ॥
गच्छैनं राक्षसं वीरं योऽसौ तुरगमास्थितः ।
भक्षयन्तं परबलं क्षिप्रं प्राणैर्वियोजय ॥ ८३ ॥
स भर्त्तुर्वचनं श्रुत्वा निष्पपाताङ्गदस्तदा ।
अनीकान्मेघसङ्काशान्मेघादंशुमानिव वीर्य्यवान् ॥ ८४ ॥
शैलसङ्घातसङ्काशो हरीणामुत्तमोऽङ्गदः ।
रराजाङ्गदसन्नद्धः सधातुरिव पर्वतः ॥ ८५ ॥

कर्दमः सम् ददृशे दृष्टः ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ॥ ७७ ॥ ७८ ॥

स्वस्थाः स्वस्थचित्तेन्द्रियाः । वानरश्रेष्ठा अङ्गदादयः ॥ ७९ ॥ ८० ॥ ॥ ८१ ॥ ८२ ॥

गच्छैनं राक्षसमिति । हन्तुमिति शेषः ॥ ८३ ॥

मेघसङ्काशादनीकात् स्वसेनामध्यात् ॥ ८४ ॥

निरायुधो महातेजाः केवलं नखदंष्ट्रवान्।
नरान्तकमभिक्रम्य वालिपुत्रोऽब्रवीद्वचः॥ ८६॥
तिष्ठ किं प्राकृतैरेभिर्हरिभिस्त्वं करिष्यसि।
अस्मिन् वज्रसमस्पर्शं प्रासं क्षिप ममोरसि॥ ८७॥
अङ्गदस्य वचः श्रुत्वा प्रचुक्रोध नरान्तकः।
सन्दश्य दशनैरोष्ठं निःश्वस्य च भुजङ्गवत्।
अभिगम्याङ्गदं क्रुद्धो वालिपुत्रं नरान्तकः॥ ८८॥

स प्रासमाविध्य तदाङ्गदाय
समुज्ज्वलन्तं सहसोत्ससर्ज।
स वालिपुत्रोरसि वज्रकल्पे
बभूव भग्नो न्यपतच्च भूमौ॥ ८९॥
तं प्रासमालोक्य तदा विभग्नं
सुपर्णकृत्तोरगवीर्य्यकल्पम्।
तलं समुद्यम्य स वालिपुत्र-
स्तुरङ्गमस्याभिजघान मूर्ध्नि॥ ९०॥

अङ्गदेन दिव्यभुजाभरणेन सन्नद्धो युतः॥ ८५। ८६॥
अस्मिन् ममोरसि क्षिपेत्यन्वयः॥ ८७॥ ८८॥
वालिपुत्रमभिगम्य प्रासमुत्ससर्ज। स प्रासः भग्नोऽभवद्भूमौ पपात च॥ ८९॥ ९०॥

निमग्नपादः स्फुटिताचितारो
निष्क्रान्तजिह्वोऽचलसन्निकाशः ।
स तस्य वाजी निपपात भूमौ
तलप्रहारेण विकीर्णमूर्द्धा ॥ ८१ ॥
नरान्तकः क्रोधवशं जगाम
हतं तुरङ्गं पतितं समीक्ष्य ।
स मुष्टिमुद्यम्य महाप्रभावो
जघान शीर्षे युधि वालिपुत्रम् ॥ ८२ ॥
अथाङ्गदो मुष्टिविशीर्णमूर्द्धा
सुस्राव तीव्रं रुधिरं भृशोष्णम् ।
मुहुर्विजज्वाल मुमोह चापि
संज्ञां समासाद्य विसिस्मिये च ॥ ८३ ॥
अथाङ्गदो मृत्युसमानवेगं
संवर्त्य मुष्टिं गिरिशृङ्गकल्पम् ।
निपातयामास तदा महात्मा
नरान्तकस्योरसि वालिपुत्रः ॥ ८४ ॥
स मुष्टिनिर्भिन्ननिमग्नवक्षा
ज्वाला वमन् शोणितदिग्धगात्रः ।

स्फुटिताक्षितारः स्फुटिता विशीर्णा अक्ष्णस्तारा कनीनिका यस्य सः ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥

नरान्तको भूमितले पपात
यथाचलो वज्रनिपातभग्नः ॥ ९५ ॥
तदान्तरिक्षे त्रिदशोत्तमानां
वनौकसाञ्चैव महाप्रणादः।
बभूव तस्मिन्निहतेऽग्र्यवीर्य्ये
नरान्तके वालिसुतेन संख्ये ॥ ९६ ॥
अथाङ्गदो राममनःप्रहर्षणं
सुदुष्करं तं कृतवान् हि विक्रमम्।
विसिस्मिये सोऽप्यथ भीमकर्मा
पुनश्च युद्धे स बभूव हर्षितः ॥ ९७ ॥
नरान्तकं हतं दृष्ट्वा चुक्रुशुर्नैर्ऋतर्षभाः।
देवान्तकस्त्रिमूर्द्धा च पौलस्त्यश्च महोदरः ॥ ९८ ॥
आरूढो मेघसङ्काशं वारणेन्द्रं महोदरः।
वालिपुत्रं महावीर्य्यमभिदुद्राव वेगवान् ॥ ९९ ॥

मुष्टिना निर्भिन्नमतएव निमग्नं वक्षो यस्य सः। ज्वालाः अभि-घातोत्था वमन् ॥ ९५ ॥ ९६ ॥

राममनःप्रहर्षणं राममनसः प्रहर्षणम्। सोऽपि रामोऽपि। अथातिभीमकर्माङ्गदः पुनश्च युद्धे युद्धनिमित्तं हर्षितो बभूव। तुष्टः सन् सन्नद्धो बभूवेत्यर्थः ॥ ९७ ॥

भ्रातृव्यसनसन्तप्तस्तदा देवान्तको बली।
आदाय परिघं घोरमङ्गदं समभिद्रवत्॥ १००॥
रथमादित्यसङ्काशं युक्तं परमवाजिभिः।
आस्थाय त्रिशिरा वीरो वालिपुत्रमथाभ्यगात्॥ १०१॥
स त्रिभिर्देवदर्पघ्नैराक्षसेन्द्रैरभिद्रुतः।
वृक्षमुत्पाटयामास महाविटपमङ्गदः॥ १०२॥
देवान्तकाय तं वीरश्चिक्षेप सहसाङ्गदः।
महावृक्षं महाशाखं शक्रो दीप्तमिवाशनिम्॥ १०३॥
त्रिशिरास्तं प्रचिच्छेद शरैराशीविषोपमैः।
स वृक्षं कृत्तमालोक्य उत्पपात तदाङ्गदः॥ १०४॥
स ववर्ष ततो वृक्षान् शिलाश्च कपिकुञ्जरः।
तान् प्रचिच्छेद संक्रुद्धस्त्रिशिरा निशितैः शरैः॥ १०५॥
परिघाग्रेण तान् वृक्षान् बभञ्ज स महोदरः।
त्रिशिराश्चाङ्गदं वीरमभिदुद्राव सायकैः॥ १०६॥
गजेन समभिद्रुत्य वालिपुत्रं महोदरः।

अत्र सर्गावच्छेदो बहुषु पुस्तकेषु न दृश्यत इत्यस्माभिरपि न कृतः। पूर्वोत्तरवाक्ययोरेककर्तृकयुद्धवर्णनादिति कतकः॥ ९८॥ ९९॥ १००॥ १०१॥ १०२॥

दीप्तामशनिमिव वृक्षं चिक्षेप॥ १०३॥

जघानोरसि संक्रुद्धस्तोमरैर्वज्रसन्निभैः ॥ १०७ ॥
देवान्तकश्च संक्रुद्धः परिघेण तदाङ्गदम्।
उपगम्याभिहत्याशु व्यपचक्राम वेगवान् ॥ १०८ ॥
स त्रिभिर्नरश्रेष्ठैर्युगपत्समभिद्रुतः।
न विव्यथे महातेजा वालिपुत्रः प्रतापवान् ॥ १०९ ॥
स वेगवान् महावेगं कृत्वा परमदुर्जयः।
तलेन समभिद्रुत्य जघानास्य महागजम् ॥ ११० ॥
पेततुर्नयने तस्य विननाद स कुञ्जरः।
विषाणञ्चास्य निष्कृष्य वालिपुत्रो महाबलः ॥ १११ ॥
देवान्तकमभिद्रुत्य ताड़यामास संयुगे।
स विह्वलस्तु तेजस्वी वातोद्धूत इव द्रुमः ॥ ११२ ॥
लाक्षारससवर्णञ्च सुस्राव रुधिरं महत्।
अथाश्वस्य महातेजाः कृच्छ्राद्देवान्तको बली ॥ ११३ ॥
आविध्य परिघं वेगादाजघान तदाङ्गदम्।
परिघाभिहतश्चापि वानरेन्द्रात्मजस्तदा ॥ ११४ ॥

त्रिभिरात्तमिति। देवान्तकाय प्रच्छिन्नं हस्तं तत्सहायार्थमिति-शेषः ॥ १०४ ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥ १०९ ॥
अस्य महागजं महोदरस्य गजम् ॥ ११० ॥ १११ ॥ ११२ ॥
लाक्षारसेन समानो वर्णो यस्य तद्रुधिरम् ॥ ११३ ॥ ११४ ॥

जानुभ्यां पतितो भूमौ पुनरेवोत्पपात ह।
तमुत्पतन्तं त्रिशिराखिभिर्बाणैरजिह्मगैः ॥ ११५ ॥
घोरैर्हरिपतेः पुत्रं ललाटेऽभिजघान ह।
ततोऽङ्गदं परिक्षिप्तं त्रिभिर्नैर्ऋतपुङ्गवैः ॥ ११६ ॥
हनूमानथविज्ञाय नीलश्चापि प्रतस्थतुः।
ततश्चिक्षेप शैलाग्रं नीलस्त्रिशिरसे तदा ॥ ११७ ॥
तद्रावणसुतो धीमान् बिभेद निशितैः शरैः।
तद्बाणशतनिर्भिन्नं विदारितशिलातलम् ॥ ११८ ॥
सविस्फुलिङ्गं सज्वालं निपपात गिरेः शिरः।
स विजृम्भितमालोक्य हर्षाद्देवान्तको बली ॥ ११९ ॥
परिघेणाभिदुद्राव मारुतात्मजमाहवे।
तमापतन्तमुत्पत्य हनूमान् कपिकुञ्जरः ॥ १२० ॥
आजघान तदा मूर्ध्नि वज्रकल्पेन मुष्टिना।
शिरसि प्राहरद्वीरस्तदा वायुसुतो बली।
नादेनाकम्पयच्चैव राक्षसान् स महाकपिः ॥ १२१ ॥

अजिह्मगैः ऋजुमार्गिभिः ॥ ११५ ॥ ११६ ॥ ११७ ॥ ११८ ॥

गिरेः शिरः पर्वतस्य शृङ्गम्। विजृम्भितं त्रिशिरसः पर्वतशिखर-भेदेन रूपं जृम्भणमालोक्य ॥ ११९ ॥

तं परिघहस्तं देवान्तकम् ॥ १२० ॥ १२१ ॥

स मुष्टिनिष्पिष्टविभिन्नमूर्द्धा
निर्वान्तदन्ताक्षिविलम्बिजिह्वः।
देवान्तको राक्षसराजसूनु-
र्गतासुरुर्व्व्यां सहसा पपात॥ १२२॥
तस्मिन् हते राक्षसयोधमुख्ये
महाबले संयति देवशत्रौ।
क्रुद्धस्त्रिशीर्षा निशितास्त्रमुग्रं
ववर्ष नीलोरसि बाणवर्षम्॥ १२३॥
महोदरस्तु संक्रुद्धः कुञ्जरं पर्व्वतोपमम्।
भूयः समधिरुह्याशु मन्दरं रश्मिवानिव॥ १२४॥
ततो बाणमयं वर्षं नीलस्योपर्य्यपातयत्।
गिरौ वर्षं तड़िच्चक्रं स गर्ज्जन्निव तोयदः॥ १२५॥
ततः शरौघैरभिवृष्यमाणो
विभिन्नगात्रः कपिसैन्यपालः।

निर्वान्ता बहिर्निर्गता दन्ता अक्षिणी विलम्बि जिह्वा च यस्य सः॥ १२२॥ १२३॥

भूयः समधिरुह्येति। युद्धागमनवेलायामारूढ़स्याश्वस्याङ्गदेन हतत्वादिति भावः॥ १२४॥

तड़िच्चक्रचापमिन्द्रधनुश्च यस्यास्ति सः॥ १२५॥

नीलो बभूवाथ विसृष्टगात्रो
विष्टम्भितस्तेन महाबलेन ॥ १२६ ॥
ततस्तु नीलः प्रतिलब्धसंज्ञः
शैलं समुत्पाट्य सवृक्षखण्डम्।
ततः समुत्पत्य महोग्रवेगो
महोदरं तेन जघान मूर्ध्नि ॥ १२७ ॥
ततः स शैलाभिनिपातभग्नो
महोदरस्तेन महाद्विपेन।
व्यामोहितो भूमितले गतासुः
पपात वज्राभिहतो यथाद्रिः ॥ १२८ ॥
पितृव्यं निहतं दृष्ट्वा त्रिशिराश्चापमाददे।
हनूमन्तञ्च संक्रुद्धो विव्याध निशितैः शरैः ॥ १२९ ॥
स वायुसूनुः कुपितश्चिक्षेप शिखरं गिरेः।
त्रिशिरास्तच्छरैस्तीक्ष्णैर्बिभेद बहुधा बली ॥ १३० ॥
तद्व्यर्थं शिखरं दृष्ट्वा द्रुमवर्षं तदा कपिः।
विससर्ज रणे तस्मिन् रावणस्य सुतं प्रति ॥ १३१ ॥
तमापतन्तमाकाशे द्रुमवर्षं प्रतापवान्।

विसृष्टगात्रः स्रस्तगात्रः। विष्टम्भितो निरुद्धपराक्रमः ॥ १२६ ॥
॥ १२७ ॥ १२८ ॥

त्रिशिरा निशितैर्बाणैश्चिच्छेद च ननाद च ॥ १३२ ॥
हनूमांस्तु समुत्पत्य हयं त्रिशिरसस्तदा ।
विददार नखैः क्रुद्धो नागेन्द्रं मृगराडिव ॥ १३३ ॥
अथ शक्तिं समासाद्य कालरात्रिमिवान्तकः ।
चिक्षेपानिलपुत्राय त्रिशिरा रावणात्मजः ॥ १३४ ॥
दिवः क्षिप्तामिवोल्कान्तां शक्तिं क्षिप्तामसङ्गताम् ।
गृहीत्वा हरिशार्दूलो बभञ्ज च ननाद च ॥ १३५ ॥
तां दृष्ट्वा घोरसङ्काशां शक्तिं भग्नां हनूमता ।
प्रहृष्टा वानरगणा विनेदुर्जलदा यथा ॥ १३६ ॥
ततः खड्गं समुद्यम्य त्रिशिरा राक्षसोत्तमः ।
निचखान तदा खड्गं वानरेन्द्रस्य वक्षसि ॥ १३७ ॥
खड्गप्रहाराभिहतो हनुमान् मारुतात्मजः ।
आजघान त्रिमूर्द्धानं तलेनोरसि वीर्य्यवान् ॥ १३८ ॥
स तलाभिहतस्तेन स्रस्तहस्ताम्बरो भवि ।

---

पितृव्यं महोदरम् ॥ १२९ ॥ १३० ॥ १३१ ॥ १३२ ॥
विददार विदारितवान् ॥ १३३ ॥ १३४ ॥
दिवः च्युतामाकाशान्निर्गताम् । असङ्गताम् अमर्गसङ्गतिम् ॥
॥ १३५ ॥
घोरसङ्काशां भयङ्करस्वरूपाम् ॥ १३६ ॥ १३७ ॥ १३८ ॥

निपपात महातेजास्त्रिशिरास्त्यक्तचेतनः ॥ १३९ ॥
स तस्य पततः खड्गं तमाच्छिद्य महाकपिः ।
ननाद गिरिसङ्काशस्त्रासयन् सर्वराक्षसान् ॥ १४० ॥
अमृष्यमाणस्तं घोषमुत्पपात निशाचरः ।
उत्पत्य च हनूमन्तं ताड़यामास मुष्टिना ॥ १४१ ॥
तेन मुष्टिप्रहारेण सञ्चुकोप महाकपिः ।
कुपितश्च निजग्राह किरीटे राक्षसर्षभम् ॥ १४२ ॥

स तस्य शीर्षाण्यसिना शितेन
किरीटजुष्टानि सकुण्डलानि ।
क्रुद्धः प्रचिच्छेद सुतोऽनिलस्य
त्वष्टुः सुतस्येव शिरांसि शक्रः ॥ १४३ ॥
तान्यायताक्षाण्यगसन्निभानि
प्रदीप्तवैश्वानरलोचनानि ।
पेतुः शिरांसीन्द्ररिपोः पृथिव्यां
ज्योतींषि मुक्तानि यथेन्द्रमार्गात् ॥ १४४ ॥
तस्मिन् हते देवरिपौ त्रिशीर्षे
हनूमता शक्रपराक्रमेण ।

व्यक्तचेतनो विसंज्ञः ॥ १३९ ॥ १४० ॥ १४१ ॥
किरीटे किरीटप्रदेशे ॥ १४२ ॥

नेदुः प्रवङ्गाः प्रचचाल भूमी
रक्षांस्यथो दुद्रुविरे समन्तात् ॥ १४५ ॥
हतं त्रिशिरसं दृष्ट्वा युद्धोन्मत्तं तथैव च ।
हतौ प्रेक्ष्य दुराधर्षौ देवान्तकनरान्तकौ ॥ १४६ ॥
चुकोप परमामर्षी मत्तो राक्षसपुङ्गवः ।
जग्राहार्चिष्मतीञ्चापि गदां सर्वायसीं तदा ॥ १४७ ॥
हेमपट्टपरिक्षिप्तां मांसशोणितफेनिलाम् ।
विराजमानां विपुलां शत्रुशोणिततर्पिताम् ॥ १४८ ॥
तेजसा सम्प्रदीप्ताग्रां रक्तमाल्यविभूषिताम् ।
ऐरावतमहापद्मसार्वभौमभयावहाम् ॥ १४९ ॥
गदामादाय संक्रुद्धो मत्तो राक्षसपुङ्गवः ।
हरीन् समभिदुद्राव युगान्ताग्निरिव ज्वलन् ॥ १५० ॥
अथर्षभः समुत्पत्य वानरो रावणानुजम् ।
मत्तानीकमुपागम्य तस्थौ तस्याग्रतो बली ॥ १५१ ॥

त्वष्टुः सुतस्य विश्वरूपस्य ॥ १४३ ॥

आयतास्यानि आयतेन्द्रियाणि ॥ १४४ ॥ १४५ ॥

युद्धोन्मत्तं महोदरं तथैव च हतमिति शेषः । एतद्वधो हनूमता कृत इत्यनुवादबलाद्गम्यम् ॥ १४६ ॥

मत्तस्तदाख्यो महापार्श्वः ॥ १४७ ॥ १४८ ॥

तं पुरस्तात् स्थितं दृष्ट्वा वानरं पर्वतोपमम्।
आजघानोरसि क्रुद्धो गदया वज्रकल्पया॥ १५२॥
स तयाभिहतस्तेन गदया वानरर्षभः।
भिन्नवक्षाः समाधूतः सुस्राव रुधिरं बहु॥ १५३॥
स सम्प्राप्य चिरात् संज्ञामृषभो वानरेश्वरः।
क्रुद्धो विस्फुरमाणोष्ठो महापार्श्वमुदैक्षत॥ १५४॥

स वेगवान् वेगवदभ्युपेत्य
तं राक्षसं वानरवीरमुख्यः।
संवर्त्य मुष्टिं सहसा जघान
बाह्वन्तरे शैलनिकाशरूपः॥ १५५॥
स कृत्तमूलः सहसेव वृक्षः
क्षितौ पपात क्षतजोक्षिताङ्गः।
तां चास्य घोरां यमदण्डकल्पां
गदां प्रगृह्याशु तदा ननाद॥ १५६॥
मुहूर्त्तमासीत् स गतासुकल्पः
प्रत्यागतात्मा सहसा सुरारिः।
उत्पत्य सन्ध्याभ्रसमानवर्ण-
स्तं वारिराजात्मजमाजघान॥ १५७॥

ऐरावतादयो दिग्गजाः॥ १४९॥ १५०॥ १५१॥ १५२॥ १५३॥

स मूर्च्छितो भूमितले पपात
मुहूर्त्तमुत्पत्य पुनः ससंज्ञः ।
तामेव तस्यााद्रिवराद्रिकल्पां
गदां समाविध्य जघान संख्ये ॥ १५८ ॥
सा तस्य रौद्रा समुपेत्य देहं
रौद्रस्य देवाध्वरविप्रशत्रोः ।
बिभेद वक्षः क्षतजञ्च भूरि
सुस्राव धात्वम्भ इवाद्रिराजः ॥ १५९ ॥
अभिदुद्राव वेगेन गदां तस्य महात्मनः ।
तां गृहीत्वा गदां भीमामाविध्य च पुनःपुनः ॥ १६० ॥
मत्तानीकं महात्मा स जघान रणमूर्द्धनि ।
स स्वया गदया भग्नो विशीर्णदशनेक्षणः ॥ १६१ ॥
निपपात तदा मत्तो वज्राहत इवाचलः ।
विशीर्णनयनो भूमौ गतसत्वो गतायुषः ।
पतिते राक्षसे तस्मिन् विद्रुतं राक्षसं बलम् ॥ १६२ ॥
तस्मिन् हते भ्रातरि रावणस्य
तन्नैऋतानां बलमर्णवाभम् ।

॥ १५४ । १५५ । १५६ । १५७ । १५८ । १५९ । १६० । १६१ ।
। १६२ ।

त्यक्तायुधं केवलजीवितार्थं
दुद्राव भिन्नार्णवसन्निकाशम् ॥ १६२ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
एकोनसप्ततितमः सर्गः ॥ ६९ ॥

भिन्नार्णवसन्निकाशमिति क्रियाविशेषणम् ॥ १६२ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे एकोनसप्ततितमः सर्गः ॥ ६९ ॥

---

## एकसप्ततितमः सर्गः ।



स्वबलं व्यथितं दृष्ट्वा तुमुलं रोमहर्षणम् ।
भ्रातॄंश्च निहतान् दृष्ट्वा शक्रतुल्यपराक्रमान् ॥ १ ॥
पितृव्यौ चापि संदृश्य समरे संनिपातितौ ।
युद्धोन्मत्तञ्च मत्तञ्च भ्रातरौ राक्षसोत्तमौ ॥ २ ॥
चुकोप च महातेजा ब्रह्मदत्तवरो युधि ।
अतिकायोऽद्रिसङ्काशो देवदानवदर्पहा ॥ ३ ॥
स भास्करसहस्रस्य सङ्घातमिव भास्वरम् ।
रथमास्थाय शक्रारिरभिदुद्राव वानरान् ॥ ४ ॥
स विस्फार्य्य तदा चापं किरीटी मृष्टकुण्डलः ।
नाम संश्रावयामास ननाद च महास्वनम् ॥ ५ ॥
तेन सिंहप्रणादेन नामविश्रावणेन च ।
ज्याशब्देन च भीमेन त्रासयामास वानरान् ॥ ६ ॥

स्वबलमिति ॥ १ ॥

पितृव्यौ काविव्याह,—युद्धोन्मत्तञ्चेत्यादि । भ्रातरावन्योऽन्यं भ्रातरौ । एतदुक्तिः परस्परसौहार्दातिशयप्रतिपादनाय ॥ २ ॥ ३ ॥

सूर्य्यसहस्रसमुदायवद्भास्वरम् ॥ ४ ॥ ५ ॥ ६ ॥

स दृष्ट्वा देहमाहात्म्यं कुम्भकर्णोऽयमुत्थितः।
भयार्त्ता वानराः सर्वे संश्रयन्ते परस्परम्॥ ७॥
ते तस्य रूपमालोक्य यथा विष्णोस्त्रिविक्रमे।
भयाद्वानरयोधास्ते विद्रवन्ति ततस्ततः॥ ८॥
तेऽतिकायं समासाद्य वानरा मूढचेतसः।
शरण्यं शरणं जग्मुर्लक्ष्मणाग्रजमाहवे॥ ९॥
ततोऽतिकायं काकुत्स्थो रथस्थं पर्वतोपमम्।
ददर्श धन्विनं दूराद्गर्जन्तं कालमेघवत्॥ १०॥
स तं दृष्ट्वा महाकायं राघवस्तु सुविस्मितः।
वानरान् सान्त्वयित्वा च विभीषणमुवाच ह॥ ११॥
कोऽसौ पर्वतसङ्काशो धनुष्मान् हरिलोचनः।
युक्ते हयसहस्रेण विशाले स्यन्दने स्थितः॥ १२॥
य एष निशितैः शूलैः सुतीक्ष्णैः प्रासतोमरैः।
अर्चिष्मद्भिर्वृतो भाति भूतैरिव महेश्वरः॥ १३॥

कुम्भकर्णोऽयमुत्थित इति मन्यमानाः परस्परं संश्रयन्ते। रक्षार्थमिति शेषः॥ ७॥

ते रूपमालोक्य ते इव वानरा इव विद्रवन्तीति तच्छब्दद्वयनिर्वाहः। इवेति शेषः॥ ८॥ ९॥ १०॥

सान्त्वयित्वा मा भैष्टेत्युक्त्वा॥ ११॥

हरिलोचनः सिंहदृष्टिः॥ १२॥ १३॥

कालजिह्वाप्रकाशाभिर्य एषोऽभिविराजते ।
आवृतो रथशक्तीभिर्विद्युद्भिरिव तोयदः ॥ १४ ॥
धनूंषि चास्य सज्जानि हेमपृष्ठानि सर्वशः ।
शोभयन्ति रथश्रेष्ठं शक्रचापमिवाम्बरम् ॥ १५ ॥
य एष रक्षःशार्दूलो रणभूमिं विराजयन् ।
अभ्येति रथिनां श्रेष्ठो रथेनादित्यवर्चसा ॥ १६ ॥
ध्वजशृङ्गप्रतिष्ठेन राहुणाभिविराजते ।
सूर्यरश्मिनिभैर्बाणैर्दिशो दश विराजयन् ॥ १७ ॥
त्रिनतं मेघनिर्ह्रादं हेमपृष्ठमलङ्कृतम् ।
शतक्रतुधनुःप्रख्यं धनुश्चास्य विराजते ॥ १८ ॥
सध्वजः सपताकश्च सानुकर्षो महारथः ।
चतुःसादिसमायुक्तो मेघस्तनितनिःस्वनः ॥ १९ ॥
विंशतिर्दशचाष्टौ च तूणास्य रथमास्थिताः ।
कार्मुकाणि च भीमानि ज्याश्च काञ्चनपिङ्गलाः ॥ २० ॥

रथशक्तीभिरिति दीर्घं आर्षः । रथस्थाभिः शक्तिभिरित्यर्थः ॥ ॥ १४ ॥ १५ ॥ १६ ॥

ध्वजशृङ्गेत्यादिना राहुध्वजत्वमुक्तम् ॥ १७ ॥

हेमपृष्ठं हेमखचितपृष्ठभागम् । त्रिनतमिति प्रागव्याख्यातम् ॥ १८ ॥

सादिनः सारथयः ॥ १९ ॥

तूणा अस्येति च्छेदः ॥ २० ॥

द्वौ च खङ्गौ च पार्श्वस्थौ प्रदीप्तौ पार्श्वशोभितौ ।
चतुर्हस्तत्सरुचितौ व्यक्तहस्तदशायतौ ॥ २१ ॥
रक्तकण्ठगुणो धीरो महापर्वतसन्निभः ।
कालः कालमहावक्त्रो मेघस्थ इव भास्करः ॥ २२ ॥
काञ्चनाङ्गदनद्धाभ्यां भुजाभ्यामेष शोभते ।
शृङ्गाभ्यामिव तुङ्गाभ्यां हिमवान् पर्वतोत्तमः ॥ २३ ॥
कुण्डलाभ्यामुभाभ्याञ्च भाति वक्त्रं सुभीषणम् ।
पुनर्वस्वन्तरगतः परिपूर्णो निशाकरः ॥ २४ ॥
आचक्ष्व मे महाबाहो त्वमेनं राक्षसोत्तमम् ।
यं दृष्ट्वा वानराः सर्वे भयार्त्ता विद्रुता दिशः ॥ २५ ॥
स पृष्टो राजपुत्रेण रामेणामिततेजसा ।
आचचक्षे महातेजा राघवाय विभीषणः ॥ २६ ॥
दशग्रीवो महातेजा राजा वैश्रवणानुजः ।
भीमकर्मा महात्मा हि रावणो राक्षसेश्वरः ॥ २७ ॥
तस्यासीद्वीर्य्यवान् पुत्रो रावणप्रतिमो बले ।

पार्श्वशोभितौ स्वपार्श्वशोभितौ । चतुर्हस्तप्रमाणाभ्यां त्सरुभ्यां खङ्गमुष्टिभ्याञ्चितौ । व्यक्तं दशहस्तपरिमाणेनायतौ ॥ २१ ॥

रक्तकण्ठगुणः रक्तकण्ठमाल्यः । कालः कृष्णवर्णः । कालस्य मृत्यो-रिव महद्वक्त्रं यस्य सः ॥ २२ ॥ २३ ॥

ऋद्धसेवी श्रुतबलः सर्वास्त्रविदुषाम्बरः॥ २८॥
अश्वपृष्ठे नागपृष्ठे खड्गे धनुषि कर्षणे।
भेदे सान्त्वे च दाने च नये मन्त्रे च सम्मतः॥ २९॥
यस्य बाहुं समाश्रित्य लङ्का भवति निर्भया।
तनयं धान्यमालिन्या अतिकायमिमं विदुः॥ ३०॥
एतेनाराधितो ब्रह्मा तपसा भावितात्मना।
अस्त्राणि चाप्यवाप्तानि रिपवश्च पराजिताः॥ ३१॥
सुरासुरैरवध्यत्वं दत्तमस्मै स्वयम्भुवा।
एतच्च कवचं दिव्यं रथश्च रविभास्करः॥ ३२॥
एतेन शतशो देवा दानवाश्च पराजिताः।
रक्षितानि च रक्षांसि यक्षाश्चापि निषूदिताः॥ ३३॥
वज्रं विष्टम्भितं येन बाणैरिन्द्रस्य धीमता।
पाशः सलिलराजस्य युद्धे प्रतिहतस्तथा॥ ३४॥
एषोऽतिकायो बलवान् राक्षसानामथर्षभः।
स रावणसुतो धीमान् देवदानवदर्पहा॥ ३५॥

पूर्वस्मादन्तरं मध्यं तत्र गतः॥ २४॥ २५॥ २६॥ २७॥ २८॥

धनुषि कर्षणे इति पाठे कृष्यतेऽनेनेति कर्षणः पाशादिदिव्यायुधं इति तीर्थः॥ २९॥ ३०॥ ३१॥

रविभास्वरो रथो रक्ष इत्यनुषङ्गः॥ ३२॥ ३३॥ ३४॥ ३५॥

तदस्मिन् क्रियतां यत्नः क्षिप्रं पुरुषपुङ्गव।।
पुरा वानरसैन्यानि क्षयं नयति सायकैः॥ ३६॥
ततोऽतिकायो बलवान् प्रविश्य हरिवाहिनीम्।
विस्फारयामास धनुर्ननाद च पुनःपुनः॥ ३७॥
तम्भीमवपुषं दृष्ट्वा रथस्थं रथिनां वरम्।
अभिपेतुर्महात्मानः प्रधाना ये वनौकसः॥ ३८॥
कुमुदो द्विविदो मैन्दो नीलः शरभ एव च।
पादपैर्गिरिशृङ्गैश्च युगपत्समभिद्रवन्॥ ३९॥
तेषां वृक्षांश्च शैलांश्च शरैः कनकभूषणैः।
अतिकायो महातेजाश्चिच्छेदास्त्रविदां वरः॥ ४०॥
तांश्चैव सर्वान् स हरीन् शरैः सर्वायसैर्बली।
विव्याधाभिमुखान् संख्ये भीमकायो निशाचरः॥ ४१॥
तेऽर्दिता बाणवर्षेण भिन्नगात्राः पराजिताः।
न शेकुरतिकायस्य प्रतिकर्त्तुं महाहवे॥ ४२॥
तत्सैन्यं हरिवीराणां त्रासयामास राघवः।
मृगयूथमिव क्रुद्धो हरिर्यौवनदर्पितः॥ ४३॥

अस्मिन्नतिकाये। क्षिप्रमित्यस्यहेतुः। पुरेति। पुरा नयति नेष्य-तीत्यर्थः॥ ३६॥ ३७॥ ३८॥

समभिद्रवन् समभ्यद्रवन्॥ ३९॥ ४०॥ ४१॥ ४२॥

यौवनदर्पितो हरिरिव तरुणसिंह इव॥ ४३॥

स राक्षसेन्द्रो हरियूथमध्ये
नायुध्यमानं निजघान कञ्चित् ।
उत्पत्य रामं सधनु:कलापी
सगर्वितं वाक्यमिदं बभाषे ॥ ४४ ॥

रथे स्थितोऽहं शरचापपाणि-
र्न प्राकृतं कञ्चन योधयामि ।
यस्यास्ति शक्तिर्व्यवसाययुक्तो
ददातु मे शीघ्रमिहाद्य युद्धम् ॥ ४५ ॥

तत्तस्य वाक्यं ब्रुवतो निशम्य
चकोप सौमित्रिररमित्रहन्ता ।
अमृष्यमाणश्च समुत्पपात
जग्राह चापञ्च ततः स्मयित्वा ॥ ४६ ॥

क्रुद्धः सौमित्रिरुत्पत्य तूणादाक्षिप्य सायकम् ।
पुरस्तादतिकायस्य विचकर्ष महद्धनुः ॥ ४७ ॥

वीरत्वादयुद्ध्यमानं कञ्चिदपि न निजघान । कलापी तूणीरवान् । सगर्वितं सगर्वम् ॥ ४४ ॥

यस्य शक्तिरस्ति व्यवसाययुक्तश्च यः स युद्धं ददातु ॥ ४५ ॥

तत्तस्य वाक्यं रामं प्रत्युक्तं स्मयित्वा अनादृत्य । स्मिङ् अनादरे । इत्यर्थः ॥ ४६ ॥

आक्षिप्य आदाय ॥ ४७ ॥

पूरयन् स महीं सर्वामाकाशं सागरं दिशः ।
ज्याशब्दो लक्ष्मणस्योग्रस्त्रासयन् रजनीचरान् ॥ ४८ ॥
सौमित्रेश्चापनिर्घोषं श्रुत्वा प्रतिभयं तदा ।
विसिस्मिये महातेजा राक्षसेन्द्रात्मजो बली ॥ ४९ ॥
तदातिकायः कुपितो दृष्ट्वा लक्ष्मणमुत्थितम् ।
आदाय निशितं बाणमिदं वचनमब्रवीत् ॥ ५० ॥
बालस्त्वमसि सौमित्रे ! विक्रमेष्वविचक्षणः ।
गच्छ किं कालसदृशं मां योधयितुमिच्छसि ॥ ५१ ॥
न हि मद्बाहुसृष्टानां बाणानां हिमवानपि ।
सोढुमुत्सहते वेगमन्तरिक्षमथो मही ॥ ५२ ॥
सुखप्रसुप्तं कालाग्निं विबोधयितुमिच्छसि ।
न्यस्य चापं निवर्त्तस्व प्राणान् जहि मद्गतः ॥ ५३ ॥
अथवा त्वं प्रतिस्तब्धो न निवर्त्तितुमिच्छसि ।
तिष्ठ प्राणान् परित्यज्य गमिष्यसि यमक्षयम् ॥ ५४ ॥

महादीन् पूरयन् राक्षसांस्त्रासयन् ज्याशब्द उद्भूदिति शेषः ॥ ४८ ॥

प्रतिभयं भयङ्करम् ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

मद्गतो मां प्राप्तः ॥ ५३ ॥

प्रतिस्तब्धोऽहङ्कारवान् निवर्त्तितुं नेच्छसि तदा तिष्ठ । स त्वं प्राणान् परित्यज्य यमक्षयं गमिष्यसि ॥ ५४ ॥

पश्य मे निशितान् बाणान् रिपुदर्पनिषूदनान् ।
ईश्वरायुधसङ्काशांस्तप्तकाञ्चनभूषणान् ॥ ५५ ॥
एष ते सर्पसङ्काशो बाणः पास्यति शोणितम् ।
मृगराज इव क्रुद्धो नागराजस्य शोणितम् ।
इत्येवमुक्त्वा संक्रुद्धः शरं धनुषि सन्दधे ॥ ५६ ॥

श्रुत्वातिकायस्य वचः सरोषं
सगर्वितं संयति राजपुत्रः ।
स सञ्चुकोपातिबलो मनस्वी
उवाच वाक्यञ्च ततो बृहच्छ्रीः ॥ ५७ ॥
न वाक्यमात्रेण भवान् प्रधानो
न कत्थनात्सत्पुरुषा भवन्ति ।
मयि स्थिते धन्विनि बाणपाणौ
निदर्शयस्वात्मबलं दुरात्मन् ! ॥ ५८ ॥

कर्मणा सूचयात्मानं न विकत्थितुमर्हसि ।
पौरुषेण तु यो युक्तः स तु शूर इति स्मृतः ॥ ५९ ॥
सर्वायुधसमायुक्तो धन्वी त्वं रथमास्थितः ।
शरैर्वा यदि वाप्यस्त्रैर्दर्शयस्व पराक्रमम् ॥ ६० ॥
ततः शिरस्ते निशितैः पातयिष्याम्यहं शरैः ।
मारुतः कालसंयुक्तं वृन्तात्तालफलं यथा ॥ ६१ ॥

ईश्वरायुधं त्रिशूलम् ॥ ५५ ॥ ५६ ॥ ५७ ॥

अद्य ते मामका बाणास्तप्तकाञ्चनभूषणाः।
पास्यन्ति रुधिरं गात्राद्बाणशल्यान्तरोत्थितम् ॥ ६२ ॥
बालोऽयमिति विज्ञाय न चावज्ञातुमर्हसि।
बालो वा यदि वा वृद्धो मृत्युं जानीहि संयुग ॥ ६३ ॥
बालेन विष्णुना लोकास्त्रयः क्रान्तास्त्रिविक्रमैः।
लक्ष्मणस्य वचः श्रुत्वा हेतुमत्परमार्थवत् ॥ ६४ ॥
ततो विद्याधरा भूता देवदैत्या महर्षयः।
गुह्यकाश्च महात्मानस्तद्युद्धं ददृशुस्तदा ॥ ६५ ॥
ततोऽतिकायः कुपितश्चापमारोप्य सायकम्।
लक्ष्मणाय प्रचिक्षेप संक्षिपन्निव चाम्बरम् ॥ ६६ ॥
तमापतन्तं निशितं शरमाशीविषोपमम्।
अर्द्धचन्द्रेण चिच्छेद लक्ष्मणः परवीरहा ॥ ६७ ॥
तं निकृत्तं शरं दृष्ट्वा कृत्तभोगमिवोरगम्।
अतिकायो भृशं क्रुद्धः पञ्च बाणान् समादधे ॥ ६८ ॥

प्रधानः श्रेष्ठः। कत्थनादात्मनः श्लाघामात्रात्। सत्पुरुषाः श्लाघ्यगुणयुक्ता न भवन्ति। आत्मनो बलं सामर्थ्यम् ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥

बाणशल्यान्तरोत्थितं बाणशल्यकृतच्छिद्रादुत्थितम् ॥ ६२ ॥

मृत्युं जानीहि पुरःस्थितस्य ममेति शेषः ॥ ६३ ॥

बाल्यं न प्रतिबन्धकं पराक्रमे इत्यत्र दृष्टान्तमाह,—बालेनेति। वामनेनेत्यर्थः ॥ ६४ ॥ ६५ ॥

तान् शरान् सम्प्रचिक्षेप लक्ष्मणाय निशाचरः।
तानप्राप्तान् शितैर्बाणैश्चिच्छेद भरतानुजः॥ ६९ ॥
स तांश्छित्त्वा शितैर्बाणैर्लक्ष्मणः परवीरहा।
आददे निशितं बाणं ज्वलन्तमिव तेजसा॥ ७० ॥
तमादाय धनुःश्रेष्ठे योजयामास लक्ष्मणः।
विचकर्ष च वेगेन विससर्ज च सायकम्॥ ७१ ॥
पूर्णायतविसृष्टेन शरेण नतपर्वणा।
ललाटे राक्षसश्रेष्ठमाजघान स वीर्य्यवान्॥ ७२ ॥
स ललाटे शरो मग्नस्तस्य भीमस्य रक्षसः।
ददृशे शोणितेनाक्तः पन्नगेन्द्र इवाचले॥ ७३ ॥
राक्षसः प्रचकम्पेऽथ लक्ष्मणेषुप्रपीड़ितः।
रुद्रबाणहतं घोरं यथा त्रिपुरगोपुरम्।
चिन्तयामास चाश्वस्य विमृश्य च महाबलः॥ ७४ ॥
साधु बाणनिपातेन श्लाघनीयोऽसि मे रिपुः।

सायकश्चापमारोप्य बाणं धनुषि सन्धाय। सङ्क्षिपन्निव चाम्बरं बाणवेगेनान्तरालस्थितमाकाशं ग्रसन्निव॥ ६६॥ ६७॥ ६८॥ ६९॥ ७०॥ ७१॥

पूर्णायतविसृष्टेन पूर्णाकर्षणपूर्वकं विसृष्टेन त्यक्तेन ललाटे आजघानेत्यन्वयः। ७२। ७३।

त्रिपुरगोपुरं त्रिपुरासुरपुरस्य गोपुरम्। आश्वस्य संज्ञां प्राप्य। विमृश्य विचार्य्य कर्त्तव्यमर्थं चिन्तयामास। ७४।

दिधयैवं विद्राव्यौसं विनम्य च महाभुजो ।
स रथोपस्थमास्थाय रथेन प्रचचार ह ॥ ७५ ॥
एवं वीरौ पश्य सहेति राघवात् राक्षसर्षभः ।
[illegible] ॥ ७६ ॥
ते बाणाः कालसङ्काशा राघवेन्द्रधनुश्च्युताः ।
हेमपुङ्खा रविप्रख्याश्चक्रुर्दीप्तमिवाम्बरम् ॥ ७७ ॥
ततस्तान् राक्षसोत्सृष्टान् शरौघान् राघवानुजः ।
असम्भ्रान्तः प्रचिच्छेद निशितैर्बहुभिः शरैः ॥ ७८ ॥
तान् शरान् युधि संप्रेक्ष्य निहतान् रावणात्मजः ।
चुकोप त्रिदशेन्द्रारिर्जग्राह निशितं शरम् ॥ ७९ ॥
स सन्धाय महातेजास्तं बाणं सहसोत्सृजत् ।
तेन सौमित्रिमायान्तमाजघान स्तनान्तरे ॥ ८० ॥
अतिकायेन सौमित्रिस्ताडितो युधि वक्षसि ।
सुस्राव रुधिरं तीव्रं मदं मत्त इव द्विपः ॥ ८१ ॥
स चकार तदात्मानं विशल्यं सहसा विभुः ।
जग्राह च शरं तीक्ष्णमस्त्रेणापि समाददे ॥ ८२ ॥

तत्रैवार्थमाह,—स्कन्धेति । स्कन्धे इव गाप्ययोगेण त्वं मे स्कन्धो रिपुरस्त्वीयेवमास्यं विवृत्य प्रकटं यथा भवति तथा विधायाभिधाय भुजौ विनम्य पृष्ठे स्थापयित्वा रथोपस्थमास्थाय रथेन प्रचचारहे-त्यन्वयः । ७५ । ७६ । ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥

आग्नेयेन तदास्त्रेण योजयामास सायकम् ।
स जज्वाल तदा बाणो धनुश्चास्य तदात्मनः ॥ ८३ ॥
अतिकायोऽतितेजस्वी रौद्रमस्त्रं समाददे ।
तेन बाणं भुजङ्गाभं हेमपुङ्खमयोजयत् ॥ ८४ ॥
तदस्त्रं ज्वलितं घोरं लक्ष्मणः शरमाहितम् ।
अतिकायाय चिक्षेप कालदण्डमिवान्तकः ॥ ८५ ॥
आग्नेयास्त्राभिसंयुक्तं दृष्ट्वा बाणं निशाचरः ।
उत्ससर्ज तदा बाणं रौद्रं सूर्य्यास्त्रयोजितम् ॥ ८६ ॥
तावुभावम्बरे बाणावन्योऽन्यमभिजघ्नतुः ।
तेजसा सम्प्रदीप्ताग्रौ क्रुद्धाविव भुजङ्गमौ ।
तावन्योऽन्यं विनिर्दह्य पेततुः पृथिवीतले ॥ ८७ ॥
निर्र्च्चिषौ भस्मकृतौ न भ्राजेते शरोत्तमौ ।
तावुभौ दीप्यमानौ स्म न भ्राजेते महीतले ॥ ८८ ॥
ततोऽतिकायः संक्रुद्धस्त्वाष्ट्रमैषीकमुत्सृजत् ।

आत्मानं विशल्यश्चकारेत्यत्र हेतुर्विभुरिति । विशल्यत्वानुसन्धानवानित्यर्थः ॥ ८२ ॥

अस्त्रेणास्त्रमन्त्रेण । तदेवाह,—आग्नेयेनेति ॥ ८३ ॥ ८४ ॥

आहितम् आहितदिव्यास्त्रशक्तिम् । अस्त्ररूपं शरम् ॥ ८५ ॥ ८६ ॥ ॥ ८७ ॥

दीप्यमानौ तादृशावपि परस्पराभिघातान्न भ्राजेते ॥ ८८ ॥

ततश्चिच्छेद सौमित्रिरस्त्रमैन्द्रेण वीर्य्यवान् ॥ ८९ ॥
ऐषीकं निहतं दृष्ट्वा कुमारो रावणात्मजः।
याम्येनास्त्रेण संक्रुद्धो योजयामास सायकम् ॥ ९० ॥
ततस्तादस्त्रं चिक्षेप लक्ष्मणाय निशाचरः।
वायव्येन तदस्त्रेण निजघान स लक्ष्मणः ॥ ९१ ॥
अथैनं शरधाराभिर्धाराभिरिव तोयदः।
अभ्यवर्षत संक्रुद्धो लक्ष्मणो रावणात्मजम् ॥ ९२ ॥
तेऽतिकायं समासाद्य कवचे वज्रभूषिते।
भग्नाग्रशल्याः सहसा पेतुर्बाणा महीतले ॥ ९३ ॥
तान्मोघानभिसम्प्रेक्ष्य लक्ष्मणः परवीरहा।
अभ्यवर्षत बाणानां सहस्रेण महायशाः ॥ ९४ ॥
स वृष्यमाणो बाणौघैरतिकायो महाबलः।
अवध्यकवचः संख्ये राक्षसो नैव विव्यथे ॥ ९५ ॥
न शशाक रुजं कर्त्तुं युधि तस्य नरोत्तमः।
अथैनमभ्युपागम्य वायुर्वाक्यमुवाच ह ॥ ९६ ॥
ब्रह्मदत्तवरो ह्येष अवध्यकवचावृतः।
ब्राह्मेणास्त्रेण भिन्ध्येनमेष वध्यो हि नान्यथा।

त्वाष्ट्रं त्वष्टृदेवताकम् ऐषीकाख्यम् ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥
भग्नमग्रवर्त्तिशल्यं येषां ते ॥ ९३ ॥
मोघान् व्यर्थान् ॥ ९४ ॥

अवध्य एष ह्यन्येषामस्त्राणां कवची बली ॥ ९७ ॥

ततस्तु वायोर्वचनं निशम्य
सौमित्रिरिन्द्रप्रतिमानवीर्य्यः।
समादधे बाणमथोग्रवेगं
तद् ब्राह्ममस्त्रं सहसा नियुज्य ॥ ९८ ॥

तस्मिन् वरास्त्रे तु नियुज्यमाने
सौमित्रिणा बाणवरे शिताग्रे।
दिशश्च चन्द्रार्कमहाग्रहाश्च
नभश्च तत्रास रराम चोर्वी ॥ ९९ ॥

तं ब्रह्मणोऽस्त्रेण नियुज्य चापे
शरं सपुङ्खं यमदूतकल्पम्।
सौमित्रिरिन्द्रारिसुतस्य तस्य
ससर्ज बाणं युधि वज्रकल्पम् ॥ १०० ॥

तं लक्ष्मणोत्सृष्टविवृद्धवेगं
समापतन्तं श्वसनोग्रवेगम्।
सुपर्णवज्रोत्तमचित्रपुङ्खं
तदातिकायः समरे ददर्श ॥ १०१ ॥

तं प्रेक्षमाणः सहसातिकायो
जघान बाणैर्निशितैरनेकैः।

वध्यमानाः क्रियमाणवर्षः ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥

स सायकस्तस्य सुवर्णवेग-
स्तथातिवेगेन जगाम पार्श्वम् ॥ १०२ ॥
तमागतं प्रेक्ष्य तदातिकायो
बाणं प्रदीप्तान्तककालकल्पम्।
जघान शक्त्यृष्टिगदाकुठारैः
शूलैः शरैश्चाप्यविपन्नचेष्टः ॥ १०३ ॥
तान्यायुधान्यद्भुतविग्रहाणि
मोघानि कृत्वा स शरोऽग्निदीप्तः।
प्रगृह्य तस्यैव किरीटजुष्टं
तदातिकायस्य शिरो जहार ॥ १०४ ॥
तच्छिरः सशिरस्त्राणं लक्ष्मणेषुप्रमर्दितम्।
पपात सहसा भूमौ शृङ्गं हिमवतो यथा ॥ १०५ ॥
तं भूमौ पतितं दृष्ट्वा विक्षिप्ताम्बरभूषणम्।
बभूवुर्व्यथिताः सर्वे हतशेषा निशाचराः ॥ १०६ ॥
ते विषण्णमुखा दीनाः प्रहारजनितश्रमाः।
विनेदुरुच्चैर्बहवः सहसा विस्वरैः स्वरैः ॥ १०७ ॥
ततस्तत्परितो याता निरपेक्षा निशाचराः।
पुरीमभिमुखा भीता द्रवन्तो नायके हते ॥ १०८ ॥

॥ ११० ॥ १०१ ॥ १०२ ॥ १०३ । १०४ । १०५ । १०६ ॥ १०७ ।
। १०८ ।

प्रहर्षयुक्ता बहवस्तु वानराः
प्रफुल्लपद्मप्रतिमाननास्तदा ।
अपूजयँल्लक्ष्मणमिष्टभागिनं
हते रिपौ भीमबले दुरासदे ॥ १०९ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
एकसप्ततितमः सर्गः ॥ ७१ ॥

इष्टभागिनम् इष्टस्य भागः प्राप्तिस्तद्वन्तम्। इष्टमतिकायवधं प्राप्तवन्तमित्यर्थः ॥ १०९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

---

## द्विसप्ततितमः सर्गः ।

अतिकायं हतं श्रुत्वा लक्ष्मणेन महात्मना ।
उद्वेगमगमद्राजा वचनञ्चेदमब्रवीत् ॥ १ ॥
धूम्राक्षः परमामर्षी सर्वशस्त्रभृतां वरः ।
अकम्पनः प्रहस्तश्च कुम्भकर्णस्तथैव च ॥ २ ॥
एते महाबला वीरा राक्षसा युद्धकाङ्क्षिणः ।
जेतारः परसैन्यानां परैर्नित्यापराजिताः ॥ ३ ॥
ससैन्यास्ते हता वीरा रामेणाक्लिष्टकर्मणा ।
राक्षसाः सुमहाकाया नानाशस्त्रविशारदाः ॥ ४ ॥
अन्ये च बहवः शूरा महात्मानो निपातिताः ।
प्रख्यातबलवीर्य्येण पुत्रेणेन्द्रजिता मम ॥ ५ ॥
तौ भ्रातरौ तदा बद्धौ घोरैर्दत्तवरैः शरैः ।
यन्न शक्यं सुरैः सर्वैरसुरैर्वा महाबलैः ॥ ६ ॥
मोक्तुं तद्बन्धनं घोरं यक्षगन्धर्वपन्नगैः ।

अतिकायमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

तन्न जाने प्रभावैर्वा मायया मोहनेन वा ॥ ७ ॥
शरबन्धाद्विमुक्तौ तौ भ्रातरौ रामलक्ष्मणौ ।
ये योधा निर्गताः शूरा राक्षसा मम शासनात् ॥ ८ ॥
ते सर्वे निहता युद्धे वानरैः सुमहाबलैः
तं न पश्याम्यहं युद्धे योऽद्य रामं सलक्ष्मणम् ।
नाशयेत् सबलं वीरं ससुग्रीवं विभीषणम् ॥ ९ ॥
अहो सुबलवान् रामो महदस्त्रबलञ्च वै ।
यस्य विक्रममासाद्य राक्षसा निधनं गताः ॥ १० ॥
अप्रमत्तैश्च सर्वत्र गुल्मै रक्ष्या पुरीत्वियम् ।
अशोकवनिका चैव यत्र सीताभिरक्ष्यते ॥ ११ ॥
निष्क्रामो वा प्रवेशो वा ज्ञातव्यः सर्वदैव नः ।
यत्र यत्र भवेत् गुल्मस्तत्र तत्र पुनः पुनः ॥ १२ ॥

दत्तवरैर्वरदत्तैः शरैर्यौ खरादिहन्तारौ भ्रातरौ तौ बद्धौ। यच्छरबन्धनं सुरादिभिरपि मोक्तुं न शक्यं तस्मादपि शरबन्धनाद्य विमुक्तौ तत्प्रभावैः सहजस्वबलादिवैभवैरथवा मायया प्रतिमायाबलेन वा मोहनेन वा बन्धकरनागानां मोहनेन वेति न जाने इत्युत्तरेण सम्बन्धः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

अप्रमत्तैश्चेति । रक्ष्यायुष्माभिरवशिष्टराक्षसैरिति शेषः । अशोकवनिका चेति । विशिष्यं रक्ष्येति शेषः ॥ ११ ॥

सर्वतश्चापि तिष्ठध्वं सैन्यैः परिवृता बलैः।
द्रष्टव्यञ्च पदं तेषां वानराणां निशाचराः॥ १३॥
प्रदोषे वार्द्धरात्रे वा प्रत्यूषे वापि सर्वशः।
नावज्ञा तत्र कर्त्तव्या वानरेषु कदाचन॥ १४॥
द्विषतां बलमुद्युक्तमापतत् किं स्थितं यथा।
ततस्ते राक्षसाः सर्वं श्रुत्वा लङ्काधिपस्य तत्॥ १५॥
वचनं सर्वमातिष्ठन् यथावत्तु महाबलाः॥ १६॥
तान् सर्वान् हि समादिश्य रावणो राक्षसाधिपः।
मन्युशल्यं वहन् दीनः प्रविवेश स्वमालयम्॥ १७॥
ततः स सन्दीपितकोपवह्नि-
र्निशाचराणामधिपो महाबलः।

निष्क्रामो वेति। पुरेऽशोकवनिकायाञ्चेति शेषः। नो युष्माकम्। युष्माभिरिति यावत्। यत्र यत्र गुल्म इति। पृथक् स्थापित इति शेषः॥ १२॥

पदं गतागतम्॥ १३॥ १४॥

द्रष्टव्यञ्च पदमित्युक्तं तत्र दर्शनप्रकारमाह,—द्विषतामिति। उद्युक्तमुद्यमवत् किमापतत् आगमनशीलं किम्। लङ्कायामिति शेषः। यथा यथापूर्वं स्थितं स्थितिमत् किमित्येवं प्रकारेण सदा द्रष्टव्यमित्यर्थः॥ १५॥ १६॥

तदेव पुत्रव्यसनं विचिन्तयन्
मुहुर्मुहुश्चैव तदा विनिःश्वसन् ॥ १८ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
द्विसप्ततितमः सर्गः ॥ ७२ ॥

मन्युशल्यं मन्युरूपं शल्यम् ॥ १७ ॥ १८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

---

## त्रिसप्ततितमः सर्गः।



ततो हतान् राक्षसपुङ्गवांस्तान्
देवान्तकादित्रिशिरोऽतिकायान्।
रक्षोगणास्तत्र हतावशिष्टा-
स्ते रावणाय त्वरिताः शशंसुः॥१॥
ततो हतांस्तान् सहसा निशम्य
राजा महाबाष्पपरिप्लुताक्षः।
पुत्रक्षयं भ्रातृबधञ्च घोरं
विचिन्त्य राजा विपुलं प्रदध्यौ॥२॥
ततस्तु राजानमुदीक्ष्य दीनं
शोकार्णवे सम्परिपुप्लुवानम्।
रथर्षभो राक्षसराजसूनु-
स्तमिन्द्रजिद्वाक्यमिदं बभाषे॥३॥

तत इति। देवान्तकादयश्च त्रिशिरोऽतिकायौ च तान्॥१॥२॥
सम्परिपुप्लुवानम्। लिटः कानच्। शोकार्णवमग्नमित्यर्थः। रथ-
र्षभः रथस्थानां श्रेष्ठः। महारथ इत्यर्थः। तं रावणम्॥३॥

न तात ! मोहं परिगन्तुमर्हसे
यत्रेन्द्रजिज्जीवति नैर्ऋतेश ! ।
नेन्द्रारिबाणाभिहतो हि कश्चित्
प्राणान् समर्थः समरेऽभिपातुम् ॥ ४ ॥

पश्याद्य रामं सह लक्ष्मणेन
मद्बाणनिर्भिन्नविकीर्णदेहम् ।
गतायुषं भूमितले शयानं
शितैः शरैराचितसर्वगात्रम् ॥ ५ ॥

इमां प्रतिज्ञां शृणु शक्रशत्रोः
सुनिश्चितां पौरुषदैवयुक्ताम् ।
अद्यैव रामं सह लक्ष्मणेन
सन्तर्पयिष्यामि शरैरमोघैः ॥ ६ ॥

अद्येन्द्रवैवस्वतविष्णुरुद्र-
साध्याश्च वैश्वा नरचन्द्रसूर्याः ।
द्रक्ष्यन्तु मे विक्रममप्रमेयं
विष्णोरिवोग्रं बलियज्ञवाटे ॥ ७ ॥

हे तात ! तस्मान्मोहं गन्तुं नार्हसि । यत्र यस्मादिन्द्रजिज्जीवति । इन्द्रारिरिन्द्रजित् । समरे इन्द्रजिद्बाणाभिहतः प्राणानभिपातुं कश्चिदपि समर्थो नास्ति ॥ ४ ॥

मद्बाणनिर्भिन्नोऽतएव विकीर्णो देहो यस्य तम् ॥ ५ ॥

स एवमुक्त्वा त्रिदशेन्द्रशत्रु-
रापृच्छ्य राजानमदीनसत्वः।
समारुरोहानिलतुल्यवेगं
रथं खरश्रेष्ठसमाधियुक्तम् ॥ ८ ॥

समास्थाय महातेजा रथं हरिरथोपमम्।
जगाम सहसा तत्र यत्र युद्धमरिन्दमः ॥ ९ ॥

तं प्रस्थितं महात्मानमनुजग्मुर्महाबलाः।
संहर्षमाणा बहवो धनुःप्रवरपाणयः ॥ १० ॥

गजस्कन्धगताः केचित् केचित् परमवाजिभिः।
व्याघ्रवृश्चिकमार्जारखरोष्ट्रैश्च भुजङ्गमैः ॥ ११ ॥

वराहैः श्वापदैः सिंहैर्जम्बुकैः पर्वतोपमैः।
काकहंसमयूरैश्च राक्षसा भीमविक्रमाः।
प्रासमुद्गरनिस्त्रिंशपरश्वधगदाधराः ॥ १२ ॥

स शङ्खनिनदैः पूर्णैर्भेरीणाञ्चापि निःस्वनैः।

पौरुषदैवयुक्तां पौरुषेण सहजशौर्य्यबलेन दैवबलेन भगवद्ब्रह्म-बलेन च युक्तां क्रियमाणाम्। आदिकर्मणि क्तः ॥ ६ ॥ ७ ॥

खरश्रेष्ठैः समाधीयते युद्धमेभिरिति समाधयो धनुःखड्गादय-स्तैश्च युक्तम् ॥ ८ ॥

हरिरथ इन्द्ररथः ॥ ९ ॥

संहर्षमाणा इत्यार्षम्। हृष्यमाणा इत्यर्थः ॥ १० ॥ ११ ॥ १२ ॥

जगाम त्रिदशेन्द्रारिराजिं वेगेन वीर्य्यवान् ॥ १३ ॥
स शङ्खशशिवर्णेन छत्रेण रिपुसूदनः ।
रराज प्रतिपूर्णेन नभश्चन्द्रमसा यथा ॥ १४ ॥
वीज्यमानस्ततो वीरो हैमैर्हेमविभूषणः ।
चारुचामरमुख्यैश्च मुख्यः सर्वधनुष्मताम् ॥ १५ ॥
ततस्त्विन्द्रजिता लङ्का सूर्य्यप्रतिमतेजसा ।
रराजाप्रतिवीर्य्येण द्यौरिवार्केण भास्वता ॥ १६ ॥
स सम्प्राप्य महातेजा युद्धभूमिमरिन्दमः ।
स्थापयामास रक्षांसि रथम्प्रति समन्ततः ॥ १७ ॥
ततस्तु हुतभोक्तारं हुतभुक्सदृशप्रभः ।
जुहुवे राक्षसश्रेष्ठो विधिवन्मन्त्रसत्तमैः ॥ १८ ॥
स हविर्लाजसत्कारैर्माल्यगन्धपुरस्कृतैः ।
जुहुवे पावकं तत्र राक्षसेन्द्रः प्रतापवान् ॥ १९ ॥
शस्त्राणि शरपत्राणि समिधोऽथ बिभीतकाः ।

आजिं युद्धम् ॥ १३ ॥
शङ्खस्य शशिनश्च वर्ण इव वर्णो यस्य तत् ॥ १४ ॥
हैमैर्हिरण्मयदण्डैः ॥ १५ ॥ १६ ॥
युद्धभूमिं युद्धजयसम्पादकहोमसाधनभूमिम् । निकुम्भिलास्थान-मित्यर्थः ॥ १७ ॥
हुतभोक्तारम् अग्निम् । विधिवत्तत्कल्पोक्तप्रकारः ॥ १८ ॥

लोहितानि च वासांसि स्रुवं कार्ष्णायसं तथा ॥ २० ॥

स तत्राग्निं समास्तीर्य्य शरपत्रैः सतोमरैः।

छागस्य कृष्णवर्णस्य गलं जग्राह जीवतः॥ २१ ॥

सकृदेव समिद्धस्य विधूमस्य महार्चिषः।

बभूवुस्तानि लिङ्गानि विजयं यान्यदर्शयन् ॥ २२ ॥

प्रदक्षिणावर्त्तशिखस्तप्तकाञ्चनसन्निभः।

हविस्तत्प्रतिजग्राह पावकः स्वयमुत्थितः॥ २३ ॥

सोऽस्त्रमाहारयामास ब्राह्ममस्त्रविशारदः।

धनुश्चात्मरथञ्चैव सर्वं तत्राभ्यमन्त्रयत् ॥ २४ ॥

गन्धमाल्यपुरस्कृतैर्लाजसत्कारैः लाजैः पावकं सत्कृत्य तत्र पावके वक्ष्यमाणसंस्कारसंस्कृतैर्हविर्वक्ष्यमाणकामरूपं जुहाव ॥ १९ ॥

शस्त्राण्येव शरपत्राणि काशविशेषाः परिस्तरणभूताः। बिभीतकाः बिभीतकवृक्षसम्बन्धिन्यः समिधः। रक्तवस्त्राणि। अभिचारकर्मणि तेषामेव विनियोगात्। आसन्निति शेषः। स्रुवमित्यत्रासीदिति ॥ २० ॥

शरपत्रैः प्रागुक्तरूपैः। जीवतो गलं जग्राह सजीवस्य होमार्थमिति शेषः॥ २१ ॥

सकृदेवेति। सजीवस्य समग्रावयवस्य छागस्य सकृदेव महाहुत्या समिद्धस्य महार्चिषोऽग्नेः सकाशात्तानि लिङ्गानि बभूवुः। यानि पुरा स्वस्य विजयमदर्शयन् ॥ २२ ॥

तान्येवाह,—प्रदक्षिणेति ॥ २३ ॥

तस्मिन्नाहूयमानेऽस्त्रे हूयमाने च पावके।
सार्कग्रहेन्दुनक्षत्रं वितत्रास नभस्थलम् ॥ २५ ॥

स पावकं पावकदीप्ततेजा
हुत्वा महेन्द्रप्रतिमप्रभावः।
सचापबाणासिरथाश्वसूतः
खेऽन्तर्दधेत्मानमचिन्त्यवीर्य्यः ॥ २६ ॥

ततो हयरथाकीर्णं पताकाध्वजशोभितम्।
निर्य्ययौ राक्षसबलं नर्दमानं युयुत्सया ॥ २७ ॥
ते शरैर्बहुभिश्चित्रैस्तीक्ष्णवेगैरलङ्कृतैः।
तोमरैरङ्कुशैश्चापि वानरान् जघ्नुराहवे ॥ २८ ॥
रावणिस्तु सुसंक्रुद्धस्तान्निरीक्ष्य निशाचरान्।
हृष्टा भवन्तो युध्यन्तु वानराणां जिघांसया ॥ २९ ॥

अस्त्रविशारदः स ब्राह्ममस्त्रमाहारयामास। ब्रह्मणा पुनर्ब्रह्मास्त्रोपदेशमकारयत्। अथ धनुरादिकं सिद्धब्रह्मास्त्रमन्त्रेणाभ्यमन्त्रयत् ॥ २४ ॥

तस्मिन्नस्त्रे आहूयमाने तदस्त्रमन्त्रदैवते त्रिमूर्त्तिरहस्यलक्षणा क्रियमाणावाहने। तदुद्देशेन तन्मन्त्रेण पावके हूयमाने च सति सार्कादिकं नभस्थलं तत्रासेति। मायमर्थवादः ॥ २५ ॥

अन्तर्दधेत्मानमित्यत्राकारलोपश्छान्दसः ॥ २६ ॥

तत इति। यागसमाप्त्यनन्तरम्। तद्यागभूमेरित्यर्थः ॥ २७ ॥ २८ ॥

ततस्ते राक्षसाः सर्वे गर्जन्तो जयकाङ्क्षिणः।
अभ्यवर्षंस्ततो घोरान् वानरान् शरवृष्टिभिः॥ ३०॥
स तु नालीकनाराचैर्गदाभिर्मुसलैरपि।
रक्षोभिः संवृतः संख्ये वानरान् विचकर्ष ह॥ ३१॥
ते वध्यमानाः समरे वानराः पादपायुधाः।
अभ्यवर्षन्त सहसा रावणिं शैलपादपैः॥ ३२॥
इन्द्रजित्तु तदा क्रुद्धो महातेजा महाबलः।
वानराणां शरीराणि व्यधमद्रावणात्मजः॥ ३३॥
शरेणैकेन च हरीन् नव पञ्च च सप्त च।
बिभेद समरे क्रुद्धो राक्षसान् सम्प्रहर्षयन्॥ ३४॥
स शरैः सूर्य्यसङ्काशैः शातकुम्भविभूषणैः।
वानरान् समरे वीरः प्रममाथ सुदुर्जयः॥ ३५॥
ते भिन्नगात्राः समरे वानराः शरपीड़िताः।
पेतुर्मथितसङ्कल्पाः सुरैरिव महासुराः॥ ३६॥

निशाचरान् समीक्ष्य आहेति शेषः। किमाह तदाह,—हृष्टा इति॥ २९॥ ३०॥

रक्षोभिः संवृतः राक्षससैन्योपरि प्रत्यासन्नाकाशप्रदेशे स्थितः॥ ३१॥ अभ्यवर्षन्त। तत्सैन्यस्थित्यनुमितस्थितिकदिगुद्देशेनेति शेषः। अन्यथान्तर्द्धानगतत्वेनैतदसम्भवात्॥ ३२॥ ३३॥ ३४॥ ३५॥

मथितसङ्कल्पाः संहृतयुद्धसङ्कल्पाः॥ ३६॥

ते तपन्तमिवादित्यं घोरैर्बाणगभस्तिभिः।
अभ्यधावन्त संक्रुद्धाः संयुगे वानरर्षभाः ॥ ३७ ॥
ततस्तु वानराः सर्वे भिन्नदेहा विचेतसः।
व्यथिता विद्रवन्ति स्म रुधिरेण समुक्षिताः ॥ ३८ ॥
रामस्यार्थे पराक्रम्य वानरास्त्यक्तजीविताः।
नर्दन्तस्ते निवृत्तास्तु समरे सशिलायुधाः ॥ ३९ ॥
ते द्रुमैः पर्वताग्रैश्च शिलाभिश्च प्लवङ्गमाः।
अभ्यवर्षन्त समरे रावणिं समवस्थिताः ॥ ४० ॥
तं द्रुमाणां शिलानाञ्च वर्षं प्राणहरं महत्।
व्यपोहत महातेजा रावणिः समितिञ्जयः ॥ ४१ ॥
ततः पावकसङ्काशैः शरैराशीविषोपमैः।
वानराणामनीकानि बिभेद समरे प्रभुः ॥ ४२ ॥
अष्टादशशरैस्तीक्ष्णैः स विध्वा गन्धमादनम्।
विव्याध नवभिश्चैव नलं दूरादवस्थितम् ॥ ४३ ॥
सप्तभिस्तु महावीर्य्यो मैन्दं मर्मविदारणैः।
पञ्चभिर्विशिखैश्चैव गजं विव्याध संयुगे ॥ ४४ ॥

अभ्यधावन्त तद्दिगाभिमुख्येनेति शेषः ॥ ३७ ॥ ३८ ॥
त्यक्तजीविताः त्यक्तजीवितेच्छाः। सशिलायुधाः शिलाद्यायुधैः सहिताः ॥ ३९ ॥ ४० ॥

जाम्बवन्तन्तु दशभिर्नीलं त्रिंशद्भिरेव च।
सुग्रीवमृषभञ्चैव सोऽङ्गदं द्विविदं तथा ॥ ४५ ॥
घोरैर्दत्तवरैस्तीक्ष्णैर्निष्प्राणानकरोत्तदा।
अन्यानपि तदा मुख्यान् वानरान् बहुभिः शरैः ॥ ४६ ॥
अर्दयामास संक्रुद्धः कालाग्निरिव मूर्च्छितः।
स शरैः सूर्य्यसङ्काशैः सुमुक्तैः शीघ्रगामिभिः ॥ ४७ ॥
वानराणामनीकानि निर्ममन्थ महारणे।
आकुलां वानरीं सेनां शरजालेन पीड़िताम् ॥ ४८ ॥
हृष्टः स परया प्रीत्या ददर्श क्षतजोचिताम्।
पुनरेव महातेजा राक्षसेन्द्रात्मजो बली ॥ ४९ ॥
संसृज्य बाणवर्षञ्च शस्त्रवर्षञ्च दारुणम्।
ममर्द वानरानीकं परितस्त्विन्द्रजिद्बली ॥ ५० ॥

स्वसैन्यमुत्सृज्य समेत्य तूर्णं
महाहवे वानरवाहिनीषु।
अदृश्यमानः शरजालमुग्रं
ववर्ष नीलाम्बुधरो यथाम्बु ॥ ५१ ॥
ते शक्रजिद्बाणविशीर्णदेहा
मायाहता विस्वरमुन्नदन्तः।

व्यपोहत अपसारयति स्म ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥
दत्तवरैर्वरलब्धैः ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥

रणे निपेतुर्हरयोऽद्रिकल्पा
यथेन्द्रवज्राभिहता नगेन्द्राः ॥ ५२ ॥
ते केवलं सन्ददृशुः शिताग्रान्
बाणान् रणे वानरवाहिनीषु ।
मायाविगूढ़श्च सुरेन्द्रशत्रुं
न चात्र तं राक्षसमभ्यपश्यन् ॥ ५३ ॥
ततः स रक्षोधिपतिर्महात्मा
सर्वा दिशो बाणगणैः शिताग्रैः ।
प्रच्छादयामास रविप्रकाशै-
र्विदारयामास च वानरेन्द्रान् ॥ ५४ ॥
स शूलनिस्त्रिंशपरश्वधानि
व्याविद्ध दीप्तानलसप्रभाणि ।
सविस्फुलिङ्गोज्ज्वलपावकानि
ववर्ष तीव्रं प्लवगेन्द्रसैन्ये ॥ ५५ ॥
ततो ज्वलनसङ्काशैर्बाणैर्वानरयूथपाः ।
ताड़िताः शक्रजिद्बाणैः प्रफुल्ला इव किंशुकाः ॥ ५६ ॥
उद्दीक्षमाणा गगनं केचिन्नेत्रेषु ताड़िताः ।

स्वसैन्यं स्वसैन्योपरिभागम् उत्सृज्य ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥
प्रफुल्लाः किंशुका इवासन्निति शेषः ॥ ५६ ॥

शनैर्विविशुरन्योऽन्यं पेतुश्च जगतीतले ॥ ५७ ॥
हनूमन्तञ्च सुग्रीवमङ्गदं गन्धमादनम् ।
जाम्बवन्तं सुषेणञ्च वेगदर्शिनमेव च ॥ ५८ ॥
मैन्दञ्च द्विविदं नीलं गवाक्षं गवयं तथा ।
केसरिं हरिलोमानं विद्युद्दंष्ट्रञ्च वानरम् ॥ ५९ ॥
सूर्य्याननं ज्योतिमुखं तथा दधिमुखं हरिम् ।
पावकाक्षं नलञ्चैव कुमुदञ्चैव वानरम् ॥ ६० ॥
प्रासैः शूलैः शितैर्बाणैरिन्द्रजिन्मन्त्रसंहितैः ।
विव्याध हरिशार्दूलान् सर्वांस्तान् राक्षसोत्तमः ॥ ६१ ॥

स वै गदाभिर्हरियूथमुख्या-
न्निर्भिद्य बाणैस्तपनीयवर्णैः ।
ववर्ष रामं शरवृष्टिजालैः
सलक्ष्मणं भास्कररश्मिकल्पैः ॥ ६२ ॥
स बाणवर्षैरभिवृष्यमाणो
धारानिपातानिव तानचिन्त्य ।
समीक्ष्यमाणः परमाद्भुतश्री
रामस्तदा लक्ष्मणमित्युवाच ॥ ६३ ॥

शनैर्नेत्रेषु ताड़िता इत्यन्वयः । अन्योऽन्यं विविशुः अन्योऽन्य-गात्रं समाश्लिष्य तस्थुः ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥

असौ पुनर्लक्ष्मण ! राक्षसेन्द्रो
महास्त्रमाश्रित्य सुरेन्द्रशत्रुः ।
निपातयित्वा हरिसैन्यमस्मान्
शितैः शरैरर्दयति प्रसक्तम् ॥ ६४ ॥

स्वयम्भुवादत्तवरो महात्मा
समाहितोऽन्तर्हितभीमकायः ।
कथं नु शक्यो युधि नष्टदेहो
निहन्तुमद्येन्द्रजिदुद्यतास्त्रः ॥ ६५ ॥

मन्ये स्वयम्भूर्भगवानचिन्त्य-
स्तस्यैतदस्त्रं प्रभवश्च योऽस्य ।
बाणावपातं त्वमिहाद्य धीमन् !
मया सहाव्यग्रमनाः सहस्व ॥ ६६ ॥

प्रसक्तं प्रकृतं प्राप्तं ब्रह्मास्त्रमाश्रित्य अस्मानावामेवार्दयति ॥ ६४ ॥

नष्टदेहोऽदृष्टदेहः ॥ ६५ ॥

नन्वदृष्टदेहस्यापि संहारसाधनैः शब्दवेध्यादिदिव्यास्त्रैर्हननं कार्य्य-मिति चेन्न । भगवतो ब्रह्मण आज्ञाया मारुतिनेवास्माभिरपि पालनी-यत्वेनैतत्सहनस्यैवौचित्यादित्याशयेनाह,—मन्ये इति । अचिन्त्यः अ-चिन्त्यवैभवः योऽस्य सकलसंसारस्य प्रभवः स्रष्टा चकारात् संहर्त्ता च स्वयम्भूर्हिरण्यगर्भोऽस्ति तस्य भगवत एतदस्त्रम् एतदस्त्रवैभवमित्येव-मन्ये जानामि । अतस्तत्प्रवृत्तिमिमं बाणावपातं मया सहाव्यग्रमना

प्रच्छादयत्येष हि राचसेन्द्रः
सर्वाधिकः सायकवृष्टिजालैः।
एतच्च सर्वं पतिताग्र्यशूरं
न भ्राजते वानरराजसैन्यम् ॥ ६७ ॥
आवान्तु दृष्ट्वा पतितौ विसंज्ञौ
निवृत्तयुद्धौ हतहर्षरोषौ।
ध्रुवं प्रवेक्ष्यत्यमरारिवास-
मसौ समासाद्य रणाग्र्यलक्ष्मीम् ॥ ६८ ॥
ततस्तु ताविन्द्रजितोऽस्त्रजालै-
र्बभूवतुस्तत्र तदा विशस्तौ।

भगवद्ध्यानैकचित्तो भूत्वा भगवद्ध्यानबलेन सहस्व। धीमन्निति हेतुगर्भ-विशेषणम्। यतस्त्वमपि ब्रह्मध्यानसम्पन्नस्तस्मात् सहस्व। एवं हि भगवदनुग्रहादस्माकमपि जयो भविष्यति नान्यथेत्यर्थः ॥ ६६ ॥

पतिताग्र्यशूरं पतिता भुवि पतिता अग्र्यशूराः प्रशस्तवीरा यस्मिंस्तत् ॥ ६७ ॥

एतत्सहनस्यैवैतदुपरमोपायत्वमपीत्याह,—आवामिति। हतहर्ष-रोषौ अप्रकाशितहर्षरोषविकारौ। अतएव विसंज्ञाविवावां पतितौ दृष्ट्वा रणाग्र्यलक्ष्मीं समासाद्य ध्रुवमसावमरारिवासं लङ्कां प्रवेक्ष्यति। पश्चाद्यदस्माभिरनुष्ठेयं तत् करिष्याव इति शेषः। रणाग्र्येत्यादिना समूलनाम्नी शक्तिः सूचिता ॥ ६८ ॥

स चापि तौ तत्र विषादयित्वा
ननाद हर्षाद्युधि राक्षसेन्द्रः ॥ ६९ ॥
ततस्तदा वानरसैन्यमेवं
रामञ्च संख्ये सह लक्ष्मणेन ।
निषूदयित्वा सहसा विवेश
पुरीं दशग्रीवभुजाभिगुप्ताम् ।
संस्तूयमानः स तु यातुधानैः
पित्रे च सर्वं हर्षितोऽभ्युवाच ॥ ७० ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
त्रिसप्ततितमः सर्गः ॥ ७३ ॥

विशस्ता पीड़िता ॥ ६९ ॥ ७० ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

---

## चतुःसप्ततितमः सर्गः ।

तयोस्तदा सादितयो रणाग्रे
मुमोह सैन्यं हरियूथपानाम् ।
सुग्रीवनीलाङ्गदजाम्बवन्तो
न चापि किञ्चित् प्रतिपेदिरे त ॥ १ ॥

ततो विषण्णं समवेक्ष्य सर्वं
विभीषणो बुद्धिमतां वरिष्ठः ।
उवाच शाखामृगराजवीरा
नाश्वासयन्नप्रतिमैर्वचोभिः ॥ २ ॥

मा भैष्ट नास्त्यत्र विषादकालो
यदार्य्यपुत्रौ ह्यवशौ विषण्णौ ।
स्वयम्भवो वाक्यमथोद्वहन्तौ
यत्सादिताविन्द्रजितास्त्रजालैः ॥ ३ ॥

तयोः राघवयोः । रणाग्रे रणमुखे । सादितयोर्निश्चेष्टीकृतयोः ॥ १ ॥
अप्रतिमैः अत्यन्तं कालोचितैः ॥ २ ॥

तदाह,—मा भैष्टेति । अस्यामवस्थायां विषादकालो विषादावसरो नास्ति । कुतस्तत्राह,—यदिति । यद्यस्मात् स्वयम्भवो वाक्य-

तस्मै तु दत्तं परमास्त्रमेतत्
स्वयम्भुवा ब्राह्ममभोघवीर्य्यम्।
तन्मानयन्तौ युधि राजपुत्रौ
निपातितौ कोऽत्र विषादकालः॥ ४॥

ब्राह्ममस्त्रं ततो धीमान् मानयित्वा तु मारुतिः।
विभीषणवचः श्रुत्वा हनूमानिदमब्रवीत्॥ ५॥
अस्मिन्नस्त्रहते सैन्ये वानराणां तरस्विनाम्।
यो यो धारयते प्राणांस्तं तमाश्वासयावहे॥ ६॥

मुद्वहन्तौ तदाज्ञां परिपालयन्तौ। अतएव निवृत्तौ अस्त्रप्रयोगप्रवृत्तिरहितौ। अथानन्तरं तस्मादेवेन्द्रजिता सादितौ इति यत्तस्माद्विषसावेव न तु प्राणपीड़ावन्तावतो मा भैष्ट। यद्वा एतावद्यौ विषसाविति यत्तत्र विषये मा भैष्ट। एतयोर्विषसयोरस्मात् को वा रक्षिष्यतीति युष्मभ्यो भयं मा भूत्। अत्रैतद्विषये विषादकालो नास्ति। यत् यस्मात् स्वयम्भुवो वाक्यं मन्त्ररूपम् उद्वहन्तौ मानयन्ताविन्द्रजिदस्त्रजालैः सादितौ सादिताविव। यतो ब्रह्मसम्माननार्थं स्वयमेव पतिताविति मा भैष्टेत्यर्थः॥ ३॥

राघवाभ्यां अन्तु योग्यमस्त्रं रावणेरस्तीत्याह,—तस्मै इति। कोऽत्र विषादकालः न कोऽपि ज्ञानानन्तरमुत्थास्यत इति शेषः॥ ४॥

मारुतिस्तदा विभीषणवचः श्रुत्वा तद्ब्राह्ममस्त्रं मानयित्वा सर्वथाप्यनुसरणीयमेवेति पूजयित्वा विभीषणं प्रतीदमब्रवीत्॥ ५॥

अस्त्रहते ब्रह्मास्त्रहते। आश्वासयावहे। विचार्य्येति शेषः॥ ६॥

तावुभौ युगपद्वीरौ हनूमद्राघवोत्तमौ।
उल्काहस्तौ तदा रात्रौ रणशीर्षं विचेरतुः॥ ७॥
भिन्नलाङ्गूलहस्तोरुपादाङ्गुलिशिरोधरैः।
स्रवद्भिः चतजं गात्रैः प्रस्रवद्भिः समन्ततः॥ ८॥
पतितैः पर्वताकारैर्वानरैरभिसंवृताम्।
शस्त्रैश्च पतितैर्दीप्तैर्ददृशाते वसुन्धराम्॥ ९॥
सुग्रीवमङ्गदं नीलं शरभं गन्धमादनम्।
जाम्बवन्तं सुषेणञ्च वेगदर्शिनमेव च॥ १०॥
मैन्दं नलं ज्योतिमुखं द्विविदञ्चापि वानरम्।
विभीषणो हनूमांश्च ददृशाते हतान् रणे॥ ११॥
सप्तषष्टिर्हताः कोट्यो वानराणां तरस्विनाम्।
अह्नः पञ्चमशेषेण वल्लभेन स्वयम्भुवः॥ १२॥

तदा रात्राविव्यनेन सम्यां रात्रावयमस्त्रप्रयोग इति सूचितम्॥ ७॥
प्रस्रवद्भिः। मूत्रमिति शेषः॥ ८॥ ९॥ १०॥
ददृशाते हतान् रणे। हतप्रायानित्यर्थः॥ ११॥
पञ्चमश्चासौ शेषो भागश्च। तेन प्रातःसङ्गवमध्याह्नापराह्णसाया-ह्नेषु षट्घटिकात्मकेषु पञ्चमेन सायाह्नेनेत्यर्थः। चतुर्भिर्भागैश्च ब्रह्मा-स्त्रसाधनमिति बोध्यम्। सप्तषष्टिकोटिवानरहनने सामर्थ्यमाह,—वल्लभेन स्वयम्भुव इति। स्वयम्भूवल्लभेन ब्रह्मास्त्रेणापरिमितप्राणिहनन-समर्थेन हतमिति भगवद्भवमेवैतदिति भावः॥ १२॥

सागरौघनिभं भीमं दृष्ट्वा बाणार्दितं बलम् ।
मार्गते जाम्बवन्तस्य हनूमान् स विभीषणः ॥ १३ ॥
स्वभावजरया युक्तं वृद्धं शरशतैश्चितम् ।
प्रजापतिसुतं वीरं शाम्यन्तमिव पावकम् ॥ १४ ॥
दृष्ट्वा समभिसंक्रम्य पौलस्त्यो वाक्यमब्रवीत् ।
कच्चिदार्य्य ! शरैस्तीक्ष्णैर्न प्राणा ध्वंसितास्तव ॥ १५ ॥
विभीषणवचः श्रुत्वा जाम्बवान् ऋक्षपुङ्गवः ।
कृच्छ्रादभ्युद्गिरन् वाक्यमिदं वचनमब्रवीत् ॥ १६ ॥
नैरृतेन्द्र ! महावीर्य्य ! स्वरेण त्वाभिलक्षये ।
विद्धगात्रः शितैर्बाणैर्न त्वां पश्यामि चक्षुषा ॥ १७ ॥
अञ्जना सुप्रजा येन मातरिश्वा च सुव्रत ! ।
हनूमान् वानरश्रेष्ठः प्राणान् धारयते क्वचित् ॥ १८ ॥
श्रुत्वा जाम्बवतो वाक्यमुवाचेदं विभीषणः ।
आर्य्यपुत्रावतिक्रम्य कस्मात् पृच्छसि मारुतिम् ॥ १९ ॥

मार्गते । विचिन्वन्तीत्यर्थः । तस्य वृद्धत्वादुपायप्रश्नार्थमिति भावः ॥ १३ ॥

स्वभावजरया युक्तं वयःस्वभावाज्जरया वलीपलितादिना युक्तम् ॥ १४ ॥ १५ ॥

कृच्छ्रादाकं प्रत्युत्तरं वाक्यमभ्युद्गिरन् उच्चारयन् ॥ १६ ॥ १७ ॥

येनाञ्जनादेवी सुप्रजाः सुपुत्रवती ॥ १८ ॥

नैव राजनि सुग्रीवे नाङ्गदे नापि राघवे।
आर्य्य! सन्दर्शितः स्नेहो यथा वायुसुते परः॥ २०॥
विभीषणवचः श्रुत्वा जाम्बवान् वाक्यमब्रवीत्।
शृणु नैर्ऋतशार्दूल! यस्मात् पृच्छामि मारुतिम्॥ २१॥
अस्मिन् जीवति वीरे तु हतमप्यहतं बलम्।
हनूमत्युज्झितप्राणे जीवन्तोऽपि मृता वयम्॥ २२॥
धरते मारुतिस्तात! मारुतप्रतिमो यदि।
वैश्वानरसमो वीर्य्ये जीविताशा ततो भवेत्॥ २३॥
ततो वृद्धमुपागम्य विनयेनाभ्यवादयत्।
गृह्य जाम्बवतः पादौ हनूमान् मारुतात्मजः॥ २४॥
श्रुत्वा हनूमतो वाक्यं तदा विव्यथितेन्द्रियः।
पुनर्जातमिवात्मानं मन्यते प्लवगोत्तमः॥ २५॥
ततोऽब्रवीन्महातेजा हनूमन्तं स जाम्बवान्।
आगच्छ हरिशार्दूल! वानरांस्त्रातुमर्हसि॥ २६॥

आर्य्यपुत्रौ राघवौ॥ १९॥

आर्य्य जाम्बवन्॥ २०॥ २१॥ २२॥

जीविताशा ततो भवेत्। जीवनहेतोस्तत एव लाभसम्भवादिति भावः॥ २३॥ २४॥

विव्यथितेन्द्रियः विशेषेण व्यथितानीन्द्रियाणि यस्य सः॥ २५॥
॥ २६॥

नान्यो विक्रमपर्य्याप्तस्त्वमेषां परमः सखा।
त्वत्पराक्रमकालोऽयं नान्यं पश्यामि कञ्चन ॥ २७ ॥
ऋक्षवानरवीराणामनीकानि प्रहर्षय।
विशल्यौ कुरु चाप्येतौ सादितौ रामलक्ष्मणौ ॥ २८ ॥
गत्वा परममध्वानमुपर्य्युपरि सागरम्।
हिमवन्तं नगश्रेष्ठं हनूमन्! गन्तुमर्हसि ॥ २९ ॥
ततः काञ्चनमत्युग्रमृषभं पर्वतोत्तमम्।
कैलासशिखरञ्चात्र द्रक्ष्यस्यरिनिषूदन! ॥ ३० ॥
तयोः शिखरयोर्मध्ये प्रदीप्तमतुलप्रभम्।
सर्वौषधियुतं वीर! द्रक्ष्यस्यौषधिपर्वतम् ॥ ३१ ॥
तस्य वानरशार्दूल! चतस्रो मूर्द्धिसम्भवाः।
द्रक्ष्यस्योषधयो दीप्ता दीपयन्तीः दिशो दश ॥ ३२ ॥

विक्रमपर्य्याप्तः पर्य्याप्तविक्रमः ॥ २७ ॥
सादितौ पीड़ितौ ॥ २८ ॥
सागरमित्युपरियोगे षष्ठ्यर्थे द्वितीया ॥ २९ ॥
काञ्चनं स्वर्णमयम्। अत्युग्रं सिंहादिभिर्दुष्प्रवेशम्। ऋषभं तदाख्यम् ॥ ३० ॥
तयोः शिखरयोः। ऋषभकैलासशिखरयोरित्यर्थः ॥ ३१ ॥
ओषधयो दीप्ताः। दीप्ता ओषधीरित्यर्थः ॥ ३२ ॥

मृतसञ्जीवनीञ्चैव विशल्यकरणीमपि ।
सुवर्णकरणीञ्चैव सन्धानीञ्च महौषधीम् ॥ ३३ ॥
ताः सर्वा हनुमन् ! गृह्य क्षिप्रमागन्तुमर्हसि ।
आश्वासय हरीन् प्राणैर्योज्य गन्धवहात्मज ! ॥ ३४ ॥
श्रुत्वा जाम्बवतो वाक्यं हनूमान् मारुतात्मजः ।
आपूर्य्यत बलोद्धर्षैर्वायुवेगैरिवार्णवः ॥ ३५ ॥
स पर्वततटाग्रस्थः पीड़यन् पर्वतोत्तमम् ।
हनूमान् दृश्यते वीरो द्वितीय इव पर्वतः ॥ ३६ ॥
हरिपादविनिर्भग्नो निषसाद स पर्वतः ।
न शशाक तदात्मानं वोढुं भृशनिपीड़ितः ॥ ३७ ॥
तस्य पेतुर्नगा भूमौ हरिवेगाच्च जज्वलुः ।
शृङ्गाणि च व्यकीर्य्यन्त पीड़ितस्य हनूमता ॥ ३८ ॥

सुवर्णकरणीं स्वर्णसमानवर्णस्य देहादेः करणीम् । सवर्णेति पाठे पूर्ववर्णसमानवर्णकरणीमित्यर्थः । सन्धानीं छिन्नशिरःकबन्धयोरपि यथापूर्वं नाड़ीसन्धानकरणीम् ॥ ३३ ॥

प्राणैर्योजयित्वा आश्वासयेत्यन्वयः ॥ ३४

बलोद्धर्षैर्बलोद्रेकैः ॥ ३५ ॥

पर्वततटाग्रस्थः त्रिकूटशिखरस्थः ॥ ३६ ॥

हरिपादविनिर्भग्नः तत्पादभाराक्रान्तः । निषसाद निविष्टोऽभूत् ॥ ३७ ॥

तस्मिन् संपीड्यमाने तु भग्नद्रुमशिलातले ।
न शेकुर्वानराः स्थातुं घूर्णमाने नगोत्तमे ॥ ३९ ॥
सा घूर्णितमहाद्वारा प्रभग्नगृहगोपुरा ।
लङ्का त्रासाकुला रात्रौ प्रनृत्येवाभवत्तदा ॥ ४० ॥
पृथिवीधरसङ्काशो निपीड्य पृथिवीधरम् ।
पृथिवीं क्षोभयामास सार्णवां मारुतात्मजः ॥ ४१ ॥
पद्भ्यान्तु शैलमाविध्य वड़वामुखवन्मुखम् ।
विवृत्योग्रं ननादोच्चैस्त्रासयन् रजनीचरान् ॥ ४२ ॥
तस्य नानद्यमानस्य श्रुत्वा निनदमुत्तमम् ।
लङ्कास्था राक्षसव्याघ्रा न शेकुः स्पन्दितुं क्वचित् ॥ ४३ ॥
नमस्कृत्वा समुद्राय मारुतिर्भीमविक्रमः ।

हरिवेगाद्धनूमत उत्पतनवेगात् । नगा वृक्षाः पेतुः । परस्पर सङ्घर्षजाग्निवशतो जज्वलुश्च ॥ ३८ ॥

तस्मिंस्त्रिकूटपर्वते घूर्णमाने नगोत्तमे वानराः स्थातुं न शेकुः । त्रिकूटस्यैव मुद्रभूमित्वात्तच्छिखरस्यैव च लङ्कात्वात् ॥ ३९ ॥

अतएव सा घूर्णितेत्यनेन लङ्काक्षोभ उच्यते । प्रनृत्येव प्रवृत्त-नृत्येव ॥ ४० ॥ ४१ ॥

वड़वामुखवज्ज्वाज्वल्यमानं मुखं विवृत्य व्यादाय राक्षसांस्त्रासय-न्नुग्रम् उच्चैर्ननाद । यावदोषध्यानयनं तावद्रक्षो निर्गमो माभूदिति तेषां त्रासार्थं ननादेति भावः ॥ ४२ ॥ ४३ ॥

राघवार्थं परं कर्म समीहत परन्तपः ॥ ४४ ॥

स पुच्छमुद्यम्य भुजङ्गकल्पं
विनम्य पृष्ठं श्रवणे निकुच्य ।
विवृत्य वक्त्रं वडवामुखाभ-
माप्लुप्लुवे व्योम्नि स चण्डवेगः ॥ ४५ ॥

सवृक्षखण्डांस्तरसा जहार
शैलान् शिलाः प्राकृतवानरांश्च ।
बाहूरुवेगोद्धतसम्प्रणुन्ना-
स्ते क्षीणवेगाः सलिले निपेतुः ॥ ४६ ॥

स तौ प्रसार्य्योरगभोगकल्पौ
भुजौ भुजङ्गारिनिकाशवीर्य्यः ।
जगाम शैलं नगराजमग्र्यं
दिशः प्रकम्पन्निव वायुसूनुः ॥ ४७ ॥

स सागरं घूर्णितवीचिमालं
तदाभृशं भ्रामितमत्स्यसत्त्वम् ।

समीहत चिन्तितवान् ॥ ४४ ॥

स पुच्छमित्यनेन जातिवर्णनम् ॥ ४५ ॥

प्राकृतवानरान् त्रिकूटवने नित्यवासान् प्राकृतवानरान्। ते क्षीणवेगाः अनुगत[illegible]ादयः ॥ ४६ ॥

समीक्ष्यमाणः सहसा जगाम
चक्रं यथा विष्णुकराग्रमुक्तम् ॥ ४८ ॥
स पर्वतान् पक्षिगणान् सरांसि
नदीस्तटाकानि पुरोत्तमानि।
स्फीतान् जनांस्तानपि सम्प्रवीक्ष्य
जगाम वेगात् पितृतुल्यवेगः ॥ ४९ ॥

आदित्यपथमाश्रित्य जगाम स गतश्रमः।
हनूमांस्त्वरितो वीरः पितुस्तुल्यपराक्रमः ॥ ५० ॥
जवेन महता युक्तो मारुतिर्वातरंहसा।
जगाम हरिशार्दूलो दिशः शब्देन नादयन् ॥ ५१ ॥
स्मरन् जाम्बवतो वाक्यं मारुतिर्भीमविक्रमः।
ददर्श सहसा चापि हिमवन्तं महाकपिः ॥ ५२ ॥
नानाप्रस्रवणोपेतं बहुकन्दरनिर्झरम्।
श्वेताभ्रचयसङ्काशैः शिखरैश्चारुदर्शनैः।
शोभितं विविधैर्वृक्षैरगमत् पर्वतोपमम् ॥ ५३ ॥

भुजङ्गारिर्गरुडः ॥ ४७ ॥ ४८ ॥

जनान् जनपदान् ॥ ४९ ॥ ५० ॥ ५१ ॥

स्मरन् जाम्बवतो वाक्यम्। तद्वाक्यस्मरणं वेगवशादोषध्यादिपर्वतमतीत्य गमननिवृत्त्यर्थम् ॥ ५२ ॥ ५३ ॥

स तं समासाद्य महानगेन्द्र-
मतिप्रवृद्धोत्तमहेमशृङ्गम्।
ददर्श पुण्यानि महाश्रमाणि
सुरर्षिसङ्घोत्तमसेवितानि॥ ५४॥

स ब्रह्मकोशं रजतालयञ्च
शक्रालयं रुद्रशरप्रमोक्षम्।
हयाननं ब्रह्मशिरश्च दीप्तं
ददर्श वैवस्वतकिङ्करांश्च॥ ५५॥

वरुणालयं वैश्रवणालयञ्च
सूर्य्यप्रभं सूर्य्यनिबन्धनञ्च।
ब्रह्मालयं शङ्करकार्मुकञ्च
ददर्श नाभिञ्च वसुन्धरायाः॥ ५६॥

सुरर्षिसंघोत्तमेति। उत्तमसुरर्षिसंघैरित्यर्थः॥ ५४॥

तद्दृष्टदेवतादिस्थानानां नामान्याह,—स ब्रह्मेति। ब्रह्मकोशं भगवतो हिरण्यगर्भस्य स्थानम्। ब्रह्म प्रपद्ये ब्रह्मकोशं प्रपद्ये इत्यादि श्रुतिसिद्धम्। रजतालयं हिरण्यगर्भापरमूर्त्तेः रजतनाभेः स्थानम्। रुद्रशरप्रमोक्षं यत्र स्थाने स्थित्वा रुद्रस्त्रिपुरसंहाराय शरं मुमोच तत् स्थानम्। हयाननं भगवतो हयग्रीवस्य स्थानम्। ब्रह्मशिरो ब्रह्मास्त्रदेवता तत् स्थानम्। तत्र तत्र नित्यसन्निहितान् वैवस्वतकिङ्करांश्च ददर्श॥ ५५॥

कैलाशमुग्रं हिमवच्छिलाञ्च
तं वै वृषं काञ्चनशैलमग्र्यम् ।
प्रदीप्तसर्वौषधिसम्प्रदीप्तं
ददर्श सर्वौषधिपर्वतेन्द्रम् ॥ ५७ ॥

स तं समीक्ष्यानलराशिदीप्तं
विसिस्मिये वासवदूतसूनुः ।
आप्लुत्य तञ्चौषधिपर्वतेन्द्रं
तत्रौषधीनां विचयञ्चकार ॥ ५८ ॥

स योजनसहस्राणि समतीत्य महाकपिः ।
दिव्यौषधिधरं शैलं व्यचरन् मारुतात्मजः ॥ ५९ ॥

महौषध्यस्ततः सर्वास्तस्मिन् पर्वतसत्तमे ।
विज्ञायार्थिनमायान्तं ततो जग्मुरदर्शनम् ॥ ६० ॥

वक्त्रालयमिति । सूर्य्यनिबन्धनं सूर्य्याणां यत्र स्थाने निबन्धनं समावेशस्तत् स्थानम् । अतएव तत् सूर्य्यप्रभम् । ब्रह्मालयश्चतुर्मुखब्रह्मस्थानम् । वसुन्धरायाः नाभिं भूनाभिसंज्ञं प्राजापत्यं स्थानम् ॥ ५६ ॥

हिमवच्छिलां भगवतो रुद्रस्य तपःसमाधिपीठम् । तं वै वृषं जाम्बवदुपदिष्टम् ॥ ५७ ॥

वासवस्य मेघरूपिणो देवराजस्य दूतः । प्रेरको वायुरित्यर्थः । विचयं मार्गणम् ॥ ५८ ॥

स तां महात्मा हनुमानपश्यं-
श्चुकोप रोषाच्च भृशं ननाद।
अमृष्यमाणोऽग्निसमानचक्षु-
र्महीधरेन्द्रं तमुवाच वाक्यम् ॥ ६१ ॥
किमेतदेवं सुविनिश्चितं ते
यद्राघवे नासि कृतानुकम्पः।
पश्याद्य मद्बाहुबलाभिभूतो
विकीर्णमात्मानमथो नगेन्द्र ! ॥ ६२ ॥
स तस्य शृङ्गं सनगं सनागं
सकाञ्चनं धातुसहस्रजुष्टम्।
विकीर्णकूटं ज्वलिताग्रसानुं
प्रगृह्य वेगात् सहसोन्ममाथ ॥ ६३ ॥
स तं समुत्पाट्य खमुत्पपात
वित्रास्य लोकान् ससुरान् सुरेन्द्रान्।
संस्तूयमानः खचरैरनेकै-
र्जगाम वेगाद्गरुडोग्रवेगः ॥ ६४ ॥

योजनसहस्राणि सहस्रशब्दोऽनेकोपलक्षणम् ॥ ५९ ॥ ६० ॥ ६१ ॥

किमेतदिति। यद्राघवे कृतानुकम्पो नासि एवम्प्रकारमेतदौदासीन्यं किं बलादित्यर्थः। स्वबलादिति चेत्तत्राह,—पश्येति ॥ ६२ ॥

सनागं सगजम्। उन्ममाथ उत्पाटयामास ॥ ६३ ॥

स भास्कराध्वानमनुप्रपन्न-
स्तं भास्कराभं शिखरं प्रगृह्य।
बभौ तदा भास्करसन्निकाशो
रवेः समीपे प्रतिभास्कराभः ॥ ६५ ॥

स तेन शैलेन भृशं रराज
शैलोपमो गन्धवहात्मजस्तु।
सहस्रधारेण सपावकेन
चक्रेण खे विष्णुरिवार्पितेन ॥ ६६ ॥

तं वानराः प्रेक्ष्य तदा विनेदुः
स तानपि प्रेक्ष्य मुदा ननाद।
तेषां समुत्कृष्टरवं निशम्य
लङ्कालया भीमतरं विनेदुः ॥ ६७ ॥

ततो महात्मा निपपात तस्मिन्
शैलोत्तमे वानरसैन्यमध्ये।
हर्य्युत्तमेभ्यः शिरसाभिवाद्य
विभीषणं तत्र च सस्वजे सः ॥ ६८ ॥

अतः स तस्मिति ॥ ६४ ॥

सं तदित्यर्थः। प्रतिभास्कराभः प्रतिसूर्य्यसदृशः। रवेः समीपे इत्यनेन सूर्य्योदयोत्तरमेतदानयनमिति लभ्यते ॥ ६५ ॥

तावप्युभौ मानुषराजपुत्रौ
तं गन्धमाघ्राय महौषधीनाम्।
बभूवतुस्तत्र तदा विशल्या-
वुत्तस्थुरन्ये च हरिप्रवीराः॥ ६९॥
सर्वे विशल्या विरुजाः क्षणेन
हरिप्रवीराश्च हताश्च ये स्युः।
गन्धेन तासां प्रवरौषधीनां
सुप्ता निशान्तेष्विव सम्प्रबुद्धाः॥ ७०॥
यदाप्रभृति लङ्कायां युद्ध्यन्ते हरिराक्षसाः।
तदाप्रभृति मानार्थमाज्ञया रावणस्य च॥ ७१॥
ये हन्यन्ते रणे तत्र राक्षसाः कपिकुञ्जरैः।
हताहतास्तु क्षिप्यन्ते सर्वं एव तु सागरे॥ ७२॥

सपावकेन साग्निज्वालेन। अर्पितेन स्वकरार्पितेन॥ ६६॥ ६७॥ ॥ ६८॥ ६९॥ ७०॥

यदि महौषधीनां गन्धमाघ्राय राघवौ हरिप्रवीराश्च यथापूर्वमत्यन्तं स्वस्थास्तदौषधिगन्धस्य रक्षःसाधारणत्वात्तेषामनुत्थाने हेतुमाह,—यदेति। मानार्थम् अर्थशब्दो निवृत्तिवाची। शत्रूणां हतराक्षसेषु तत्सम्मानाभावार्थमित्यर्थः। तत्परिज्ञाने तु अवशिष्टबलस्याल्पीयस्त्वं ज्ञात्वा वानरा लङ्कां प्रविशेयुस्ते मा प्रवेक्ष्यन्नित्येतदर्थोऽयं रावणस्येश्वरेच्छया विचारः॥ ७१॥

ततो हरिर्गन्धवहात्मजस्तु
तमोषधीशैलमुदग्रवेगः ।
निनाय वेगाद्धिमवन्तमेव
पुनश्च रामेण समाजगाम ॥ ७२ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
चतुःसप्ततितमः सर्गः ॥ ७४ ॥

हता हता इति वीप्सा । सर्वएव हता इत्यर्थः ॥ ७२ ॥
ओषधीशैलमिति दीर्घ आर्षः । आश्विनकृष्णाष्टम्यामिदम् ॥ ७३ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

---

# पञ्चसप्ततितमः सर्गः



ततोऽब्रवीन्महातेजाः सुग्रीवो वानरेश्वरः ।
अर्थ्यं विज्ञापयंश्चापि हनूमन्तमिदं वचः ॥ १ ॥
यतो हतः कुम्भकर्णः कुमाराश्च निषूदिताः ।
नेदानीमुपनिर्हारं रावणो दातुमर्हति ॥ २ ॥
ये ये महाबलाः सन्ति लघवश्च प्लवङ्गमाः ।
लङ्कामभिपतन्त्वाशु गृह्योल्काः प्लवगर्षभाः ॥ ३ ॥
ततोऽस्तं गत आदित्ये रौद्रे तस्मिन्निशामुखे ।
लङ्कामभिमुखाः सोल्का जग्मुस्ते प्लवगर्षभाः ॥ ४ ॥

तत इति । अर्थ्यमर्थादनपेतमग्रे कर्त्तव्यं विज्ञापयन् ॥ १ ॥

निषूदिताः । राघवाभ्यामिति शेषः । तस्मादिदानीमुपनिर्हारं युद्धं दातुं सम्पादयितुं नार्हतीति कतकः । उपनिर्हारं निष्क्रम्य युद्धप्रदानमिति तीर्थः । उपनिर्हारं युद्धावहारमस्माकं दातुं नार्हतीत्यर्थः । अनेनान्यदा युद्धावहारो जात इति ज्ञायत इत्यन्ये ॥ २ ॥

अतो ये ये महाबलाः सन्ति । लघवः क्षिप्रकारिणस्ते सर्वे उल्का गृहीत्वा लङ्कामभ्युत्पतन्तु । दाहायेति भावः ॥ ३ ॥

ततोऽस्तमिति । पूर्वदिवसापररात्रिशेषे उल्काहस्ताभ्यां हनूमद्विभीषणाभ्यां जाम्बवदन्वेषणं ततस्तन्नियोगात उषसि पर्वताहरणाय

उल्काहस्तैर्हरिगणैः सर्वतः समभिद्रुताः ।
आरक्षस्था विरूपाक्षाः सहसा विप्रदुद्रुवुः ॥ ५ ॥
गोपुराट्टप्रतोलीषु चर्य्यासु विविधासु च ।
प्रासादेषु च संहृष्टाः ससृजुस्ते हुताशनम् ॥ ६ ॥
तेषां गृहसहस्राणि ददाह हुतभुक् तदा ।
प्रासादाः पर्वताकाराः पतन्ति धरणीतले ॥ ७ ॥
अगरुर्दह्यते तत्र परश्चैव सुचन्दनम् ।
मौक्तिका मणयः स्निग्धा वज्रश्चापि प्रवालकम् ॥ ८ ॥
क्षौमञ्च दह्यते तत्र कौशेयञ्चापि शोभनम् ।
आविकं विविधञ्चौर्णं काञ्चनं भाण्डमायुधम् ॥ ९ ॥

गमनम् । अथाहरणं पुनश्च तत्प्रापणं पुनरागमनमिति त्रिघट्टिकामध्ये सर्वम् । ततः पुनः प्रदोषे हनुमदादीनां लङ्कादाहगमनमिति कतकादयः ॥ ४ ॥

आरक्षा द्वाराणि तत्स्था द्वाररक्षिणः । विरूपाक्षाः राक्षसाः । आरक्षो गुल्ममित्यन्ये ॥ ५ ॥

अट्टो गृहोपरितनं गृहम् । स्यादट्टः क्षौम मस्त्रियामिति वा । प्रतोली रथ्या । चर्य्या अल्परथ्या ॥ ६ ॥

तेषां वानराणां सम्बन्धी हुतभुक् ददाह । पतन्ति अपतन् ॥ ७ ॥

दह्यते दग्धः ॥ ८ ॥

क्षौमम् ऊर्णासूत्रनिर्मितम् । आविकम् अविरोमनिर्मितम् ।

नानाविकृतसंस्थानं वाजिभाण्डपरिच्छदम्।
गजग्रैवेयकल्याश्च रथभाण्डाश्च संस्कृतान् ॥ १० ॥
तनुत्राणि च योधानां हस्त्यश्वानाञ्च चर्म च।
खड्गा धनूंषि ज्या बाणास्तोमराङ्कुशशक्तय: ॥ ११ ॥
रोमजं वालजञ्चर्म व्याघ्रजञ्चाण्डजं बहु।
मुक्तामणिविचित्रांश्च प्रासादांश्च समन्ततः ॥ १२ ॥
विविधानस्त्रसङ्घातामग्निर्दहति तत्र वै।
नानाविधान् गृहांश्चित्रान् ददाह हुतभुक् तदा ॥ १३ ॥
आवासान् राक्षसानाञ्च सर्वेषां गृहगृध्नुनाम्।

ऊर्णात्वितरेषामपीति न पौनरुक्त्यम्। काञ्चनं भाण्डं सौवर्णमुपकरणम् ॥ ६ ॥

वाजिभाण्डपरिच्छदं वाजिनां भाण्डमलङ्कारः। परिच्छदः पल्ययनादिश्च। तन्नाना अनेकं विकृतसंस्थानं विचित्रविन्यासम्। रथभाण्डान् रथालङ्कारान्। संस्कृतान् सम्यग्रचितान्। भाण्डशब्दोऽलङ्कारमात्रवाची। रथभाण्डेत्युक्तेः। अतएव वाजिभाण्डेत्यत्र वाजिग्रहणं चरितार्थम्। अश्वालङ्कारवाचित्वे तु तद्वैयर्थ्यं स्पष्टमेव। तत्त्वेऽपि कर्णावतंसादिवत्साहित्यबोधनार्थं तत्र सः। रथभाण्डेत्यत्र तु लाक्षणिक इत्यन्ये ॥ १० ॥ ११ ॥

रोमजं कम्बलादि। वालजं चामरादि। व्याघ्रजं चर्म आसनोपयोगि। अण्डजं मृगमदादि ॥ १२ ॥

अस्त्रं शस्त्रम्। चित्रान् गृहान् स्वस्तिकादिगृहान् ॥ १३ ॥

हेमचित्रतनुत्राणां स्रग्भाण्डाम्बरधारिणाम् ॥ १४ ॥
सीधुपानचलाक्षाणां मदविह्वलगामिनाम् ।
कान्तालम्बितवस्त्राणां शत्रुसञ्जातमन्युनाम् ॥ १५ ॥
गदाशूलासिहस्तानां खादतां पिबतामपि ।
शयनेषु महार्हेषु प्रसुप्तानां प्रियैः सह ॥ १६ ॥
त्रस्तानां गच्छतां तूर्णं पुत्रानादाय सर्वतः ।
तेषां शतसहस्राणि तदा लङ्कानिवासिनाम् ॥ १७ ॥
अदहत्पावकस्तत्र जज्वाल च पुनः पुनः ।
सारवन्ति महार्हाणि गम्भीरगुणवन्ति च ॥ १८ ॥
हेमचन्द्रार्धचन्द्राणि चन्द्रशालोन्नमानि च ।

गृहशत्रूनां गृहस्थानाम् । दीर्घाभाव आर्षः । हेमचित्रं तनुत्रं येषां तेषाम् । भाण्डानि भूषणानि ॥ १४ ॥

सीधुपानेन चञ्चलानि अक्षीणि येषाम् । शत्रुषु सञ्जातो मन्युर्येषाम् । अदीर्घत्वमार्षम् ॥ १५ ॥

प्रियैः प्रियवस्तुभिः । कान्ताभिरित्यर्थः ॥ १६ ॥

त्रस्तानां गच्छताम् । अग्निभयादिति शेषः । एवम्भूतानां लङ्कानिवासिनां शतसहस्राणि गृहाण्यदहत् ॥ १७ ॥

दह्यमानगृहवर्णनम् । सारवन्तीत्यादि । सारवत्त्वं स्थिरसंस्थानवत्त्वम् । गम्भीरगुणवन्ति अनेककक्ष्याप्राकारान्तर्गं द्वारोपद्वारतो दुर्गमत्वलक्षणगाम्भीर्यवन्ति ॥ १८ ॥

तत्र चित्रगवाक्षाणि साधिष्ठानानि सर्वशः ॥ १९ ॥
मणिविद्रुमचित्राणि स्पृशन्तीव दिवाकरम्।
क्रौञ्चबर्हिणवर्णानां भूषणानाञ्च निःस्वनैः ॥ २० ॥
नादितान्यचलाभानि वेश्मान्यग्निर्ददाह सः।
ज्वलनेन परीतानि तोरणानि चकाशिरे ॥ २१ ॥
विद्युद्भिरिव नद्धानि मेघजालानि घर्मगे।
ज्वलनेन परीतानि गृहाणि प्रचकाशिरे ॥ २२ ॥
दावाग्निदीप्तानि यथा शिखराणि महागिरेः।
विमानेषु प्रसुप्ताश्च दह्यमाना वराङ्गनाः ॥ २३ ॥
त्यक्ताभरणसंयोगा हाहेत्युच्चैर्विचुक्रुशुः।
तत्र चाग्निपरीतानि निपेतुर्भवनान्यपि ॥ २४ ॥
वज्रिवज्रहतानीव शिखराणि महागिरेः।
तानि निर्दह्यमानानि दूरतः प्रचकाशिरे ॥ २५ ॥

हेमेत्यादि। हेमनिर्मितानि पूर्णचन्द्राकारवन्ति। चन्द्रशालोत्त-मानि प्रशस्तशिरोगृहाणि। साधिष्ठानानि मञ्चादिसहितानि ॥ १९ ॥

दिवाकरं स्पृशन्तीव स्थितानि ॥ २० ॥ २१ ॥

घर्मगे ग्रीष्मगे दिवाकरे गते प्रवृत्तानि। विद्युद्भिर्नद्धानि मेघ-जालानीव स्थितानि गृहाणि ॥ २२ ॥

विमानं सप्तभूमिप्रासादः ॥ २३ ॥

हिमवच्छिखराणीव दह्यमानानि सर्वशः ।
हर्म्याग्रैर्दह्यमानैश्च ज्वालाप्रज्वलितैरपि ॥ २६ ॥
रात्रौ सा दृश्यते लङ्का पुष्पितैरिव किंशुकैः ।
हस्त्यध्यक्षैर्गजैर्मुक्तैर्मुक्तैश्च तुरगैरपि ।
बभूव लङ्का लोकान्ते भ्रान्तग्राह इवार्णवम् ॥ २७ ॥
अश्वं मुक्तं गजो दृष्ट्वा क्वचिद्भीतोपसर्पति ।
भीतो भीतं गजं दृष्ट्वा क्वचिदश्वो निवर्त्तते ॥ २८ ॥
लङ्कायां दह्यमानायां शुशुभे च महोदधिः ।
छायासंसक्तसलिलो लोहितोद इवार्णवे ॥ २९ ॥
सा बभूव मुहूर्त्तेन हरिभिर्दीपिता पुरी ।
लोकस्यास्य क्षये घोरे प्रदीप्तेव वसुन्धरा ॥ ३० ॥
नारीजनस्य धूमेन व्याप्तस्योच्चैर्विनेदुषः ।
स्वनोज्वलनतप्तस्य शुश्रुवे शतयोजनम् ॥ ३१ ॥
प्रदग्धकायानपरान् राक्षसान्निर्गतान् बहिः ।
सहसा ह्युत्पतन्ति स्म हरयोऽथ युयुत्सवः ॥ ३२ ॥

तत्र चेति । सप्तभूमिप्रासादे वर्त्तमानानि गृहाणीत्यर्थः ॥ २४ ॥
॥ २५ ॥ २६ ॥

हस्त्यध्यक्षा गजस्वामिनस्तैर्दाहपरित्राणाय मुक्तैर्गजैः । लोकान्ते प्रलये भ्रान्ता घूर्णमाना ग्राहा यस्य सः ॥ २७ ॥ २८ ॥

छाया वह्निज्वालाप्रतिबिम्बम् ॥ २९ ॥ ३० ॥

उद्घुष्टं वानराणाञ्च राक्षसानाञ्च निःस्वनम्।
दिशो दश समुद्रञ्च पृथिवीञ्च व्यनादयत्॥ ३३॥
विशल्यौ च महात्मानौ तावुभौ रामलक्ष्मणौ।
असम्भ्रान्तौ जगृहतुस्ते उभे धनुषी वरे॥ ३४॥
ततो विस्फारयामास रामश्च धनुरुत्तमम्।
बभूव तुमुलः शब्दो राक्षसानां भयावहः॥ ३५॥
अशोभत तदा रामो धनुर्विस्फारयन् महत्।
भगवानिव संक्रुद्धो भवो वेदमयं धनुः॥ ३६॥
उद्घुष्टं वानराणाञ्च राक्षसानाञ्च निःस्वनम्।
ज्याशब्दस्तावुभौ शब्दावति रामस्य शुश्रुवे॥ ३७॥
वानरोद्घुष्टघोषश्च राक्षसानाञ्च निःस्वनः।
ज्याशब्दश्चापि रामस्य त्रयं व्याप दिशो दश॥ ३८॥
तस्य कार्मुकनिर्मुक्तैः शरैस्तत्पुरगोपुरम्।
कैलासशृङ्गप्रतिमं विकीर्णमभवद्भुवि॥ ३९॥

धूमैर्व्याप्तस्यातएवार्चैर्विनेदुषः। क्वसन्तम्। मारीजनस्य स्वन इत्यन्वयः॥ ३१॥ ३२॥ ३३॥ ३४॥ ३५॥

संहारकाले संक्रुद्धो भगवान् भवः शब्दब्रह्मात्मकं वेदमयं धनुर्विस्फारयन्निव॥ ३६॥

रामस्य ज्याशब्दस्तावुभौ वानरराक्षसशब्दावतिक्रम्याधरीकृत्य शुश्रुवे॥ ३७॥

ततो रामशरान् दृष्ट्वा विमानेषु गृहेषु च ।
सन्नाहो राक्षसेन्द्राणां तुमुलः समपद्यत ॥ ४० ॥
तेषां सन्नह्यमानानां सिंहनादञ्च कुर्वताम् ।
शर्वरी राक्षसेन्द्राणां रौद्रीव समपद्यत ॥ ४१ ॥
आदिष्टा वानरेन्द्रास्ते सुग्रीवेण महात्मना ।
आसन्नं द्वारमासाद्य युध्यध्वञ्च प्लवङ्गमाः ॥ ४२ ॥
यश्च वोऽवितथं कुर्य्यात्तत्र तत्राप्युपस्थितः ।
स हन्तव्योऽभिसंप्लुत्य राजशासनदूषकः ॥ ४३ ॥
तेषु वानरमुख्येषु दीप्तोल्कोज्ज्वलपाणिषु ।
स्थितेषु द्वारमाश्रित्य रावणं क्रोध आविशत् ॥ ४४ ॥
तस्य जृम्भितविक्षेपाद्व्यामिश्रा वै दिशो दश ।
रूपवानिव रुद्रस्य मन्युर्गात्रेष्वदृश्यत ॥ ४५ ॥

एतत् भयं व्याप व्याप्तमभूत् ॥ ३७ ॥ ३९ ॥

सन्नाह उद्योगः ॥ ४० ॥

रौद्रीव कालरात्रिरिव ॥ ४१ ॥

यत् यस्य आसन्नं द्वारं तत्तं आसाद्य युध्यध्वमित्यादिष्टाः ॥ ४२ ॥

अपि च वो युष्माकं मध्ये तत्र गुल्मे स्थितो वितथं पलायनं कुर्य्यात् स राजशासनदूषकः मदाज्ञातिवर्त्तीति स भवद्भिः प्रवलैर्हन्तव्य इत्यादिष्टाः ॥ ४३ ॥

स्थितेषु सत्स्विति शेषः ॥ ४४ ॥

स कुम्भञ्च निकुम्भञ्च कुम्भकर्णात्मजावुभौ।
प्रेषयामास संक्रुद्धो राक्षसैर्बहुभिः सह ॥ ४६ ॥
यूपाक्षः शोणिताक्षश्च प्रजङ्घः कम्पनस्तथा।
निर्ययुः कौम्भकर्णाभ्यां सह रावणशासनात् ॥ ४७ ॥
शशास चैव तान् सर्वान् राक्षसान् स महाबलान्।
राक्षसा गच्छताद्यैव सिंहनादञ्च नादयन् ॥ ४८ ॥
ततस्तु चोदितास्तेन राक्षसा ज्वलितायुधाः।
लङ्काया निर्ययुर्वीराः प्रणदन्तः पुनः पुनः ॥ ४९ ॥
रक्षसां भूषणस्थाभिर्भाभिः स्वाभिश्च सर्वशः।
चक्रुस्ते सप्रभं व्योम हरयश्चाग्निभिः सह ॥ ५० ॥
तत्र ताराधिपस्याभा ताराणाञ्च तथैव च।
तयोराभरणाभा च ज्वलिता द्यामभासयत् ॥ ५१ ॥

तस्य रावणस्य भयक्रोधजं यज्जृम्भितं विजृम्भणं तदुत्थविक्षेपात् सशब्दमहावायुप्रवृत्त्या दश दिशो व्यामिश्राः व्याप्ताः। रूपवान् सदस्य गात्रेषु भ्रुकुटि चक्षुर्मुखादिष्वदृश्यत ॥ ४५ ॥ ४६ ॥ ४७ ॥

अद्यास्यां रात्र्यामेव गच्छतेति वानरानीकभयाय स्वयं सिंहनादं नादयन् कुर्वन् शशास ॥ ४८ ॥ ४९ ॥

सप्रभं निस्तिमिरम् ॥ ५० ॥

ताराधिपस्य चन्द्रस्य। ताराणां नक्षत्राणाम्। तयोर्वानरराक्षसबलयोराभरणाभा आभरणकान्तिश्च। ज्वलिता प्रकाशमाना। द्यां सेनाद्वयमध्यगताकाशप्रदेशमभासयत् ॥ ५१ ॥

चन्द्राभा भूषणाभा च ग्रहाणां ज्वलिता च भा।
हरिराक्षससैन्यानि भ्राजयामास सर्वतः॥ ५२॥
तत्र चार्द्धप्रदीप्तानां गृहाणां सागरः पुनः।
भाभिः संसक्तसलिलश्चलोर्मिः शुशुभे भृशम्॥ ५३॥
पताकाध्वजसंयुक्तमुत्तमासिपरश्वधम्।
भीमाश्वरथमातङ्गं नानापत्तिसमाकुलम्॥ ५४॥
दीप्तशूलगदाखड्गप्रासतोमरकार्मुकम्।
तद्राक्षसबलं भीमं घोरविक्रमपौरुषम्॥ ५५॥
ददृशे ज्वलितप्रासं किङ्किणीशतनादितम्।
हेमजालाचितभुजं व्यावेष्टितपरश्वधम्॥ ५६॥
व्याघूर्णितमहास्त्रं बाणसंसक्तकार्मुकम्।

उक्तश्लोकस्यैव व्याख्यानम्। चन्द्राभेत्यादि। ग्रहाणां नक्षत्राणाम्॥ ५२॥

संसक्तं सम्बद्धं सलिलं यस्य सः॥ ५३॥

उत्तमासिपरश्वधम्। परश्वधो द्विविधः। असिरूपः कुठाररूपश्च। तत्रासिरूपपरश्वधमित्यर्थः। तेनासिखड्गयोर्न पौनरुक्त्यम्॥ ५४॥ ५५॥

ज्वलितप्रासं बाणवर्षणादुज्ज्वलितप्रासमित्यर्थ इति कतकः। हेमजालेति। हेमजालव्याप्तभुजमित्यर्थः। व्यावेष्टिताश्चालिताः परश्वधा यस्मिंस्तत॥ ५६॥

गन्धमाल्यमधूत्सेकसंमोदितमहानिलम् ॥ ५७ ॥
घोरं शूरजनाकीर्णं महाम्बुधरनिःस्वनम्।
तद्दृष्ट्वा बलमायान्तं राक्षसानां दुरासदम् ॥ ५८ ॥
सञ्चचाल प्लवङ्गानां बलमुच्चैर्ननाद च।
जवेनाप्लुत्य च पुनस्तद्बलं रक्षसां महत् ॥ ५९ ॥
अभ्ययात्प्रत्यरिबलं पतङ्गा इव पावकम्।
तेषां भुजपरामर्शव्यामृष्टपरिघाशनि ॥ ६० ॥
राक्षसानां बलं श्रेष्ठं भूयः परमशोभत।
तत्रोन्मत्ता इवोत्पेतुर्हरयोऽथ युयुत्सवः ॥ ६१ ॥
तरुशैलैरभिघ्नन्तो मुष्टिभिश्च निशाचरान्।
तथैवापततां तेषां हरीणां निशितैः शरैः ॥ ६२ ॥
शिरांसि सहसा जह्रू राक्षसा भीमविक्रमाः।
दशनैर्हृतकर्णाश्च मुष्टिभिर्भिन्नमस्तकाः।
शिलाप्रहारभग्नाङ्गा विचेरुस्तत्र राक्षसाः ॥ ६३ ॥
तथैवाप्यपरे तेषां कपीनामसिभिः शितैः।

गन्धादीनामुत्सेकत आधिक्यतः सम्मोदितो महानिलो येन तत् ॥ ॥ ५७ ॥ ५८ ॥

सञ्चचाल। सन्नद्धाया इति शेषः ॥ ५९ ॥

तेषां रक्षसां भुजपरामर्शेन भुजबन्धनेन व्यामृष्टा व्याघूर्णिताः परिघाशनयो यत्र तत् ॥ ६० ॥ ६१ ॥ ६२ । ६३ ॥

प्रवरानभितो जघ्नुर्घोररूपा निशाचराः ॥ ६४ ॥
घ्नन्तमन्यं जघानान्यः पातयन्तमपातयत् ।
गर्हमाणं जगर्हान्यो दशन्तमपरोदशत् ॥ ६५ ॥
देहीत्यन्यो ददात्यन्यो ददामीत्यपरः पुनः ।
किं क्लेशयसि तिष्ठेति तत्रान्योऽन्यं बभाषिरे ॥ ६६ ॥
विप्रलम्भितशस्त्रञ्च विमुक्तकवचायुधम् ।
समुद्यतमहाप्रासं मुष्टिशूलासिकुन्तलम् ॥ ६७ ॥
प्रावर्त्तत महारौद्रं युद्धं वानररक्षसाम् ।
वानरान् दश सप्तेति राक्षसा जघ्नु राहवे ॥ ६८ ॥
विप्रलम्भितवस्त्रञ्च विमुक्तकवचध्वजम् ।
बलं राक्षसमालभ्य वानराः पर्य्यवारयन् ॥ ६९ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

अपरे निशाचरास्तेषां कपीनां प्रवरान् जघ्नुः ॥ ६४ ॥ ६५ ॥
देहीति । युद्धमिति शेषः ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

---

## षट्सप्ततितमः सर्गः ।



प्रवृत्ते सङ्कुले तस्मिन् घोरे घोरजनक्षये ।
अङ्गदः कम्पनं वीरमाससाद रणोत्सुकः ॥ १ ॥
आहूय सोऽङ्गदं कोपात्ताडयामास वेगितः ।
गदया कम्पनः पूर्वं स चचाल भृशाहतः ॥ २ ॥
स संज्ञां प्राप्य तेजस्वी चिक्षेप शिखरं गिरेः ।
अर्दितश्च प्रहारेण कम्पनः पतितो भुवि ॥ ३ ॥
ततस्तु कम्पनं दृष्ट्वा शोणिताक्षो हतं रणे ।
रथेनाभ्यपतत् क्षिप्रं तत्राङ्गदमभीतवत् ॥ ४ ॥
सोऽङ्गदं निशितैर्बाणैस्तदा विव्याध वेगितः ।
शरीरदारणैस्तीक्ष्णैः कालाग्निसमविग्रहैः ॥ ५ ॥
क्षुरक्षुरप्रनाराचैर्वत्सदन्तैः शिलीमुखैः ।
कर्णिशल्यविपाठैश्च बहुभिर्निशितैः शरैः ॥ ६ ॥

अथ कम्पनादीनामङ्गदादिभिर्युद्धम् । प्रवृत्ते इति ॥ १ ॥

आहूयेति पूर्वान्वयि । सोऽङ्गदम् । अङ्गदेन युद्धायाहूतः कम्पन इत्यर्थः । स चचाल । अङ्गद इत्यर्थः ॥ २ ॥ ३ ॥

अभीतवत् अभीतार्हम् ॥ ४ ॥ ५ ॥

अङ्गदः प्रतिविद्धाङ्गो वालिपुत्रः प्रतापवान् ।
धनुरुग्रं रथं बाणान् ममर्द तरसा बली ॥ ७ ॥
शोणिताचस्ततः चिप्रमसिचर्म समाददे ।
उत्पपात तदा क्रुद्धो वेगवानविचारयन् ॥ ८ ॥
तं चिप्रतरमाप्लुत्य परामृश्याङ्गदो बली ।
करेण तस्य तं खड्गं समाच्छिद्य ननाद च ॥ ९ ॥
तस्यांसफलके खड्गं निजघान ततोऽङ्गदः ।
यज्ञोपवीतवच्चैनं चिच्छेद कपिकुञ्जरः ॥ १० ॥
तं प्रगृह्य महाखड्गं विनद्य च पुनः पुनः ।
वालिपुत्रोऽभिदुद्राव रणशीर्षे परानरीन् ॥ ११ ॥
प्रजङ्घसहितो वीरो यूपाचस्तु ततो बली ।
रथेनाभिययौ क्रुद्धो वालिपुत्रं महाबलम् ॥ १२ ॥

क्षुरः क्षुराग्रः । क्षुरप्रोऽर्धचन्द्राकृतिः । नाराचः सर्वायसः । वत्सदन्तस्तदाकारः । शिलीमुखः काकपत्त्रसदृशः । कर्णीपार्श्वद्वयस्थितकर्णाकारावयवः । शल्यभूयस्त्वाद्दीर्घफलको बाणः शल्यः । विपाठः करवीराग्रसदृश इति तीर्थादयः ॥ ६ ॥ ७ ॥ ८ ॥

परामृश्य धृत्वा ॥ ९ ॥

अंसरूपे फलके यज्ञोपवीतवदेनं शोणिताक्षञ्चिच्छेद । तावतापि परावृत्तो नापि मृतः ॥ १० ॥

तं महाखड्गं शोणिताक्षीयम् ॥ ११ ॥ १२ ॥

आयसीन्तु गदां गृह्य स वीरः कनकाङ्गदः।
शोणिताक्षः समाश्वस्य तमेवाभिपपात ह॥ १३॥
प्रजङ्घस्तु महावीरो यूपाक्षसहितो बली।
गदयाभिययौ क्रुद्धो वालिपुत्रं महाबलम्॥ १४॥
तयोर्मध्ये कपिश्रेष्ठः शोणिताक्षप्रजङ्घयोः।
विशाखयोर्मध्यगतः पूर्णचन्द्र इवाबभौ॥ १५॥
अङ्गदं परिरक्षन्तौ मैन्दो द्विविद एव च।
तस्य तस्थतुरभ्याशे परस्परदिदृक्षया॥ १६॥
अभिपेतुर्महाकायाः प्रतियत्ता महाबलाः।
राक्षसा वानरान् रोषादसिबाणगदाधराः॥ १७॥
त्रयाणां वानरेन्द्राणां त्रिभीराक्षसपुङ्गवैः।
संसक्तानां महत् युद्धमभवत् रोमहर्षणम्॥ १८॥
ते तु वृक्षान् समादाय सम्प्रचिक्षिपुराहवे।
खड्गेन प्रतिचिक्षेप तान् प्रजङ्घो महाबलः॥ १९॥
रथान् सर्वान् द्रुमाञ्छैलान् प्रतिचिक्षिपुराहवे।

कनकाङ्गद इति शोणिताक्षविशेषणम्॥ १३॥ १४॥ १५॥

परस्परदिदृक्षया युद्धावसरदिदृक्षया स्वानुरूपप्रतिभटराक्षस-जिज्ञासया वा॥ १६॥

प्रतियत्ताः सावधानाः॥ १७॥

शरौघैः प्रतिचिच्छेद तान् यूपाक्षो महाबलः ॥ २० ॥

वृक्षान् द्विविदमैन्दाभ्यां द्रुमानुत्पाट्य वीर्य्यवान् ।

बभञ्ज गदया मध्ये शोणिताक्षः प्रतापवान् ॥ २१ ॥

उद्यम्य विपुलं खड्गं परमर्मविदारणम् ।

प्रजङ्घो वालिपुत्राय अभिदुद्राव वेगितः ॥ २२ ॥

तमभ्याशगतं दृष्ट्वा वानरेन्द्रो महाबलः ।

आजघानाश्वकर्णेन द्रुमेणातिबलस्तदा ॥ २३ ॥

बाहुञ्चास्य सनिस्त्रिंशमाजघान स मुष्टिना ।

वालिपुत्रस्य घातेन स पपात क्षिताविषिः ॥ २४ ॥

तं दृष्ट्वा पतितं भूमौ खड्गं मुसलसन्निभम् ।

मुष्टिं संवर्त्तयामास वज्रकल्पं महाबलः ॥ २५ ॥

स ललाटे महावीर्य्यमङ्गदं वानरर्षभम् ।

आजघान महातेजाः स मुहूर्त्तञ्चचाल ह ॥ २६ ॥

स संज्ञां प्राप्य तेजस्वी वालिपुत्रः प्रतापवान् ।

प्रजङ्घस्य शिरः कायात् पातयामास मुष्टिना ॥ २७ ॥

स यूपाक्षोऽश्रुपूर्णाक्षः पितृव्ये निहते रणे ।

त्रयाणाम् अङ्गदमैन्दद्विविदानाम् । त्रिभिः शोणिताक्षप्रजङ्घ-यूपाक्षैः ॥ १८ ॥ १९ ॥ २० ॥

वृक्षान् प्रक्षिप्तान् ॥ २१ ॥

अवरुह्य रथात् चिप्रं चीणेषुः खड्गमाददे ॥ २८ ॥
तमापतन्तं सम्प्रेक्ष्य यूपाक्षं द्विविदस्त्वरन्।
आजघानोरसि क्रुद्धो जग्राह च बलाद्बली ॥ २९ ॥
गृहीतं भ्रातरं दृष्ट्वा शोणिताक्षो महाबलम्।
आजघान महातेजा वक्षसि द्विविदं ततः ॥ ३० ॥
स ततोऽभिहतस्तेन चचाल च महाबलः।
उद्यताञ्च पुनस्तस्य जहार द्विविदो गदाम् ॥ ३१ ॥
एतस्मिन्नन्तरे मैन्दो द्विविदाभ्याशमागमत्।
तौ शोणिताक्षयूपाक्षौ प्लवङ्गाभ्यां तरस्विनौ।
चक्रतुः समरे तीव्रमाकर्षोत्पाटनं भृशम् ॥ ३२ ॥
द्विविदः शोणिताक्षन्तु विददार नखैर्मुखे।
निष्पिपेष स वीर्य्येण चितावाविध्य वीर्य्यवान् ॥ ३३ ॥
यूपाक्षमभिसंक्रुद्धो मैन्दो वानरपुङ्गवः।
पीड़यामास बाहुभ्यां पपात स हतः चितौ ॥ ३४ ॥

वालिपुत्रायेत्यस्य वालिपुत्रं हन्तुमित्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥
॥ २६ ॥ २७ ॥ २८ ॥

[illegible] ॥ २९ ॥ ३० ॥ ३१ ॥

[illegible] शोणिताक्षताड़िते द्विविदे शोणिताक्षगदां गृह्णा[illegible]
सतीत्यर्थः। भ्रातृसहायार्थं तत्समीपमागमत्। प्लवङ्गमाभ्यां मैन्द-

हतप्रवीरा व्यथिता राक्षसेन्द्रचमूस्तथा ।
जगामाभिमुखी सा तु कुम्भकर्णात्मजो यतः ॥ ३५ ॥
आपतन्तीश्च वेगेन कुम्भस्तां सान्त्वयच्चमूम् ।
अथोत्कृष्टं महावीर्य्यैर्लब्धलक्षैः प्लवङ्गमैः ॥ ३६ ॥
निपातितमहावीरां दृष्ट्वा रक्षश्चमूं तदा ।
कुम्भः प्रचक्रे तेजस्वी रणे कर्म सुदुष्करम् ॥ ३७ ॥
स धनुर्धन्विनां श्रेष्ठः प्रगृह्य सुसमाहितः ।
मुमोचाशीविषप्रख्याञ्छरान् देहविदारणान् ॥ ३८ ॥
तस्य तच्छुशुभे भूयः सशरं धनुरुत्तमम् ।
विद्युदैरावतार्च्चिष्मद्द्वितीयेन्द्रधनुर्यथा ॥ ३९ ॥
आकर्णकृष्टमुक्तेन जघान द्विविदं तदा ।
तेन हाटकपुङ्खेन पत्रिणा पत्रवाससा ॥ ४० ॥

द्विविदाभ्याम् । आकर्षः आकर्षणम् । उत्पाटनमुत्थानम् ॥ ३२ ॥ ॥ ३३ ॥ ३४ ॥

कुम्भकर्णात्मजो यतः यत्र तत्रेत्यर्थः ॥ ३५ ॥

सान्त्वयत् असान्त्वयत् । उत्कृष्टं रक्षः कुम्भोलब्धलक्षैर्महावीर्य्यैस्तेजस्विभिर्वानरैर्निपातितमहावीरां चमूं दृष्ट्वा रणे सुदुष्करं कर्म चक्रे इति सम्बन्धः ॥ ३६ ॥ ३७ ॥ ३८ ॥

तस्य कुम्भस्य तत्सशरं धनुर्विद्युदैरावतसम्बन्धितोऽर्च्चिष्मद्भासमानं द्वितीयेन्द्रधनुर्यथा अपरमिन्द्रधनुरिव भूयः सुशुभे । विद्युच्छर-

सहसाभिहतस्तेन विप्रमुक्तपदः स्फुरन्।
निपपात त्रिकूटाभो विक्षलन् प्लवगोत्तमः॥ ४१॥
मैन्दस्तु भ्रातरं तत्र भग्नं दृष्ट्वा महाहवे।
अभिदुद्राव वेगेन प्रगृह्य विपुलां शिलाम्॥ ४२॥
तां शिलान्तु प्रचिक्षेप राक्षसाय महाबलः।
बिभेद तां शिलां कुम्भः प्रसन्नैः पञ्चभिः शरैः॥ ४३॥
सन्धाय चान्यं सुमुखं शरमाशीविषोपमम्।
आजघान महातेजा वक्षसि द्विविदाग्रजम्॥ ४४॥
स तु तेत प्रहारेण मैन्दो वानरयूथपः।
मर्मण्यभिहतस्तेन पपात भुवि मूर्च्छितः॥ ४५॥
अङ्गदो मातुलौ दृष्ट्वा मथितौ तु महाबलौ।
अभिदुद्राव वेगेन कुम्भमुद्यतकार्मुकम्॥ ४६॥
तमापतन्तं विव्याध कुम्भः पञ्चभिरायसैः।
त्रिभिश्चान्यैस्त्रिभिर्बाणैर्मातङ्गमिव तोमरैः॥ ४७॥
सोऽङ्गदं बहुभिर्बाणैः कुम्भो विव्याध वीर्य्यवान्॥ ४८॥

स्थानीया। ऐरावतोऽभ्रमातङ्गस्तस्येन्द्रधनुषा सम्बन्धात्। इन्द्रायुधं त्विन्द्रधनुस्तदेव ऋजुरोहितम्। ऐरावतं ऋजुदीर्घेन्द्रधनुस्तच्चाख स्वाभाविकमिन्द्रधनुरित्यर्थः। एतच्चोत्पातकाले भवतीत्यर्थं इति तीर्थः॥ ॥ ३९॥ ४०॥

विप्रमुक्तपदः विप्रमुक्तं प्रसारितं पदं येन सः॥ ४१॥ ४२॥

अकुण्ठधारैर्निशितैस्तीक्ष्णैः कनकभूषणैः ।
अङ्गदः प्रतिविद्धाङ्गो वालिपुत्रो न कम्पते ॥ ४९ ॥
शिलापादपवर्षाणि तस्य मूर्ध्नि ववर्ष ह ।
स प्रचिच्छेद तान् सर्वान् बिभेद च पुनः शिलाः ॥ ५० ॥
कुम्भकर्णात्मजः श्रीमान् वालिपुत्रसमीरितान् ।
आपतन्तञ्च सम्प्रेक्ष्य कुम्भो वानरयूथपम् ॥ ५१ ॥
भ्रुवौ विव्याध बाणाभ्यामुल्काभ्यामिव कुञ्जरम् ।
तस्य सुस्राव रुधिरं पिहिते चास्य लोचने ॥ ५२ ॥
अङ्गदः पाणिना नेत्रे पिधाय रुधिरोक्षिते ।
सालमासन्नमेकेन परिजग्राह पाणिना ॥ ५३ ॥
सम्पीड्योरसि सस्कन्धं करेणाभिनिवेश्य च ।
किञ्चिदभ्यवनम्यैनमुन्ममाथ महारणे ॥ ५४ ॥
तमिन्द्रकेतुप्रतिमं वृक्षं मन्दरसन्निभम् ।
समुत्सृजत वेगेन मिषतां सर्वरक्षसाम् ॥ ५५ ॥

प्रसन्नैः　उत्तेजितैः ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥

सस्कन्धमेनं सालमुरसि निवेश्यैकेन करेण सम्पीड्य स्कन्धशाखां किञ्चिदवनम्य उन्ममाथ निष्पन्नं कृतवान् ॥ ५४ ॥

समुत्सृजत समुदसृजत् ५५ ॥

स चिच्छेद शितैर्बाणैः सप्तभिः कायभेदनैः ।
अङ्गदो विव्यथेऽभीक्ष्णं स पपात मुमोह च ॥ ५६ ॥
अङ्गदं पतितं दृष्ट्वा सीदन्तमिव सागरम् ।
दुरासदं हरिश्रेष्ठा राघवाय न्यवेदयन् ॥ ५७ ॥
रामस्तु व्यथितं श्रुत्वा वालिपुत्रं महाहवे ।
व्यादिदेश हरिश्रेष्ठान् जाम्बवत्प्रमुखांस्ततः ॥ ५८ ॥
ते तु वानरशार्दूलाः श्रुत्वा रामस्य शासनम् ।
अभिपेतुः सुसंक्रुद्धाः कुम्भमुद्यतकार्मुकम् ॥ ५९ ॥
ततो द्रुमशिलाहस्ताः कोपसंरक्तलोचनाः ।
रिरक्षिषन्तोऽभ्यपतन्नङ्गदं वानरर्षभाः ॥ ६० ॥
जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ।
कुम्भकर्णात्मजं वीरं क्रुद्धाः समभिदुद्रुवुः ॥ ६१ ॥
समीक्ष्यापततस्तांस्तु वानरेन्द्रान् महाबलान् ।
आववार शरौघेण नगेनेव जलाशयम् ॥ ६२ ॥
तस्य बाणपथं प्राप्य न शेकुरपि वीक्षितुम् ।
वानरेन्द्रा महात्मानो वेलामिव महोदधिः ॥ ६३ ॥

अभीक्ष्णं विव्यथे । पुनः पुनः क्रियमाणेन युद्धेनेति भावः ॥ ५६ ॥
॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥

आववार अवरुरोध । नगेन पर्वतेन जलाशयं जलप्रवाहमिव ॥
॥ ६२ ॥ ६३ ॥

तांस्तु दृष्ट्वा हरिगणान् शरवृष्टिभिरर्दितान्।
अङ्गदं पृष्ठतः कृत्वा भ्रातृजं प्लवगेश्वरः॥ ६४॥
अभिदुद्राव सुग्रीवः कुम्भकर्णात्मजं रणे।
शैलसानुचरं नागं वेगवानिव केसरी॥ ६५॥
उत्पाट्य च महावृक्षानश्वकर्णादिकान् बहून्।
अन्यांश्च विविधान् वृक्षांश्चिक्षेप स महाकपिः॥ ६६॥
तां छादयन्तीमाकाशं वृक्षवृष्टिं दुरासदाम्।
कुम्भकर्णात्मजः श्रीमांश्चिच्छेद स्वशरैः शितैः॥ ६७॥
अर्दितास्ते द्रुमा रेजुर्यथा घोराः शतघ्नयः।
द्रुमवर्षन्तु तच्छिन्नं दृष्ट्वा कुम्भेन वीर्य्यवान्॥ ६८॥
वानराधिपतिः श्रीमान् महासत्त्वो न विव्यथे।
स विध्यमानः सहसा सहमानस्तु तान्छरान्॥ ६९॥
कुम्भस्य धनुराक्षिप्य बभञ्जेन्द्रधनुःप्रभम्।
अवप्लुत्य धनुः शीघ्रं कृत्वा कर्म सुदुष्करम्॥ ७०॥
अब्रवीत् कुपितः कुम्भं भग्नशृङ्गमिव द्विपम्।

भ्रातृजं भ्रातृपुत्रम्। प्लवगेश्वरः सुग्रीवः। एतद्दन्तमष्टमीरात्रे युद्धम्। अतःपरं नवमीदिनयुद्धम्॥ ६४॥

शैलसानुषु चरति तं नागं गजम्॥ ६५॥ ६६॥ ६७॥ ६८॥ ६९॥ ७०॥

निकुम्भाग्रज ! वीर्य्यं ते बाणवेगं तदद्भुतम् ॥ ७१ ॥

सन्नतिश्च प्रभावश्च तव वा रावणस्य वा।

प्रह्लादबलिवृत्रघ्नकुबेरवरुणोपम ॥ ७२ ॥

एकस्त्वमनुजातोऽसि पितरं बलवत्तरम्।

त्वामेवैकं महाबाहुं शूलहस्तमरिन्दमम् ॥ ७३ ॥

त्रिदशा नातिवर्त्तन्ते जितेन्द्रियमिवाधयः।

विक्रमस्व महाबुद्धे ! कर्माणि मम पश्य च ॥ ७४ ॥

वरदानात् पितृव्यस्ते सहते देवदानवान्।

कुम्भकर्णस्तु वीर्य्येण सहते च सुरासुरान् ॥ ७५ ॥

धनुषीन्द्रजितस्तुल्यः प्रतापे रावणस्य च।

त्वमद्य रक्षसां लोके श्रेष्ठोऽसि बलवीर्य्यतः ॥ ७६ ॥

महाविमर्दं समरे मया सह तवाद्भुतम्।

अद्य भूतानि पश्यन्तु शक्रशम्बरयोरिव ॥ ७७ ॥

अथ कुम्भस्य शौर्य्यं स्तौति। निकुम्भाग्रजेति। वेगशब्दोऽर्श-आदिः ॥ ७१ ॥

सन्नतिः स्वजनप्रावण्यम्। प्रभावः प्रतापः। तव रावणस्य वा। ...न्यस्य युष्मास्वित्यर्थः। प्रह्लादबल्योर्वृत्रघ्नादीनाञ्चोपमा यस्य तम् ॥ ७२ ॥

... पितरमनुजातोऽसि पित्रा सदृशोऽसि ॥ ७३ ॥ ७४ ॥

... पितृव्यो रावणः। कुम्भकर्णस्तु वीर्य्येण शरीरबलेन सुरासुरान् ...ते। त्वन्तूभाभ्यामित्यर्थः ॥ ७५ ॥ ७६ ॥

कृतमप्रतिमं कर्म दर्शितश्चास्त्रकौशलम्।
पातिता हरिवीराश्च त्वयैते भीमविक्रमाः॥ ७८॥
उपालम्भभयाच्चैव नासि वीर! मया हतः।
कृतकर्मपरिश्रान्तो विश्रान्तः पश्य मे बलम्॥ ७९॥
तेन सुग्रीववाक्येन सावमानेन मानितः।
अग्नेराज्यहुतस्येव तेजस्तस्याभ्यवर्द्धत॥ ८०॥
ततः कुम्भस्तु सुग्रीवं बाहुभ्यां जगृहे तदा।
गजाविवावीतमदौ निःश्वसन्तौ मुहुर्मुहुः॥ ८१॥
अन्योऽन्यगात्रग्रथितौ घर्षन्ताविितरेतरम्।
सधूमां मुखतो ज्वालां विसृजन्तौ परिश्रमात्॥ ८२॥
तयोः पादाभिघाताच्च निमग्ना चाभवत् मही।
व्याघूर्णिततरङ्गश्च चुक्षुभे वरुणालयः॥ ८३॥
ततः कुम्भं समुत्क्षिप्य सुग्रीवो लवणाम्भसि।
पातयामास वेगेन दर्शयन्नुदधेः स्थलम्॥ ८४॥

ते तव मया सह महाविमर्दं महायुद्धम्॥ ७७॥ ७८॥

उपालम्भभयात् बहुभिः सह युद्धेन श्रान्तः कुम्भः सुग्रीवेण हत इति निन्दाभीत्येत्यर्थः॥ ७९॥

सावमानेन कृतकर्मेत्यादिना॥ ८०॥

अवीतमदौ अनपगतमदौ। आवीतमदाविति च्छेदे आप्तमदावित्यर्थः॥ ८१॥ ८२॥

ततः कुम्भनिपातेन जलराशिः समुत्थितः।
विन्ध्यमन्दरसङ्काशो विससर्प समन्ततः॥ ८५॥
ततः कुम्भः समुत्पत्य सुग्रीवमभिपात्य च।
आजघानोरसि क्रुद्धो वज्रकल्पेन मुष्टिना॥ ८६॥
तस्य चर्म च पुस्फोट संजज्ञे चापि शोणितम्।
तस्य मुष्टिर्महावेगः प्रतिजघ्नेऽस्थिमण्डले॥ ८७॥
तस्य वेगेन तत्रासीत्तेजः प्रज्वलितं महत्।
वज्रनिष्पेषसञ्जाता ज्वाला मेरोर्यथा गिरेः॥ ८८॥
स तत्राभिहतस्तेन सुग्रीवो वानरर्षभः।
मुष्टिं संवर्त्तयामास वज्रकल्पं महाबलः॥ ८९॥
अर्चिःसहस्रविकचरविमण्डलवर्चसम्।
स मुष्टिं पातयामास कुम्भस्योरसि वीर्य्यवान्॥ ९०॥
स तु तेन प्रहारेण विह्वलो भृशपीड़ितः।

दर्शयन्नुदधेः स्थलम्। स्वबलं दर्शयन् उदधेः स्थलमतिक्रम्य लवणाम्भसि कुम्भं पातयामास। उदधेस्तलमिति पाठे तद्दर्शयन् लवणाम्भसि पातयामासेत्यर्थः॥ ८४॥

विन्ध्यमन्दरसङ्काशः कुम्भस्ततो जलात्समुत्पत्येत्यन्वयः॥ ८५॥ ८६॥

पुस्फोट भिन्नम्। स तस्य मुष्टिः सुग्रीवास्थिमण्डले प्रतिजघ्ने प्रतिहतः॥ ८७॥ ८८॥

तत्र उरसि॥ ८९॥

निपपात तदा कुम्भो गतार्चिरिव पावकः ॥ ८१ ॥
मुष्टिनाभिहतस्तेन निपपाताशु राक्षसः ।
लोहिताङ्ग इवाकाशाद्दीप्तरश्मिर्यदृच्छया ॥ ८२ ॥
कुम्भस्य पततो रूपं भग्नस्योरसि मुष्टिना ।
बभौ रुद्राभिपन्नस्य यथा रूपं गवाम्पतेः ॥ ८३ ॥

तस्मिन् हते भीमपराक्रमेण
प्लवङ्गमानामृषभेण युद्धे ।
मही सशैला सवना चचाल
भयञ्च रक्षांस्यधिकं विवेश ॥ ८४ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
षट्सप्ततितमः सर्गः ॥ ७६ ॥

अर्चिःसहस्रेण विकचं यद्रविमण्डलं तत्समानवर्चस्कम् ॥ ८० ॥
॥ ८१ ॥

यदृच्छया दैवाधीनतः । कदाचिद्भूम्यां पतितो लोहिताङ्गो भौम इव पपात ॥ ८२ ॥

मुष्टिनोरसि भग्नस्य पततः कुम्भस्य रूपं रुद्रेणाभिपन्नस्याभिभूतस्य गवाम्पतेः सूर्यस्येव ॥ ८३ ॥ ८४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे षट्सप्ततितमः सर्गः ॥ ७६ ॥

---

## सप्तसप्ततितमः सर्गः

निकुम्भो भ्रातरं दृष्ट्वा सुग्रीवेण निपातितम् ।
प्रदहन्निव कोपेन वानरेन्द्रमुदैक्षत ॥ १ ॥

ततः स्रग्दामसन्नद्धं दत्तपञ्चाङ्गुलं शुभम् ।
आददे परिघं धीरो महेन्द्रशिखरोपमम् ॥ २ ॥

हेमपट्टपरिक्षिप्तं वज्रविद्रुमभूषितम् ।
यमदण्डोपमं भीमं रक्षसां भयनाशनम् ॥ ३ ॥

तमाविध्य महातेजाः शक्रध्वजसमौजसम् ।
विननाद विवृत्तास्यो निकुम्भो भीमविक्रमः ॥ ४ ॥

उरोगतेन निष्केण भुजस्थैरङ्गदैरपि ।
कुण्डलाभ्याञ्च चित्राभ्यां मालया च सचित्रया ॥ ५ ॥

निकुम्भ इति ॥ १ ॥

स्रग्दामभिः सन्नद्धमलङ्कृतम् । दत्तपञ्चाङ्गुलं पञ्चाङ्गुलप्रमाणा दत्ताः कालायसपट्टबन्धा यस्मिंस्तम् ॥ २ ॥

हेमपट्टादयोऽलङ्कारार्थाः ॥ ३ ॥

शक्रध्वजसमौजसम् । अलङ्कारादिकृतसौन्दर्य्यात् ॥ ४ ॥

निकुम्भो भूषणैर्भाति तेन स्म परिघेण च ।
यथेन्द्रधनुषा मेघः सविद्युत् स्तनयित्नुमान ॥ ६ ॥
परिघाग्रेण पुस्फोट वातग्रन्थिर्महात्मन: ।
प्रजज्वाल सघोषश्च विधूम इव पावकः ॥ ७ ॥
नगर्य्या विटपावत्या गन्धर्वभवनोत्तमैः ।
सतारागणनक्षत्रं सचन्द्र समहाग्रहम् ।
निकुम्भपरिघाघूर्णं भ्रमतीव नभस्थलम् ॥ ८ ॥
दुरासदश्च संजज्ञे परिघाभरणप्रभ: ।
क्रोधेन्धनो निकुम्भाग्निर्युगान्ताग्निरिवोत्थितः ॥ ९ ॥
राक्षसा वानराश्चापि न शेकुः स्पन्दितुं भयात् ।
हनुमांस्तु विवृत्योरस्तस्थौ प्रमुखतो बली ॥ १० ॥
परिघोपमबाहुस्तु परिघं भास्करप्रभम् ।
बली बलवतस्तस्य पातयामास वक्षसि ॥ ११ ॥

निष्कमुरोभूषणम् ॥ ५ ॥ ६ ॥

महात्मनो महादेहस्य । परिघाग्रेण वातग्रन्थिः आवहादिसप्तमहावायूनां सन्धिः पुस्फोट । एतेन परिघस्य दैर्घ्यमुक्तम् । प्रजज्वाल कुम्भ इति शेषः । परिघाग्रभाग इति वा ॥ ७ ॥

विटपावती गन्धर्वनगरी । अलकेति तीर्थः ॥ ८ ॥

परिघाभरणाभ्यां प्रभा कान्तिर्यस्य सः ॥ ९ ॥

स्पन्दितुमपि न शेकुः । उरो विवृत्य उरः प्रकाश्य ॥ १० ॥

स्थिरे तस्योरसि व्यूढे परिघः शतधा कृतः।
विकीर्य्यमाणः सहसा उल्काशतमिवाम्बरे ॥ १२ ॥
स तु तेन प्रहारेण न चचाल महाकपिः।
परिघेण समाधूतो यथा भूमिचलेऽचलः ॥ १३ ॥
स तथाभिहतस्तेन हनूमान् प्लवगोत्तमः।
मुष्टिं संवर्त्तयामास बलेनातिमहाबलः ॥ १४ ॥
तमुद्यम्य महातेजा निकुम्भोरसि वीर्य्यवान्।
अभिचिक्षेप वेगेन वेगवान् वायुविक्रमः ॥ १५ ॥
तत्र पुस्फोट वर्मास्य प्रसुस्राव च शोणितम्।
मुष्टिना तेन संजज्ञे मेघे विद्युदिवोत्थिता ॥ १६ ॥
स तु तेन प्रहारेण निकुम्भो विचचाल च।
स्वस्थश्चापि निजग्राह हनूमन्तं महाबलम् ॥ १७ ॥
चुक्रुशुश्च तदा संख्ये भीमं लङ्कानिवासिनः।
निकुम्भेनोद्यतं दृष्ट्वा हनूमन्तं महाबलम् ॥ १८ ॥

तस्य हनूमतः ॥ ११ ॥

परिघः शतधाकृतः। महाशिलाहतजीर्णकाष्ठवत् विकीर्य्यमाणश्च स आकाशे उल्काशतमिवासीदिति शेषः ॥ १२ ॥

भूमिचले भूकम्पे ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

भीमं विचुक्रुशुः। कपीनां भयङ्करं यथा भवति तथेत्यर्थः। उद्यतं गृहीतम् ॥ १८ ॥

स तथा ह्रियमाणोऽपि हनूमांस्तेन रक्षसा ।
आजघानानिलसुतो वज्रकल्पेन मुष्टिना ॥ १९ ॥
आत्मानं मोचयित्वाथ क्षितावभ्यवपद्यत ।
हनूमानुन्ममाथाशु निकुम्भं मारुतात्मजः ॥ २० ॥
निक्षिप्य परमायत्तो निकुम्भं निष्पिपेष च ।
उत्पत्य चास्य वेगेन पपातोरसि वेगवान् ॥ २१ ॥
परिगृह्य च बाहुभ्यां परिवृत्य शिरोधराम् ।
उत्पाटयामास शिरो भैरवं नदतो महत् ॥ २२ ॥

अथ निनदति सादिते निकुम्भे
पवनसुतेन रणे बभूव युद्धम् ।
दशरथसुतराक्षसेन्द्रसून्वो-
र्भृशतरमागतरोषयोः सुभीमम् ॥ २३ ॥
व्यपेते तु जीवे निकुम्भस्य हृष्टा
विनेदुः प्लवङ्गा दिशः सस्वनुश्च ।

तथा ह्रियमाणोऽपि कुम्भकर्णेन सुग्रीववत् ह्रियमाणोऽपि ॥ १९ ॥
क्षितावभ्यवपद्यत भूमावाप्लुतो बभूव ॥ २० ॥
निक्षिप्य भूमाविति शेषः । अस्योरसि भूमिपतितस्योरसि ॥ २१ ॥
शिरोधरां परिवृत्य पशोरिवाघूर्ण्य ॥ २२ ॥
निनदति निकुम्भे सादिते सति राक्षसेन्द्रसूनुः खरसुतो मकराक्षः ।
अनेन वक्ष्यमाणोपक्षेपः ॥ २३ ॥

चचालेव चोर्वी पपातेव सा द्यौ-
र्बलं राक्षसानां भयञ्चाविवेश ॥ २४ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
सप्तसप्ततितमः सर्गः ॥ ७७ ॥

उक्तार्थस्यैव विवरणम् । व्यपेते व्यपगते । एतदन्तं नवमीदिन-
युद्धम् ॥ २४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥

---

## अष्टसप्ततितमः सर्गः ।



निकुम्भं निहतं दृष्ट्वा कुम्भञ्च विनिपातितम् ।
रावणः परमामर्षी प्रजज्वालानलो यथा ॥ १ ॥
नैर्ऋतः क्रोधशोकाभ्यां द्वाभ्यान्तु परिमूर्च्छितः ।
खरपुत्रं विशालाक्षं मकराक्षमचोदयत् ॥ २ ॥
गच्छ पुत्र ! मयाज्ञप्तो बलेनाभिसमन्वितः ।
राघवं लक्ष्मणञ्चैव जहि तौ सवनौकसौ ॥ ३ ॥
रावणस्य वचः श्रुत्वा शूरमानी खरात्मजः ।
बाढ़मित्यब्रवीद्धृष्टो मकराक्षो निशाचरम् ॥ ४ ॥
सोऽभिवाद्य दशग्रीवं कृत्वा चापि प्रदक्षिणम् ।
निर्जगाम गृहाच्छुभ्राद्रावणस्याज्ञया बली ॥ ५ ॥
समीपस्थं बलाध्यक्षं खरपुत्रोऽब्रवीद्वचः ।
रथमानीयतां तूर्णं सैन्यं त्वानीयतां त्वरात् ॥ ६ ॥
तस्य तद्वचनं श्रुत्वा बलाध्यक्षो निशाचरः ।

निकुम्भमिति ॥ १ ॥
नैर्ऋतो रावणः । परिमूर्च्छितो व्याप्तः ॥ २ ॥ ३ ॥ ४ ॥ ५ ।

स्यन्दनञ्च बलञ्चैव समीपं प्रत्यपादयत् ॥ ७ ॥
प्रदक्षिणं रथं कृत्वा समारुह्य निशाचरः।
सूतं सञ्चोदयामास शीघ्रं वै रथमावह ॥ ८ ॥
अथ तान् राक्षसान् सर्वान् मकराक्षोऽब्रवीदिदम्।
यूयं सर्वे प्रयुध्यध्वं पुरस्तान् मम राक्षसाः ! ॥ ९ ॥
अहं राक्षसराजेन रावणेन महात्मना।
आज्ञप्तः समरे हन्तुं तावुभौ रामलक्ष्मणौ ॥ १० ॥
अद्य रामं वधिष्यामि लक्ष्मणञ्च निशाचराः !।
शाखामृगञ्च सुग्रीवं वानरांश्च शरोत्तमैः ॥ ११ ॥
अद्य शूलनिपातैश्च वानराणां महाचमूम्।
प्रदहिष्यामि सम्प्राप्तां शुष्केन्धनमिवानलः ॥ १२ ॥
मकराक्षस्य तच्छ्रुत्वा वचनन्ते निशाचराः।
सर्वे नानायुधोपेता बलवन्तः समाहिताः ॥ १३ ॥
ते कामरूपिणः क्रूरा दंष्ट्रिणः पिङ्गलेक्षणाः।
मातङ्गा इव नर्दन्तोऽध्वस्तकेशा भयावहाः ॥ १४ ॥

बलाध्यक्षं रावणबलाध्यक्षम्। त्वरात् त्वरया ॥ ६ ॥ ७ ॥
रथमावह। युद्धभूमिं प्रापयेत्यर्थः ॥ ८ ॥
मम पुरस्तान् ममाग्रतो यूयं सर्वे प्रयुध्यध्वम्। वानरैः सहेति शेषः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

परिवार्य्य महाकाया महाकायं खरात्मजम् ।
अभिजग्मुस्ततो हृष्टाश्चालयन्तो नभस्तलम् ॥ १५ ॥
शङ्खभेरीसहस्राणामाहतानां समन्ततः ।
क्ष्वेलितास्फोटितानाञ्च तत्र शब्दो महानभूत् ॥ १६ ॥
प्रभ्रष्टोऽथ करात्तस्य प्रतोदः सारथेस्तदा ।
पपात सहसा दैवात् ध्वजस्तस्य तु रक्षसः ॥ १७ ॥
तस्य ते रथसंयुक्ता हया विक्रमवर्जिताः ।
चरणैराकुलैर्गत्वा दीनाः सास्रमुखा ययुः ॥ १८ ॥
प्रवाति पवनस्तस्मिन् सपांसुः खरदारुणः ।
निर्य्याणे तस्य रौद्रस्य मकराक्षस्य दुर्मतेः ॥ १९ ॥
तानि दृष्ट्वा निमित्तानि राक्षसा वीर्य्यवत्तमाः ।
अचिन्त्य निर्गताः सर्वे यत्र तौ रामलक्ष्मणौ ॥ २० ॥

घनगजमहिषाङ्गतुल्यवर्णाः
समरमुखेष्वसकृद्गदासिभिन्नाः ।

ध्वस्तकेशाः विप्रकीर्णकेशा अतएव भयावहाः ॥ १४ ॥ १५ ॥ १६ ॥

तस्य ध्वजः पपात । सुबद्धोऽपीति शेषः ॥ १७ ॥

विक्रमरहिताः यथापूर्वं विचित्रपादन्यासरहिताः । प्रथममाकुलैश्चरणैर्गत्वा पश्चात् साश्रुमुखा ययुः ॥ १८ ॥

प्रवाति सपांसुरतएव खरः अभिमुख इति शेषः ॥ १९ ॥ २० ॥

अहमहमिति युद्धकौशलास्ते
रजनिचराः परिबभ्रमुर्मुहुस्ते ॥ २१ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
अष्टसप्ततितमः सर्गः ॥ ७८ ॥

असक्तच्छत्रूणां गदासिभिर्भिन्नं भेदो येषां ते। अहमहमिति वदन्तः ॥ २१ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे अष्टसप्ततितमः सर्गः ॥ ७८ ॥

---

## एकोनाशीतितमः सर्गः।

निर्गतं मकराक्षं ते दृष्ट्वा वानरपुङ्गवाः।
आप्लुत्य सहसा सर्वे योद्धुकामा व्यवस्थिताः॥ १॥
ततः प्रवृत्तं सुमहत्तद्युद्धं लोमहर्षणम्।
निशाचरैः प्लवङ्गानां देवानां दानवैरिव॥ २॥
वृक्षशूलनिपातैश्च गदापरिघपातनैः।
अन्योऽन्यं मर्दयन्ति स्म तदा कपिनिशाचराः॥ ३॥
शक्तिखड्गगदाकुन्तैस्तोमरैश्च निशाचराः।
पट्टिशैर्भिन्दिपालैश्च बाणपातैः समन्ततः॥ ४॥
पाशमुद्गरदण्डैश्च निर्घातैश्चापरैस्तथा।
कदनं कपिसिंहानाञ्चक्रुस्ते रजनीचराः॥ ५॥
बाणौघैरर्दिताश्चापि खरपुत्रेण वानराः।
सम्भ्रान्तमनसः सर्वे दुद्रुवुर्भयपीडिताः॥ ६॥

निर्गत इति॥ १॥ २॥ ३॥ ४॥
निर्घातास्तदभ्महाध्मनयो यन्त्रायुधविशेषाः॥ ५॥ ६॥

तान् दृष्ट्वा राक्षसाः सर्वे द्रवमाणान् वनौकसः।
नेदुस्ते सिंहवद्दृप्ता राक्षसा जितकाशिनः॥ ७॥
विद्रवत्सु तदा तेषु वानरेषु समन्ततः।
रामस्तान् वारयामास शरवर्षेण राक्षसान्॥ ८॥
वारितान् राक्षसान् दृष्ट्वा मकराक्षो निशाचरः।
कोपानलसमाविष्टो वचनञ्चेदमब्रवीत्॥ ९॥
तिष्ठ राम! मया सार्द्धं द्वन्द्वयुद्धं भविष्यति।
त्याजयिष्यामि ते प्राणान् धनुर्मुक्तैः शितैः शरैः॥ १०॥
यत्तदा दण्डकारण्ये पितरं हतवान् मम।
तदग्रतः स्वकर्मस्थं स्मृत्वा रोषोऽभिवर्द्धते॥ ११॥
दह्यन्ते भृशमङ्गानि दुरात्मन्! मम राघव!।
यन्मयासि न दृष्टस्त्वं तस्मिन् काले महावने॥ १२॥

द्रवमाणान् द्रवतः। जितेन जयेन काशन्ते ते जितकाशिन अभूवन्निति शेष इति तीर्थः॥ ७॥

तान् वानरविद्रावकान् राक्षसान् रामः शरवर्षेण वारयामास॥ ८॥ ९॥ १०॥

यद्यस्मात् पितरं हतवानसि तस्मात्तदग्रतस्तद्दिनादितः स्वकर्मस्थं पितृवधरूपकर्मकर्त्तारं त्वां स्मृत्वा रोषोऽभिवर्द्धते। मदग्रतः स्वकर्मस्थं दृष्ट्वेति पाठे मदग्रतस्तिष्ठन्तमिति शेषः। तीर्थस्तु स्वकर्मस्थं स्वतदामहत्यनिरतमित्यर्थं इत्याह॥ ११॥

दिष्ट्यासि दर्शनं राम ! मम त्वं प्राप्तवानिह।
काङ्क्षितोऽसि क्षुधार्त्तस्य सिंहस्येवेतरो मृगः॥ १३॥
अद्य मद्बाणवेगेन प्रेतराड्विषयं गतः।
ये त्वया निहताः शूराः सह तैश्च वसिष्यसि॥ १४॥
बहुनाच्च किमुक्तेन शृणु राम ! वचो मम।
पश्यन्तु सकला लोकास्त्वां माञ्चैव रणाजिरे॥ १५॥
अस्त्रैर्वा गदया वापि बाहुभ्यां वा रणाजिरे।
अभ्यस्तं येन वा राम ! वर्त्ततां तेन वा मृधम्॥ १६॥
मकराक्षवचः श्रुत्वा रामो दशरथात्मजः।
अब्रवीत् प्रहसन् वाक्यमुत्तरोत्तरवादिनम्॥ १७॥
कत्थसे किं वृथा रक्षो बहून्यसदृशानि ते।
न रणे शक्यते जेतुं विना युद्धेन वाग्बलात्॥ १८॥
चतुर्दशसहस्राणि रक्षसां त्वत्पिता च यः।

यद्यस्मात्तस्मिन् काले पितृवधकाले तस्मिन् महावने मया न दृष्टोऽसि तस्मान् ममाङ्गानि दह्यन्ते। तदैव दर्शने तु प्रतीकारेण तापः शाम्येदित्यर्थः॥ १२॥

इतरो मृगः सिंहेतरमृगमात्रम्॥ १३॥ १४॥ १५॥

येन वधसाधनेनास्त्रादिष्वन्यतमेन तेऽभ्यस्तं तवाभ्यासोऽस्ति तेन वा तेनैव मृधं युद्धं वर्त्ततां सम्पाद्यताम्॥ १६॥

उत्तरोत्तरवादिनं बहुप्रलापिनम्॥ १७॥

त्रिशिरा दूषणश्चापि दण्डके निहतो मया ॥ १९ ॥
खाशिताश्चापि मांसेन गृध्रगोमायुवायसाः।
भविष्यन्त्यद्य वै पाप! तीक्ष्णतुण्डनखाङ्कुशाः ॥ २० ॥
राघवेणैवमुक्तस्तु मकराक्षो महाबलः।
बाणौघानमुचत्तस्मै राघवाय रणाजिरे ॥ २१ ॥
तांश्शरांश्शरवर्षेण रामश्चिच्छेद नैकधा।
निपेतुर्भुवि विच्छिन्ना रुक्मपुङ्खाः सुवाससः ॥ २२ ॥
तद्युद्धमभवत्तत्र समेत्यान्योऽन्यमोजसा।
खरराक्षसपुत्रस्य सूनोर्दशरथस्य च ॥ २३ ॥
जीमूतयोरिवाकाशे शब्दो ज्यातलयोरिह।
धनुर्मुक्तः खनोऽन्योऽन्यं श्रूयते च रणाजिरे ॥ २४ ॥
देवदानवगन्धर्वाः किन्नराश्च महोरगाः।
अन्तरीक्षगताः सर्वे द्रष्टुकामास्तदद्भुतम् ॥ २५ ॥

ते त्वया जेतुमित्यन्वयः ॥ १८ ॥ १९ ॥

खाशिताः सुष्ठु भुक्तवन्तोऽद्य भविष्यन्ति। त्वद्वधेनेति शेषः ॥ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

आकाशे जीमूतयोः शब्द इव ज्यातलयोर्ज्याकरतलयोः सङ्घर्षाद्धेतोर्धनुर्मुक्तोऽन्योऽन्यधनुर्मुक्तः खनोऽन्योऽन्यमिश्रो रणाजिरे श्रूयते स्म ॥ २४ ॥ २५ ॥

विद्धमन्योऽन्यगात्रेषु द्विगुणं वर्धते बलम् ।
कृतप्रतिकृतान्योऽन्यं कुरुतां तौ रणाजिरे ॥ २६ ॥
राममुक्तांस्तु बाणौघान् राक्षसस्त्वच्छिनद्रणे ।
रक्षोमुक्तांस्तु रामो वै नैकधा प्राच्छिनच्छरैः ॥ २७ ॥
बाणौघवितताः सर्वा दिशश्च प्रदिशस्तथा ।
सञ्छन्ना वसुधा चैव समन्तान्न प्रकाशते ॥ २८ ॥
ततः क्रुद्धो महाबाहुर्धनुश्चिच्छेद संयुगे ।
अष्टाभिरथ नाराचैः सूतं विव्याध राघवः ॥ २९ ॥
भित्वा रथं शरै रामो हत्वा अश्वानपातयत् ।
विरथो वसुधास्थः स मकराक्षो निशाचरः ॥ ३० ॥
तत्तिष्ठद्वसुधां रक्षः शूलं जग्राह पाणिना ।
त्रासनं सर्वभूतानां युगान्ताग्निसमप्रभम् ॥ ३१ ॥
दुरवापं महच्छूलं रुद्रदत्तं भयङ्करम् ।

अन्योऽन्यं गात्रेषु विद्धं वेधनमभूदिति शेषः । अथापि द्विगुणं बलं वर्धते स्म । कृतप्रतिकृता कृतप्रतिकृतानि । आर्षोऽडादेशो विभक्तेः । कुरुताम् अकुरुताम् । अडभाव आर्षः ॥ २६ ॥ २७ ॥ ॥ २८ ॥ २९ ॥

भित्वा रथम् । भङ्क्त्वेत्यर्थः । हत्वा अश्वानित्यसन्धिपाठः । रथादश्वानिति पाठान्तरम् । वसुधास्थो भूदिति शेषः ॥ ३० ॥

ज्वाज्वल्यमानमाकाशे संहारास्त्रमिवापरम् ॥ ३२ ॥
यं दृष्ट्वा देवताः सर्वा भयार्त्ता विद्रुता दिशः ।
विभ्राम्य च महच्छूलं प्रज्वलन्तं निशाचरः ॥ ३३ ॥
स क्रोधात् प्राहिणोत्तस्मै राघवाय महात्मने ।
तमापतन्तं ज्वलितं खरपुत्रकराच्युतम् ॥ ३४ ॥
बाणैश्चतुर्भिराकाशे शूलं चिच्छेद राघवः ।
स भिन्नो नैकधा शूलो दिव्यहाटकमण्डितः ।
व्यशीर्य्यत महोल्केव रामबाणार्दितो भुवि ॥ ३५ ॥
तच्छूलं निहतं दृष्ट्वा रामेणाक्लिष्टकर्मणा ।
साधु साध्विति भूतानि व्याहरन्ति नभोगताः ॥ ३६ ॥
तं दृष्ट्वा निहतं शूलं मकराक्षो निशाचरः ।
मुष्टिमुद्यम्य काकुत्स्थं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ३७ ॥
स तं दृष्ट्वा पतन्तन्तु प्रहस्य रघुनन्दनः ।
पावकास्त्रं ततो रामः सन्दधे तु शरासने ॥ ३८ ॥
तेनास्त्रेण हतं रक्षः काकुत्स्थेन तदा रणे ।
सञ्छिन्नहृदयं तत्र पपात च ममार च ॥ ३९ ॥

तन्तिष्ठहस्तधामिति पाठः । वसुधां वसुधायां तिष्ठसन्नस्त्यः शूलं जग्राहेति सम्बन्धः ॥ ३१ ॥ ३२ ॥

शूलोऽर्द्धर्चादिः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

दृष्ट्वा ते राक्षसाः सर्वे मकराक्षस्य पातनम्।
लङ्कामेव प्रधावन्त रामबाणभयार्दिताः ॥ ४० ॥

दशरथनृपसूनुबाणवेगै
रजनिचरं निहतं खरात्मजन्तम्।
प्रददृशुरथदेवताः प्रहृष्टा
गिरिमिव वज्रहतं यथा विकीर्णम् ॥ ४१ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
एकोनाशीतितमः सर्गः ॥ ७९ ॥

प्रधावन्त प्राधावन्त ॥ ४० ॥ ४१ ॥ नवम्यां पूर्वरात्रे अस्य वधः कतकः ।

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे एकोनाशीतितमः सर्गः ॥ ७९ ॥

---

## अशीतितमः सर्गः



मकराक्षं हतं श्रुत्वा रावणः समितिञ्जयः ।
रोषेण महताविष्टो दन्तान् कटकटाय्य च ॥ १ ॥
कुपितश्च तदा तत्र किं कार्य्यमिति चिन्तयन् ।
आदिदेशाथ संक्रुद्धो रणायेन्द्रजितं सुतम् ॥ २ ॥
जहि वीर ! महावीर्य्यौ भ्रातरौ रामलक्ष्मणौ ।
अदृश्यो दृश्यमानो वा सर्वथा त्वं बलाधिकः ॥ ३ ॥
त्वमप्रतिमकर्माणमिन्द्रं जयसि संयुगे ।
किं पुनर्मानुषौ दृष्ट्वा न वधिष्यसि संयुगे ॥ ४ ॥
तथोक्तो राक्षसेन्द्रेण प्रतिगृह्य पितुर्वचः ।
यज्ञभूमौ स विधिवत् पावकं जुहवेन्द्रजित् ॥ ५ ॥
जुह्वतश्चापि तत्राग्निं रक्तोष्णीषधराः स्त्रियः ।
आजग्मुस्तत्र सम्भ्रान्ता राक्षस्यो यत्र रावणिः ॥ ६ ॥

कटकटाय्येत्यार्षोऽल्यप् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥
जुहव जुहाव । वृद्ध्यभाव आर्षः ॥ ५ ॥
स्त्रिय आजग्मुः । होमपरिचारिका इति शेषः ॥ ६ ॥

शस्त्राणि शरपत्राणि समिधोऽथ विभीतकाः ।
लोहितानि च वासांसि स्रुवं कार्ष्णायसं तथा ॥ ७ ॥
सर्वतोऽग्निं समास्तीर्य्य शरपत्रैः सतोमरैः ।
छागस्य सर्वकृष्णस्य गलं जग्राह जीवतः ॥ ८ ॥
शरहोमसमिद्धस्य विधूमस्य महार्च्चिषः ।
बभूवुस्तानि लिङ्गानि विजयं दर्शयन्ति च ॥ ९ ॥
प्रदक्षिणावर्त्तशिखस्तप्तहाटकसन्निभः ।
हविस्तत्प्रतिजग्राह पावकः स्वयमुत्थितः ॥ १० ॥
हुत्वाग्निं तर्पयित्वाथ देवदानवराक्षसान् ।
आरुरोह रथश्रेष्ठमन्तर्धानगतं शुभम् ॥ ११ ॥
स वाजिभिश्चतुर्भिस्तु बाणैस्तु निशितैर्युतः ।
आरोपितमहाचापः शुशुभे स्यन्दनोत्तमे ॥ १२ ॥
जाज्वल्यमानो वपुषा तपनीयपरिच्छदः ।
मृगैश्चन्द्रार्धचन्द्रैश्च स रथः समलंकृतः ॥ १३ ॥

शस्त्राणीत्यादि व्याख्यातम् ॥ ७ ॥ ८ ॥

विजयं दर्शयन्ति चेत्थं जीवतः पुनर्लङ्काप्रवेश एवात्र जयः ॥ ॥ ९ ॥ १० ॥

राक्षसांस्तर्पयित्वा । अभिचारयागीयानिति शेषः ॥ ११ ॥ १२ ॥

वपुषा स्वरूपेण जाज्वल्यमानो रथ इति शेषः । मृगैश्चित्र-मयैः ॥ १३ ॥

जाम्बूनदमहाकम्बुर्दीप्तपावकसन्निभः।
बभूवेन्द्रजितः केतुर्वैदूर्य्यसमलंकृतः॥ १४॥
तेन चादित्यकल्पेन ब्रह्मास्त्रेण च पालितः।
स बभूव दुराधर्षो रावणिः सुमहाबलः॥ १५॥
सोऽभिनिर्य्याय नगरादिन्द्रजित् समितिञ्जयः।
हुताग्निं राक्षसैर्मन्त्रैरन्तर्धानगतोऽब्रवीत्॥ १६॥
अद्य हत्वा रणे यौ तौ मिथ्याप्रव्रजितौ वने।
जयं पित्रे प्रदास्यामि रावणाय रणेऽधिकम्॥ १७॥
अद्य निर्वानरामुर्वीं हत्वा रामञ्च लक्ष्मणम्।
करिष्ये परमां प्रीतिमित्युक्त्वान्तरधीयत॥ १८॥
आपपाताथ संक्रुद्धो दशग्रीवेण चोदितः।
तीक्ष्णकार्मुकनाराचैस्तीक्ष्णस्त्विन्द्ररिपू रणे॥ १९॥

जाम्बूनदमया महान्तः कम्बवो वलया यस्य। कम्बुर्ना वलये शङ्खे इत्यमरः॥ १४॥ १५॥

राक्षसैर्मन्त्रैर्निर्ऋतिदैवत्यमन्त्रैः। अन्तर्धानगतः अन्तर्धानमर्गं प्राप्तः॥ १६॥ १७॥

रामं हत्वा निर्वानरामुर्वीं कृत्वा पितुः प्रीतिं करिष्ये इत्यर्थः। यत्त्वेनमादिवचसां रामस्तुतिपरतया क्लेशेन व्याख्यानं तद्व्यर्थमेव। कवेः कविनिबद्धवक्तुश्च तथा तात्पर्य्याभावादिति एतत्सजातीयवाक्यव्याख्यावसरे निरूपितम्॥ १८॥ १९॥

स ददर्श महावीर्य्यौ नागौ त्रिशिरसाविव ।
सृजन्ताविषुजालानि वीरौ वानरमध्यगौ ॥ २० ॥
इमौ ताविति सञ्चिन्त्य सज्जं कृत्वा च कार्मुकम् ।
सन्ततानेषुधाराभिः पर्य्यन्य इव वृष्टिमान् ॥ २१ ॥
स तु वैहायसरथो युधि तौ रामलक्ष्मणौ ।
अचक्षुर्विषये तिष्ठन् विव्याध निशितैः शरैः ॥ २२ ॥
तौ तस्य शरवेगेन परीतौ रामलक्ष्मणौ ।
धनुषी सशरे कृत्वा दिव्यमस्त्रं प्रचक्रतुः ॥ २३ ॥
प्रच्छादयन्तौ गगनं शरजालैर्महाबलौ ।
तमस्त्रैः सूर्य्यसङ्काशैर्नैव पस्पर्शतुः शरैः ॥ २४ ॥

तृणीधनुःसम्बन्धात् त्रिशिरो नागत्वोत्प्रेक्षा । सृजन्तौ सृज्यन्तौ ॥ ॥ २०

इमौ ताविति सञ्चिन्त्य सकलराक्षसहन्तारावितिः स्मृत्वा इषुधाराभिः इषुवर्षैः । सन्ततान पूरयामास सर्वा दिश इति शेषः ॥ ॥ २१ ॥

वैहायसरथः आकाशगामीरथो यस्य सः । अचक्षुर्विषये तिष्ठन् । इदं युद्धं तत्राचाविव मध्यरात्रे ॥ २२ ॥

परीतौ व्याप्तौ । प्रचक्रतुः प्रादुश्चक्रुः ॥ २३ ॥

अस्त्रैः अस्त्रमन्त्राभिमन्त्रितैः शरैस्तमिन्द्रजितं नैव पस्पर्शतुः पस्पृशतुः । अन्तर्हितत्वादिति भावः ॥ २४ ॥

स हि धूमान्धकारञ्च चक्रे प्रच्छादयन्नभः।
दिशश्चान्तर्दधे श्रीमान्नीहारतमसावृतः॥ २५॥
नैव ज्यातलनिर्घोषो न च नेमिखुरस्वनः।
शुश्रुवे चरतस्तस्य न च रूपं प्रकाशते॥ २६॥
घनान्धकारे तिमिरे शिलावर्षमिवाद्भुतम्।
स ववर्ष महाबाहुर्नाराचशरवृष्टिभिः॥ २७॥
स रामं सूर्य्यसङ्काशैः शरैर्दत्तवरैर्भृशम्।
विव्याध समरे क्रुद्धः सर्वगात्रेषु रावणिः॥ २८॥
तौ हन्यमानौ नाराचैर्धाराभिरिव पर्वतौ।
हेमपुङ्खान्नरव्याघ्रौ तिग्मान्मुमुचतुः शरान्॥ २९॥
अन्तरिक्षे समासाद्य रावणिं कङ्कपत्रिणः।
निकृत्य पतगा भूमौ पेतुस्ते शोणिताप्लुताः॥ ३०॥
अतिमात्रं शरौघेण दीप्यमानौ नरोत्तमौ।
तानिषून् पततो भल्लैरनेकैर्विचकर्त्ततुः॥ ३१॥

धूमान्धकारश्चक्रे। माययेति शेषः। दिशश्चान्तर्दधे अन्तर्धापयामास। नीहारवशात्तदविवेकं मायया सम्पादयामासेत्यर्थः॥ २५॥ ॥ २६॥ २७॥

दत्तवरैर्वरदत्तैः॥ २८॥ २९॥

कङ्कपत्रिणस्ते पतगा बाणा अन्तरिक्षे रावणिं समासाद्य तं निकृत्य विध्वा भूमौ शोणितोक्षिताः पेतुः॥ ३०॥

यतो हि ददृशाते तौ शरान्निपतिताञ्छितान् ।
ततस्तु तौ दाशरथी ससृजातेऽस्त्रमुत्तमम् ॥ ३२ ॥
रावणिस्तु दिशः सर्वा रथेनातिरथोऽपतत् ।
विव्याध तौ दाशरथी लघ्वस्त्रौ निशितैः शरैः ॥ ३३ ॥
तेनातिविद्धौ तौ वीरौ रुक्मपुङ्खैः सुसंहतैः ।
बभूवतुर्दाशरथी पुष्पिताविव किंशुकौ ॥ ३४ ॥
नास्य वेगगतिं कश्चिन्न च रूपं धनुः शरान् ।
न चास्य विदितं किञ्चित् सूर्य्यस्येवाभ्रसंप्लवे ॥ ३५ ॥
तेन विद्धाश्च हरयो निहताश्च गतासवः ।
बभूवुः शतशस्तत्र पतिता धरणीतले ॥ ३६ ॥
लक्ष्मणस्तु ततः क्रुद्धो भ्रातरं वाक्यमब्रवीत् ।
ब्राह्ममस्त्रं प्रयोक्ष्यामि वधार्थं सर्वरक्षसाम् ॥ ३७ ॥
तमुवाच ततो रामो लक्ष्मणं शुभलक्षणम् ।
नैकस्य हेतो रक्षांसि पृथिव्यां हन्तुमर्हसि ॥ ३८ ॥
अयुध्यमानं प्रच्छन्नं प्राञ्जलिं शरणागतम् ।

ता निषूनिन्द्रजित्प्रयुक्तबाणान् विचकर्त्ततुरित्यार्षो गुणः ॥ ३१ ॥
यतो यस्यां दिशि ततस्तस्यां दिशि ॥ ३२ ॥ ३३ ॥ ३४ ॥
अभ्रसंप्लवे सूर्य्यस्य गत्यादिकमिव नास्यवेगयुक्तगत्यादिकं किञ्चि-
द्विदितम् ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

पलायमानं मत्तं वा न हन्तुं त्वमिहार्हसि ॥ ३९ ॥
तस्यैव तु वधे यत्नं करिष्यामि महाभुज !।
आदेक्ष्यावो महावेगानस्त्रानाशीविषोपमान् ॥ ४० ॥
तमेनं मायिनं क्षुद्रमन्तर्हितरथं बलात्।
राक्षसं निहनिष्यन्ति दृष्ट्वा वानरयूथपाः ॥ ४१ ॥
यद्येष भूमिं विशते दिवं वा
रसातलं वापि नभस्तलं वा।

अयुध्यमानं त्यक्तयुद्धम्। प्रच्छन्नं युद्धभीत्या गृहेऽस्मदद्दृश्यतया स्थितम्। अयुध्यमानत्वादिषट्प्रकाराणामपि सर्वरक्षउद्देशेन ब्रह्मास्त्र-सन्धाने वधो भवति। न तु तद्युज्यत इत्यर्थः। अन्ततो विभीषण-स्यापि नाशप्रसङ्ग इत्याशयः ॥ ३९ ॥

माययान्तर्हितमेनमेव हन्तुं घोरानाशीविषोपमानस्त्रान् अस्त्राणि आदेक्ष्यावः। अदृष्टवधोऽस्मदेकसाध्यः। दृष्टस्य तु वध ईषत्करो वानराणामपीत्याह,—राक्षसमिति। यदि दर्शनं स्यात्तदा दृष्ट्वा दर्शनमात्रेण हनूमदादय एनं राक्षसं निहनिष्यन्ति। दृष्ट्वा वानर-यूथपा इत्यत्र तद्दर्शनोपायो भारते उक्तः। इदमम्भो गृहीत्वा तु राजराजस्य शासनात्। गुह्यकोऽभ्यागतः कश्चित्त्वल्लोकाशमरिन्दम। इदमम्भः कुबेरस्ते महाराज प्रयच्छति। अन्तर्हितानां भूतानां दर्शनार्थं परन्तप। अनेन मृष्टनयनो भूतान्यन्तर्हितान्युत। भवान् द्रक्ष्यति यस्मै च प्रदास्यति नरः स चेति विभीषणवाक्येन ॥ ४० ॥ ४१ ॥

एवं विगूढ़ोऽपि ममास्त्रदग्धः
पतिष्यते भूमितले गतासुः ॥ ४२ ॥
इत्येवमुक्त्वा वचनं महार्थं
रघुप्रवीरः प्लवगर्षभैर्वृतः ।
वधाय रौद्रस्य नृशंसकर्मण-
स्तदा महात्मा त्वरितं निरीक्षते ॥ ४३

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
अशीतितमः सर्गः ॥ ८० ॥

भूमिं भूमिविवरम् । दिवं स्वर्गम् । एतदुपरितनलोकोपलक्षणम् । रसातलमित्येतदधस्तनलोकोपलक्षणम् ॥ ४२ ॥
त्वरितं त्वरापितं निरीक्षते स्म ॥ ४३ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे अशीतितमः सर्गः ॥ ८० ॥

---

# एकाशीतितमः सर्गः ।

विज्ञाय तु मनस्तस्य राघवस्य महात्मनः ।
स निवृत्याहवात्तस्मात् प्रविवेश पुरं ततः ॥ १ ॥
सोऽनुस्मृत्य वधं तेषां राक्षसानां तरस्विनाम् ।
क्रोधताम्रेक्षणः शूरो निर्जगामाथ रावणिः ॥ २ ॥
स पश्चिमेन द्वारेण निर्ययौ राक्षसैर्वृतः ।
इन्द्रजित् सुमहावीर्य्यः पौलस्त्यो देवकण्टकः ॥ ३ ॥
इन्द्रजित्तु ततो दृष्ट्वा भ्रातरौ रामलक्ष्मणौ ।
रणायाभ्युद्यतौ वीरौ मायां प्रादुष्करोत्तदा ॥ ४ ॥
इन्द्रजित्तु रथे स्थाप्य सीतां मायामयीं तदा ।

मनो विज्ञाय दिव्यास्त्रबलेन सर्वथा मां जिघांसतीति ज्ञात्वा ॥ १ ॥

तेषां कुम्भकर्णादीनाम् ॥ २ ॥ ३ ॥

मायां परव्यामोहकरीं शक्तिं प्रादुष्करोत्प्रादुर्भावयामास । निकुम्भिलां गन्तुकामः पश्चिमेन द्वारेण निर्गच्छन् स्वगमनविघातकं रामलक्ष्मणयोरुद्योगं दृष्ट्वा तन्निवारणार्थं मायां प्रकटितवानित्याशयः ॥ ४ ॥

बलेन महताहृत्य तस्या वधमरोचयत् ॥ ५ ॥
मोहनार्थन्तु सर्वेषां बुद्धिं कृत्वा सुदुर्मतिः ।
हन्तुं सीतां व्यवसितो वानराभिमुखो ययौ ॥ ६ ॥
तं दृष्ट्वा त्वभिनिर्य्यान्तं सर्वे ते काननौकसः ।
उत्पेतुरभिसंक्रुद्धाः शिलाहस्ता युयुत्सवः ॥ ७ ॥
हनूमान् पुरतस्तेषां जगाम कपिकुञ्जरः ।
प्रगृह्य सुमहत् शृङ्गं पर्वतस्य दुरासदम् ॥ ८ ॥
स ददर्श हतानन्दां सीतामिन्द्रजितो रथे ।
एकवेणीधरां दीनामुपवासकृशाननाम् ॥ ९ ॥
परिक्लिष्टैकवसनाममृजां राघवप्रियाम् ।
रजोमलाभ्यामालिप्तैः सर्वगात्रैर्वरस्त्रियम् ॥ १० ॥
तां निरीक्ष्य मुहूर्त्तन्तु मैथिलीमध्यवस्य च ।
बभूवाचिरदृष्टा हि तेन सा जनकात्मजा ॥ ११ ॥

तां मायामाह,—इन्द्रजित्त्विति। तस्या वधं मायासीतावधम्। बुद्धिं कृत्वा मन्त्रं कृत्वा सीतां हन्तुं व्यवसितः सन् ययौ। इदं रात्रिशेषे परदिने दशम्यां वा इति बोध्यम् ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

परिक्लिष्टं मलिनम्। अमृजाम् उद्वर्त्तनादिसंस्काररहिताम्। सर्वगात्रैरुपलक्षिताम् ॥ १० ॥

अध्यवस्य निश्चित्य। विषण्णो बभूवेति शेषः। निश्चयहेतुमाह,—अचिरेत्यादि ॥ ११ ॥

अब्रवीत्तान्तु शोकार्त्तां निरानन्दां तपस्विनीम्।
दृष्ट्वा रथस्थितां दीनां राक्षसेन्द्रसुताश्रिताम्॥ १२॥
किं समर्थितमस्येति चिन्तयन् स महाकपिः।
स हतैर्वानरश्रेष्ठैरभ्यधावत रावणिम्॥ १३॥
तद्वानरबलं दृष्ट्वा रावणिः क्रोधमूर्च्छितः।
कृत्वा विकोशं निस्त्रिंशं मूर्ध्नि सीतामकर्षयत्॥ १४॥
तां स्त्रियं पश्यतां तेषां ताड़यामास राक्षसः।
क्रोशन्तीं राम रामेति मायया योजितां रथे॥ १५॥
गृहीतमूर्धजां दृष्ट्वा हनुमान् दैन्यमागतः।
दुःखजं वारि नेत्राभ्यामुत्सृजन् मारुतात्मजः॥ १६॥
तां दृष्ट्वा चारुसर्वाङ्गीं रामस्य महिषीं प्रियाम्।
अब्रवीत् परुषं वाक्यं क्रोधाद्रक्षोऽधिपात्मजम्॥ १७॥

शोकार्त्तत्वादिगुणविशिष्टां राक्षसेन्द्रसुतमिन्द्रजितं श्रितां सीतां दृष्ट्वा किमस्य समर्थितमभिप्रेतमिति स्वयं चिन्तयन् सन् वानरान् प्रत्यपि किं समर्थितमस्येत्यब्रवीत्॥ १२॥

अस्तु यत् किञ्चिदस्य समर्थितमपि तु दुष्टमेनं हन्म इत्युद्योगं कृतवानित्याह,—स हतैरिति॥ १३॥

विकोशं विगतपिधानं निस्त्रिंशं खड्गं मूर्ध्नि तस्य। कोशपाशे स्त्रङ्कृति शेषः॥ १४॥

पश्यतां तेषां पश्यतस्ताननादृत्येत्यर्थः॥ १५॥ १६॥ १७॥

दुरात्मन्नात्मनाशाय केशपक्षे परामृशः।
ब्रह्मर्षीणां कुले जातो राक्षसीं योनिमाश्रितः॥ १८॥
धिक् त्वां पापसमाचारं यस्य ते मतिरीदृशी।
नृशंसानार्य्य दुर्वृत्त क्षुद्र पापपराक्रम!।
अनार्य्यस्येदृशं कर्म घृणा ते नास्ति निर्घृण!॥ १९॥
च्युता गृहाच्च राज्याच्च रामहस्ताच्च मैथिली।
किं तवैषापराद्धा हि यदेनां हंसि निर्दय!॥ २०॥
सीतां हत्वा तु न चिरं जीविष्यसि कथञ्चन।
वधार्ह! कर्मणा तेन मम हस्तगतो ह्यसि॥ २१॥
ये च स्त्रीघातिनां लोका लोकवध्यैश्च कुत्सिताः।
इह जीवितमुत्सृज्य प्रेत्य तान् प्रतिलप्स्यसे॥ २२॥
इति ब्रुवाणो हनुमान् सायुधैर्हरिभिर्वृतः।
अभ्यधावत्सुसंक्रुद्धो राक्षसेन्द्रसुतं प्रति॥ २३॥

हे दुरात्मन्! यदेनां केशपक्षे केशकलापे परामृशस्तदात्मनाशाय। पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे। यतो ब्रह्मर्षिकुले जातोऽपि राक्षसीं योनिमाश्रितोऽसि। अतस्त्वां धिगुत्तरेणान्वयः॥ १८॥

पापपराक्रम क्रूरयोधिन् हे निघृण ते स्त्रीविषयेऽपि घृणा नास्ति। अतोऽनार्य्यस्येदृशं कर्म धिक् इत्यनुकर्षः॥ १९॥ २०॥

हे वधार्ह तेन कर्मणा न चिरं जीविष्यसि। हि यतो मम हस्तगतोऽसि॥ २१॥

आपतन्तं महावीर्य्यं तदनीकं वनौकसाम्।
रक्षसां भीमकोपानामनीकेन न्यवारयत्॥ २४॥
स तां बाणसहस्रेण विक्षोभ्य हरिवाहिनीम्।
हनूमन्तं हरिश्रेष्ठमिन्द्रजित् प्रत्युवाच ह॥ २५॥
सुग्रीवस्त्वञ्च रामश्च यन्निमित्तमिहागताः।
तां वधिष्यामि वैदेहीमद्यैव तव पश्यतः॥ २६॥
इमां हत्वा ततो रामं लक्ष्मणं त्वाञ्च वानर!।
सुग्रीवञ्च वधिष्यामि तञ्चानार्य्यं विभीषणम्॥ २७॥
न हन्तव्याः स्त्रियश्चेति यत् ब्रवीषि प्लवङ्गम!।
पीड़ाकरममित्राणां यच्च कर्त्तव्यमेव तत्॥ २८॥
तमेवमुक्त्वा रुदतीं सीतां मायामयीञ्च ताम्।
शितधारेण खड्गेन निजघानेन्द्रजित् स्वयम्॥ २९॥
यज्ञोपवीतमार्गेण छिन्ना तेन तपस्विनी।
सा पृथिव्यां पृथुश्रोणी पपात प्रियदर्शना॥ ३०॥
तामिन्द्रजित् स्त्रियं हत्वा हनूमन्तमुवाच ह।

ये लोकवध्यैश्चौरादिभिरपि कुत्सिता अतिदुःखितया परिहृताः स्त्रीघातिनां लोकास्तानिहेदानीं जीवितमुत्सृज्य प्रेत्य प्रतिपत्स्यसे॥ २२॥ २३॥

आपतन्तमिति लिङ्गव्यत्यय आर्षः॥ २४॥ २५॥ २६॥ २७॥

मया रामस्य पश्येमां प्रियां शस्त्रनिषूदिताम् ॥ २१ ॥
एषा विशस्ता वैदेही निष्फलो वः परिश्रमः ॥ २२ ॥
ततः खड्गेन महता हत्वा तामिन्द्रजित् स्वयम् ।
हृष्टः स रथमास्थाय ननाद च महास्वनम् ॥ २३ ॥
वानराः शुश्रुवुः शब्दमदूरे प्रत्यवस्थिताः ।
व्यादितास्यस्य नदतस्तद्दुर्गं संश्रितस्य तु ॥ २४ ॥
तथा तु सीतां विनिहत्य दुर्मतिः
प्रहृष्टचेताः स बभूव रावणिः ।
तं हृष्टरूपं समुदीक्ष्य वानरा
विषण्णरूपाः समभिप्रदुद्रुवुः ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
एकाशीतितमः सर्गः ॥ ८१ ॥

अमित्राणां शत्रूणां यत्पीड़ाकरं तत्पापमपि कर्त्तव्यमेव ॥ २८ ॥
॥ २९ ॥ ३० ॥ ३१ ॥
एषा वैदेही विशस्तातो वः परिश्रमो निष्फलः ॥ ३२ ॥ ३३ ॥
व्यादितास्यस्य विवृतास्यस्य । तद्दुर्गं खेचररथरूपं दुर्गम् ॥ ३४ ॥
हृष्टरूपम् अतिशयेन हृष्टम् । प्रशंसायां रूपप् ॥ ३५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे एकाशीतितमः सर्गः ॥ ८१ ॥

---

## द्व्यशीतितमः सर्गः



श्रुत्वा तं भीमनिर्ह्रादं शक्राशनिसमस्वनम् ।
वीक्षमाणा दिशः सर्वा दुद्रुवुर्वानरा भृशम् ॥ १ ॥

तानुवाच ततः सर्वान् हनूमान् मारुतात्मजः ।
विषण्णवदनान् दीनांस्त्रस्तान् विद्रवतः पृथक् ॥ २ ॥

कस्माद्विषण्णवदना विद्रवध्वं प्लवङ्गमाः ! ।
त्यक्तयुद्धसमुत्साहाः शूरत्वं क्व नु वो गतम् ।
पृष्ठतो न व्रजध्वं मामग्रतो यान्तमाहवे ॥ ३ ॥

एवमुक्ताः सुसंक्रुद्धा वायुपुत्रेण धीमता ।
शैलशृङ्गान् द्रुमांश्चैव जगृहुर्हृष्टमानसाः ॥ ४ ॥

अभिपेतुश्च गर्जन्तो राक्षसान् वानरर्षभाः ।
परिवार्य्य हनूमन्तमन्वयुश्च महाहवे ॥ ५ ॥

स तैर्वानरमुख्यैस्तु हनूमान् सर्वतो वृतः ।
हुताशनइवार्चिष्मानदहच्छत्रुवाहिनीम् ॥ ६ ॥

श्रुत्वेति । भीमो यो निर्ह्रादः शब्दस्तं श्रुत्वा । इन्द्रजित इति

स राक्षसानां कदनञ्चकार सुमहाकपिः।
वृतो वानरसैन्येन कालान्तकयमोपमः॥ ७॥
स तु शोकेन चाविष्टः कोपेन महता कपिः।
हनूमान् रावणिरथे महतीं पातयच्छिलाम्॥ ८॥
तामापतन्तीं दृष्ट्वैव रथं सारथिना तदा।
विधेयाश्वसमायुक्तो विदूरमपवाहितः॥ ९॥
तमिन्द्रजितमप्राप्य रथस्थं सहसारथिम्।
विवेश धरणीं भित्वा सा शिला व्यर्थमुद्यता॥ १०॥
पतितायां शिलायान्तु व्यथिता रक्षसाञ्चमूः।
निपतन्त्या च शिलया राक्षसा मथिता भृशम्॥ ११॥
तमभ्यधावन् शतशो नदन्तः काननौकसः।
ते द्रुमांश्च महाकाया गिरिशृङ्गाणि चोद्यताः॥ १२॥
क्षिपन्तीन्द्रजितं संख्ये वानरा भीमविक्रमाः।

शेषः। शक्राशनिसमस्वनं तमिन्द्रजितं वीक्षमाणां दिशो दुद्रुवुः॥ ॥ १॥ २॥ ३॥ ४॥ ५॥ ६॥ ७॥ ८॥

विधेयाश्वैः सारथ्यधीनाश्वैः समायुक्तः॥ ९॥

सा शिला व्यर्थमुद्यता अभवदिति शेषः॥ १०॥ ११॥

गिरिशृङ्गाणि चोद्यताः। गृहीत्वेति शेषः। गृहीत्वा युद्धार्थमुद्यता बभूवुरित्यर्थः॥ १२॥

वृक्षशैलमहावर्षं विसृजन्तः प्लवङ्गमाः ॥ १३ ॥
शत्रूणां कदनञ्चक्रुर्नेदुश्च विविधैः स्वनैः ।
वानरैस्तैर्महाभीमैर्घोररूपा निशाचराः ॥ १४ ॥
वीर्य्यादभिहता वृक्षैर्व्यचेष्टन्त रणक्षितौ ।
स सैन्यमभिवीक्ष्याथ वानरार्दितमिन्द्रजित् ॥ १५ ॥
प्रगृहीतायुधः क्रुद्धः परानभिमुखो ययौ ।
स शरौघानवसृजन् स्वसैन्येनाभिसंवृतः ॥ १६ ॥
जघान कपिशार्दूलान् सुबहून् दृढविक्रमः ।
शूलैरशनिभिः खड्गैः पट्टिशैः शूलमुद्गरैः ॥ १७ ॥
ते चाप्यनुचरांस्तस्य वानरा जघ्नुराहवे ॥ १८ ॥
सुस्कन्धविटपैः शैलैः शिलाभिश्च महाबलाः ।
हनूमान् कदनञ्चक्रे रक्षसां भीमकर्मणाम् ॥ १९ ॥
सन्निवार्य्य परानीकमब्रवीत्तान् वनौकसः ।
हनूमान् सन्निवर्त्तध्वं न नः साध्यमिदं बलम् ॥ २० ॥
त्यक्त्वा प्राणान् विचेष्टन्तो रामप्रियचिकीर्षवः ।
यन्निमित्तं हि युद्ध्यामो हता सा जनकात्मजा ॥ २१ ॥

ततस्तदर्षं विसृजन्तस्ते वानरा इन्द्रजितं क्षिपन्ति स्म। तिरस्कुर्वन्नुरिति यावत् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥
सन्निवार्य्य परानीकं राक्षससेनाम् ॥ २० ॥

इममर्थं हि विज्ञाप्य रामं सुग्रीवमेव च।
तौ यत्प्रतिविधास्येते तत् करिष्यामहे वयम्॥ २२॥
इत्युक्त्वा वानरश्रेष्ठो वारयन् सर्ववानरान्।
शनैः शनैरसंत्रस्तः सबलः सन्न्यवर्त्तत॥ २३॥
ततः प्रेक्ष्य हनूमन्तं व्रजन्तं यत्र राघवः।
स होतुकामो दुष्टात्मा गतश्चैत्यं निकुम्भिलाम्॥ २४॥
निकुम्भिलमधिष्ठाय पावकं जुहवेन्द्रजित्।
यज्ञभूम्यां ततो गत्वा पावकस्तेन रक्षसा॥ २५॥
हूयमानः प्रजज्वाल होमशोणितभुक् तदा।
सार्चिःपिनद्धो ददृशे होमशोणिततर्पितः।
सन्ध्यागत इवादित्यः सुतीव्रोऽग्निः समुत्थितः॥ २६॥

प्राणांस्त्यक्त्वा प्राणस्नेहमपि त्यक्त्वा विचेष्टन्तःसन्तो रामप्रियचिकीर्षया यन्निमित्तं युध्यामः सा हतेति व्यर्थोऽयं श्रम इति भावः॥ २१॥

प्रतिविधास्येते प्रतिक्रियानुष्ठाने नियोक्ष्येते तत्करिष्यामहे॥ ॥ २२॥ २३॥

दशम्यां पूर्वाह्णे निकुम्भिलागमनम्। निकुम्भिलाचैत्यं तदाख्यं देवालयं वटवृक्षं वा॥ २४॥

जुहव जुहाव॥ २५॥

होमशोणितभुक् होमार्थमाहुतित्वेन प्रक्षिप्तशोणितभुक्। अर्चिभिः पिनद्धः सम्बद्धः सुतीव्रोऽग्नीरक्षोविपत्सूचकः॥ २६॥

अथेन्द्रजिद्राक्षसभूतये तु
जुहाव हव्यं विधिना विधानवित्।
दृष्ट्वा व्यतिष्ठन्त च राक्षसास्ते
महासमूहेषु नयानयज्ञाः ॥ २७ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
द्व्यशीतितमः सर्गः ॥ ८२ ॥

महासमूहेषु युद्धेषु। नयानयज्ञाः कृत्याकृत्यतत्त्वज्ञाः ॥ २७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे द्व्यशीतितमः सर्गः ॥ ८२ ॥

---

## त्र्यशीतितमः सर्गः



राघवश्चापि विपुलं तं राक्षसवनौकसाम् ।
श्रुत्वा संग्रामनिर्घोषं जाम्बवन्तमुवाच ह ॥ १ ॥
सौम्य ! नूनं हनुमता कृतं कर्म सुदुष्करम् ।
श्रूयते च यथा भीमः सुमहानायुधस्वनः ॥ २ ॥
तद्गच्छ कुरु साहाय्यं स्वबलेनाभिसंवृतः ।
क्षिप्रमृक्षपते ! तस्य कपिश्रेष्ठस्य युध्यतः ॥ ३ ॥
ऋक्षराजस्तथेत्युक्त्वा स्वेनानीकेन संवृतः ।
आगच्छत् पश्चिमं द्वारं हनूमान् यत्र वानरः ॥ ४ ॥
अथायान्तं हनूमन्तं ददर्शर्क्षपतिस्तदा ।
वानरैः कृतसंग्रामैः श्वसद्भिरभिसंवृतम् ॥ ५ ॥
दृष्ट्वा पथि हनूमांश्च तदृक्षबलमुद्यतम् ।
नीलमेघनिभं भीमं सन्निवार्य्य न्यवर्त्तत ॥ ६ ॥

राघवश्चापीति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

श्वसद्भिः सीताविपत्तिस्मृतिजदुःखाग्निः श्वसद्भिरित्यर्थः ॥ ५ ॥

नीलमेघनिभं भीमं ऋक्षबलम् उद्यतं युद्धायोद्यतं सन्निवार्य्य । युद्धप्रवृत्तेरिति शेषः ॥ ६ ॥

स तेन सह सैन्येन सन्निकर्षं महायशाः।
शीघ्रमागम्य रामाय दुःखितो वाक्यमब्रवीत् ॥ ७
समरे युध्यमानानामस्माकं प्रेक्षताञ्च सः।
जघान रुदतीं सीतामिन्द्रजिद्रावणात्मजः ॥ ८ ॥
उद्भ्रान्तचित्तस्तां दृष्ट्वा विषण्णोऽहमरिन्दम !।
तदहं भवतो वृत्तं विज्ञापयितुमागतः ॥ ९ ॥
तस्य तद्वचनं श्रुत्वा राघवः शोकमूर्च्छितः।
निपपात तदा भूमौ छिन्नमूल इव द्रुमः ॥ १० ॥
तं भूमौ देवसङ्काशं पतितं दृश्य राघवम्।
अभिपेतुः समुत्पत्य सर्वतः कपिसत्तमाः ॥ ११ ॥
असिञ्चन् सलिलैश्चैनं पद्मोत्पलसुगन्धिभिः।
प्रदहन्तमसंहार्य्यं सहसाग्निमिवोत्थितम् ॥ १२ ॥
तं लक्ष्मणोऽथ बाहुभ्यां परिष्वज्य सुदुःखितः।
उवाच राममस्वस्थं वाक्यं हेत्वर्थसंयुतम् ॥ १३ ॥

तेन सैन्येन सह राक्षससैन्येनापि सह रामस्य सन्निकर्षमागम्य प्राप्य रामायाब्रवीदित्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

अभिपेतुः तत्समीपमाजग्मुः ॥ ११ ॥

प्रदहन्तं सीतानाशश्रवणशोकेन सहायेन दहन्तम्। अतएवासंहार्य्यम् अनिवार्य्यवेगम्। उत्थितमग्निमिव दृष्ट्वा सलिलादिभिस्तमसिञ्चन् ॥ १२ ॥

शुभे वर्त्मनि तिष्ठन्तं त्वामार्य्य ! विजितेन्द्रियम् ।
अनर्थेभ्यो न शक्नोति त्रातुं धर्मो निरर्थकः ॥ १४ ॥
भूतानां स्थावराणाञ्च जङ्गमानाञ्च दर्शनम् ।
यथास्ति न तथा धर्मस्तेन नास्तीति मे मतिः ॥ १५ ॥

तं लक्ष्मणो बाहुभ्यां परिष्वज्य दुःखितो भूत्वाऽस्वस्थमस्वस्थचित्तं रामं हेत्वर्थसंयुतम् उपपत्त्याविशिष्टप्रयोजनेन च सहितं वाक्यमुवाच ॥ १३ ॥

तदेवाह,—शुभे इति। तदद्य विपुलं वीर दुःखमिन्द्रजिता कृतम् । कर्मणा व्यपनेष्यामि तस्मादुत्तिष्ठ राघवेति युद्धाय पौरुषावलम्बनेन प्रोत्साहयिष्यन् केवलधर्मावलम्बनमप्रयोजकमिति प्रतिपादयत्यनेन वाक्यसमूहेन। हे आर्य्य शुभे वर्त्मनि धर्ममार्गे राज्यत्यागपूर्वकं पितृवचनपालनरूपे तिष्ठन्तं विजितेन्द्रिय हस्तप्राप्तराज्यपरित्याजकयोः कैकेयीदशरथयोरपरिकालुष्याभावेन विजितेन्द्रियं त्वां त्वदाश्रितो धर्मोऽनर्थेभ्यस्त्रातुं न शक्नोति। यतस्तस्मादसौ निरर्थकः प्राधान्येन पुरुषार्थो न भवति ॥ १४ ॥

एवं धर्मपदार्थमङ्गीकृत्य तस्यार्थत्वं नास्तीत्यनुभवात्प्रदर्श्येदानीं धर्मपदार्थ एव नास्ति। फलानुमेयता हि तस्योक्ता। फलञ्च सुखम्। प्रकृते च सुखान्वयव्यतिरेकयोर्धर्मऽभावेन न तेन तदनुमानमित्याह,—भूतानामिति। स्थावराणां जङ्गमानाञ्च पश्वादिरूपाणां भूतानां दर्शनं सुखापरोक्षदर्शनं यथास्ति तथा धर्मो नास्ति। असामर्थ्यादनधिकाराच्च। तस्माद्धर्मः सुखसाधनत्वव्याप्तो नेति मे मतिः। जन्मान्तरा-

यथैव स्थावरं व्यक्तं जङ्गमञ्च तथाविधम्।
नायमर्थस्तथा युक्तस्त्वद्विधो न विपद्यते ॥ १६ ॥
यद्यधर्मो भवेद्भूतो रावणो नरकं व्रजेत्।
भवांश्च धर्मसंयुक्तो नैव व्यसनमाप्नुयात् ॥ १७ ॥
तस्य च व्यसनाभावाद्व्यसनञ्चागते त्वयि।
धर्मो भवत्यधर्मश्च परस्परविरोधिनौ ॥ १८ ॥

दिकं नास्त्येवेति बौद्धमतेनेयमुक्तिः न हि तं विना जायमानस्यापि तत्कारणकत्वमिति भावः। यत्तु यथा स्थावरादीनां दर्शनात्तत्सत्ता तथा धर्मस्य दर्शनाभावाद्धर्मो नास्तीति व्याचक्षते तन्न। योग्यानुपलम्भस्यैवा-भावसाधकत्वात्। धर्मस्य च पिशाचादिवदयोग्यत्वात् ॥ १५ ॥

उक्तमेवार्थं विशदयति। यथैवेति। यथा यस्मात् स्थावरं व्यक्तम्। धर्मप्रसक्तिरहितमपि सुखीति व्यक्तम्। तथाविधं स्थावर-वद्धर्मानधिकृतं जङ्गमं पश्वाद्यपि सुखीति व्यक्तम्। एतेन व्यतिरेकः खण्डितः। अन्वयमपि खण्डयति। न तथा युक्तः। अयमर्थः सुख-रूपो न। सर्वात्मना धर्मयुक्तस्त्वद्विधो धर्मस्य सुखान्वयेन विपद्यते न विपन्नः स्यात्। दृश्यते च विपत्तिरित्यन्वयोऽपि नास्ति। अनेन तदंशे जन्मान्तरीणधर्मकल्पनापि परास्ता। साधनत्वसिद्धावेव कल्प-नावसरात्। अतोऽयमर्थो धर्मरूपो न नास्त्येव ॥ १६ ॥

उक्तमर्थं प्रकृते योजयति। यदीति। अधर्मो भूतो दुःखसाधन-त्वेन यदि सिद्धो भवेत्तदा रावणो नरकं दुःखं व्रजेत्। धर्मयुक्तो भवांश्च नैव व्यसनं दुःखं प्राप्नुयात् ॥ १७ ॥

धर्मेणोपलभेद्धर्ममधर्मञ्चाप्यधर्मतः ।
यद्यधर्मेण युज्येयुर्येष्वधर्मः प्रतिष्ठितः ॥ १९ ॥
न धर्मेण वियुज्येरन्नाधर्मरुचयो जनाः ।
धर्मेणाचरतान्तेषां तथा धर्मफलं भवेत् ॥ २० ॥
यस्मादर्था विवर्धन्ते येष्वधर्मः प्रतिष्ठितः ।

अस्य तर्कस्य विपर्यये पर्यवसानमाह,—तस्य चेति । तस्य रावणस्य सत्यधर्मे व्यसनाभावात् सुखसत्वाच्च पितृवाक्यपरिपालके त्वयि व्यसनं दुःखमागते प्राप्ते सति । सिद्धो धर्माधर्माभ्यां सुखदुःखयोरन्वयव्यतिरेकाभावः । किञ्चोक्तानुभवादेव विपरीतफलता च तयोरित्याह,—धर्म इति । धर्मो यथाश्रुतफलविरुद्धदुःखफलो भवति । एवमधर्मस्य श्रुतफलविरुद्धसुखफलो भवति । तस्मादेतौ परस्परविरोधिनौ । अन्योऽन्यं यथाश्रुतफलविरुद्धफलकौ ॥ १८ ॥

कुत एवं निश्चयस्तत्रानुभवादेवेत्याह,—धर्मेणेति । धर्मेण धर्मं धर्मसाध्यं सुखं यद्युपलभेत् । तथाऽधर्मतः अधर्मेणाधर्मं तत्फलं दुःखं यद्युपलभेत् । नियमेन उत्तरार्धस्थं यदीति पूर्वार्धान्वयि । यद्येवं नियमः स्यात्तदा येषु रावणादिष्वधर्मः प्रतिष्ठितस्तेऽधर्मेण तत्फलेन दुःखेनैव युज्येयुः । तथा ये जना नाधर्मरुचयः अधर्मरुचिरहितास्ते धर्मेण तत्फलेन सुखेन न वियुज्येरन्नवियुक्ताः स्युः । तमेवार्थं प्रकारान्तरेणाह,—धर्मेणेति । धर्मेण धर्ममार्गेणाचरतामनुतिष्ठतां तेषां तथा धर्मफलं सुखं भवेत् । तदैतयोर्विरुद्धफलराहित्यं स्यादित्यर्थः ॥
॥ १९ ॥ २० ॥

क्लिश्यन्ते धर्मशीलाश्च तस्मादेतौ निरर्थकौ ॥ २१ ॥
बध्यन्ते पापकर्माणो यद्यधर्मेण राघव !।
वधकर्महतोऽधर्मः स हतः कं वधिष्यति ॥ २२ ॥
अथवा विहितेनायं हन्यते हन्ति चापरम्।
विधिः स लिप्यते तेन न स पापेन कर्मणा ॥ २३ ॥

न चैवमस्तीत्याह,—यस्मादिति। येष्वधर्मः प्रतिष्ठितस्तेष्वर्था विवर्द्धन्ते धर्मशीलाश्च क्लिश्यन्ते। तस्मादेतौ निरर्थकौ श्रुतस्वस्वफलरहितौ विपरीतफलौ चेत्यर्थः। एवञ्च सुखदुःखयोर्धर्माधर्माभ्यां व्याप्त्यभावात् न ताभ्यां तदनुमानमिति भावः ॥ २१ ॥

इदानीं धर्मादिस्वरूपमेव दुर्निरूपमिति वक्तुं किं व्यापाररूपौ वा तज्जन्यातिशयरूपौ वेति विकल्पेनाद्य इत्याह,—बध्यन्त इति। पापकर्माणः पुरुषा यद्यधर्मेण क्रियाशरीरेण बध्यन्ते तदा क्रियायास्त्रिक्षणावस्थायित्वाच्चतुर्थक्षणे हत एव वधकर्मणा नाशक्रियया हतो नष्टोऽधर्मः स्वयं हतोऽसन् भूत्वा कं हन्तव्यं वधिष्यति। यद्वा। वधकर्मरूपो धर्मश्चतुर्थक्षणे हतो नष्टः स्वयमसन् सन् कं वधिष्यति। वधकर्मत्युपलक्षणम् ॥ २२ ॥

द्वितीयं दूषयति। अथवेति। विहितेन विहितशब्देनाद्यनुष्ठानजातिशयेनान्यदीयेनायं पुरुषो हन्यते स्वीयेन वान्यं हन्ति। एवं सति विधिर्विहितानुष्ठानजातिशय एव तेन पापेन कर्मणा हत्यारूपेण लिप्यते; न स कर्मानुष्ठाता पुरुषः। हत्यायास्तदकर्तृकत्वात्। न हि स्वोत्पादितपुत्रकृतहत्या पितरं स्पृशति। एवं तस्य कर्मजातिशयस्या-

अदृष्टप्रतिकारेण अव्यक्तेनासता सता ।
कथं शक्यं परं प्राप्तुं धर्मेणारिविकर्षण ॥ २४ ॥
यदि स स्यात् सतां मुख्य ! नासत् स्यात्तव किञ्चन ।
त्वया यदीदृशं प्राप्तं तस्मात्तन्नोपपद्यते ॥ २५ ॥

तन्त्वग्रमभ्युपेत्यात्मालेप उक्तः । एतेन कर्मकरणासन्तुष्टस्येश्वरस्य फलदत्वमित्यपास्तम् । तस्यैव लेपप्रसङ्गात् । अत्र पक्षे विहितेनेत्यस्य विहितकर्मसन्तुष्टेनेश्वरेणेत्यर्थः ॥ २३ ॥

एवमतिशयस्य घातकत्वमङ्गीकृत्यात्मा लेप उक्तः । इदानीं घातकत्वमेव नास्तीत्याह,—अदृष्टेति । अदृष्टप्रतिकारेण अचेतनतयाऽज्ञातस्वकर्त्तव्यशत्रुप्रतीकारेण । अथ स्वाश्रयचेतनद्वारा तज्ज्ञानमिति चेत्तत्राह,—अव्यक्तेन स्वाश्रयभूतात्मनोऽप्रत्यक्षतयाऽप्रत्यक्षरूपाव्यक्तेनात एवासताऽसत्कल्पेन । सता वर्त्तमानेनापि धर्मेण कर्मजन्यातिशयेन कथं परं वध्यस्वरूपं प्राप्तुं शक्यम् । अप्राप्य परं हन्तीति चेदसम्बन्धाविशेषात् सर्वहननप्रसङ्गः । अहं हन्तृकृतकर्मजातिशयो वध्यनिष्ठ एवेति चेदन्यधर्मेणान्यस्य धार्मिकत्वप्रसङ्गः कर्त्तृनिष्ठत्वे तूक्तदोष इति भावः ॥ २४ ॥

तुल्यन्यायाच्छुभकर्मजातिशयोऽप्यसन्नेवेति ध्वनितमर्थं तर्केण दृढीकरोति । यदीति । हे सतां मुख्य सत्पुरुषश्रेष्ठ यदि सत्कर्मजन्यमदृष्टं सत् स्यात्तदा तव किञ्चन किञ्चिदपि असदशुभं दुःखं न स्यात् । उक्तस्य तर्कस्य विपर्य्ययपर्य्यवसानमाह,—त्वया चेदृशं दुःखं प्राप्तं तस्मात्तत्सदिति नोपपद्यते ॥ २५ ॥

अथवा दुर्बलः क्लीवो बलं धर्मोऽनुवर्त्तते।
दुर्बलो हृतमर्य्यादो न सेव्य इति मे मतिः॥ २६॥
बलस्य यदि चेद्धर्मो गुणभूतः पराक्रमैः।
धर्ममुत्सृज्य वर्त्तस्व यथा धर्मे तथा बले॥ २७॥
अथ चेत् सत्यवचनं धर्मः किल परन्तप!।
अनृतं त्वय्यकरुणे किन्न बद्धस्त्वया विना॥ २८॥

ननूक्तदोषसमूहः कर्मणः प्राधान्येनार्थसाधनपक्षे युक्तो न तु पौरुषोपकृतस्यार्थसाधकत्वे तर्हि मुख्यमर्थसाधनं पौरुषमेवावलम्ब्यतामित्याह,—अथवेति। दुर्बलः स्वतोऽर्थसाधनासमर्थः। अतएव क्लीवः अर्थसाधनेऽकिञ्चित्करो बलं पौरुषमनुवर्त्तते सहकारितयापेक्षते तदा दुर्बलो हृतमर्य्यादस्त्यक्तसुखसाधनत्वमर्य्यादो धर्मो न सेव्य इति मे मतिः। उक्तन्यायेनेति भावः॥ २६॥

ननु पौरुषं सहकारीकृत्य धर्मः साधयतीति नोच्यते। किन्तु पौरुषमेव प्रधानम्। कर्म तु तस्योपकारकमिति तर्हि तथैवानुष्ठानं कुर्वित्याह,—बलस्येति। बलस्य पौरुषस्य धर्मो गुणभूत इत्यङ्गीक्रियते तदा पराक्रमैः प्रयत्नैर्धर्ममुत्सृज्य धर्मप्राधान्यं त्यक्त्वा यथेदानीं धर्मे वर्त्तसे प्राधान्येन तथा बले पौरुषे एव वर्त्तस्व॥ २७॥

किञ्च सत्यस्यापि धर्मत्वाद्धर्मपक्षपातिना भवता सत्यधर्म एवादौ किमिति सम्यक् नानुष्ठितो येनैवमनर्थो न स्यादित्याह,—अथ चेदिति। अथ पक्षान्तरे। हे परन्तप त्वया सत्यवचनं पितृवचनाङ्गीकाररूपसत्यपरिपालनं धर्मोऽनुष्ठीयत इति चेत्तदा त्वयि ज्येष्ठे

यदि धर्मो भवेद्भूत अधर्मो वा परन्तप ! ।
न स्म हत्वा मुनिं वज्री कुर्य्यादिज्यां शतक्रतुः ॥ २९ ॥
अधर्मसंश्रितो धर्मो विनाशयति राघव ! ।
सर्वमेतद्यथा कामं काकुत्स्थ ! कुरुते नरः ॥ ३० ॥

उक्तस्याभिषेकवचनस्याकरणे यदनृतं राज्ञः प्राप्तं तेनानृतेन राजा त्वया विना भूतो मृत इति शेषः। अतस्तेन राज्ञोऽभिषेककरणरूप-सत्येन त्वं बद्धः किं न भवेदिति शेषः। प्रथमोक्तं राज्ञोऽभिषेक-वचनरूपं सत्यं न परिपालितम्। तत्परिपालने त्वया विना भूतत्वा-सम्भवेन पितृमरणं न स्यात्। एवनाद्यनर्थस्य न वृत्तः स्यादिति भावः। अनृतं त्वय्यकरणे किं न बद्धस्त्वया विनेति सर्वत्र पाठः पाठ इति कतकः। तीर्थस्त्वनृतं त्वय्यकरणः किं न बद्धस्त्वया पितेति पठित्वा सत्यस्य धर्मत्वे त्वयि अभिषेकविषयमनृतं वदन् राज्याद्विष्कासनाद-करणः पिता त्वया किं न बद्ध इति व्याचष्टे। तदयुक्तम्। पितृबन्धनस्य सत्यवचनपरिपालनरूपत्वाभावात् ॥ २८ ॥

अथैवद्भूतक्रोधावेशः सन् पौरुषधर्मयोरनुष्ठाने सिद्धान्तं शिष्टा-चारप्रदर्शनपूर्वकमाह,—यदीति। हे परन्तप धर्म एव यदि भूतः स्यात् प्राधान्येनानुष्ठेयः स्यात्। भूत अधर्म इत्यसन्धिरार्षः। अधर्मो धर्मादन्यः पौरुषं तदा यदि प्रागवद्भूतं स्यात्तदा वज्री मुनिं विश्वरूपं पौरुषेण हत्वा पश्चादिज्यां धर्मं न कुर्य्यात्। किन्त्वेकस्यैव प्राधान्ये एकमेव कुर्य्यादिति भावः ॥ २९ ॥

तस्मादधर्मसंश्रितः पौरुषयुक्तो धर्मो रिपुं विनाशयति तस्मात्

मम चेदं मतं तात! धर्मोऽयमिति राघव!।
धर्ममूलं त्वया छिन्नं राज्यमुत्सृजता तदा॥ ३१॥
अर्थेभ्योऽथ प्रवृद्धेभ्यः संवृत्तेभ्यस्ततस्ततः।
क्रियाः सर्वाः प्रवर्त्तन्ते पर्वतेभ्य इवापगाः॥ ३२॥
अर्थेन हि विमुक्तस्य पुरुषस्याल्पचेतसः।
विच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा॥ ३३॥
सोऽयमर्थं परित्यज्य सुखकामः सुखैधितः।

सर्वमेतत् पौरुषधर्माभयं यथाकामं स्वकार्य्यानुरोधेन नरः कुरुते। वष्यिप्रभृतिर्नरः॥ ३०॥

यदिदमुक्तं यथोचितकालदेशमुभयमनुष्ठेयमिति मम मतम्। नन्वेवं धर्मस्य तवापि सम्मतत्वे किमिति मे दुःखमत आह,—धर्ममूलमिति। अर्थमूलं राज्यमुत्सृजता त्वया धर्मस्य मूलमर्थरूपं छिन्नमतस्त्वं लोभवानिति भावः। यत्तु तीर्थेन अधर्मसंश्रितो धर्मः कर्त्तारं विनाशयति। तस्माद्यथा कामं तत्कालौचित्येनोभयमप्यनुष्ठेयमिदमेव याथाकाम्येनोभयाचरणमेव धर्म इति मम मतमिति व्याख्यातम्। तत्तूपहसनीयमेव व्युत्पन्नैरित्यलम्॥ ३१॥

अथार्थस्य धर्ममूलत्वमेव प्रतिपादयति। अर्थेभ्य इति। ततस्ततः संवृत्तेभ्यो नानादेशादाहृतेभ्योऽतएव प्रवृद्धेभ्योऽर्थेभ्यः सर्वाः क्रियायोगप्रधाना भोगप्रधानाश्च प्रवर्त्तन्ते। निष्कामतया कृता योगप्रधाना भवन्ति। सकामया कृता भोगप्रधाना इत्यर्थः॥ ३२॥

अर्थाभावे क्रियाव्यतिरेकमप्याहार्थमहीति॥ ३३॥

पापमाचरते कर्त्तुं तदा दोषः प्रवर्त्तते ॥ २४ ॥
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमान् लोके यस्यार्थाः स च पण्डितः ॥ २५ ॥
यस्यार्थाः स च विक्रान्तो यस्यार्थाः स च बुद्धिमान् ।
यस्यार्थाः स महाबाहुर्यस्यार्थाः स गुणाधिकः ॥ २६ ॥
अर्थस्यैते परित्यागे दोषाः प्रव्याहृता मया ।
राज्यमुत्सृजता धीर ! येन बुद्धिस्त्वया कृता ॥ २७ ॥
यस्यार्था धर्मकामार्थास्तस्य सर्वं प्रदक्षिणम् ।
अधनेनार्थकामेन नार्थः शक्यं विचिन्वता ॥ २८ ॥

न केवलमर्थपरित्यागे धर्मासम्भवः किन्तु दोषप्राप्तिरपीत्याह,—सोऽयमिति । यः पुमान् प्राप्तमर्थं परित्यज्य सुखकामो भवति सोऽयं मन्दार्थः । सुखैधितः अभिवृद्धसुखाभिलाषो भूत्वा पापमन्यायेनार्थार्जनं कर्त्तुमाचरते आरभते ततो दोषस्ताडनबन्धनादिरूपः प्रवर्त्तते ॥ २४ ॥

अथार्थः सर्वमूलमिति स्तौति । यस्येति ॥ २५ ॥ २६ ॥

एते दोषा मित्राद्यभावरूपाः । प्रव्याहृताः स्पष्टमुक्ताः । तत्र राज्यमुत्सृजता त्वया येन गुणेन बुद्धिरर्थपरित्यागविषया कृता तं न जाने इति शेषः ॥ २७ ॥

पुनरर्थमेव स्तौति । यस्येति । यस्यार्थाः सन्ति तस्य धर्मकामरूपा अर्थाः प्रयोजनानि भवन्ति तस्य सर्वं प्रदक्षिणमनुकूलम् ।

हर्षः कामश्च दर्पश्च धर्मः क्रोधः शमो दमः ।
अर्थादेतानि सर्वाणि प्रवर्त्तन्ते नराधिप ! ॥ ३९ ॥
येषां नश्यत्ययं लोकश्चरतां धर्मचारिणाम् ।
तेऽर्थास्त्वयि न दृश्यन्ते दुर्द्दिनेषु यथा ग्रहाः ॥ ४० ॥
त्वयि प्रव्रजिते वीर ! गुरोश्च वचने स्थिते ।
रक्षसापहृता भार्य्या प्राणैः प्रियतरा तव ॥ ४१ ॥
तदद्य विपुलं वीर ! दुःखमिन्द्रजिता कृतम् ।

अधनेन पुरुषेणार्थं विचिन्वताप्यर्थकामेन विना पौरुषमर्थो न शक्यः प्राप्तुमिति शेषः ॥ ३८ ॥

अर्थवशादेव राज्ञि सर्वे गुणा इत्याह,—हर्ष इत्यादि । यानि हर्षादीनि सन्ति एतानि नराधिपे अर्थादर्थसम्पत्तेरेव प्रवर्त्तन्ते । अमोघानि भवन्तीति भावः । यस्य हर्षो राज्ञः स कृतार्थो भवति । यस्मिन् क्रोधः स नश्यतीत्यादि ॥ ३९ ॥

सर्वमूलोऽर्थस्तव न संवृत्त इत्याह,—येषामिति । येषां धर्मचारिणां तापसानां धर्मञ्चरतामप्यर्थाभावादयं लोक ऐहिकपुरुषार्थो नश्यतीति स्पष्टम् । ते इहलोके सुखसाधनभूता अर्थास्त्वयि न दृश्यन्ते । दुर्द्दिनेषु नवग्रहा इवेत्यर्थः ॥ ४० ॥

सर्वमिदं दुःखं त्वानुष्ठितपूर्वाचातुरीमूलमित्युपसंहरति । त्वयीति । गुरोर्वचने स्थिते त्वयि प्रव्रजिते सति धर्मश्रद्धाजाड्येन मोहादनं प्राप्ते रक्षसा भार्य्यापहृता प्रहृता च । प्राणैः प्राणेभ्यः ॥ ४१ ॥

कर्मणा व्यपनेष्यामि तस्मादुत्तिष्ठ राघव ! ॥ ४२ ॥
उत्तिष्ठ नरशार्दूल ! दीर्घबाहो धृतव्रत ! ।
किमात्मानं महात्मानमात्मानं नावबुध्यसे ॥ ४३ ॥

अयमनघ ! तवोदितः प्रियार्थं
जनकसुतानिधनं निरीक्ष्य रुष्टः ।
सरथगजहयां सराक्षसेन्द्रां
भृशमिषुभिर्विनिपातयामि लङ्काम् ॥ ४४ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
त्र्यशीतितमः सर्गः ॥ ८३ ॥

अतःपरमेतावदेव कर्त्तव्यं किमतीतार्थानुशोचनेनेत्याह,—तद-द्येति। कर्मणा पौरुषेणाहमेव व्यपनेष्यामि तस्मान्मत्प्रोत्साहनार्थमुत्तिष्ठ ॥ ४२ ॥

न तु प्राकृतवद्दैन्यं युक्तं महात्मनस्ते इत्याह,—उत्तिष्ठेत्यादि। महात्मानं परमात्मानम् ॥ ४३ ॥

तव प्रियार्थमुदित उद्युक्तः। निरीक्ष्य श्रुत्वा ॥ ४४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे त्र्यशीतितमः सर्गः ॥ ८३ ॥

## चतुरशीतितमः सर्गः।

राममाश्वास्यमाने तु लक्ष्मणे भ्रातृवत्सले।
निक्षिप्य गुल्मान् स्वस्थाने तत्रागच्छद्विभीषणः॥ १॥
नानाप्रहरणैर्वीरैश्चतुर्भिरभिसंवृतः।
नीलाञ्जनचयाकारैर्मातङ्गैरिव यूथपैः॥ २॥
सोऽभिगम्य महात्मानं राघवं शोकलालसम्।
वानरांश्चापि ददृशे बाष्पपर्य्याकुलेक्षणान्॥ ३॥
राघवञ्च महात्मानमिक्ष्वाकुकुलनन्दनम्।
ददर्श मोहमापन्नं लक्ष्मणस्याङ्कमाश्रितम्॥ ४॥
व्रीडितं शोकसन्तप्तं दृष्ट्वा रामं विभीषणः।
अन्तर्दुःखेन दीनात्मा किमेतदिति सोऽब्रवीत्॥ ५॥
विभीषणमुखं दृष्ट्वा सुग्रीवं तांश्च वानरान्।
लक्ष्मणोवाच मन्दार्थमिदं बाष्पपरिप्लुतः॥ ६॥

आश्वासमाने आश्वासयमाने। गुल्मान् स्वस्थाने पूर्वादितत्तद्द्वारे निक्षिप्यावस्थाप्य॥ १॥ २॥

ददृशे ददर्श॥ ३॥ ४॥ ५॥

हता इन्द्रजिता सीता इति श्रुत्वैव राघवः ।
हनूमद्वचनात्सौम्य ! ततो मोहमुपाश्रितः ॥ ७ ॥
कथयन्तन्तु सौमित्रिं सन्निवार्य्य विभीषणः ।
पुष्कलार्थमिदं वाक्यं विसंज्ञं राममब्रवीत् ॥ ८ ॥
मनुजेन्द्रार्त्तरूपेण यदुक्तस्त्वं हनूमता ।
तदयुक्तमहं मन्ये सागरस्येव शोषणम् ॥ ९ ॥
अभिप्रायन्तु जानामि रावणस्य दुरात्मनः ।
सीताम्प्रति महाबाहो न च घातं करिष्यति ॥ १० ॥
याच्यमानः सुबहुशो मया हितचिकीर्षुणा ।
वैदेहीमुत्सृजस्वेति न च तत् कृतवान् वचः ॥ ११ ॥
नैव साम्ना न दानेन न भेदेन कुतो युधा ।
सा द्रष्टुमपि शक्येत नैव चान्येन केनचित् ॥ १२ ॥

विभीषणमुखं दृष्ट्वा । रामादिदैन्यदर्शनेन दीनमित्यर्थः । लक्ष्मणो-वाचेति सन्धिरार्षः ॥ ६ ॥ ७ ॥

सन्निवार्य्य नैवं दुःखं कार्य्यमित्युक्त्वा ॥ ८ ॥

आर्त्तरूपेण दीनवेषेण ॥ ९ ॥

कथमयुक्तं तत्राह अभिप्रायन्त्विति । सीताम्प्रति सीतामुद्दिश्य वर्त्त-मानं तदभिप्रायं सर्वनाशेऽपि सीता न त्याज्येत्येवं रूपं जानामि च । अतो घातं न करिष्यति । सीताया इति शेषः ॥ १० ॥

तमेवाह,—याच्यमान इति ॥ ११ ॥

वानरान् मोहयित्वा तु प्रतियातः स राक्षसः।
मायामयीं महाबाहो! तां विद्धि जनकात्मजाम् ॥ १३ ॥
चैत्यं निकुम्भिलामद्य प्राप्य होमं करिष्यति।
हुतवानुपयातो हि देवैरपि सवासवैः ॥ १४ ॥
दुराधर्षो भवत्येव संग्रामे रावणात्मजः।
तेन मोहयता नूनमेषा माया प्रयोजिता।
विघ्नमन्विच्छता तत्र वानराणां पराक्रमे ॥ १५ ॥
ससैन्यास्तत्र गच्छामो यावत्तन्न समाप्यते।
त्यजैनं नरशार्दूल! मिथ्यासन्तापमागतम् ॥ १६ ॥

किञ्च सीतान्येन केनापि केनाप्युपायेन द्रष्टुमेवाशक्या कुतस्तस्या हरणपूर्वं वध इत्याह,—नैव सास्मेति। कुतो युधा निमित्तभूतयान्यस्य दर्शनादिप्रसङ्गो न कुतोऽपि ॥ १२ ॥

का तर्हि वधविषयस्यानुभवस्य गतिस्तत्राह,—वानरानिति। मोहयित्वा। मायामयसीताच्छेदनेनेति शेषः ॥ १३ ॥

मोहने प्रयोजनमाह,—चैत्यमिति ॥ १४ ॥

ननु करोतु होमं किं मोहनप्रयासेनेत्यत्राह,—विघ्नमिति। वानराणां पराक्रमे सति यागस्य विघ्नमन्विच्छताऽनुसरता सम्भावयता नूनं निश्चयेन तत्तद्विघ्ननिवृत्तये प्रयोजिता ॥ १५ ॥

तेनाद्य तद्यागस्य विघ्न एव कर्त्तव्य इति रहस्यमित्याह,—स सैन्या इति। तद्धोमकर्म ॥ १६ ॥

सीदते हि बलं सर्वं दृष्ट्वा त्वां शोककर्शितम् ।
इह त्वं स्वस्थहृदयस्तिष्ठ सत्त्वसमुच्छ्रितः ॥ १७ ॥
लक्ष्मणं प्रेषयास्माभिः सह सैन्यानुकर्षिभिः ॥ १८ ॥
एष तं नरशार्दूलो रावणिं निशितैः शरैः ।
त्याजयिष्यति तत्कर्म ततो वध्यो भविष्यति ॥ १९ ॥
तस्यैते निशितास्तीक्ष्णाः पत्त्रिपत्राङ्गवाजिनः ।
पतत्त्रिण इवासौम्याः शराः पास्यन्ति शोणितम् ॥ २० ॥
तत् सन्दिश महाबाहो ! लक्ष्मणं शुभलक्षणम् ।
राक्षसस्य विनाशाय वज्रं वज्रधरो यथा ॥ २१ ॥

मनुजवर ! न कालविप्रकर्षो
रिपुनिधनम्प्रति यत् क्षमोऽद्य कर्त्तुम् ।

हि यतस्त्वां शोककर्शितं दृष्ट्वा सर्वं वानरबलं सीदते सीदति तस्मात्त्वं स्वस्थहृदयो भूत्वा इहैव तिष्ठ ॥ १७ ॥

सैन्यानुकर्षिभिः सर्वसेनां गृहीत्वा गच्छद्भिरस्माभिः प्रधानैः सह लक्ष्मणं प्रेषय ॥ १८ ॥

एष रावणिं निशितैः शरैर्व्याकुलीकृत्य तत्कर्म त्याजयिष्यति । ततो हेतोर्मायासिद्ध्यभावाद्वध्यो भविष्यति ॥ १९ ॥

पत्त्रिणां पक्षरूपैरङ्गैर्वाजिनो वेगवन्तस्तस्य शरा असौम्याः पत्त्रिणः कङ्कादय इव शोणितं पास्यन्ति । इन्द्रजित इति शेषः ॥ २० ॥

तत्तस्माल्लक्ष्मणं सन्दिश प्रेषय ॥ २१ ॥

त्वमतिसृज रिपोर्वधाय वज्रं
दिविजरिपुमथने यथा महेन्द्रः ॥ २२ ॥
समाप्तकर्मा हि स राक्षसर्षभो
भवत्यदृश्यः समरे सुरासुरैः।
ततस्त्वया तेन समाप्तकर्मणा
भवेत् सुराणामपि संशयो महान् ॥ २३ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
चतुरशीतितमः सर्गः ॥ ८४ ॥

रिपुनिधनं प्रति कालविप्रकर्षः कालक्षेपोऽद्य कर्त्तुं यत् यतो न क्षमो न योग्यस्तस्मात्त्वं रिपोर्वधाय लक्ष्मणमतिसृज प्रेषय। यथा दिविजरिपुमथने देवरिपुमथनेऽमरेन्द्रो वज्रमतिसृजति तथेत्यर्थः ॥ २२ ॥

कालक्षेपो न कार्य्य इत्यत्र हेतुमाह,—समाप्तेति।• समाप्तयागकर्मेत्यर्थः। सुराणामपि संशयः। प्राणसंशय इत्यर्थः ॥ २३ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे चतुरशीतितमः सर्गः ॥ ८४ ॥

---

## पञ्चाशीतितमः सर्गः ।



तस्य तद्वचनं श्रुत्वा राघवः शोककर्शितः ।
नोपधारयते व्यक्तं यदुक्तं तेन रक्षसा ॥ १ ॥
ततो धैर्य्यमवष्टभ्य रामः परपुरञ्जयः ।
विभीषणमुपासीनमुवाच कपिसन्निधौ ॥ २ ॥
नैरृताधिपते ! वाक्यं यदुक्तं ते विभीषण ! ।
भूयस्तच्छ्रोतुमिच्छामि ब्रूहि यत्ते विवक्षितम् ॥ ३
राघवस्य वचः श्रुत्वा वाक्यं वाक्यविशारदः ।
यत्तत् पुनरिदं वाक्यं बभाषेऽथ विभीषणः ॥ ४ ॥
यथाज्ञप्तं महाबाहो ! त्वया गुल्मनिवेशनम् ।
तत्तथानुष्ठितं वीर ! त्वद्वाक्यसमनन्तरम् ॥ ५ ॥
तान्यनीकानि सर्वाणि विभक्तानि समन्ततः ।

नोपधारयते व्यक्तं शोकवशान्न जानाति स्पष्टमित्यर्थः ॥ १ ॥
उपासीनं समीपस्थितम् ॥ २ ॥
ते त्वया यत्प्रागुक्तं तद्भूयः श्रोतुमिच्छामि ॥ ३ ॥

विन्यस्ता यूथपाश्चैव यथान्यायं विभागशः ॥ ६ ॥
भूयस्तु मम विज्ञाप्यं तत् शृणुष्व महाप्रभो ! ।
त्वय्यकारणसन्तप्ते सन्तप्तहृदया वयम् ॥ ७ ॥
त्यज राजन्निमं शोकं मिथ्यासन्तापमागतम् ।
यदियं त्यज्यतां चिन्ता शत्रुहर्षविवर्द्धिनी ॥ ८ ॥
उद्यमः क्रियतां वीर ! हर्षः समुपसेव्यताम् ।
प्राप्तव्या यदि ते सीता हन्तव्याश्च निशाचराः ॥ ९ ॥
रघुनन्दन ! वक्ष्यामि श्रूयतां मे हितं वचः ।
साध्वयं यातु सौमित्रिर्बलेन महता वृतः ॥ १० ॥
निकुम्भिलायां संप्राप्तं हन्तुं रावणिमाहवे ।
धनुर्मण्डलनिर्मुक्तैराशीविषविषोपमैः ॥ ११ ॥
तेन वीरेण तपसा वरदानात् स्वयम्भुवः ।
अस्त्रं ब्रह्मशिरः प्राप्तं कामगाश्च तुरङ्गमाः ॥ १२ ॥

यदुक्तं तदेवेदं वाक्यं पुनर्वभाषे ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥
मिथ्यासन्तापं तन्मूलं शोकम् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥
तेन वीरेणेन्द्रजिता तपसा प्रीतस्य स्वयम्भुवो वरदानान्निकुम्भिलायां देवीहोमे समाप्ते कामगतुरङ्गयुक्तो रथो ब्रह्मशिरोऽस्त्रञ्चाभिः सकाशाल्लभ्यते तेन च तदावध्यत्वं सङ्ग्रामयोगपर्य्यन्तमिति वरदानात् ब्रह्मशिरोऽस्त्रं प्राप्तम् ॥ १२ ॥

स एष किल सैन्येन प्राप्तः किल निकुम्भिलाम्।
यद्युत्तिष्ठेत् कृतं कर्म हतान् सर्वांश्च विद्धि नः॥ १३॥
निकुम्भिलामसंप्राप्तमकृताग्निञ्च यो रिपुः।
त्वामाततायिनं हन्यादिन्द्रशत्रो! स ते वधः॥ १४॥
वरोदत्तो महाबाहो! सर्वलोकेश्वरेण वै।
इत्येवं विहितो राजन्! वधस्तस्यैष धीमतः॥ १५॥
वधायेन्द्रजितो राम! सन्दिशस्व महाबलम्।
हते तस्मिन् हतं विद्धि रावणं ससुहृद्गणम्॥ १६॥
विभीषणवचः श्रुत्वा रामो वाक्यमथाब्रवीत्।
जानामि तस्य रौद्रस्य मायां सत्यपराक्रम!॥ १७॥
स हि ब्रह्मास्त्रवित्प्राज्ञो महामायो महाबलः।

स एष एवम्प्रकारेण लब्धवर इन्द्रजित्सैन्येन सह होमं कर्त्तुं निकुम्भिलायां प्राप्तः। यदि कृतं कर्म होमकर्म कृत्वोत्तिष्ठेत्तर्हि सर्वानेव नोऽस्मान् हतान् विद्धि॥ १३॥

किञ्च भगवता तद्वधोऽप्येवम्प्रकारेणोक्त इत्याह,—निकुम्भिलामिति। निकुम्भिलां तद्यागभूमिं महाकालीक्षेत्रं तदाख्यन्यग्रोधमूलरूपमप्राप्तम्। अकृताग्निम् अकृताभिचारहोमम्। अकृताग्निमिति पाठान्तरम्। आततायिनं गृहीतशस्त्रं यो रिपुर्हन्यायुध्येत्। हे इन्द्रशत्रो स रिपुस्ते वधकर्त्ता भविष्यति॥ १४॥

करोत्यसंज्ञान् संग्रामे देवान् सवरुणानपि ॥ १८ ॥
तस्यान्तरिक्षे चरतः सरथस्य महायशः ! ।
न गतिर्ज्ञायते वीर ! सूर्य्यस्येवाभ्रसंप्लवे ॥ १९ ॥
राघवस्तु रिपोर्ज्ञात्वा मायावीर्य्यं दुरात्मनः ।
लक्ष्मणं कीर्त्तिसम्पन्नमिदं वचनमब्रवीत् ॥ २० ॥
यद्वानरेन्द्रस्य बलन्तेन सर्वेण संवृतः ।
हनूमत्प्रमुखैश्चैव यूथपैः सह लक्ष्मण ! ॥ २१ ॥
जाम्बवेनर्चपतिना सह सैन्येन संवृतः ।
जहि तं राक्षससुतं मायाबलसमन्वितम् ॥ २२ ॥
अयन्त्वां सचिवैः सार्द्धं महात्मा रजनीचरः ।
अभिज्ञातस्य मायानां पृष्ठतोऽनुगमिष्यति ॥ २३ ॥
राघवस्य वचः श्रुत्वा लक्ष्मणः सविभीषणः ।
जग्राह कार्मुकश्रेष्ठमत्यद्भीमपराक्रमः ॥ २४ ॥

सर्वलोकेश्वरेण ब्रह्मणा एष वरो दत्तो वै प्रसिद्धः। राजन् धीमतस्तस्यैवमेष वधो विहितो ब्रह्मणा ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

हे महायशः अन्तरिक्षे चरतः सरथस्य तस्य गतिर्न ज्ञायते। अभ्रसंप्लवे मेघसमूहे ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

मायानामभिज्ञातस्य तद्विषयज्ञानवतः। अभिज्ञस्येति पाठेऽप्ययमेवार्थः ॥ २३ ॥

सन्नद्धः कवची खड्गी सशरी वामचापभृत् ।
रामपादावुपस्पृश्य हृष्टः सौमित्रिरब्रवीत् ॥ २५ ॥
अद्य मत्कार्मुकोन्मुक्ताः शरा निर्भिद्य रावणिम् ।
लङ्कामभिपतिष्यन्ति हंसाः पुष्करिणीमिव ॥ २६ ॥
अद्यैव तस्य रौद्रस्य शरीरं मामकाः शराः ।
विधमिष्यन्ति भित्त्वा तं महाचापगुणच्युताः ॥ २७ ॥
एवमुक्त्वा तु वचनं द्युतिमान् भ्रातुरग्रतः ।
स रावणिवधाकाङ्क्षी लक्ष्मणस्त्वरितं ययौ ॥ २८ ॥
सोऽभिवाद्य गुरोः पादौ कृत्वा चापि प्रदक्षिणम् ।
निकुम्भिलामभिययौ चैत्यं रावणिपालितम् ॥ २९ ॥
विभीषणेन सहितो राजपुत्रः प्रतापवान् ।
कृतस्वस्त्ययनो भ्रात्रा लक्ष्मणस्त्वरितो ययौ ॥ ३० ॥
वानराणां सहस्रैस्तु हनूमान् बहुभिर्वृतः ।
विभीषणश्च सामात्यो लक्ष्मणं त्वरितं ययौ ॥ ३१ ॥

अन्यत् कार्मुकश्रेष्ठम् । देवानुग्रहप्राप्तं परमित्यर्थः ॥ २४ ॥
सशरीप्रशस्तशरवान् । वामचापभृद्वामहस्तेन चापभृत् ॥ २५ ॥
रावणिं निर्भिद्यासक्ताः सन्तो लङ्कामभिपतिष्यन्ति ॥ २६ ॥ २७ ॥
एवमुक्त्वात्विति । स एवमुक्त्वेति पाठे स लक्ष्मणः । स एव लक्ष्मण-
स्त्वरितं ययाविति तच्छब्दद्वयनिर्वाह इति तीर्थः ॥ २८ ॥ २९ ॥ ३० ॥

महता हरिसैन्येन सवेगमभिसंवृतः।
ऋक्षराजबलञ्चैव ददर्श पथि विष्ठितम्॥ ३२॥
स गत्वा दूरमध्वानं सौमित्रिर्मित्रनन्दनः।
राक्षसेन्द्रबलं दूरादपश्यत् व्यूहमाश्रितम्॥ ३३॥
स संप्राप्य धनुष्पाणिर्मायायोगमरिन्दमः।
तस्थौ ब्रह्मविधानेन विजेतुं रघुनन्दनः॥ ३४॥
विभीषणेन सहितो राजपुत्रः प्रतापवान्।
अङ्गदेन च वीरेण तथानिलसुतेन च॥ ३५॥
विविधममलशस्त्रभास्वरन्तत्
ध्वजगहनं गहनं महारथैश्च।

त्वरितं ययौ। लक्ष्मणमनुययावित्यर्थः॥ ३१॥
पथि विष्ठितं हनूमता सीतावधवृत्तान्तनिवेदनार्थमागमनसमये द्वाररक्षार्थं पथि स्थापितमित्यर्थः॥ ३२॥ ३३॥
मायायोगं मायैव योगः युद्धजयोपायो यस्य तमिन्द्रजितं प्राप्य ब्रह्मविधानेन निकुम्भिलामसम्प्राप्त इत्याद्युक्तब्रह्मवरदानप्रकारेण तं विजेतुं तस्थौ। रघुनन्दनो लक्ष्मणः। ब्रह्मविमानेनेति पाठे ब्रह्मणो भगवतस्तेजोंऽशोऽहमस्मीति विभाव्य जायमानेन ध्यानेन। प्रभुं जेतुं तस्थौ। सङ्कटकाले तादृशध्यानस्य तस्य निसर्गसिद्धत्वादिति कतकः॥ ३४॥

प्रतिभयतममप्रमेयवेगं
तिमिरमिव द्विषतां बलं विवेश ॥ ३६ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
पञ्चाशीतितमः सर्गः ॥ ८५ ॥

सलक्ष्मणो विभीषणादिभिः सहोह्यमानगुणं द्विषतां बलं विवेश । प्रतिभयतममतिशयेन भयङ्करम् ॥ ३५ ॥ ३६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे पञ्चाशीतितमः सर्गः ॥ ८५ ॥

---

## षडशीतितमः सर्गः ।

अथ तस्यामवस्थायां लक्ष्मणं रावणानुजः ।
परेषामहितं वाक्यमर्थसाधकमब्रवीत् ॥ १ ॥
यदेतद्राक्षसानीकं मेघश्यामं विलोक्यते ।
एतदायोध्यतां शीघ्रं कपिभिश्च शिलायुधैः ॥ २ ॥
तस्यानीकस्य महतो भेदने यत लक्ष्मण ! ।
राक्षसेन्द्रसुतोऽप्यत्र भिन्ने दृश्यो भविष्यति ॥ ३ ॥
स त्वमिन्द्राशनिप्रख्यैः शरैरवकिरन् परान् ।
अभिद्रवाशु यावद्वै नैतत् कर्म समाप्यते ॥ ४ ॥
जहि वीर ! दुरात्मानं मायापरमधार्मिकम् ।

अथ तस्यामवस्थायां रक्षार्थं सेनां निवेश्येन्द्रजितो यागकाले । परेषां शत्रूणाम् । अहितं नाशकरम् । स्वेषामर्थसाधकम् ॥ १ ॥

एतत् कपिभिरायोध्यताम् ॥ २ ॥

हे लक्ष्मण तस्य तत्परक्षितस्य महतोऽनीकस्य भेदने त्वं यत यत्नं कुरु ॥ ३ ॥

एतत् कर्म यावन्न समाप्यते तावदाश्वभिद्रव । रावणिमित्यन्वयः ॥ ४ ॥

रावणिं क्रूरकर्माणं सर्वलोकभयावहम् ॥ ५ ॥
विभीषणवचः श्रुत्वा लक्ष्मणः शुभलक्षणः ।
ववर्ष शरवर्षेण राक्षसेन्द्रसुतं प्रति ॥ ६ ॥
ऋक्षाः शाखामृगाश्चैव द्रुमप्रवरयोधिनः ।
अभ्यधावन्त सहितास्तदनीकमवस्थितम् ॥ ७ ॥
राक्षसाश्च शितैर्बाणैरसिभिः शक्तितोमरैः ।
अभ्यवर्तन्त समरे कपिसैन्यजिघांसवः ॥ ८ ॥
स संप्रहारस्तुमुलः संजज्ञे कपिरक्षसाम् ।
शब्देन महता लङ्कां नादयन्वै समन्ततः ॥ ९ ॥
शस्त्रैश्च विविधाकारैः शितैर्बाणैश्च पादपैः ।
उद्यतैर्गिरिशृङ्गैश्च घोरैराकाशमावृतम् ॥ १० ॥
राक्षसा वानरेन्द्रेषु विकृताननबाहवः ।
निवेशयन्तः शस्त्राणि चक्रुस्तेषु महद्भयम् ॥ ११ ॥
तथैव सकलैर्वृक्षैर्गिरिशृङ्गैश्च वानराः ।
अभिजघ्नुर्निजघ्नुश्च समरे सर्वराक्षसान् ॥ १२ ॥
ऋक्षवानरमुख्यैश्च महाकायैर्महाबलैः ।

मायापरम् अधार्मिकमिति च्छेदः ॥ ५ ॥
राक्षसेन्द्रसुतम्प्रति तत्राभिमुखीभूय तत्सेनायां ववर्षत्यर्थः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

रक्षसां युध्यमानानां महद्भयमजायत: ॥ १३ ॥
स्वमनीकं विषण्णन्तु श्रुत्वा शत्रुभिरर्द्दितम् ।
उदतिष्ठत दुर्द्धर्षः स्वकर्मण्यननुष्ठित ॥ १४ ॥
वृक्षान्धकारान्निर्गम्य जातक्रोधः स रावणिः ।
आरुरोह रथं सज्जं पूर्वयुक्तं सुसंयतम् ॥ १५ ॥
स भीमकार्मुकशरः कृष्णाञ्जनचयोपमः ।
रक्तास्यनयनो भीमो बभौ मृत्युरिवान्तकः ॥ १६ ॥
दृष्ट्वैव तु रथस्थन्तं पर्य्यवर्त्तत तद्बलम् ।
रक्षसां भीमवेगानां लक्ष्मणेन युयुत्सताम् ॥ १७ ॥
तस्मिंस्तु काले हनुमानरुजत्स दुरासदम् ।
धरणीधरसङ्काशो महावृक्षमरिन्दमः ॥ १८ ॥
स राक्षसानां तत् सैन्यं कालाग्निरिव निर्दहन् ।
चकार बहुभिर्वृक्षैर्निःसंज्ञं युधि वानरः ॥ १९ ॥

ते शस्त्राणि निवेशयन्तो विकृताननबाहवः सन्तः सुमहद्भयचक्रुः । राक्षसा वानरेन्द्रेष्विति पाठः ॥ ११ ॥ १२ ॥ १३ ॥

विषण्णं श्रुत्वा यागभूमिस्थ इति शेषः । अननुष्ठिते यागस्यासमाप्त्या असमाप्ते । स स्वकर्मणीति पाठेऽक्षराधिक्यमार्षम् ॥ १४ ॥

वृक्षान्धकारान्निकुम्भिलाचैत्यात् । इदं निःसरणं हनुमद्वाक्ये ॥ १५ ॥ १६ ॥

पर्य्यवर्त्तत तद्बलम् । राक्षसबलमित्यर्थः ॥ १७ ॥ १८ ॥

विध्वंसयन्तं तरसा दृष्ट्वैव पवनात्मजम् ।
राक्षसानां सहस्राणि हनूमन्तमवाकिरन् ॥ २० ॥
भिन्नशूलधराः शूलैरसिभिश्चासिपाणयः ।
शक्तिहस्ताश्च शक्तीभिः पट्टिशैः पट्टिशायुधाः ॥ २१ ॥
परिघैश्च गदाभिश्च कुन्तैश्च शुभदर्शनैः ।
शतशश्च शतघ्नीभिरायसैरपि मुद्गरैः ॥ २२ ॥
घोरैः परशुभिश्चैव भिन्दिपालैश्च राक्षसाः ।
मुष्टिभिर्वज्रकल्पैश्च तलैरशनिसन्निभैः ॥ २३ ॥
अभिजघ्नुः समासाद्य समन्तात् पर्वतोपमम् ।
तेषामपि च संक्रुद्धश्चकार कदनं महत् ॥ २४ ॥
स ददर्श कपिश्रेष्ठमचलोपममिन्द्रजित् ।
सूदमानमसन्त्रस्तममित्रान् पवनात्मजम् ॥ २५ ॥
स सारथिमुवाचेदं याहि यत्रैष वानरः ।
क्षयमेव हि नः कुर्य्याद्राक्षसानामुपेक्षितः ॥ २६ ॥
इत्युक्तः सारथिस्तेन ययौ यत्र स मारुतिः ।

राक्षसानां तत्सैन्यं हनूमान्निःसंक्षयञ्चकार । १९ ॥ २० ।
असिपाणयोऽसिभिः शक्तिहस्ताः शक्तीभिरित्यादिप्रकारेणोह्यम् ।
शक्तीभिरित्यत्र दीर्घं आर्षः । २१ । २२ । २३ । २४ । २५ ।
नो राक्षसानां मत्सम्बन्धिनां राक्षसानाम् । २६ ।

वहन् परमदुर्द्धर्षं स्थितमिन्द्रजितं रथे ॥ २७ ॥
सोऽभ्युपेत्य शरान् खड्गान् पट्टिशासिपरश्वधान्।
अभ्यवर्षत दुर्द्धर्षः कपिमूर्द्धनि राक्षसः ॥ २८ ॥
तानि शस्त्राणि घोराणि प्रतिगृह्य स मारुतिः।
रोषेण महताविष्टो वाक्यञ्चेदमुवाच ह ॥ २९ ॥
युद्धस्व यदि शूरोऽसि रावणात्मज ! दुर्मते ! ।
वायुपुत्रं समासाद्य न जीवन् प्रतियास्यसि ॥ ३० ॥
बाहुभ्यां सम्प्रयुद्धस्व यदि मे द्वन्द्वमाहवे।
वेगं सहस्व दुर्बुद्धे ! ततस्त्वं रक्षसाम्बरः ॥ ३१ ॥
हनूमन्तं जिघांसन्तं समुद्यतशरासनम्।
रावणात्मजमाचष्टे लक्ष्मणाय विभीषणः ॥ ३२ ॥
यः स वासवनिर्जेता रावणस्यात्मसम्भवः।
स एष रथमास्थाय हनूमन्तं जिघांसति ॥ ३३ ॥
तमप्रतिमसंस्थानैः शरैः शत्रुनिवारणैः।

इन्द्रजितं वहन् प्रापयन्। यत्र मारुतिस्तेन तत्राभिमार्गेण ययौ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

यदि द्वन्द्वं ददासि इति शेषः। तर्हि बाहुभ्यां युध्यस्व ॥ ३१ ॥

हनूमन्तं जिघांसन्तं तद्वधे सर्वात्मना सन्नद्धम् ॥ ३२ ॥

यो वासवजेता यस्य दर्शनं तवापेक्षितं स एष रथमास्थाय हनूमन्तं जिघांसति ॥ ३३ ॥

जीवितान्तकरैर्घोरैः सौमित्रे ! रावणिं जहि ॥ २४ ॥

इत्येवमुक्तस्तु तदा महात्मा
विभीषणेनारिविभीषणेन ।
ददर्श तं पर्वतसन्निकाशं
रथस्थितं भीमबलं दुरासदम् ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
षडशीतितमः सर्गः ॥ ८६ ॥

तमिमं रावणिं इत्यम् अप्रतिमसंस्थानैरनुपमस्वरूपैः शरैर्जहि ॥
॥ २४ ॥ २५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे षडशीतितमः सर्गः ॥ ८६ ॥

---

## सप्ताशीतितमः सर्गः ।

एवमुक्त्वा तु सौमित्रिं जातहर्षो विभीषणः ।
धनुष्पाणिं तमादाय त्वरमाणो जगाम सः ॥ १ ॥
अविदूरं ततो गत्वा प्रविश्य तु महद्वनम् ।
अदर्शयत तत्कर्म लक्ष्मणाय विभीषणः ॥ २ ॥
नीलजीमूतसङ्काशं न्यग्रोधं भीमदर्शनम् ।
तेजस्वी रावणभ्राता लक्ष्मणाय न्यवेदयत् ॥ ३ ॥
इहोपहारं भूतानां बलवान् रावणात्मजः ।
उपहृत्य ततः पश्चात् संग्राममभिवर्त्तते ॥ ४ ॥
अदृश्यः सर्वभूतानां ततो भवति राक्षसः ।
निहन्ति समरे शत्रून् बध्नाति च शरोत्तमैः ॥ ५ ॥

एवमिति । जातहर्षो यागासमाप्त्या ब्रह्मवचनादवश्यं मरिष्यतीति सन्तुष्टो धनुष्पाणिं तं लक्ष्मणमादाय जगामेन्द्रजित्सम्मुखे इति शेषः ॥ १ ॥

अविदूरमल्पमार्गं गत्वा महद्वनं निकुम्भिलावनं प्रविश्य तत्रत्यं तत्कर्म होमकर्मस्थानम् ॥ २ ॥ ३ ॥

भूतानां रजस्तमःप्रधानभूतगणानाम् उपहारमुपहृत्य दत्त्वा ।
॥ ४ ॥ ५ ॥

तमप्रविष्टं न्यग्रोधं बलिनं रावणात्मजम् ।
विध्वंसय शरैर्दीप्तैः सरथं साश्वसारथिम् ॥ ६ ॥
तथेत्युक्त्वा महातेजाः सौमित्रिर्मित्रनन्दनः ।
बभूवावस्थितस्तत्र चित्रं विस्फारयन् धनुः ॥ ७ ॥
स रथेनाग्निवर्णेन बलवान् रावणात्मजः ।
इन्द्रजित् कवची खड्गी सध्वजः प्रत्यदृश्यत ॥ ८ ॥
तमुवाच महातेजाः पौलस्त्यमपराजितम् ।
समाह्वये त्वां समरे सम्यक् युद्धं प्रयच्छ मे ॥ ९ ॥
एवमुक्तो महातेजा मनस्वी रावणात्मजः ।
अब्रवीत् परुषं वाक्यं तत्र दृष्ट्वा विभीषणम् ॥ १० ॥
इह त्वं जातसंवृद्धः साक्षाद्भ्राता पितुर्मम ।
कथं द्रुह्यसि पुत्रस्य पितृव्यो मम राक्षस ! ॥ ११ ॥

न्यग्रोधमप्रविष्टं बहिर्युद्धाय निर्गतं पुनस्तत्राप्रविष्टमेव जहि । तथैव तस्य वरदानादिति भावः ॥ ६ ॥

तत्र न्यग्रोधद्वारे ॥ ७ ॥

प्रत्यदृश्यत लक्ष्मणधनुःशब्दं श्रुत्वा तत्र प्रतिनिवृत्त इति भावः ॥ ॥ ८ ॥ ९ ॥

महातेजाः लक्ष्मणः ॥ १० ॥

इह राक्षसीयास्मत्कुले । जातः संवृद्धश्चेति स्नातानुलिप्तवत् समासः । पुत्रस्य पुत्राय ॥ ११ ॥

न जातित्वं न सौहार्दं न जातिस्तव दुर्मते ।
प्रमाणं न च सौदर्य्यं न धर्मो धर्मदूषण ! ॥ १२ ॥
शोच्यस्त्वमसि दुर्बुद्धे ! निन्दनीयश्च साधुभिः ।
यस्त्वं स्वजनमुत्सृज्य परभृत्यत्वमागतः ॥ १३ ॥
नैतच्छिथिलया बुद्ध्या त्वं वेत्सि महदन्तरम् ।
क्व च स्वजनसंवासः क्व च नीचपराश्रयः ॥ १४ ॥
गुणवान् वा परजनः स्वजनो निर्गुणोऽपि वा ।
निर्गुणः स्वजनः श्रेयान् यः परः परएव सः ॥ १५ ॥
यः स्वपक्षं परित्यज्य परपक्षं निषेवते ।
स स्वपक्षे क्षयं याते पश्चात्तैरेव हन्यते ॥ १६ ॥

न जातिः न जात्यभिमानः प्रमाणं कर्त्तव्याकर्त्तव्यमर्य्यादाकारणम् । सौदर्य्यं सोदरत्वम् ॥ १२ ॥ १३ ॥

शिथिलया कार्य्याकार्य्यविवेकासमर्थया बुध्या । एतन्महदन्तरं स्वजनत्यागपरजनाश्रयणजनितदोषतारतम्यं न वेत्सि । तदेव दार्ढ्याय पुनराह,—क्व चेति । स्वजनसंवासः । तत्साध्यश्रेयःप्राप्तिरित्यर्थः । जन्मकर्मादिना यः परस्तदाश्रयं प्राप्य नीचो नीचपराश्रयः । मयूरव्यंसकादित्वात् समासः ॥ १४ ॥

सत्यमेवं यदि परो नीचः स्यात्तत्राह,—गुणवान् वेति । यः परः पर एव स इति । स्वकुलप्रयुक्तव्यवहारे प्राप्ते परो नान्तर्भूत एव भवतीत्यर्थः ॥ १५ ॥

निरनुक्रोशता चेयं यादृशी ते निशाचर ! ।
स्वजनेन त्वया शक्यं पौरुषं रावणानुज ! ॥ १७ ॥
इत्युक्तो भ्रातृपुत्रेण प्रत्युवाच विभीषणः ।
अजानन्निव मच्छीलं किं राक्षस ! विकत्थसे ॥ १८ ॥
राक्षसेन्द्रसुतासाधो ! पारुष्यं त्यज गौरवात् ।
कुले यद्यप्यहं जातो रक्षसां क्रूरकर्मणाम् ।
गुणो यः प्रथमो नृणां तन्मे शीलमराक्षसम् ॥ १९ ॥
न रमे दारुणेनाहं न चाधर्मेण वै रमे ।
भ्रात्रा विषमशीलोऽपि कथं भ्राता निरस्यते ॥ २० ॥

किञ्च परपक्षाश्रितस्यान्ते नाश एवेत्याह,—य इति ॥ १६ ॥

इयं निरनुक्रोशता होमविघातपूर्वं लक्ष्मणस्य न्यग्रोधप्रवेश-करणेन मद्वधविषया निर्दयता यादृशी अतिघोरा ते तवास्ति तद्वि-षयं पौरुषं पुरुषयत्नः स्वजनेनैकेन त्वयैव कर्त्तुं शक्यं नान्येन केनापि ॥ १७ ॥

मच्छीलं मत्स्वभावं जानन्नप्यजानन्निव किं विकत्थसे ॥ १८ ॥

अतोऽसाधो गौरवात् पितृव्यत्वगौरवमाश्रित्य मद्विषयं पारुष्यं त्यज। यद्वा सूरोऽहमिति गौरवाद्धेतोर्यत्पारुष्यं तत्त्यज। अथ ... जातसंरुद्ध इत्यस्योत्तरमाह,—कुल इति। प्रथमो गुणः सत्व... ...सं रजस्तमःप्रकृतिरक्षःकुलदुर्लभम् ॥ १९ ॥

किञ्च स्वजनत्यागदोषस्तव पितुरेवेत्याह,—भ्रात्रेति। विषम-

धर्मात् प्रच्युतशीलं हि पुरुषं पापनिश्चयम्।
त्यक्त्वा सुखमवाप्नोति हस्तादाशीविषं यथा ॥ २१ ॥
परस्वहरणे युक्तं परदाराभिमर्शकम्।
त्याज्यमाहुर्दुरात्मानं वेश्म प्रज्वलितं यथा ॥ २२ ॥
परस्वानाञ्च हरणं परदाराभिमर्शनम्।
सुहृदामतिशङ्का च त्रयो दोषाः क्षयावहाः ॥ २३ ॥
महर्षीणां वधो घोरः सर्वदेवैश्च विग्रहः।
अभिमानश्च रोषश्च वैरत्वं प्रतिकूलता ॥ २४ ॥

शीलोऽपि भ्राता कथं निरस्यते एवमस्ति वा लोके वदेति शेषः। भ्रात्रा विषमशीलेनेति पाठे दारुणकर्माधर्मारतिरहम्। अन्यथा विषमशीलेन रावणादिलक्षणशीलेन भ्रात्रा कथं भ्राता रावणो निरस्यत इत्यर्थश्च तीर्थ आह ॥ २० ॥

ननु दुःशीलस्त्यज्यत एवेति चेद्भवतु। सुशीलस्य मम त्यागोऽनुचित एवेत्याशयेनाह,—धर्मादिति ॥ २१ ॥

मया तु तस्य त्यागो न्याय्य एवेत्याह,—परस्वेति ॥ २२ ॥

स्वकुलनाशनं कृतं त्वयेत्यस्योत्तरमाह,—परस्वानामिति। सुहृदामतिशङ्का अनिष्टत्वशङ्का। एवञ्च भवदीयाधर्म एव भवन्नाशको न त्वहमिति भावः ॥ २३ ॥

पुनः स्पष्टमेव रावणीयाद्दोषाद्भवतां सर्वेषां नाश इत्याह,—महर्षीणामिति। अभिमानो गर्वः। वैरत्वं दीर्घवैरम्। प्रतिकूलता हितवक्तृषु प्रतिकूलबुद्धिता ॥ २४ ॥

एते दोषा मम भ्रातुर्जीवितैश्वर्य्यनाशनाः।
गुणान् प्रच्छादयामासुः पर्वतानिव तोयदाः॥ २५॥
दोषैरेतैः परित्यक्तो मया भ्राता पिता तव।
नेयमस्ति पुरी लङ्का न च त्वं न च ते पिता॥ २६॥
अतिमानश्च बालश्च दुर्विनीतश्च राक्षस!।
बद्धस्त्वं कालपाशेन ब्रूहि मां यद्यदिच्छसि॥ २७॥
अद्येह व्यसनं प्राप्तं यन्मां परुषमुक्तवान्।
प्रवेष्टुं न त्वया शक्यं न्यग्रोधं राक्षसाधम!॥ २८॥
धर्षयित्वा च काकुत्स्थं न शक्यं जीवितुं त्वया।
युध्यस्व नरदेवेन लक्ष्मणेन रणे सह।
हतस्त्वं देवताकार्य्यं करिष्यसि यमक्षयम्॥ २९॥
　　निदर्शयित्वात्मबलं समुद्यतं
　　कुरुष्व सर्वायुधसायकव्ययम्।

गुणानभिजननिष्पापत्वादिगुणान्॥ २५॥
नेयमस्तीति। इदं मया पुरैवोक्तमिति शेषः॥ २६॥
यद्यत्परुषमित्यर्थः॥ २७॥
यन्मां परुषमुक्तवांस्त्वं पुरा तस्मात्तेऽद्य व्यसनं प्राप्तम्। सम्प्रत्युच्यमानपारुष्यफलन्तु कालान्तरे भविष्यतीति शेषः। व्यसनं प्राप्तमित्येतदेव द्रढ़यति। प्रवेष्टुमिति। पुनरभिचारार्थेति शेषः॥ २८॥

न लक्ष्मणस्यत्य हि बाणगोचरं
त्वमद्य जीवन् सबलो गमिष्यसि ॥ ३० ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
सप्ताशीतितमः सर्गः ॥ ८७ ॥

अथ हतो यमक्षयं यमगृहं गतः सन् देवताकार्य्यं सर्वदेवानां सन्तोषरूपं करिष्यसि ॥ २९ ॥ ३० ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे सप्ताशीतितमः सर्गः ॥ ८७ ॥

---

## अष्टाशीतितमः सर्गः ।

विभीषणवचः श्रुत्वा रावणिः क्रोधमूर्च्छितः ।
अब्रवीत् परुषं वाक्यं क्रोधेनाभ्युत्पपात च ॥ १ ॥
उद्यतायुधनिस्त्रिंशो रथे सुसमलङ्कृते ।
कालाश्वयुक्ते महति स्थितः कालान्तकोपमः ॥ २ ॥
महाप्रमाणमुद्यम्य विपुलं वेगवत् दृढ़म् ।
धनुर्भीमबलो भीमं शरांश्चामित्रनाशनान् ॥ ३ ॥
तं ददर्श महेष्वासो रथस्थः समलङ्कृतः ।
अलङ्कृतममित्रघ्नो रावणस्यात्मजो बली ॥ ४ ॥

अब्रवीत्परुषमिति । विभीषणमिति शेषः । तच्च वक्ष्यमाणम् ॥ १ ॥

उद्यतायुधनिस्त्रिंशः । उद्यतायुधो निस्त्रिंशो निर्घृणश्चेत्यर्थ इति कतकः । उद्यतान्यायुधानि निस्त्रिंशश्च येन सः । गोबलीवर्दवत्प्रयोग इत्यन्ये ॥ २ ॥ ३ ॥

तं सविभीषणं लक्ष्मणम् । अलंकृतं स्वतेजोभूषितम् ॥ ४ ॥

हनूमत्पृष्ठमारूढ़मुदयस्थं रविप्रभम्।
उवाचैनं सुसंरब्धः सौमित्रिं सविभीषणम्॥ ५॥
तांश्च वानरशार्दूलान् पश्यध्वं मे पराक्रमम्।
अद्य मत्कार्मुकोत्सृष्टं शरवर्षं दुरासदम्॥ ६॥
मुक्तवर्षमिवाकाशे धारयिष्यथ संयुगे।
अद्य वो मामका बाणा महाकार्मुकनिःसृताः।
विधमिष्यन्ति गात्राणि तूलराशिमिवानलः॥ ७॥
तीक्ष्णसायकनिर्भिन्नान् शूलशक्त्यृष्टिसायकैः।
अद्य वो गमयिष्यामि सर्वानेव यमक्षयम्॥ ८॥
सृजतः शरवर्षाणि क्षिप्रहस्तस्य संयुगे।
जीमूतस्येव नदतः कः स्थास्यति ममाग्रतः॥ ९॥
रात्रियुद्धे तदा पूर्वं वज्राशनिसमैः शरैः।
शायितौ तौ मया भूयो विसंज्ञौ सपुरःसरौ॥ १०॥
स्मृतिर्न तेऽस्ति वा मन्ये व्यक्तं यातो यमक्षयम्।

उवाचेत्यादिनाऽब्रवीत्परुषं वाक्यमिति प्रागुक्तस्यैव विवरणम्॥ ५॥
तांश्च वानरशार्दूलान् उवाचेत्यनुकर्षः॥ ६॥
मुक्तवर्षं मेघोत्सृष्टवर्षम्॥ ७॥ ८॥ ९॥
सपुरःसरौ सुग्रीवादिप्रधानसहितौ। युवां भ्रातराविति शेषः॥ १०॥

आशीविषसमं क्रुद्धं यन्मां योद्धुमुपस्थितः ॥ ११ ॥
तच्छ्रुत्वा राक्षसेन्द्रस्य गर्जितं राघवस्तदा।
अभीतवदनः क्रुद्धो रावणं वाक्यमब्रवीत् ॥ १२ ॥
उक्तश्च दुर्गमः पारः कार्य्याणां राक्षस! त्वया।
कार्य्याणां कर्मणा पारं यो गच्छति स बुद्धिमान् ॥ १३ ॥
स त्वमर्थस्य हीनार्थो दुरवापस्य केनचित्।
वाचा व्याहृत्य जानीषे कृतार्थोऽस्मीति दुर्मते! ॥ १४ ॥
अस्त्वधीनगतेनाजौ यत्त्वयाचरितस्तदा।

एवमपि यन्मां याद्धुमुपस्थितोऽसि तत्नायः पूर्वस्य ते स्मृतिर्नास्ति। वाऽथवा व्यक्तं यातो यमक्षयम्। आदिकर्मणि क्तः। यमक्षयं यमगृहं प्रयातुमुपक्रान्तोऽसि ॥ ११ ॥

अभीतवदनः निर्भयप्रवृत्ताभिवदनव्यवहारः ॥ १२ ॥

च यस्मात्त्वया कार्य्याणां प्रभुवधादिकार्य्याणां पारोऽन्तःसमाप्तिरुक्तो वाचा जल्पितः स पारस्त्वया कर्मणा दुर्गम एव दुष्प्राप एव। कुतस्तत्राह,—कार्य्याणामिति। यः कार्य्याणां पारं कर्मणा गच्छति स बुद्धिमान् ॥ १३ ॥

स त्वं हीनार्थः क्रियाकार्य्यनिष्पादनासमर्थः केनचिदपि दुरवापस्य मद्विजयरूपस्यार्थस्य सिद्धिं वाचा व्याहृत्य दुर्मते कृतार्थोऽस्मीति जानीषे ॥ १४ ॥

तस्कराचरितो मार्गो नैष वीरनिषेवित: ॥ १५ ॥
यथा बाणपथं प्राप्य स्थितोऽस्मि तव राक्षस ! ।
दर्शयस्वाद्य तत्तेजो वाचा त्वं किं विकत्थसे ॥ १६ ॥
एवमुक्तो धनुर्भीमं परामृश्य महाबल: ।
ससर्ज निशितान् बाणानिन्द्रजित् समितिञ्जय: ॥ १७ ॥
तेन सृष्टा महावेगा: शरा: सर्पविषोपमा: ।
सम्प्राप्य लक्ष्मणं पेतु: श्वसन्त इव पन्नगा: ॥ १८ ॥
शरैरतिमहावेगैर्वेगवान् रावणात्मज: ।
सौमित्रिमिन्द्रजित् युद्धे विव्याध शुभलक्षणम् ॥ १९ ॥
स शरैरतिविद्धाङ्गो रुधिरेण समुक्षित: ।
शुशुभे लक्ष्मण: श्रीमान् विधूम इव पावक: ॥ २० ॥
इन्द्रजित्त्वात्मन: कर्म प्रसमीक्ष्याभिगम्य च ।
विनद्य सुमहानादमिदं वचनमब्रवीत् ॥ २१ ॥
पत्रिण: शितधारास्ते शरा मत्कार्मुकच्युता: ।
आदास्यन्तेऽद्य सौमित्रे ! जीवितं जीवितान्तका: ॥ २२ ॥
अद्य गोमायुसङ्घाश्च श्येनसङ्घाश्च लक्ष्मण ! ।

अथ शायिताविति यत्त्वयोक्तं सा तेऽपकीर्त्तिरेवेत्याह,—अन्तर्हित। आजौ रणेऽन्तर्धानगतेन त्वया यत् य आचरित एष तस्करादिचरितो मार्ग: न वीरनिषेवित: ॥ १५ ॥ १६ ॥ १७ ॥

गृध्राश्च निपतन्तु त्वां गतासुं निहतं मया ॥ २३ ॥
क्षत्रबन्धुं सदानार्य्यं रामः परमदुर्मतिः ।
भक्तं भ्रातरमद्यैव त्वां द्रक्ष्यति हतं मया ॥ २४ ॥
विस्रस्तकवचं भूमौ व्यपविद्धशरासनम् ।
हृतोत्तमाङ्गं सौमित्रे ! त्वामद्य निहतं मया ॥ २५ ॥
इति ब्रुवाणं संक्रुद्धः परुषं रावणात्मजम् ।
हेतुमद्वाक्यमर्थज्ञो लक्ष्मणः प्रत्युवाच ह ॥ २६ ॥
वाग्बलं त्यज दुर्बुद्धे ! क्रूरकर्मन् हि राक्षस ! ।
अथ कस्माद्वदस्येतत् सम्पादय सुकर्मणा ॥ २७ ॥
अकृत्वा कत्थसे कर्म किमर्थमिह राक्षस ! ।
कुरु तत्कर्म येनाहं श्रद्दधेयं तव कत्थनम् ॥ २८ ॥
अनुक्त्वा परुषं वाक्यं किञ्चिदप्यनवक्षिपन् ।
अविकत्थन् वधिष्यामि त्वां पश्य पुरुषादन ! ॥ २९ ॥
इत्युक्त्वा पञ्च नाराचानाकर्णपूरितान् शरान् ।

लक्ष्मणं सम्प्राप्य पेतुः । कवचेनाहता इति शेषः ॥ १८ ॥ १९ ॥ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

त्वामद्येति । द्रक्ष्यतीत्यनुकर्षः ॥ २५ ॥ २६ ॥

क्रूरकर्मन् कूटयुद्धव्यापारकर्त्तः । एतत् वृथावचनं कस्माद्वदसि । सर्वं सुकर्मणैव सम्पादय ॥ २७ ॥ २८ ॥

विजघान महावेगान् लक्ष्मणो राक्षसोरसि ॥ ३० ॥
सुपत्रवाजिता बाणा ज्वलिता इव पन्नगाः ।
नैर्ऋतोरस्यभासन्त सवितू रश्मयो यथा ॥ ३१ ॥
स शरैराहतस्तेन सरोषो रावणात्मजः ।
सुप्रयुक्तैस्त्रिभिर्बाणैः प्रतिविव्याध लक्ष्मणम् ॥ ३२ ॥
स बभूव महाभीमो नरराक्षससिंहयोः ।
विमर्दस्तुमुलो युद्धे परस्परजयैषिणोः ॥ ३३ ॥
विक्रान्तौ बलसम्पन्नावुभौ विक्रमशालिनौ ।
उभौ परमदुर्जयावतुल्यबलतेजसौ ॥ ३४ ॥
युयुधाते तदा वीरौ ग्रहाविव नभोगतौ ।
बलवृत्राविव हि तौ युधि वै दुष्प्रधर्षणौ ॥ ३५ ॥
युयुधाते महात्मानौ तदा केसरिणाविव ।
बहूनवसृजन्तौ हि मार्गणौघानवस्थितौ ॥ ३६ ॥

अनवक्षिपन् ईषदपि निन्दामकुर्वन् । अविकत्थन् स्वश्लाघामकुर्वन् ॥ २९ ॥ ३० ॥

सुपत्रवाजिताः सुपत्रैः कङ्कादिपत्रैः सञ्जातवेगाः ॥ ३१ ॥ ३२ ॥
विमर्दः सङ्घर्षः ॥ ३३ ॥
विक्रान्तौ कृतपराक्रमौ ॥ ३४ ॥
बलवृत्रौ । बल इन्द्रः ॥ ३५ ॥ ३६ ॥

नरराक्षसमुख्यौ तौ प्रहृष्टावभ्ययुध्यताम् ॥ ३७ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
अष्टाशीतितमः सर्गः ॥ ८८ ॥

नरराक्षसमुख्यौ तौ प्रहृष्टावभ्ययुध्यतामित्युत्तरं श्लोकद्वयं भिन्न-वृत्तं प्रक्षिप्तम्। तदुत्तरं सर्वावच्छेदेनासम्प्रदायः। तयोर्युद्धस्यैवाग्रे सत्त्वेन प्रकरणान्तराभावादिति कतकः ॥ ३७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे अष्टाशीतितमः सर्गः ॥ ८८ ॥

---

## एकोननवतितमः सर्गः ।

ततः शरान् दाशरथिः सन्धायामित्रकर्षणः ।
ससर्ज राक्षसेन्द्राय क्रुद्धः सर्प इव श्वसन् ॥ १ ॥

तस्य ज्यातलनिर्घोषं स श्रुत्वा राक्षसाधिपः ।
विवर्णवदनो भूत्वा लक्ष्मणं समुदैक्षत ॥ २ ॥

विषण्णवदनं दृष्ट्वा राक्षसं रावणात्मजम् ।
सौमित्रिं युद्धसंयुक्तं प्रत्युवाच विभीषणः ॥ ३ ॥

निमित्तान्युपपश्यामि यान्यस्मिन् रावणात्मजे ।
त्वर तेन महाबाहो! भग्न एष न संशयः ॥ ४ ॥

ततः सन्धाय सौमित्रिः शरानाशीविषोपमान् ।
मुमोच विशिखांस्तस्मिन् सर्पानिव विषोल्बणान् ॥ ५ ॥

ततः शरानिति ॥ १ ॥ २ ॥

युद्धसंयुक्तं युद्धजनकहर्षयुक्तम् ॥ ३ ॥

निमित्तानि मुखवैवर्ण्यादिदुर्निमित्तानि । यानि अनुभूतपराजयसूचकत्वानि । तेनैतद्वधे त्वर शीघ्रमुद्यमं कुरु ॥ ४ ॥ ५ ॥

शक्राशनिसमस्पर्शैर्लक्ष्मणेनाहतः शरैः ।
मुहूर्त्तमभवन् मूढ़ः सर्वसंक्षुभितेन्द्रियः ॥ ६ ॥
ददर्शावस्थितं वीरमाजौ दशरथात्मजम् ।
सोऽभिचक्राम सौमित्रिं रोषात् संरक्तलोचनः ॥ ७ ॥
अब्रवीच्चैनमासाद्य पुनः स परुषं वचः ।
किं न स्मरसि तत् युद्धे प्रथमे मत्पराक्रमम् ।
निबद्धस्त्वं सह भ्रात्रा यदायुधि विचेष्टसे ॥ ८ ॥
युवां खलु महायुद्धे वज्राशनिसमैः शरैः ।
शायितौ प्रथमं भूमौ विसंज्ञौ सपुरःसरौ ॥ ९ ॥
स्मृतिर्वा नास्ति ते मन्ये व्यक्तं वा यमसादनम् ।
गन्तुमिच्छसि यन्मां त्वमाधर्षयितुमिच्छसि ॥ १० ॥
यदि ते प्रथमे युद्धे न दृष्टो मत्पराक्रमः ।
अद्य त्वां दर्शयिष्यामि तिष्ठेदानीं व्यवस्थितः ॥ ११ ॥
इत्युक्त्वा सप्तभिर्बाणैरभिविव्याध लक्ष्मणम् ।

सर्वसंक्षुभितेन्द्रियः संक्षुभितसर्वेन्द्रियः ॥ ६ ॥ ७ ॥

प्रथमे मद्युद्धे नागपाशबन्धनके तस्मिन् युद्धे । यत्र भ्रात्रा सह निबद्धस्त्वं तत् किं न स्मरसि । यदद्य आयुधि आयोधने विचेष्टसे शरपातादिकरोषि ॥ ८ ॥

तदेव पुनराह,—युवामिति ॥ ९ ॥

दशभिस्तु हनूमन्तं तीक्ष्णधारैः शरोत्तमैः ॥ १२ ॥
ततः शरशतेनैव सुप्रयुक्तेन वीर्य्यवान्।
क्रोधात् द्विगुणसंरब्धो निर्बिभेद विभीषणम् ॥ १३ ॥
तत् दृष्ट्वेन्द्रजिता कर्म्म कृतं रामानुजस्तदा।
अचिन्तयित्वा प्रहसन्नैतत् किञ्चिदिति ब्रुवन् ॥ १४ ॥
मुमोच च शरान् घोरान् संगृह्य नरपुङ्गवः।
अभीतवदनः क्रुद्धो रावणिं लक्ष्मणो युधि ॥ १५ ॥
नैवं रणगताः शूराः प्रहरन्ति निशाचर !।
लघवश्चाल्पवीर्य्याश्च शराहीमे सुखास्तव ॥ १६ ॥
नैवं शूरास्तु युध्यन्ते समरे युद्धकाङ्क्षिणः।
इत्येवं तं ब्रुवन् धन्वी शरैरभिववर्ष ह ॥ १७ ॥
तस्य बाणैः सुविध्वस्तं कवचं काञ्चनं महत्।
व्यशीर्य्यत रथोपस्थे ताराजालमिवाम्बरात् ॥ १८ ॥

यमसादनं यमगृहम् ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

नैतत् किञ्चिदिति ब्रुवन्। एतन्न किञ्चिन्न किञ्चित्करमिति ब्रुवन्नित्यर्थः ॥ १४ ॥ १५ ॥

अकिञ्चित्करत्वमेव विवृणोति। नैवमिति। एवं शब्दार्थो लघव इति। पुष्पमालावल्लघव इमे तव शरा मे सुखा न तु क्लेशदा इत्यर्थः ॥ ॥ १६ ॥ १७ ॥ १८ ॥

विधूतवर्मा नाराचैर्बभूव स कृतव्रणः ।
इन्द्रजित् समरे वीरः प्रत्यूषे भानुमानिव ॥ १९ ॥
ततः शरसहस्रेण संक्रुद्धो रावणात्मजः ।
बिभेद समरे वीरो लक्ष्मणं भीमविक्रमः ॥ २० ॥
व्यशीर्य्यत महद्दिव्यं कवचं लक्ष्मणस्य तु ।
कृतप्रतिकृतान्योऽन्यं बभूवतुरभिद्रुतौ ॥ २१ ॥
अभीक्ष्णं निःश्वसन्तौ वै युध्येतां तुमुलौ युधि ।
शरसंकृत्तसर्वाङ्गौ सर्वतो रुधिरोक्षितौ ।
सुदीर्घकालं तौ वीरावन्योऽन्यं निशितैः शरैः ॥ २२ ॥
ततचतुर्महात्मानौ रणकर्मविशारदौ ।
बभूवतुश्चात्मजये यत्तौ भीमपराक्रमौ ॥ २३ ॥
तौ शरौघैस्तथा कीर्णौ निकृत्तकवचध्वजौ ।
सृजन्तौ रुधिरञ्चोष्णं जलं प्रस्रवणाविव ॥ २४ ॥
शरवर्षं ततो घोरं मुञ्चतोर्भीमनिःस्वनम् ।
सासारयोरिवाकाशे नीलयोः कालमेघयोः ॥ २५ ॥

प्रत्यूषे भानुमानिव । क्षतजरक्तवर्णत्वादिति भावः ॥ १९ ॥ २० ॥
अन्योऽन्यं कृतप्रतिकृता । आर्षोऽडा । कृतप्रतिकृते यत्तौ बभूवतु-रित्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥
सा सारयोः धारासम्पातआसारस्तत्सहितयोः ॥ २५ ॥

तयोरथ महान् कालो व्यतीयाद्युध्यमानयोः।
न च तौ युद्धवैमुख्यं श्रमञ्चाप्युपजग्मतुः॥ २६॥
अस्त्राण्यस्त्रविदां श्रेष्ठौ दर्शयन्तौ पुनः पुनः।
शरानुच्चावचाकारानन्तरिक्षे बबन्धतुः॥ २७॥
व्यपेतदोषमस्यन्तौ लघु चित्रञ्च सुष्ठु च।
उभौ तु तुमुलं घोरञ्चक्रतुर्नरराक्षसौ॥ २८॥
तयोः पृथक् पृथग्भीमः शुश्रुवे तुमुलः स्वनः।
स कम्पं जनयामास निर्घात इव दारुणः॥ २९॥
तयोः स भ्राजते शब्दस्तथा समरयत्तयोः।
सुघोरयोर्निस्वनतोर्गगने मेघयोरिव॥ ३०॥
सुवर्णपुङ्खैर्नाराचैर्बलवन्तौ कृतव्रणौ।
प्रसुस्रुवाते रुधिरं कीर्त्तिमन्तौ जये धृतौ॥ ३१॥
ते गात्रयोर्निपतिता रुक्मपुङ्खाः शरा युधि।
असृग्दिग्धा विनिष्पेतुर्विविशुर्धरणीतलम्॥ ३२॥
अन्ये सुनिशितैः शस्त्रैराकाशे सञ्जघट्टिरे।
बभञ्जुश्चिच्छिदुश्चैव तयोर्बाणाः सहस्रशः॥ ३३॥

महान् कालोऽनेकदिनरूपः॥ २६॥ २७॥ २८॥ २९॥ ३०॥
जये धृतौ दृढोत्साहौ॥ ३१॥ ३२॥ ३३॥

स बभूव रणे घोरस्तयोर्बाणमयश्चयः ।
अग्निभ्यामिव दीप्ताभ्यां सत्रे कुशमयश्चयः ॥ २४ ॥
तयोः कृतव्रणौ देहौ शुशुभाते महात्मनोः ।
सुपुष्पाविव निष्पत्रौ वने किंशुकशाल्मली ॥ २५ ॥
चक्रतुस्तुमुलं घोरं सन्निपातं मुहुर्मुहुः ।
इन्द्रजिल्लक्ष्मणश्चैव परस्परजयैषिणौ ॥ २६ ॥
लक्ष्मणो रावणिं युद्धे रावणिश्चापि लक्ष्मणम् ।
अन्योऽन्यं तावभिघ्नन्तौ न श्रमं प्रतिपद्यताम् ॥ २७ ॥
बाणजालैः शरीरस्थैरवगाढैस्तरस्विनौ ।
शुशुभाते महावीर्य्यौ प्ररूढाविव पर्वतौ ॥ २८ ॥
ततो रुधिरसिक्तानि संवृतानि शरैर्भृशम् ।
बभ्राजुः सर्वगात्राणि ज्वलन्त इव पावकाः ॥ २९ ॥
तयोरथ महान् कालो व्यतीयाद्युध्यमानयोः ।
न च तौ युद्धवैमुख्यं श्रमञ्चाप्यभिजग्मतुः ॥ ४० ॥
अथ समरपरिश्रमं निहन्तुं
समरमुखेष्वजितस्य लक्ष्मणस्य ।

चयः समूहः ॥ २४ ॥ २५ ॥
सन्निपातं युद्धम् ॥ २६ ॥ २७ ॥
अवगाढ़ैः गाढ़मग्नैः प्ररूढ़ौ प्ररूढवृक्षौ ॥ २८ ॥ २९ ॥ ४० ॥

प्रियहितमुपपादयन् महात्मा
समरमुपेत्य विभीषणोऽवतस्थे ॥ ४१ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
एकोननवतितमः सर्गः ॥ ८९ ॥

समरपरिश्रमं युद्धजश्रमम् ॥ ४१ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे एकोननवतितमः सर्गः ॥ ८९ ॥

---

## नवतितमः सर्गः।



युध्यमानौ ततो दृष्ट्वा प्रसक्तौ नरराक्षसौ।
प्रभिन्नाविव मातङ्गौ परस्परजयैषिणौ ॥ १ ॥
तयोर्युद्धं द्रष्टुकामो वरचापधरो बली।
शूरः स रावणभ्राता तस्थौ संग्राममूर्धनि ॥ २ ॥
ततो विस्फारयामास महद्धनुरवस्थितः।
उत्ससर्ज च तीक्ष्णाग्रान् राक्षसेषु महाशरान् ॥ ३ ॥
ते शराः शिखिसंस्पर्शा निपतन्तः समाहिताः।
राक्षसान् दारयामासुर्वज्रा इव महागिरीन् ॥ ४ ॥
विभीषणस्यानुचरास्तेऽपि शूलासिपट्टिशैः।

युध्यमानाविति। प्रभिन्नौ मत्तौ मातङ्गाविव युद्धाय प्रसक्तावत एव युध्यमानौ दृष्ट्वा ॥ १ ॥

ततः परं युद्धार्थं गतयोरन्यतरवधात् युद्धं द्रष्टुकामः सन्। शूरो रावणभ्राता युयुत्सया संग्राममूर्धनि तस्थौ ॥ २ ॥

अतएव ततो विस्फारयामासेति। अवस्थितो भूमाविति शेषः ॥ ३ ॥

चिच्छिदुः समरे वीरान् राक्षसान् राक्षसोत्तमाः ॥ ५ ॥
राक्षसैस्तैः परिवृतः स तदा तु विभीषणः।
बभौ मध्ये प्रधृष्टानां कलभानामिव द्विपः ॥ ६ ॥
ततः सञ्चोदमानो वै हरीन् रक्षोवधप्रियान्।
उवाच वचनं काले कालज्ञो रक्षसां वरः ॥ ७ ॥
एकोऽयं राक्षसेन्द्रस्य परायणमवस्थितः।
एतच्छेषं बलं तस्य किं तिष्ठत हरीश्वराः ॥ ८ ॥
तस्मिंश्च निहते पापे राक्षसे रणमूर्द्धनि।
रावणं वर्जयित्वा तु शेषमस्य बलं हतम् ॥ ९ ॥
प्रहस्तो निहतो वीरो निकुम्भश्च महाबलः।
कुम्भकर्णश्च कुम्भश्च धूम्राक्षश्च निशाचरः ॥ १० ॥
अम्बुमाली महामाली तीक्ष्णवेगोऽशनिप्रभः।
सुप्तघ्नो यज्ञकोपश्च वज्रदंष्ट्रश्च राक्षसः ॥ ११ ॥

वधाः वधपाताः ॥ ४ ॥ ५ ॥
राक्षसैस्तैः सचिवरूपैः । ६ ॥
सञ्चोदमानः सञ्चोदयमानः ॥ ७ ॥
परायणं परागतिः। उत्तमो योद्धेति यावत्। तस्य रावणस्य बलं सेना एतच्छेषं दृश्यमानबलमात्रावशेषम्। तत् किं तिष्ठत। तद्धननानुद्यमेनेति शेषः । ८ । ९ ।

संह्रादो विकटोऽरिघ्नस्तपनो मन्द एव च ।
प्रघासः प्रघसश्चैव प्रजङ्घो जङ्घ एव च ॥ १२ ॥
अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च वीर्य्यवान् ।
विद्युज्जिह्वो द्विजिह्वश्च सूर्य्यशत्रुश्च राक्षसः ॥ १३ ॥
अकम्पनः सुपार्श्वश्च चक्रमाली च राक्षसः ।
कम्पनः सत्ववन्तश्च देवान्तकनरान्तकौ ॥ १४ ॥
एतान्निहत्यातिबलान् बहून् राक्षससत्तमान् ।
बाहुभ्यां सागरं तीर्त्वा लङ्घ्यतां गोष्पदं लघु ॥ १५ ॥
एतावदेव शेषं वो जेतव्यमिति वानराः ! ।
हताः सर्वे समागम्य राक्षसा बलदर्पिताः ॥ १६ ॥
अयुक्तं निधनं कर्त्तुं पुत्रस्य जनितुर्मम ।
घृणामपास्य रामार्थं निहन्यां भ्रातुरात्मजम् ॥ १७ ॥

एतन्नामधेयवत्वमेवाह,—प्रहस्त इति ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ ॥ १४ ॥

बाहुभ्यां सागरं तीर्त्वावस्थितैर्युष्माभिरिदं लघु अवशिष्टबलरूपं गोष्पदं लंघ्यताम् ॥ १५ ॥

समागम्य युद्धं प्राप्य ॥ १६ ॥

जनितुः जनियतुर्भ्रातुः पुत्रस्य निधनं नाशः कर्त्तुमयुक्तं तथापि घृणां दयामपास्य रामार्थं भ्रातुरात्मजं निहन्याम् । हननोपायप्रवर्त्तनेनेति भावः ॥ १७ ॥

हन्तुकामस्य मे बाष्पं चक्षुश्चैव निरुध्यति।
तमेवैष महाबाहुर्लक्ष्मणः शमयिष्यति॥ १८॥
वानरा! घ्नत सम्भूय भृत्यानस्य समीपगान्।
इति तेनातियशसा राक्षसेनाभिचोदिताः॥ १९॥
वानरेन्द्रा जहृषिरे लाङ्गूलानि च विव्यधुः।
ततस्तु कपिशार्दूलाः क्ष्वेडन्तश्च पुनः पुनः॥ २०॥
मुमुचुर्विविधान्नादान् मेघान् दृष्ट्वेव बर्हिणः।
जाम्बवानपि तैः सर्वैः स्वयूथैरभिसंवृतः।
तेऽश्मभिस्ताड़यामासुर्नखैर्दन्तैश्च राक्षसान्॥ २१॥
निघ्नन्तमृक्षाधिपतिं राक्षसास्ते महाबलाः।
परिभत्स्य भयं त्यक्त्वा तमनेकविधायुधाः॥ २२॥
शरैः परशुभिस्तीक्ष्णैः पट्टिशैर्यष्टितोमरैः।
जाम्बवन्तं मृधे जघ्नुर्निघ्नन्तं राक्षसीञ्चमूम्॥ २३॥
स सम्प्रहारस्तुमुलः संजज्ञे कपिरक्षसाम्।
देवासुराणां क्रुद्धानां यथा भीमो महास्वनः॥ २४॥
हनूमानपि संक्रुद्धः सानुमुत्पाट्य पर्वतात्।

हन्तुकामस्य साक्षात् प्रहर्तुकामस्य। बाष्पं कार्त्तृ। निरुध्यति निरुणद्धि। तं लक्ष्मण एवेत्यन्वयः॥ १८॥

घ्नतेत्यार्षम्॥ १९॥ २०॥ २१॥ २२॥ २३॥ २४॥

स लक्ष्मणं स्वयं पृष्ठादवरोप्य महामनाः ॥ २५ ॥
रक्षसां कदनं चक्रे दुरासादः सहस्रशः ।
स दत्त्वा तुमुलं युद्धं पितृव्यस्येन्द्रजिद्बली ॥ २६ ॥
लक्ष्मणं परवीरघ्नः पुनरेवाभ्यधावत ।
तौ प्रयुद्धौ तदा वीरौ मृधे लक्ष्मणराक्षसौ ॥ २७ ॥
शरौघानभिवर्षन्तौ जघ्नतुस्तौ परस्परम् ।
अभीक्ष्णमन्तर्दधतुः शरजालैर्महाबलौ ॥ २८ ॥
चन्द्रादित्याविवोष्णान्ते यथा मेघैस्तरस्विनौ ।
नह्यादानं न सन्धानं धनुषो वा परिग्रहः ॥ २९ ॥
न विप्रमोक्षो बाणानां न विकर्षो न विग्रहः ।
न मुष्टिप्रतिसन्धानं न लक्ष्यप्रतिपादनम् ॥ ३० ॥
अदृश्यत तयोस्तत्र युध्यतोः पाणिलाघवात् ।

हनूमानपीति । पर्वतात्सानु शिखरमुत्पाट्य लक्ष्मणं पृष्ठादवरोप्य विश्रामार्थं स्वारूढं लक्ष्मणं भूमाववस्थाप्य विभीषणसहायार्थं हनूमान् कदनञ्चक्रे ॥ २५ ॥

दुरासादः । परैर्दुरासद इत्यर्थः ॥ २६ ॥

प्रयुद्धौ योद्धुमुपक्रान्तौ ॥ २७ ॥

शरजालैः परस्परप्रयुक्तैः परस्परमन्तर्दधतुः ॥ २८ ॥

उष्णान्ते वर्षारम्भे । सन्धानं संयोजनम् । धनुषो वा परिग्रहः सव्यापसव्येन कार्मुकग्रहणम् ॥ २९ ॥

चापवेगप्रयुक्तैश्च बाणजालैः समन्ततः ॥ ३१ ॥
अन्तरिक्षेऽभिसम्पन्ने न रूपाणि चकाशिरे।
लक्ष्मणो रावणिं प्राप्य रावणिश्चापि लक्ष्मणम् ॥ ३२ ॥
अव्यवस्थाभवत्युग्रा ताभ्यामन्योऽन्यविग्रहे।
ताभ्यामुभाभ्यान्तरसा प्रसृष्टैर्विशिखैः शितैः ॥ ३३ ॥
निरन्तरमिवाकाशं बभूव तमसावृतम्।
तैः पतद्भिश्च बहुभिस्तयोः शरशतैः शितैः ॥ ३४ ॥
दिशश्च प्रदिशश्चैव बभूवुः शरसङ्कुलाः।
तमसा पिहितं सर्वमासीत्प्रतिभयं महत् ॥ ३५ ॥
अस्तङ्गते सहस्रांशौ संवृते तमसा च वै।

विग्रहो बाणानां विभागः। विग्रहः समरे काये विरोधप्रति-भागयोरिति कोशः। प्रतिसन्धानं दृढ़तया मुष्टिसंयोजनम्। लक्ष्य-प्रतिपादन लक्ष्यभेदनम् ॥ ३० ॥ ३१ ॥

अभिसम्पन्ने व्याप्ते। रूपाणि रूपवद्वस्तूनि न चकाशिरे। न दृग्गोचराणीति भावः। रावणिश्चापि लक्ष्मणं प्राप्यायुध्यतामिति शेषः ॥ ३२ ॥

उग्राऽव्यवस्था तत्तद्बाणैरयुध्यद्वानरराक्षसवधरूपा भवति अभव-दित्यर्थः। यत्तु अयमेनं निग्रहातीति स एनं वेत्यनिश्चयरूपाव्यवस्थेति व्याख्यानं तच्चिन्त्यम्। तस्या अव्यवस्थाया उग्रत्वस्य निरूपयितुमशक्य-त्वात्। उग्रेति विशेषणवैयर्थ्याच्च ॥ ३३ ॥ ३४ ॥

रुधिरौघा महानद्यः प्रावर्त्तन्त सहस्रशः ॥ ३६ ॥
क्रव्यादा दारुणा वाग्भिश्चिच्छिपुर्भीमनिःस्वनान् ।
न तदानीं ववौ वायुर्न च जज्वाल पावकः ॥ ३७ ॥
स्वस्त्यस्तु लोकेभ्य इति जजल्पुस्ते महर्षयः ।
सम्पेतुश्चात्र सन्तप्ता गन्धर्वाः सह चारणैः ॥ ३८ ॥
अथ राक्षससिंहस्य कृष्णान् कनकभूषणान् ।
शरैश्चतुर्भिः सौमित्रिर्विव्याध चतुरो हयान् ॥ ३९ ॥
ततोऽपरेण भल्लेन पीतेन निशितेन च ।
सम्पूर्णायतमुक्तेन सुपत्रेण सुवर्चसा ॥ ४० ॥
महेन्द्राशनिकल्पेन सूतस्य विचरिष्यतः ।
स तेन बाणाशनिना तलशब्दानुनादिना ॥ ४१ ॥
लाघवाद्राघवः श्रीमान् शिरः कायादपाहरत् ।
स यन्तरि महातेजा हते मन्दोदरीसुतः ॥ ४२ ॥
स्वयं सारथ्यमकरोत् पुनश्च धनुरस्पृशत् ।

प्रतिभयं भयङ्करम् ॥ ३५ ॥ ३६ ॥

वाग्भिर्वागिन्द्रियैः । क्रव्यादा गृध्रादयः ॥ ३७ ॥ ३८ ॥ ३९ ॥

पीतेन स्वर्णरूषितेन । सम्पूर्णायतमुक्तेन सम्पूर्णमाकर्णपर्यन्तमायतेनाकृष्टेन ततो मुक्तेन ॥ ४० ॥

विचरिष्यतः रथसञ्चारं करिष्यतः । तलशब्दानुनादिना तल-

तदद्भुतमभूत्तत्र सारथ्यं पश्यतां युधि ॥ ४३ ॥
हयेषु व्यग्रहस्तन्तं विव्याध निशितैः शरैः।
धनुष्यथ पुनर्व्यग्रं हयेषु मुमुचे शरान् ॥ ४४ ॥
छिन्नेषु तेषु बाणौघैर्विचरन्तमभीतवत्।
अर्दयामास समरे सौमित्रिः शीघ्रकृत्तमः ॥ ४५ ॥
निहतं सारथिं दृष्ट्वा समरे रावणात्मजः।
प्रजहौ समरोद्धर्षं विषण्णः स बभूव ह ॥ ४६ ॥
विषण्णवदनं दृष्ट्वा राक्षसं हरियूथपाः।
ततः परमसंहृष्टा लक्ष्मणञ्चाभ्यपूजयन् ॥ ४७ ॥
ततः प्रमाथी रभसः शरभो गन्धमादनः।
अमृष्यमाणाश्चत्वारश्चक्रुर्वेगं हरीश्वराः ॥ ४८ ॥
ते चास्य हयमुख्येषु तूर्णमुत्पत्य वानराः।
चतुर्षु सुमहावीर्य्या निपेतुर्भीमविक्रमाः ॥ ४९ ॥
तेषामधिष्ठितानान्तैर्वानरैः पर्वतोपमैः।
मुखेभ्यो रुधिरं व्यक्तं हयानां समवर्त्तत ॥ ५० ॥

ज्याघातवारणं तस्य ज्याघट्टनजो यः शब्दस्तस्यानुनादो यस्यास्ति तेन ॥ ४१ ॥ ४२ ॥ ४३ ॥

हयेषु हयप्रेरणविषये व्यग्रहस्तं दृष्ट्वा तत्समये इति शेषः ॥ ४४ ॥ ॥ ४५ ॥

ते हया मथिता भग्ना व्यसवो धरणींगताः ।
ते निहत्य हयांस्तस्य प्रमथ्य च महारथम् ॥ ५१ ॥
पुनरुत्पत्य वेगेन तस्थुर्लक्ष्मणपार्श्वतः ॥ ५२ ॥
स हताश्वादवप्लुत्य रथान्मथितसारथिः ।
शरवर्षेण सौमित्रिमभ्यधावत रावणिः ॥ ५३ ॥

ततो महेन्द्रप्रतिमः सलक्ष्मणः
पदातिनन्तं निहतैर्हयोत्तमैः ।
सृजन्तमाजौ निशिताञ्शरोत्तमान्
भृशन्तदा बाणगतैर्व्यदारयत् ॥ ५४ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
नवतितमः सर्गः ॥ ९० ॥

समरोद्धर्षं समरोत्साहं प्रजहृत्यतवान् ॥ ४६ ॥ ४७ ॥ ४८ ॥ ॥ ४९ ॥ ५० ॥

ते निहत्येति । ऋषभादय इत्यर्थः ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे नवतितमः सर्गः ॥ ९० ॥

## एकनवतितमः सर्गः ।



स हताश्वो महातेजा भूमौ तिष्ठन्निशाचरः ।
इन्द्रजित् परमक्रुद्धः सम्प्रजज्वाल तेजसा ॥ १ ॥
तौ धन्विनौ जिघांसन्तावन्योऽन्यमिषुभिर्भृशम् ।
विजयेनाभिनिष्क्रान्तौ वने गजवृषाविव ॥ २ ॥
निबर्हयन्तश्चान्योऽन्यं ते राक्षसवनौकसः ।
भर्त्तारं न जहुर्युद्धे सम्पतन्तस्ततस्ततः ॥ ३ ॥
ततस्तान् राक्षसान् सर्वान् हर्षयन् रावणात्मजः ।
स्तुवानो हर्षमाणश्च इदं वचनमब्रवीत् ॥ ४ ॥
तमसा बहुलेनेमाः संसक्ताः सर्वतो दिशः ।
नेह विज्ञायते स्वो वा परो वा राक्षसोत्तमाः ! ॥ ५ ॥

विजयेन विजयप्राप्तिरूपेण हेतुना अभिमुखतया युद्धार्थं प्रवृत्ता-वभूतामिति शेषः । गजवृषौ गजश्रेष्ठौ ॥ १ ॥ २ ॥

निबर्हयन्तो मारयन्तः । भर्त्तारं स्व स्व भर्त्तारम् । सम्पतन्तः सङ्गच्छमानाः ॥ ३ ॥

स्तुवान श्लाघयन् । स्तुवन्नित्यर्थः ॥ ४ ॥

धृष्टं भवन्तो युद्धन्तु हरीणां मोहनाय वै।
अहन्तु रथमास्थाय आगमिष्यामि संयुगे ॥ ६ ॥
तथा भवन्तः कुर्वन्तु यथेमे हि वनौकसः।
न युद्धेयुर्महात्मानः प्रविष्टे नगरं मयि ॥ ७ ॥
इत्युक्त्वा रावणसुतो वञ्चयित्वा वनौकसः।
प्रविवेश पुरीं लङ्कां रथहेतोररिमित्रहा ॥ ८ ॥
स रथं भूषयित्वाथ रुचिरं हेमभूषितम्।
प्रासासिशरसंयुक्तं युक्तं परमवाजिभिः ॥ ९ ॥
अधिष्ठितं हयज्ञेन सूतेनाप्तोपदेशिना।
आरुरोह महातेजा रावणिः समितिञ्जयः ॥ १० ॥
स राक्षसगणैर्मुख्यैर्वृतो मन्दोदरीसुतः।
निर्ययौ नगराद्वीरः कृतान्तबलचोदितः ॥ ११ ॥
सोऽभिनिष्क्रम्य नगरादिन्द्रजित्परमौजसा।

बहुलेन तमसा इमा दिशः संसक्ताः संवृताः। एवञ्चास्माकं बलकरी रात्रिरागता ॥ ५ ॥

अतो भवन्तो धृष्टं निर्भयं युध्यन्तु। मोहनाय मद्गमनापरिज्ञानाय। त्वया किमर्थं गम्यते तत्राहाहन्त्विति ॥ ६ ॥

प्रविष्टे प्रवेष्टुमुपक्रान्ते न युध्येयुः। मम नगरप्रवेशविघ्नार्थं यथा वानरा मया सह न युध्येरंस्तथा भवन्तः कुर्वन्त्वित्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥

अभ्ययाज्जवनरश्वैर्लक्ष्मणं सविभीषणम् ॥ १२ ॥
ततो रथस्थमालोक्य सौमित्री रावणात्मजम्।
वानराश्च महावीर्य्या राक्षसश्च विभीषणः ॥ १३ ॥
विस्मयं परमं जग्मुर्लाघवात्तस्य धीमतः।
रावणिश्चापि संक्रुद्धो रणे वानरयूथपान् ॥ १४ ॥
पातयामास बाणौघैः शतशोऽथ सहस्रशः।
स मण्डलीकृतधनू रावणिः समितिञ्जयः ॥ १५ ॥
हरीनभ्यहनत्क्रुद्धः परं लाघवमास्थितः।
ते वध्यमाना हरयो नाराचैर्भीमविक्रमैः ॥ १६ ॥
सौमित्रिं शरणं प्राप्ताः प्रजापतिमिव प्रजाः।
ततः समरकोपेन ज्वलितो रघुनन्दनः।
चिच्छेद कार्मुकं तस्य दर्शयन् पाणिलाघवम् ॥ १७ ॥
सोऽन्यत्कार्मुकमादाय सज्जञ्चक्रे त्वरन्निव।
तदप्यस्य त्रिभिर्बाणैर्लक्ष्मणो निरकृन्तत ॥ १८ ॥
अथैनं छिन्नधन्वानमाशीविषविषोपमैः।
विव्याधोरसि सौमित्री रावणिं पञ्चभिः शरैः ॥ १९ ॥

हयज्ञेन अश्वहृदयज्ञेन। आप्तं हितमुपदेष्टुं शीलमस्यास्ति तेन ॥
॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥
समरकोपेन रावणिसमरजन्यकोपेन ॥ १७ ॥
त्वरन्निव शीघ्रमेव। तदपि द्वितीयधनुरपि ॥ १८ ॥ १९ ॥

ते तस्य कायं निर्भिद्य महाकार्मुकनिःसृताः।
निपेतुर्धरणीं बाणा रक्ता इव महोरगाः॥ २०॥
स छिन्नधन्वा रुधिरं वमन् वक्त्रेण रावणिः।
जग्राह कार्मुकश्रेष्ठं दृढज्यं बलवत्तरम्॥ २१॥
स लक्ष्मणं समुद्दिश्य परं लाघवमास्थितः।
ववर्ष शरवर्षाणि वर्षाणीव पुरन्दरः॥ २२॥
मुक्तमिन्द्रजिता तत्तु शरवर्षमरिन्दमः।
आवारयदसम्भ्रान्तो लक्ष्मणः सुदुरासदम्॥ २३॥
सन्दर्शयामास तदा रावणिं रघुनन्दनः।
असम्भ्रान्तो महातेजास्तदद्भुतमिवाभवत्॥ २४॥
ततस्तान् राक्षसान् सर्वांस्त्रिभिरेकैकमाहवे।
अविध्यत् परमक्रुद्धः शीघ्रास्त्रं सम्प्रदर्शयन्।
राक्षसेन्द्रसुतञ्चापि बाणौघैः समताड़यत्॥ २५॥

रक्ताः। बाणानामपि रुधिरसम्बन्धाद्रक्तत्वम्॥ २०॥ २१॥ २२॥
॥ २३॥

सन्दर्शयामास। स्वपौरुषमिति शेषः॥ २४॥

ननु कथं सर्वराक्षसा इन्द्रजिति युध्यति त्रिभिस्त्रिभिर्बाणैर्वेद्धुं शक्यास्तत्राह,—शीघ्रास्त्रमिति। प्रयोगमात्रेण सर्ववेधकमस्त्रं शीघ्रास्त्रम्। यद्वा। भावप्रधानो निर्देशः। अस्त्रविषयकशीघ्रप्रयोगसामर्थ्यरूपं शीघ्रास्त्रत्वं सम्प्रदर्शयन्नित्यर्थः॥ २५॥

सोऽतिविद्धो बलवता शत्रुणा शत्रुघातिना।
असक्तं प्रेषयामास लक्ष्मणाय बहून् शरान् ॥ २६ ॥
तानप्राप्तान् शितैर्बाणैश्चिच्छेद परवीरहा।
सारथेरस्य च रणे रथिनो रथसत्तमः ॥ २७ ॥
शिरो जहार धर्मात्मा भल्लेनानतपर्वणा।
असूतास्ते हयास्तत्र रथमूहुरविक्लवाः ॥ २८ ॥
मण्डलान्यभिधावन्ति तदद्भुतमिवाभवत्।
अमर्षवशमापन्नः सौमित्रिर्दृढविक्रमः ॥ २९ ॥
प्रत्यविध्यद्धयांस्तस्य शरैर्वित्रासयन् रणे।
अमर्षमाणस्तत्कर्म रावणस्य सुतो रणे ॥ ३० ॥
विव्याध दशभिर्बाणैः सौमित्रिं रोमहर्षणम्।
ते तस्य वज्रप्रतिमाः शराः सर्वविषोपमाः।
विलयं जग्मुरागत्य कवचं काञ्चनप्रभम् ॥ ३१ ॥
अभेद्यकवचं मत्वा लक्ष्मणं रावणात्मजः।

असक्तम् अविरतम् ॥ २६ ॥

रथसत्तमो लक्ष्मणः ॥ २७ ॥

असूता असारथयः। अविक्लवा अनाकुलाः ॥ २८ ॥ २९ ॥ ३० ॥

कवचमागत्य प्राप्य विलयं जग्मुः। पूर्वकवचस्य विशरणेऽपि कवचान्तरं धृतमित्यवगम्यते ॥ ३१ ॥

ललाटे लक्ष्मणं बाणैः सुपुङ्खैस्त्रिभिरिन्द्रजित् ॥ २२ ॥

अविध्यत् परमक्रुद्धः शीघ्रमस्त्रं प्रदर्शयन्।
तैः पृषत्कैर्ललाटस्थैः शुशुभे रघुनन्दनः ॥ २३ ॥

रणाग्रे समरश्लाघी त्रिशृङ्ग इव पर्वतः।
स तथाप्यर्दितो बाणै राक्षसेन तदा मृधे ॥ २४ ॥

तमाशु प्रतिविव्याध लक्ष्मणः पञ्चभिः शरैः।
विकृष्येन्द्रजितो युद्धे वदने शुभकुण्डले ॥ २५ ॥

लक्ष्मणेन्द्रजितौ वीरौ महाबलशरासनौ।
अन्योऽन्यं जघ्नतुर्वीरौ विशिखैर्भीमविक्रमौ ॥ २६ ॥

ततः शोणितदिग्धाङ्गौ लक्ष्मणेन्द्रजितावुभौ।
रणे तौ रेजतुर्वीरौ पुष्पिताविव किंशुकौ ॥ २७ ॥

तौ परस्परमभ्येत्य सर्वगात्रेषु धन्विनौ।
घोरैर्विव्यधतुर्बाणैः कृतभावावुभौ जये ॥ २८ ॥

ततः समरकोपेन संयुतो रावणात्मजः।
विभीषणं त्रिभिर्बाणैर्विव्याध वदने शुभे ॥ २९ ॥

एवं दर्शनात्तमभेद्यकवचं मत्वा कवचरहिते स्थाने ललाटे अवि॰ध्यत् ॥ २२ ॥ २३ ॥ २४ ॥

शरासनं विकृष्येन्द्रजितो वदने शरैर्विव्याधेति सम्बन्धः ॥ २५ ॥

विशिखैर्विशिष्टशिखैः शितैर्बाणैरिति यावत् ॥ २६ ॥ २७ ॥

अयोमुखैस्त्रिभिर्विध्वा राक्षसेन्द्रं विभीषणम्।
एकैकानभिविव्याध तान् सर्वान् हरियूथपान्॥ ४०॥
तस्मै दृढ़तरं क्रुद्धो जघान गदया हयान्।
विभीषणो महातेजा रावणेः स दुरात्मनः॥ ४१॥
स हताश्वादवप्लुत्य रथान्मथितसारथिः।
अथ शक्तिं महातेजाः पितृव्याय मुमोच ह॥ ४२॥
तामापतन्तीं सम्प्रेक्ष्य सुमित्रानन्दवर्धनः।
चिच्छेद निशितैर्बाणैर्दशधापातयद्भुवि॥ ४३॥
तस्मै दृढ़धनुः क्रुद्धो हताश्वाय विभीषणः।
वज्रस्पर्शसमान् पञ्च ससर्जोरसि मार्गणान्॥ ४४॥
ते तस्य कायं भित्वा तु रुक्मपुङ्खा निमित्तगाः।
बभूवुर्लोहिता दिग्धा रक्ता इव महोरगाः॥ ४५॥
स पितृव्यस्य संक्रुद्ध इन्द्रजिच्छरमाददे।
उत्तमं रक्षसां मध्ये यमदत्तं महाबलम्॥ ४६॥
तं समीक्ष्य महातेजा महेषुं तेन सन्धितम्।

जग्‍ध ज्ञातभावैः ज्ञाताभिप्रायैः॥ ३८॥ ३९॥ ४०॥ ४१॥ ४२॥
दशधा चिच्छेद भुवि अपातयच्च॥ ४३॥ ४४॥
निमित्तगाः लक्ष्यगाः। वेध्यं लक्ष्यं शरव्यञ्च निमित्तञ्चेति कथ्यते।
लोहितं रुधिरम्॥ ४५॥ ४६॥

लक्ष्मणोऽप्याददे बाणमन्यद्भीमपराक्रमः॥ ४७॥
कुबेरेण स्वयं स्वप्ने यद्दत्तममितात्मना।
दुर्जयं दुर्विषह्यञ्च सेन्द्रैरपि सुरासुरैः॥ ४८॥
तयोस्तु धनुषी श्रेष्ठे बाहुभिः परिघोपमैः।
विकृष्यमाणे बलवत्क्रौञ्चाविव चुकूजतुः॥ ४९॥
ताभ्यान्तु धनुषि श्रेष्ठे संहितौ सायकोत्तमौ।
विकृष्यमाणौ वीराभ्यां भृशं जज्वलतुः श्रिया॥ ५०॥
तौ भासयन्तावाकाशं धनुर्भ्यां विशिखौ च्युतौ।
मुखेन मुखमाहत्य सन्निपेततुरोजसा॥ ५१॥
सन्निपातस्तयोश्चासीच्छरयोर्घोररूपयोः।
सधूमविस्फुलिङ्गश्च तज्जोऽग्निर्दारुणोऽभवत्॥ ५२॥
तौ महाग्रहसङ्काशावन्योऽन्यं सन्निपत्य च।
संग्रामे शतधा यातौ मेदिन्याञ्चैव पेततुः॥ ५३॥
शरौ प्रतिहतौ दृष्ट्वा तावुभौ रणमूर्धनि।

बाणशब्दोर्धर्चादिः॥ ४७॥
अमितात्मना अपरिच्छिन्नमाहात्म्येन॥ ४८॥ ४९॥
संहितौ योजितौ॥ ५०॥
सन्निपेततुः सङ्घर्षं प्रापतुः॥ ५१॥
बाणसन्निपाताज्जातस्तज्जः॥ ५२॥
महाग्रहोऽङ्गारकशन्यादिः॥ ५३॥

व्रीड़ितौ जातरोषौ च लक्ष्मणेन्द्रजितौ तदा ॥ ५४ ॥
सुसंरब्धस्तु सौमित्रिरस्त्रं वारुणमाददे ।
रौद्रं महेन्द्रजिद्युद्धेऽप्यसृजद्युद्धविष्ठितः ॥ ५५ ॥
तेन तद्विहतं शस्त्रं वारुणं परमाद्भुतम् ।
ततः क्रुद्धो महातेजा इन्द्रजित् समितिञ्जयः ।
आग्नेयं सन्दधे दीप्तं स लोकं सङ्क्षिपन्निव ॥ ५६ ॥
सौर्य्येणास्त्रेण तं वीरो लक्ष्मणः पर्य्यवारयत् ।
अस्त्रं निवारितं दृष्ट्वा रावणिः क्रोधमूर्च्छितः ॥ ५७ ॥
आददे निशितं बाणमासुरं शत्रुदारणम् ।
तस्माच्चापाद्विनिष्पेतुर्भास्वराः कूटमुद्गराः ॥ ५८ ॥
शूलानि च भुशुण्ड्यश्च गदाः खड्गाः परश्वधाः ।
तत् दृष्ट्वा लक्ष्मणः संख्ये घोरमस्त्रं सुदारुणम् ॥ ५९ ॥

व्रीड़ितौ स्वस्वप्रयुक्तशरस्य मोघत्वदर्शनेन सञ्जातलज्जौ। यद्यपि रावणेरेव व्रीड़ा युक्ता लक्ष्मणस्य तु तद्बाणनिवारणाय प्रयोक्तुः सार्थक्यसत्त्वेन व्रीड़ाभावस्तथापि तन्निराकरणपूर्वकं रिपुवधपर्य्यन्त-व्यापारेणोपादानात् तदभावेन तस्यापि लज्जेति बोध्यम्। छत्रिन्यायेन द्विवचनप्रयोग इति कतकः। जातरोषौ रामाविषये विभीषणे बाणः प्रयुक्त इति लक्ष्मणस्य रोषः। लक्ष्मणस्तं परिहृतवानिति रावणे रोषः ॥ ५४ ॥ ५५ ॥

लोकं सङ्क्षिपन्निव संहरन्निव ॥ ५६ ॥

अवार्य्यं सर्व्वभूतानां सर्व्वशस्त्रविदारणम् ।
माहेश्वरेण द्युतिमांस्तदस्त्रं प्रत्यवारयत् ॥ ६० ॥
तयोः समभवद्युद्धमद्भुतं रोमहर्षणम् ।
गगनस्थानि भूतानि लक्ष्मणं पर्य्यवारयन् ॥ ६१ ॥
भैरवाभिरुते भीमे युद्धे वानररक्षसाम् ।
भूतैर्बहुभिराकाशं विस्मितैरावृतं बभौ ॥ ६२ ॥
ऋषयः पितरो देवा गन्धर्व्वगरुडोरगाः ।
शतक्रतुं पुरस्कृत्य ररक्षुर्लक्ष्मणं रणे ॥ ६३ ॥
अथान्यं मार्गणश्रेष्ठं सन्दधे राघवानुजः ।
हुताशनसमस्पर्शं रावणात्मजदारणम् ॥ ६४ ॥
सुपक्षमनुवृत्ताङ्गं सुपर्व्वाणं सुसंस्थितम् ।
सुवर्णविकृतं वीरः शरीरान्तकरं शरम् ॥ ६५ ॥

अस्त्रं निवारितमिति पाठे अस्त्रशब्दोऽस्त्रपर्य्यायः ॥ ५७ ॥ ५८ ॥ ॥ ५९ ॥ ६० ॥ ६१ ॥

भैरवमभिरुतं यस्मिंस्तादृशे । भूतैः प्राणिभिः ॥ ६२ ॥ ६३ ॥

सन्निहितैतदस्त्रेणैवायं वध्य इति निश्चित्येन्द्रास्त्रं सन्दधे इत्याह,— अथेति । अत्र प्रत्यस्त्रं रावणेर्ब्रह्मशापवशान्न बुद्ध्यारूढम् । वस्तुतोऽस्य प्रत्यस्त्रं नास्त्येवेति कतकः ॥ ६४ ॥

अनुवृत्ताङ्गम् आनुपूर्व्यात्तनुत्ववद्वृत्तत्वगुणयुक्तमङ्गं यस्य । सुसंस्थितं शोभनसंस्थानम् । सुवर्णविकृतं स्वर्णभूषितम् ॥ ६५ ॥

दुरावारं दुर्विषमं राक्षसानां भयावहम् ।
आशीविषविषप्रख्यं देवसङ्घैः समर्च्चितम् ॥ ६६ ॥
येन शक्रो महातेजा दानवानजयत् प्रभुः ।
पुरा देवासुरे युद्धे वीर्य्यवान् हरिवाहनः ॥ ६७ ॥
अथैन्द्रमस्त्रं सौमित्रिः संयुगेष्वपराजितम् ।
शरश्रेष्ठं धनुःश्रेष्ठे विकर्षन्निदमब्रवीत् ॥ ६८ ॥
लक्ष्मीवान् लक्ष्मणो वाक्यमर्थसाधकमात्मनः ।
धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि ।
पौरुषे चाप्रतिद्वन्द्वस्तदैनं जहि रावणिम् ॥ ६९ ॥
इत्युक्त्वा बाणमाकर्णं विकृष्य तमजिह्मगम् ।
लक्ष्मणः समरे वीरः ससर्जैन्द्रजितम्प्रति ॥ ७० ॥
ऐन्द्रास्त्रेण समायुज्य लक्ष्मणः परवीरहा ॥ ७१ ॥
तच्छिरः सशिरस्त्राणं श्रीमज्ज्वलितकुण्डलम् ।
प्रमथ्येन्द्रजितः कायात् पातयामास भूतले ॥ ७२ ॥

दुरावारम् अस्त्रान्तरैर्वारयितुमशक्यम् । आशीविषत्वगुणकं यद्विषं महासर्पस्तत्प्रख्यं तत्सदृशम् । देवसङ्घैः समर्च्चितं पूजितं देवराजीयत्वादेव ॥ ६६ ॥ ६७ ॥ ६८ ॥

अर्थसाधनम् आत्मनः कार्य्यसिद्धिहेतुभूतमिदं वक्ष्यमाणवचनमस्त्राधिष्ठात्रीं देवतां प्रत्यब्रवीत् ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥

तद्राक्षसतनूजस्य भिन्नस्कन्धं शिरो महत्।
तपनीयनिभं भूमौ ददृशे रुधिरोक्षितम्॥ ७३॥
हतः स निपपाताथ धरण्यां रावणात्मजः।
कवची सशिरस्त्राणो विप्रविद्धशरासनः॥ ७४॥
चुक्रुशुस्ते ततः सर्वे वानराः सविभीषणाः।
हृष्यन्तो निहते तस्मिन् देवा वृत्रबधे यथा॥ ७५॥
अथान्तरिक्षे भूतानामृषीणाञ्च महात्मनाम्।
जज्ञेऽथ जयसन्नादो गन्धर्वाप्सरसामपि॥ ७६॥
पतितं समभिज्ञाय राक्षसी सा महाचमूः।
वध्यमाना दिशो भेजे हरिभिर्जितकाशिभिः॥ ७७॥
वानरैर्वध्यमानास्ते शस्त्राण्युत्सृज्य राक्षसाः।
लङ्कामभिमुखाः सस्रुर्भ्रष्टसंज्ञाः प्रधाविताः॥ ७८॥
दुद्रुवुर्बहुधा भीता राक्षसाः शतशो दिशः।
त्यक्त्वा प्रहरणान् सर्वे पट्टिशासिपरश्वधान्॥ ७९॥
केचिल्लङ्कां परित्रस्ताः प्रविष्टा वानरार्दिताः।
समुद्रे पतिताः केचित् केचित् पर्वतमाश्रिताः॥ ८०॥
हतमिन्द्रजितं दृष्ट्वा शयानञ्च रणक्षितौ।

तपनीयनिभत्वे उपपत्तिः रुधिरोक्षितमिति॥ ७३॥ ७४॥ ७५॥
॥ ७६॥ ७७॥ ७८॥ ७९॥ ८०॥

राक्षसानां सहस्रेषु न कश्चित् प्रत्यदृश्यत ॥ ८१ ॥
यथास्तङ्गत आदित्ये नावतिष्ठन्ति रश्मय: ।
तथा तस्मिन्निपतिते राक्षसास्ते गता दिश: ॥ ८२ ॥
शान्तरश्मिरिवादित्यो निर्वाण इव पावक: ।
बभूव स महाबाहुर्व्यपास्तगतजीवित: ॥ ८३ ॥
प्रशान्तपीड़ाबहुलो विनष्टारि: प्रहर्षवान् ।
बभूव लोक: पतिते राक्षसेन्द्रसुते तदा ॥ ८४ ॥
हर्षञ्च शक्रो भगवान् सह सर्वैर्महर्षिभि: ।
जगाम निहते तस्मिन् राक्षसे पापकर्मणि ॥ ८५ ॥
आकाशे चापि देवानां शुश्रुवे दुन्दुभिस्वन: ।
नृत्यद्भिरप्सरोभिश्च गन्धर्वैश्च महात्मभि: ॥ ८६ ॥
ववर्षु: पुष्पवर्षाणि तदद्भुतमिवाभवत् ।
प्रशशाम हते तस्मिन् राक्षसे क्रूरकर्मणि ॥ ८७ ॥
शुद्धा आपो नभश्चैव जहृषुर्देवदानवा: ।
आजग्मु: पतिते तस्मिन् सर्वलोकभयावहे ॥ ८८
ऊचुश्च सहितास्तुष्टा देवगन्धर्वदानवा: ।

व्यपास्तो विशेषधर्मैरेतएव गतजीवित: ॥ ८१ ॥ ८२ ॥ ८३ ॥
प्रशान्तपीड़ाबहुल: प्रशान्तबहुलपीड़: ॥ ८४ ॥ ८५ ॥ ८६ ॥
प्रशशाम रज इति शेष: ॥ ८७ ॥

विज्वराः शान्तकलुषा ब्राह्मणा विचरन्त्विति ॥ ८९ ॥
ततोऽभ्यनन्दन् संहृष्टाः समरे हरियूथपाः ।
तमप्रतिबलं दृष्ट्वा हतं नैर्ऋतपुङ्गवम् ॥ ९० ॥
विभीषणो हनूमांश्च जाम्बवांश्चर्क्षयूथपः ।
विजयेनाभिनन्दन्तस्तुष्टुवुश्चापि लक्ष्मणम् ॥ ९१ ॥
क्ष्वेडन्तश्च प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
लब्धलक्षा रघुसुतं परिवार्य्योपतस्थिरे ॥ ९२ ॥
लाङ्गूलानि प्रविध्यन्तः स्फोटयन्तश्च वानराः ।
लक्ष्मणो जयतीत्येव वाक्यं विश्रावयंस्तदा ॥ ९३ ॥
अन्योऽन्यञ्च समाश्लिष्य हरयो हृष्टमानसाः ।
चक्रुरुच्चावचगुणा राघवाश्रयसत्कथाः ॥ ९४ ॥
तदसुकरमथाभिवीक्ष्य हृष्टाः
प्रियसुहृदो युधि लक्ष्मणस्य कर्म ।

आपः शुद्धाः । प्रसन्नादेवदानवाः । दानवानामपि तच्छ्रुत्वा-स्तेषामपि हर्षः । आजग्मुरिति देवदानवा इत्यनुकर्षः ॥ ८८ ॥ ८९ ॥ ॥ ९० ॥ ९१ ॥

लब्धलक्षाः प्राप्तहर्षावसराः । रलयोरभेदात् प्राप्तरक्षा इत्यपि । रघुसुतं रघुवंशजम् ॥ ९२ ॥

विश्राव्ययन् श्रावयन् ॥ ९३ ॥ ९४ ॥

परममुपलभन् मनःप्रहर्षं
विनिहतमिन्द्ररिपुं निशम्य देवाः ॥ ९५ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
एकनवतितमः सर्गः ॥ ९१ ॥

उपलभन् उपालभन् ॥ ९५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे एकनवतितमः सर्गः ॥ ९१ ॥

---

## द्विनवतितमः सर्गः ।



रुधिरक्लिन्नगात्रस्तु लक्ष्मणः शुभलक्षणः ।
बभूव हृष्टस्तं हत्वा शत्रुजेतारमाहवे ॥ १ ॥
ततः स जाम्बवन्तञ्च हनूमन्तञ्च वीर्य्यवान् ।
सन्निपत्य महातेजास्तांश्च सर्वान् वनौकसः ॥ २ ॥
आजगाम ततः शीघ्रं यत्र सुग्रीवराघवौ ।
विभीषणमवष्टभ्य हनूमन्तञ्च लक्ष्मणः ॥ ३ ॥
ततो राममभिक्रम्य सौमित्रिरभिवाद्य च ।
तस्थौ भ्रातृसमीपस्थः शक्रस्येन्द्रानुजो यथा ॥ ४ ॥
निष्टनन्निव चागत्य राघवाय महात्मने ।

रुधिरेति ॥ १ ॥

सन्निपत्य संगत्य ॥ २ ॥

युद्धश्रमजपीड़ावशादिभीषणं हनूमन्तञ्चावष्टभ्य अवलम्ब्येत्यर्थः ॥ ३ ॥

अभिक्रम्य प्रदक्षिणीकृत्य । शक्रस्येन्द्रानुजो यथा यथोपेन्द्र इन्द्रसमीपे तिष्ठति तद्वत् । इन्द्रस्येव बृहस्पतिरिति पाठे गुणप्रधानभावेनावस्थानमात्रे दृष्टान्त इत्यर्थः ॥ ४ ॥

आचचक्षे तदा वीरो घोरमिन्द्रजितो वधम् ॥ ५ ॥
रावणेस्तु शिरश्छिन्नं लक्ष्मणेन महात्मना ।
न्यवेदयत रामाय तदा हृष्टो विभीषणः ॥ ६ ॥
श्रुत्वैव तु महावीर्य्यो लक्ष्मणेनेन्द्रजिद्वधम् ।
प्रहर्षमतुलं लेभे वाक्यञ्चेदमुवाच ह ॥ ७ ॥
साधु लक्ष्मण ! तुष्टोऽस्मि कर्म चासुकरं कृतम् ।
रावणेर्हि विनाशेन जितमित्युपधारय ॥ ८ ॥
स तं शिरस्युपाघ्राय लक्ष्मणं कीर्त्तिवर्धनम् ।
लज्जमानं बलात् स्नेहादङ्कमारोप्य वीर्य्यवान् ॥ ९ ॥
उपवेश्य तमुत्सङ्गे परिष्वज्यातिपीडितम् ।
भ्रातरं लक्ष्मणं स्निग्धं पुनः पुनरुदैक्षत ॥ १० ॥

निघ्नन्निति। विभीषण इत्याकर्षः। हृष्टो विभीषणः सन्तुष्टा-गमनेनैवेन्द्रजिद्वधं निघ्नन् बोधयन्निव निकटमागत्य राघवाय सामा-न्यत इन्द्रजिद्वधमाचचक्षे ॥ ५ ॥

ततः किं कर्त्तृको वध इत्याकाङ्क्षायामाह,—रावणेरिति। छिन्न-मिति न्यवेदयत् ॥ ६ ॥ ७ ॥

जितमित्युपधारय। इदानीमेवास्माभिरिति शेषः ॥ ८ ॥

लज्जमानं भ्रातुःसन्निधौ एवं कृतमिति वक्तुं लज्जयायुतम्। क्रिया बाहुल्याच्चैतेषु श्लोकेषु पुनः पुनः कर्मपदप्रयोगः। अङ्कमारोप्य अङ्के उपवेशनायाकृष्य ॥ ९ ॥

शल्यसम्पीड़ितं शस्तं निःश्वसन्तन्तु लक्ष्मणम् ।
रामस्तु दुःखसन्तप्तस्तन्तु निःश्वासपीड़ितम् ॥ ११ ॥
मूर्ध्नि चैनमुपाघ्राय भूयः संस्पृश्य च त्वरन् ।
उवाच लक्ष्मणं वाक्यमाश्वास्य पुरुषर्षभः ॥ १२ ॥
कृतं परमकल्याणं कर्म दुष्करकर्मणा ।
अद्य मन्ये हते पुत्रे रावणं निहतं युधि ॥ १३ ॥
अद्याहं विजयी शत्रौ हते तस्मिन् दुरात्मनि ।
रावणस्य नृशंसस्य दिष्ट्या वीर ! त्वया रणे ॥ १४ ॥
छिन्नो हि दक्षिणो बाहुः स हि तस्य व्यपाश्रयः ।
विभीषणहनूमद्भ्यां कृतं कर्म महद्रणे ॥ १५ ॥
अहोरात्रैस्त्रिभिर्वीरः कथञ्चिद्विनिपातितः ।
निरमित्रः कृतोऽस्म्यद्य निर्य्यास्यति हि रावणः ॥ १६

अवपीड़ितं शस्त्रव्रणैरिति शेषः। यद्वावपीड़ितं गाढ़मालिङ्ग्य ॥ १० ॥

शस्तं क्षतगात्रम् ॥ ११ ॥ १२ ॥

दुष्करकर्मणा इतरदुष्करपौरुषेण। त्वयेति शेषः। पुत्रे हते रावणमद्य हतमेव मन्ये। तदधस्येषत्करत्वादिति भावः ॥ १३ ॥ १४ ॥

व्यपाश्रयः अवलम्बनभूतः। एवं लक्ष्मणमाश्वास्य विभीषणादीनप्याश्वासयति। विभीषणेति ॥ १५ ॥

बलव्यूहेन महता निर्य्यास्यति हि रावणः।
बलव्यूहेन महता श्रुत्वा पुत्रं निपातितम्॥ १७॥
तं पुत्रवधसन्तप्तं निर्य्यान्तं राक्षसाधिपम्।
बलेनावृत्य महता निहनिष्यामि दुर्जयम्॥ १८॥
त्वया लक्ष्मण! नाथेन सीता च पृथिवी च मे।
न दुष्प्रापा हते तस्मिन् शक्रजेतरि चाहवे॥ १९॥
स तं भ्रातरमाश्वास्य परिष्वज्य च राघवः।
रामः सुषेणं मुदितः समाभाष्येदमब्रवीत्॥ २०॥
विशल्योऽयं महाप्राज्ञः सौमित्रिर्मित्रवत्सलः।
यथा भवति सुस्थस्तथा त्वं समुदाचर॥ २१॥
विशल्यः क्रियतां क्षिप्रं सौमित्रिर्मित्रवत्सलः।

अहो रात्रैस्त्रिभिरिति। दशम्याश्चतुर्थप्रहरे आरम्भात् त्रयो-दश्याश्चतुर्थप्रहरे वधादिति भावः। अद्य निरमित्रः कृतोऽस्मि। कथं रावणे जीवति निरमित्रत्वं तत्राह,—निर्य्यास्यतीति। अवश्यं निर्य्या-स्यति॥ १६॥ १७॥

निर्य्यान्तञ्च तं महता बलेन सहबलेनावृत्याक्रम्य निहनि-ष्यामि॥ १८॥

हे लक्ष्मण। नाथेन। उपलालनार्थं नाथशब्दप्रयोगः॥ १९॥

समाभाष्य सुषेण त्येवं सम्बोध्य॥ २०॥

ऋचवानरसैन्यानां शूराणां द्रुमयोधिनाम् ॥ २२ ॥
ये चाप्यन्येऽत्र युध्यन्ति सशल्या व्रणिनस्तथा ।
तेऽपि सर्वे प्रयत्नेन क्रियतां सुखिनस्तथा ॥ २३ ॥
एवमुक्तः स रामेण महात्मा हरियूथपः ।
लक्ष्मणाय ददौ नस्तः सुषेणः परमौषधम् ॥ २४ ॥
स तस्य गन्धमाघ्राय विशल्यः समपद्यत ।
तदानिर्वेदनश्चैव संरूढ़प्राण एव च ॥ २५ ॥
विभीषणमुखानाञ्च सुहृदां राघवाज्ञया ।
सर्ववानरमुख्यानां चिकित्सामकरोत्तदा ॥ २६ ॥
ततः प्रकृतिमापन्नो हृतशल्यो गतक्लमः ।
सौमित्रिर्मुमुदे तत्र क्षणेन विगतज्वरः ॥ २७ ॥
तदैव रामः प्लवगाधिपस्तथा
विभीषणश्चर्क्षपतिश्च वीर्य्यवान् ।
अवेक्ष्य सौमित्रिमरोगमुत्थितं
मुदा ससैन्याः सुचिरं जहर्षिरे ॥ २८ ॥

विशल्य इति । ओषधिपर्वतानयनोत्तरमोषध्यः सुषेणेन संगृह्य स्थापिता इत्यनेन ज्ञायते ॥ २१ ॥ २२ ॥

ये वानराः सशल्या व्रणिनश्च तेऽपि विशल्याः प्ररूढ़व्रणाश्च कार्य्याः ॥ २३ ॥

अपूजयत्कर्म स लक्ष्मणस्य
सुदुष्करं दाशरथिर्महात्मा।
बभूव हृष्टो युधि वानरेन्द्रो
निशम्य तं शक्रजितं निपातितम्॥ २९॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
द्विनवतितमः सर्गः॥ ९२॥

नष्टः मालिकायाम्। २४॥ २५॥ २६॥ २७। २८॥ २९।

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे द्विनवतितमः सर्गः॥ ९२॥

---

## त्रिनवतितमः सर्गः ।

ततः पौलस्त्यसचिवाः श्रुत्वा चेन्द्रजितो वधम् ।
आचचक्षुरविज्ञाय दशग्रीवाय सत्वराः ॥ १ ॥
युद्धे हतो महाराज ! लक्ष्मणेन तवात्मजः ।
विभीषणसहायेन मिषतां नो महाद्युतिः ॥ २ ॥
शूरः शूरेण सङ्गम्य संयुगेष्वपराजितः ।
लक्ष्मणेन हतः शूरः पुत्रस्ते विबुधेन्द्रजित् ॥ ३ ॥
गतः स परमान् लोकान् शरैः सन्तर्प्य लक्ष्मणम् ।
स तं प्रतिभयं श्रुत्वा वधं पुत्रस्य दारुणम् ॥ ४ ॥

अथ रावणवृत्तान्तमाह,—तत इत्यादि । सचिवा अवशिष्टमुपार्श्वादिमन्त्रिणः । अविज्ञाय अविच्छिन्नाभिज्ञानं यस्य तस्मै । पुत्रवधवृत्तान्तज्ञानरहितायेत्यर्थः । तीर्थस्तु अविज्ञाय अभिज्ञाय दृष्ट्वा । पूर्वं श्रुत्वा पश्चाद्युद्धभूमिं गत्वा प्रत्यक्षीकृत्याचचक्षुरित्यर्थमाह ॥ १ ॥

मिषतां न इति । येऽङ्गराक्षसैर्दर्शनाच्छ्विन्यायेन बोध्यम् । मिषतोऽस्मानित्यर्थः ॥ २ ॥

विबुधान् देवानिन्द्रञ्च जयतीति विबुधेन्द्रजित् ॥ ३ ॥

घोरमिन्द्रजित: संख्ये कश्मलं प्राविशन् महत् ।
उपलभ्य चिरात् संज्ञां राजा राक्षसपुङ्गव: ॥ ५ ॥
पुत्रशोकाकुलो दीनो विललापाकुलेन्द्रिय: ।
हा राक्षस चमूमुख्य ! मम वत्स महाबल ! ॥ ६ ॥
जित्वेन्द्रं कथमद्य त्वं लक्ष्मणस्य वशं गत: ।
ननु त्वमिषुभि: क्रुद्धो भिन्द्या: कालान्तकावपि ॥ ७ ॥
मन्दरस्यापि शृङ्गाणि किं पुनर्लक्ष्मणं युधि ।
अद्य वैवस्वतो राजा भूयो बहुमतो मम ॥ ८ ॥
येनाद्य त्वं महाबाहो ! संयुक्त: कालधर्मणा ।
एष पन्था: सुयोधानां सर्वामरगणेष्वपि ।
य: कृते हन्यते भर्तु: स पुमान् स्वर्गमृच्छति ॥ ९ ॥
अद्य देवगणा: सर्वे लोकपाला महर्षय: ।
हतमिन्द्रजितं दृष्ट्वा सुखं स्वप्स्यन्ति निर्भया: ॥ १० ॥

परमान् लोकान् वीरप्राप्यानिति भाव:। दारुणं शोकजनकत्वात्। प्रतिभयम् अतिभयङ्करम् ॥ ४ ॥

घोरं तीक्ष्णाम्। कश्मलं मूर्च्छाम् ॥ ५ ॥ ६ ॥

कालान्तकौ। काल: सर्वसंहारक:। अन्तकस्तदधिकृत: ॥ ७ ॥

भूयो बहुमत: मयात्यन्तश्लाघनीय: ॥ ८ ॥

येन वैवस्वतेन त्वं कालधर्मणा कालधर्मेण संयुक्त: संयोजित:। यो भर्तु: कृते हन्यते स पुमान् स्वर्गं गच्छति। एष पन्था: सुयोधानां

अद्य लोकास्त्रयः कृत्स्ना पृथिवी च सकानना ।
एकेनेन्द्रजिता हीना शून्येव प्रतिभाति मे ॥ ११ ॥
अद्य नैर्ऋतकन्यानां श्रोष्याम्यन्तःपुरे रवम् ।
करेणुसङ्घस्य यथा निनादं गिरिगह्वरे ॥ १२ ॥
यौवराज्यञ्च लङ्काञ्च रक्षांसि च परन्तप ! ।
मातरं माञ्च भार्य्याञ्च क्व गतोऽसि विहाय नः ॥ १३ ॥
मम नाम त्वया वीर ! गतस्य यमसादनम् ।
प्रेतकार्य्याणि कार्य्याणि विपरीते हि वर्त्तसे ॥ १४ ॥
स त्वं जीवति सुग्रीवे लक्ष्मणे च राघवे ।
मम शल्यमनुद्धृत्य क्व गतोऽसि विहाय नः ॥ १५ ॥

नरराक्षसोऽसुरवानरयोधानाम् । न केवलमेतेष्वेव किन्तु देवादिगणे-ष्वपीत्याह,—सर्वामरेति । एवं युद्धमरणस्य सकलशूरजनाकाङ्क्षित-तया युद्धहतं त्वां न शोचामीति भावः ॥ ९ ॥ १० ॥

त्रयो लोकाः पातालान्तरिक्षस्वर्गाः । पृथिव्याः पृथगुक्तेः । सका-नना निर्भयेत्यनुकर्षः । किञ्च ममैकेनेन्द्रजिता शून्या सर्वा पृथिवी-शून्येव भाति ॥ ११ ॥

रवं रोदनजम् ॥ १२ ॥ १३ ॥

नामेति प्रसिद्धौ । मम त्वया प्रेतकार्य्याणि कर्त्तुं योग्यानि । त्वन्तु विपरीते वर्त्तसे । यतस्त्वदीयानि मया कर्त्तव्यानि भविष्यन्ति ॥ ॥ १४ ॥ १५ ॥

एवमादिर्विलापार्त्तं रावणं राक्षसाधिपम्।
आविवेश महान् कोपः पुत्रव्यसनसम्भवः॥ १६॥
प्रकृत्या कोपनं ह्येनं पुत्रस्य पुनराधयः।
दीप्तं सन्दीपयामासुर्घर्मेऽर्कमिव रश्मयः॥ १७॥
कोपाद्विजृम्भमाणस्य वक्त्राद्व्यक्तमिव ज्वलन्।
उत्पपात स धूमाग्निर्वृत्रस्य वदनादिव॥ १८॥
स पुत्रवधसन्तप्तः शूरः क्रोधवशं गतः।
समीक्ष्य रावणो बुद्ध्या वैदेह्या रोचयद्वधम्॥ १९॥
तस्य प्रकृत्या रक्ते च रक्ते क्रोधाग्निनापि च।
रावणस्य महाघोरे दीप्ते नेत्रे बभूवतुः॥ २०॥
घोरं प्रकृत्या रूपन्तत्तस्य क्रोधाग्निमूर्च्छितम्।
बभूव रूपं क्रुद्धस्य रुद्रस्येव व्यवस्थितम्॥ २१॥
तस्य क्रुद्धस्य नेत्राभ्यां प्रापतन्नश्रुबिन्दवः।
दीपाभ्यामिव दीप्ताभ्यां सार्चिषः स्नेहबिन्दवः॥ २२॥

रावणश्च समाधिगमिति पाठे सम्यगाधिः समाधिर्मनोव्यथा तां गच्छतीत्यर्थः॥ १६॥

पुत्रस्याधयः पुत्रनाशजा आधयः। प्रकृत्या कोपनमतएव दीप्तं नित्यं कोपदीप्तं पुनश्चाधयो दीपयामासुः॥ १७॥ १८॥

बुद्ध्या समीक्ष्य वैदेही किल मे पुत्रवधमूलमित्यालोच्येत्यर्थः॥ १९॥ २०॥ २१॥ २२॥

दन्ताग्निदश्नतस्तस्य श्रूयते दशनस्वनः
यन्त्रस्याकृष्यमाणस्य मथ्नतो दानवैरिव ॥ २३ ॥
तमन्तकमिव क्रुद्धश्चराचरचिखादिषुम् ।
वीक्षमाणन्दिशः सर्वा राक्षसा नोपचक्रमुः ॥ २४ ॥
ततः परमसंक्रुद्धो रावणो राक्षसाधिपः ।
अब्रवीद्रक्षसां मध्ये संस्तम्भयिषुराहवे ॥ २५ ॥
मया वर्षसहस्राणि चरित्वा परमं तपः ।
तेषु तेष्ववकाशेषु स्वयम्भूः परितोषितः ॥ २६ ॥
तस्यैव तपसो व्युष्ट्या प्रसादाच्च स्वयम्भुवः ।
नासुरेभ्यो न देवेभ्यो भयं मम कदाचन ॥ २७ ॥
कवचं ब्रह्मदत्तं मे यदादित्यसमप्रभम् ।
देवासुरविमर्देषु न च्छिन्नं वज्रमुष्टिभिः ॥ २८ ॥

यन्त्रस्य मन्दरक्षपमथनयन्त्रस्य । वासुकिना करणेन दानवैः कृष्य-माणस्य मथ्नतः क्षीराब्धिमथनं कुर्वतो मन्दरस्येव ॥ २३ ॥

नोपचक्रमुः समीपं न प्रापुः ॥ २४ ॥

आहवे युद्धे । संस्तम्भयिषुः प्रतिष्ठापयितुमिच्छुः । राक्षसानिति शेषः । इत्वाभाव आर्षः ॥ २५ ॥

अवकाशेषु तत्तत्तपःसमाप्तिसमयेषु स्वायम्भुवस्थानविषयेषु वा ॥ २६ ॥

व्युष्ट्या फलोदयेन ॥ २७ ॥

तेन मामद्य संयुक्तं रथस्थमिह संयुगे।
प्रतीयात्कोऽद्य मामाजौ साक्षादपि पुरन्दरः॥ २९॥
यत्तदाभिप्रसन्नेन सशरं कार्मुकं महत्।
देवासुरविमर्देषु मम दत्तं स्वयम्भुवा॥ ३०॥
अद्य तूर्य्यशतैर्भीमं धनुरुत्थाप्यतां मम।
रामलक्ष्मणयोरेव वधाय परमाहवे॥ ३१॥
स पुत्रवधसन्तप्तः क्रूरः क्रोधवशं गतः।
समीक्ष्य रावणो बुद्ध्या सीतां हन्तुं व्यवस्यत॥ ३२॥
प्रत्यवेक्ष्य तु ताम्राक्षः सुघोरो घोरदर्शनः।
दीनो दीनस्वरान् सर्वांस्तानुवाच निशाचरान्॥ ३३॥
मायया मम वत्सेन वञ्चनार्थं वनौकसाम्।

भयाभावे हेतुमाह,—कवचमिति॥ २८॥

क्रुद्धोऽस्मिन्नद्य इत्यस्य पुनर्वचनं दोषाय। प्रतीयात् अभिमुखो भवेत्॥ २९॥

तदेत्यस्य व्याख्यानम्। देवासुरविमर्देष्विति। तद्विषयेऽभिप्रसन्नेन प्रीतेन यद्धनुर्दत्तम्॥ ३०॥

तदद्य तूर्य्यशतैरनेकमङ्गलवाद्यध्वनिभिः सह परं धनुर्ब्रह्मदत्तं धनुरुत्थाप्यताम् उद्ध्रियताम्। आहवे रामलक्ष्मणयोर्वधाय॥ ३१॥

व्यवस्यत व्यवास्यत। निश्चितवानित्यर्थः॥ ३२॥

सुघोरः घोरचित्तः॥ ३३॥

किञ्चिदेव हृतं तत्र सीतेयमिति दर्शितम् ॥ ३४ ॥
तदिदं तथ्यमेवाहं करिष्ये प्रियमात्मनः ।
वैदेहीं नाशयिष्यामि क्षत्रबन्धुमनुव्रताम् ।
इत्येवमुक्त्वा सचिवान् खड्गमाशु परामृशत् ॥ ३५ ॥
उद्धृत्य गुणसम्पन्नं विमलाम्बरवर्चसम् ।
निष्पपात स वेगेन सभार्य्यः सचिवैर्वृतः ॥ ३६ ॥
रावणः पुत्रशोकेन भृशमाकुलचेतनः ।
संक्रुद्धः खड्गमादाय सहसा यत्र मैथिली ॥ ३७ ॥
व्रजन्तं राक्षसं प्रेक्ष्य सिंहनादं विचुक्रुशुः ।
ऊचुश्चान्योऽन्यमालिङ्ग्य संक्रुद्धं प्रेक्ष्य राक्षसम् ॥ ३८ ॥
अद्यैनं तावुभौ दृष्ट्वा भ्रातरौ प्रव्यथिष्यतः ।

किञ्चिदेव हृतं तदेव हत्वा तत्र तस्मिन् काले इयं वास्तवसीताहृतेति मयैव दर्शितं तदिदं शत्रूणामप्रियकरं रूपं वस्तु आत्मनः प्रियं तथ्यमेव करिष्ये ॥ ३४ ॥

यदेवमतो वैदेहीमिति । क्षत्रबन्धुं वस्तुतोऽक्षत्रियम् ॥ ३५ ॥

विमलाम्बरवर्चसं निर्मलाकाशकान्ति ॥ ३६ ॥

यत्र मैथिली तत्र निष्पपात ॥ ३७ ॥

सिंहनादं विचुक्रुशुः । तद्रूपं क्रोशनं कृतवन्तः । सचिवा इति शेषः ॥ ३८ ॥

लोकपाला हि चत्वारः क्रुद्धेनानेन निर्जिताः।
बहवः शत्रवश्चान्ये संयुगेष्वभिपातिताः॥ ३९॥
त्रिषु लोकेषु रत्नानि भुङ्क्ते आहृत्य रावणः।
विक्रमे च बले चैव नास्त्यस्य सदृशो भुवि॥ ४०॥
तेषां सञ्जल्पमानानामशोकवनिकां गताम्।
अभिदुद्राव वैदेहीं रावणः क्रोधमूर्च्छितः॥ ४१॥
वार्य्यमाणः सुसंक्रुद्धः सुहृद्भिर्हितबुद्धिभिः।
अभ्यधावत संक्रुद्धः खे ग्रहो रोहिणीमिव॥ ४२॥
मैथिली रक्ष्यमाणा तु राक्षसीभिरनिन्दिता।
ददर्श राक्षसं क्रुद्धं निस्त्रिंशवरधारिणम्॥ ४३॥
तं निशम्य सनिस्त्रिंशं व्यथिता जनकात्मजा।
निवार्य्यमाणं बहुशः सुहृद्भिरनिवर्त्तिनम्॥ ४४॥
सीता दुःखसमाविष्टा विलपन्तीदमब्रवीत्।

तेषां सिंहनादप्रवृत्तौ कारणमाहाद्येनमिति॥ ३९॥

आहृत्य रत्नानि भुङ्क्ते॥ ४०॥

अशोकवनिकां गतां वैदेहीमभिदुद्राव॥ ४१॥

ग्रहः कुजादिः॥ ४२॥ ४३॥

निवार्य्यमाणमप्यनिवर्त्तिनम्। अनुवर्त्तिनमिति पाठेऽभिमुखमागच्छन्तम्॥ ४४॥

यथायं मामभिक्रुद्धः समभिद्रवति स्वयम्।
वधिष्यति सनाथां मामनाथामिव दुर्मतिः॥ ४५॥
बहुशश्चोदयामास भर्त्तारं मामनुव्रताम्।
भार्य्या मम भवस्वेति प्रत्याख्यातो ध्रुवं मया॥ ४६॥
सोऽयं मामनुपस्थाने व्यक्तं नैराश्यमागतः।
क्रोधमोहसमाविष्टो व्यक्तं मां हन्तुमुद्यतः॥ ४७॥
अथवा तौ नरव्याघ्रौ भ्रातरौ रामलक्ष्मणौ।
मन्निमित्तमनार्य्येण समरेऽद्य निपातितौ॥ ४८॥
भैरवो हि महान्नादो राक्षसानां श्रुतो मया।
बहूनामिह हृष्टानां तथा विक्रोशतां प्रियम्॥ ४९॥
अहो धिङ्मन्निमित्तोऽयं विनाशो राजपुत्रयोः।
अथवा पुत्रशोकेन अहत्वा रामलक्ष्मणौ॥ ५०॥
विधमिष्यति मां रौद्रो राक्षसः पापनिश्चयः।
हनूमतस्तु तद्वाक्यं न कृतं क्षुद्रया मया॥ ५१॥

यथा येन प्रकारेण अनुभूयमानोऽयं मामभिद्रवति॥ ४५॥
वधिष्यतीत्यत्र कारणमाह,—बहुश इति॥ ४६॥
अनुपस्थाने सति अनङ्गीकारे सति॥ ४७॥ ४८॥ ४९॥
रामलक्ष्मणावहत्वा तौ हन्तुमशक्नुवानेन॥ ५०॥
हनूमतस्तु तद्वाक्यं मत्पृष्ठमारोहेदानीमेव त्वां रामसमीपं नेष्या-

यद्यहं तस्य पृष्ठेन तदायास्यमनिर्जिता।
नाद्यैवमनुशोचेयं भर्त्तुरङ्कगता सती॥ ५२॥
मन्ये तु हृदयं तस्याः कौशल्यायाः फलिष्यति।
एकपुत्रा यदा पुत्रं विनष्टं श्रोष्यते युधि॥ ५३॥
सा हि जन्म च बाल्यञ्च यौवनञ्च महात्मनः।
धर्मकार्य्याणि रूपञ्च रुदन्ती संस्मरिष्यति॥ ५४॥
निराशा निहते पुत्रे दत्वा श्राद्धमचेतना।
अग्निमावेक्ष्यते नूनमपो वापि प्रवेक्ष्यति॥ ५५॥
धिगस्तु कुब्जामसतीं मन्थरां पापनिश्चयाम्।
यन्निमित्तमिमं शोकं कौशल्या प्रतिपत्स्यते॥ ५६॥
इत्येवं मैथिलीं दृष्ट्वा विलपन्तीं तपस्विनीम्।
रोहिणीमिव चन्द्रेण विना ग्रहवशङ्गताम्॥ ५७॥
एतस्मिन्नन्तरे तस्य अमात्यः शीलवान् शुचिः।

सीत्युक्तरूपम्। रामेणानिर्जितापि यदि तदाऽयास्यम् अयासिषम्। तदाद्यैवं नानुशोचेयम्॥ ५१॥ ५२॥

यदा श्रोष्यते तदा फलिष्यति स्फुटिष्यति। यदि रामोऽपि हन्यत इति शेषः। तदेनाह,—एकपुत्रेति॥ ५३॥ ५४॥ ५५॥ ५६॥

एवं विलपन्तीं चन्द्रेण विनाकृतां ग्रहवशङ्गतां रोहिणीमिव मैथिलीं दृष्ट्वा॥ ५७॥

सुपार्श्वो नाम मेधावी रावणं रक्षसां वरम् ।
निवार्य्यमाणः सचिवैरिदं वचनमब्रवीत् ॥ ५८ ॥
कथं नाम दशग्रीव ! साक्षाद्वैश्रवणानुज ! ।
हन्तुमिच्छसि वैदेहीं क्रोधाद्धर्ममपास्य च ॥ ५९ ॥
वेदविद्याव्रतस्नातः स्वकर्मनिरतस्तथा ।
स्त्रियः कस्माद्वधं वीर ! मन्यसे राक्षसेश्वर ! ॥ ६० ॥
मैथिलीं रूपसम्पन्नां प्रत्यवेक्षस्व पार्थिव ! ।
तस्मिन्नेव सहास्माभिराहवे क्रोधमुत्सृज ॥ ६१ ॥

सुपार्श्वो नामामात्यः शुचिः शुद्धव्रतस्तदितरसचिवैरेवं वक्तुमयोग्यमिति निवार्य्यमाणोऽपि रावणं प्रतीदमब्रवीत् । अस्यैवाविन्ध्य इति नामान्तरम् । अतएव भारते । अशोकवनिकास्थां तां रामदर्शनलालसाम् । खड्गमादाय दुष्टात्मा जवेनाभिपपात ह । तद्बुध्वा तस्य दुर्बुद्धेरविन्ध्यः पापनिश्चयम् । शमयामास संक्रुद्धं श्रूयतां येन हेतुनेत्युक्तम् ॥ ५८ ॥

वैश्रवणानुजेत्यनेन महाकुलप्रसूतत्वमुक्तम् ॥ ५९ ॥

धर्मापालनस्य तवायुक्तं धार्मिकत्वादेवेत्याह,—वेदेति । वेदविद्याग्रहापेक्षितब्रह्मचर्य्यव्रतपूर्वं विद्यां गृहीत्वा स्नातो गुरुकुलात् समावृत्तः । तदनन्तरं दारग्रहणपूर्वं नित्याग्निहोत्रादिस्वकर्मनिरतः ॥ ६० ॥

रूपसम्पन्नां मैथिलीं प्रत्यवेक्षस्व । रामवधपर्य्यन्तमिति शेषः । त्वं तस्मिन्नेव राघव एव क्रोधमुत्सृज ॥ ६१ ॥

अभ्युत्थानं त्वमद्यैव कृष्णपक्षचतुर्दशी।
कृत्वा निर्य्याह्यमावास्यां विजयाय बलैर्वृतः॥ ६२॥
शूरो धीमान् रथी खड्गी रथप्रवरमास्थितः।
हत्वा दाशरथिं भीमं भवान् प्राप्स्यति मैथिलीम्॥ ६३॥
स तद्दुरात्मा सुहृदा निवेदितं
वचः सुधर्म्यं प्रतिगृह्य रावणः।
गृहं जगामाथ ततश्च वीर्य्यवान्
पुनः सभाञ्च प्रययौ सुहृद्वृतः॥ ६४॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
त्रिनवतितमः सर्गः॥ ९३॥

अद्य कृष्णपक्षचतुर्दशी तस्यामभ्युत्थानं समरोद्योगं कृत्वा अमावास्यायां विजयाय निर्य्याहि प्रस्थानं कुरु॥ ६२॥ ६३॥ ६४॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे द्विनवतितमः सर्गः॥ ९३॥

---

## चतुर्नवतितमः सर्गः।

स प्रविश्य सभां राजा दीनः परमदुःखितः।
निषसादासने मुख्ये सिंहः क्रुद्ध इव श्वसन् ॥ १ ॥
अब्रवीच्च स तान् सर्वान् बलमुख्यान् महाबलः।
रावणः प्राञ्जलिर्वाक्यं पुत्रव्यसनकर्शितः ॥ २ ॥
सर्वे भवन्तः सर्वेण हस्त्यश्वेन समावृताः।
निर्यात रथसङ्घैश्च हस्त्यश्वोपशोभिताः ॥ ३ ॥
एकं रामं परिक्षिप्य समरे हन्तुमर्हथ।
प्रहृष्टाः शरवर्षाणि प्रावृट्काल इवाम्बुदाः ॥ ४ ॥
अथवाहं शरैस्तीक्ष्णैर्भिन्नगात्रं महाहवे।

स इति ॥ १ ॥

रावणः प्राञ्जलिरिति। परमापदः प्राप्त्या अवशिष्टानां युद्धोन्मुख्यार्थं नमस्कारं करोतीत्याशयः ॥ २ ॥

सर्वेण एकमपि हस्त्यश्वरथपादातमत्यक्त्वेत्यर्थः ॥ ३ ॥

एकं रामं परिक्षिप्येति। तस्यैव मूलत्वात्तमेकमेव परिक्षिप्य परितो निबध्य हन्तुमर्हथ। शरवर्षाणि वर्षयेति शेषः ॥ ४ ॥

भवद्भिः श्वो निहन्तास्मि रामं लोकस्य पश्यतः ॥ ५ ॥
इत्येतद्वाक्यमादाय राक्षसेन्द्रस्य राक्षसाः ।
निर्य्ययुस्ते रथैः शीघ्रैर्नानानीकैश्च संयुताः ॥ ६ ॥
परिघान् पट्टिशांश्चैव शरखड्गपरश्वधान् ।
शरीरान्तकरान् सर्वे चिक्षिपुर्वानरान् प्रति ॥ ७ ॥
वानराश्च द्रुमाञ्छैलान् राक्षसान् प्रति चिक्षिपुः ॥ ८ ॥
स संग्रामो महाभीमः सूर्य्यस्योदयनम्प्रति ।
रक्षसां वानराणाञ्च तुमुलः समपद्यत ॥ ९ ॥
ते गदाभिश्च चित्राभिः प्रासैः खड्गैः परश्वधैः ।
अन्योऽन्यं समरे जघ्नुस्तदा वानरराक्षसाः ॥ १० ॥
एवं प्रवृत्ते संग्रामे ह्यद्भुतं सुमहद्रजः ।
रक्षसां वानराणाञ्च शान्तं शोणितविस्रवैः ॥ ११ ॥

अथवेति । अद्य रामहननासम्भवे भवद्भिरद्य भिन्नगात्रं श्वोऽभिहन्तास्मि ॥ ५ ॥

इत्येतद्वाक्यं प्रथमपद्योक्तम् ॥ ६ ॥ ७ ॥ ८ ॥

सूर्य्यस्योदयनम्प्रति । चतुर्दशीसूर्य्योदयमारभ्येत्यर्थः । त्रयोदशीरात्रिशेषे रावणस्य सीतासमीपगमनमिति बोध्यम् ॥ ९ ॥

गदाभिरन्योऽन्यं जघ्नुः । यद्यपि वानराणां गदाद्यायुधाभावस्तथापि राक्षसहस्तेभ्य आच्छिद्य गृहीतैस्तैस्तेषां युद्धसम्भव इति बोध्यम् ॥ १० ॥ ११ ॥

मातङ्गरथकूलाश्च शरमत्स्यध्वजद्रुमाः।
शरीरसङ्घाटवहाः प्रसस्रुः शोणितापगाः॥ १२॥
ततस्ते वानराः सर्व्वं शोणितौघपरिप्लुताः।
ध्वजवर्म्मरथानश्वान्नानाप्रहरणानि च।
आप्लुत्याप्लुत्य समरे वानरेन्द्रा बभञ्जिरे॥ १३॥
केशान् कर्णौ ललाटञ्च नासिकाश्च प्लवङ्गमाः।
रक्षसां दशनैस्तीक्ष्णैर्नखैश्चापि व्यकर्त्तयन्॥ १४॥
एकैकं राक्षसं संख्ये शतं वानरपुङ्गवाः।
अभ्यधावन्त पतितं वृक्षं शकुनयो यथा॥ १५॥
तदा गदाभिर्गुर्व्वीभिः प्रासैः खड्गैः परश्वधैः।
निर्जघ्नुर्वानरान् घोरान् राक्षसाः पर्व्वतोपमाः॥ १६॥
राक्षसैर्वध्यमानानां वानराणां महाचमूः।
शरण्यं शरणं याता रामं दशरथात्मजम्॥ १७॥
ततो रामो महातेजा धनुरादाय वीर्य्यवान्।
प्रविश्य राक्षसं सैन्यं शरवर्षं ववर्ष च॥ १८॥
प्रविष्टन्तु तदा रामं मेघाः सूर्य्यमिवाम्बरे।
नाधिजग्मुर्महाघोरा निर्द्दहन्तं शराग्निना॥ १९॥

मातङ्गरथरूपे कूले यासां ताः। शरीराण्येव सङ्घाटाः काष्ठसमूहाः तान् वहन्ति ताः॥ १२॥ १३॥ १४॥ १५॥ १६॥ १७॥ १८॥ १९॥

हतान्येव सुघोराणि रामेण रजनीचराः।
रणे रामस्य ददृशुः कर्माण्यसुकराणि ते ॥ २० ॥
चालयन्तं महासैन्यं विधमन्तं महारथान्।
ददृशुस्ते न वै रामं वातं वनगतं यथा ॥ २१ ॥
छिन्नं भिन्नं शरैर्दग्धं प्रभग्नं शस्त्रपीड़ितम्।
बलं रामेन ददृशुर्न रामं शीघ्रकारिणम् ॥ २२ ॥
प्रहरन्तं शरीरेषु न ते पश्यन्ति राघवम्।
इन्द्रियार्थेषु तिष्ठन्तं भूतात्मानमिव प्रजाः ॥ २३ ॥
एष हन्ति गजानीकमेष हन्ति महारथान्।
एष हन्ति शरैस्तीक्ष्णैः पदातीन् वाजिभिः सह ॥ २४ ॥

रजनीचरा रामस्य रणेऽसुकराणि कर्माणि रामेण हतान्येव ददृशुः न तु क्रियमाणानि ॥ २० ॥

तथा तत्कर्त्तारमपि न ददृशुरित्याह,—चालयन्तमिति। कार्य्यदृष्टत्वेऽपि क्रियामात्रदर्शने दृष्टान्तो वातं वनगतं यथा। स्पर्शविधमनादिकार्य्यैर्यथा वायुरनुमित एव भवति तथा रामोऽप्यनुमित एव न प्रत्यक्ष इति भावः ॥ २१ ॥ २२ ॥

इन्द्रियार्थाः शब्दादिविषयास्तेषु तिष्ठन्तमनुभवितृत्वेनावस्थितं भूतात्मानं जीवं प्रजा यथा न पश्यन्ति प्रत्यक्षतस्तद्वदित्यर्थः ॥ २३ ॥

एष गजानीकवर्त्ती गजानीकमेव हन्ति नान्यमिति गजानीकस्था मन्यन्ते। एवमन्येऽपि मन्यन्तेस्मेत्यर्थः ॥ २४ ॥

इति ते राक्षसाः सर्वे रामस्य सदृशान् रणे ।
अन्योऽन्यं कुपिता जघ्नुः सादृश्याद्राघवस्य तु ॥ २५ ॥
न ते ददृशिरे रामं दहन्तमपि वाहिनीम् ।
मोहिताः परमास्त्रेण गान्धर्वेण महात्मना ॥ २६ ॥
ते तु रामसहस्राणि रणे पश्यन्ति राक्षसाः ।
पुनः पश्यन्ति काकुत्स्थमेकमेव महाहवे ॥ २७ ॥
भ्रमन्तीं काञ्चनीं कोटिं कार्मुकस्य महात्मनः ।
अलातचक्रप्रतिमां ददृशुस्ते न राघवम् ॥ २८ ॥
शरीरनाभि सत्त्वार्चिः शरारं नेमिकार्मुकम् ।

इति । एष हन्तीत्यादिप्रकारेण कुपिताः सर्वे ते राक्षसाः रामस्य सदृशान् सदृशत्वेन प्रतीयमानान् राक्षसान् रामसादृश्यादन्योऽन्यं जघ्नुः । सदृशा रावणस्यैते रणे राक्षससत्तमा इति पूर्वार्धपाठे रावणेन देवासुरयुद्धादौ साक्षात् साह्यार्थं मूलबलतया तेषां दृष्टप्रत्ययानामत्यूर्जितबलानामेव संगृहीतत्वात्तेषां रावणसादृश्यम् ॥ २५ ॥

राक्षसानां परस्परं रामसादृश्यप्रतीतौ कारणमाह,—मोहिता इति ॥ २६ ॥

अतएव ते रामसहस्राणि पश्यन्ति । पुनश्च एकमेव पश्यन्ति ॥ २७ ॥

भ्रमन्तीमाकर्णवेगतोऽनवस्थिताम् । काञ्चनीं स्वर्णमयीं कार्मुकस्य कोटिं धनुष्कोटिं वेगवशादलातचक्रप्रतिमां ददृशू रामन्तु नेति सम्बन्धः ॥ २८ ॥

ज्याघोषतलनिर्घोषं तेजोबुद्धिगुणप्रभम्॥ २९॥
दिव्यास्त्रगुणपर्यन्तं निघ्नन्तं युधि राक्षसान्।
ददृशू रामचक्रन्तत्कालचक्रमिव प्रजाः॥ ३०॥
अनीकं दशसाहस्रं रथानां वातरंहसाम्।
अष्टादशसहस्राणि कुञ्जराणां तरस्विनाम्॥ ३१॥
चतुर्दशसहस्राणि सारोहाणाञ्च वाजिनाम्।
पूर्णे शतसहस्रे द्वे राक्षसानां पदातिनाम्॥ ३२॥

राघवातिशयान् मण्डलीकृतकार्मुकं राक्षसान्निघ्नन्तं रामं कालचक्रेणोपमिनोति। शरीरेति। शरीरं मध्यदेह एव नाभिस्थकस्येव मध्यं यस्य तत्। सत्त्वं बलमेवार्चिर्ज्वाला यस्य तच्छरा एवारा मध्यकाण्डानि यस्य तत्। नेमिर्वलयाकारोऽवयवविशेषस्तद्रूपं कार्मुकं यस्य तत्। तलं ज्याघातवारणं तेन तज्ज्यो घोषो लक्ष्यते। ज्याघोषतलघोषावेव निर्घोषो ध्वनिर्यस्य तत्। तेजः प्रतापो बुद्धिर्ज्ञानं तद्रूपा गुणावेव प्रभा यस्य तत्॥ २९॥

दिव्यास्त्रगुणो दिव्यास्त्रवैभवं तदेव पर्यन्तो धारणा यस्य तत्॥ ३०॥

अनीकमिति। एकेभैकरथाश्वापत्तिः पञ्चपदातिका। पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम्। सेनामुखं गुल्मगणौ वाहिनी-पृतना चमूः। अनीकिनी दशानीकिन्यक्षौहिणीत्यमरोक्तप्रकारेण दशसंख्यापत्तिस्तत्त्रिगुणं सेनामुखम्। तत्त्रिगुणो गुल्मः। तत्त्रिगुणो गणः। गण त्रिगुणा वाहिनी। तत्त्रिगुणा पृतना। तत्त्रिगुणा चमूः।

दिवसस्याष्टभागेन शरैरग्निशिखोपमैः।
हतान्येकेन रामेण रक्षसां कामरूपिणाम् ॥ ३३ ॥
ते हताश्वा हतरथाः श्रान्ता विमथितध्वजाः।
अभिपेतुः पुरीं लङ्कां हतशेषा निशाचराः ॥ ३४ ॥
हतैर्गजपदात्यश्वैस्तद्बभूव रणाजिरम्।
आक्रीड़भूमिः क्रुद्धस्य रुद्रस्येव महात्मनः ॥ ३५ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः।
साधु साध्विति रामस्य तत्कर्म समपूजयन् ॥ ३६ ॥
अब्रवीच्च तदा रामः सुग्रीवं प्रत्यनन्तरम्।

चमूस्त्रिगुणा अनीकिनी। एवञ्च दशोनत्रिशताधिकसप्तसहस्रसंख्या चमूरनीकम्। सहस्राण्येव साहस्रं दशसाहस्राण्यनीकान्यस्मिन्नस्तीति तत्। रथानां दशसाहस्राण्यनीकिनीत्यर्थः। एकोनत्रिंशल्लक्षाधिकसप्तकोटिसंख्या संख्याता रथा इत्युक्तम्। अष्टादशसहस्राणीत्यत्राप्यनीकमिति विभक्तिविपरिणामेन योज्यम्। तेन विंशतिसहस्राधिकद्वादशलक्षोत्तरत्रयोदशकोटिसंख्या गजा इत्युक्तम्। चतुर्दशसहस्राण्यनीकानि षष्टिसहस्राधिकविंशतिलक्षोत्तरदशशतकोटिसंख्या वाजिन इत्यर्थः। शतसहस्रे द्वेऽनीके अष्टाशीतिलक्षोत्तरपञ्चचत्वारिंशत्कोट्यधिकशतकोटिसंख्याः पदातय इत्यर्थः॥ ३१ ॥ ३२ ॥

दिवसस्याष्टभागेन चतुर्दशोत्सवान्त्यमुहूर्तद्वयेन ॥ ३३ ॥
हतशेषाः कतिपया लङ्कामभिपेतुः ॥ ३४ ॥
आक्रीड़ं क्रीड़ा तस्या भूमिः ॥ ३५ ॥ ३६ ॥

विभीषणश्च धर्मात्मा हनूमन्तश्च वानरम् ॥ १७ ॥
जाम्बवन्तं हरिश्रेष्ठं मैन्दं द्विविदमेव च।
एतदस्त्रबलं भीमं मम वा त्र्यम्बकस्य वा ॥ १८ ॥

निहत्य तां राक्षसराजवाहिनीं
रामस्तदा शक्रसमो महात्मा।
अस्त्रेषु शस्त्रेषु जितक्रमश्च
संस्तूयते देवगणैः प्रहृष्टैः ॥ १९ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
चतुर्नवतितमः सर्गः ॥ ९४ ॥

प्रत्यनन्तरम् आसन्नम् ॥ १७ ॥
मम वा त्र्यम्बकस्य वा। अनेन स्वस्य विष्णुत्वं सूचितम् ॥ १८
संस्तूयतेऽस्म ॥ १९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे चतुर्नवतितमः सर्गः ॥ ९४ ॥

---

## पञ्चनवतितमः सर्गः ।

तानि नागसहस्राणि सारोहाणि च वाजिनाम् ।
रथानां त्वग्निवर्णानां सध्वजानां सहस्रशः ॥ १ ॥
राक्षसानां सहस्राणि गदापरिघयोधिनाम् ।
काञ्चनध्वजचित्राणां शूराणां कामरूपिणाम् ॥ २ ॥
निहतानि शरैर्दीप्तैस्तप्तकाञ्चनभूषणैः ।
रावणेन प्रयुक्तानि रामेणाक्लिष्टकर्मणा ॥ ३ ॥
दृष्ट्वा श्रुत्वा च सम्भ्रान्ता हतशेषा निशाचराः ।
राक्षस्यश्च समागम्य दीनाश्चिन्तापरिप्लुताः ॥ ४ ॥
विधवा हतपुत्राश्च क्रोशन्त्यो हतबान्धवाः ।
राक्षस्यः सह सङ्गम्य दुःखार्त्ताः पर्य्यदेवयन् ॥ ५ ॥
कथं शूर्पणखा वृद्धा कराला निर्णतोदरी ।

तानीति । सहस्रशः । सहस्राणीत्यर्थः ॥ १ ॥ २ ॥ ३ ॥

रावणेन प्रयुक्तानि युद्धार्थं प्रेषितान्यपि रामेण हतानि दृष्ट्वा वृद्धास्तु श्रुत्वा हतशेषाः बालवृद्धा निशाचरा राक्षस्यश्च समागम्य सङ्घशः सम्भूय दीनाश्चिन्तापरिप्लुताश्च अभवन्निति शेषः ॥ ४ ॥ ५ ॥

आससाद वने रामं कन्दर्पसमरूपिणम् ॥ ६ ॥
सुकुमारं महासत्त्वं सर्वभूतहिते रतम्।
तं दृष्ट्वा लोकवध्या सा हीनरूपा प्रकामिता ॥ ७ ॥
कथं सर्वगुणैर्हीना गुणवन्तं महौजसम्।
सुमुखं दुर्मुखी रामं कामयामास राक्षसी ॥ ८ ॥
जनस्यास्याल्पभाग्यत्वाद्वलिनी श्वेतमूर्धजा।
अकार्य्यमपहास्यञ्च सर्वलोकविगर्हितम् ॥ ९ ॥
राक्षसानां विनाशाय दूषणस्य खरस्य च।
चकाराप्रतिरूपा सा राघवस्य प्रधर्षणम् ॥ १० ॥
तन्निमित्तमिदं वैरं रावणेन कृतं महत्।
वधाय सीता सा नीता दशग्रीवेण रक्षसा ॥ ११ ॥

परिदेवनप्रकारः कथमिति। निर्गतोदरी निम्नोदरी ॥ ६ ॥

लोकवध्या लोकैर्वधार्हा। हीनरूपा रामसान्निध्यानर्हा कुत्सितरूपा। अथापि रामे प्रकामिता सञ्जातप्रकामा ॥ ७ ॥ ८ ॥

अस्य जनस्य राक्षसजनस्य। वलिनी जरावशाज्जातवलिः। ब्रीह्यादित्वादिनिः ॥ ९ ॥

अप्रतिरूपा विकृतरूपा। अप्रतिरूपस्येति पाठे तदसदृशाकारस्येत्यर्थः ॥ १० ॥

तन्निमित्तं धर्षणनिमित्तम्। सा आनीतेति च्छेदः। वधाय रक्षसामिति शेषः ॥ ११ ॥

न च सीतां दशग्रीवः प्राप्नोति जनकात्मजाम्।
बद्धं बलवता वैरमक्षयं राघवेण च॥ १२॥
वैदेहीं प्रार्थयानन्तं विराधं प्रेक्ष्य राक्षसम्।
हतमेकेन रामेण पर्य्याप्तं तन्निदर्शनम्॥ १३॥
चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम्।
निहतानि जनस्थाने शरैरग्निशिखोपमैः॥ १४॥
खरश्च निहतः संख्ये दूषणस्त्रिशिरस्तथा।
शरैरादित्यसङ्काशैः पर्य्याप्तं तन्निदर्शनम्॥ १५॥
हतो योजनबाहुश्च कबन्धो रुधिराशनः।
क्रोधान्नादं नदन् सोऽथ पर्य्याप्तं तन्निदर्शनम्॥ १६॥
जघान बलिनं रामः सहस्रनयनात्मजम्।
वालिनं मेघसङ्काशं पर्य्याप्तं तन्निदर्शनम्॥ १७॥
ऋष्यमूके वसंश्चैव दीनो भग्नमनोरथः।
सुग्रीवः प्रापितो राज्यं पर्य्याप्तं तन्निदर्शनम्॥ १८॥
धर्मार्थसंहितं वाक्यं सर्वेषां रक्षसां हितम्।
युक्तं विभीषणेनोक्तं मोहात्तस्य न रोचते॥ १९॥
विभीषणवचः कुर्य्याद्यदि स्म धनदानुजः।

न प्राप्नोति न प्राप्स्यति च॥ १२॥
प्रार्थयानं प्रार्थयमानम्। एकेनासहायेन रामेण अस्मदवरमपि

श्मशानभूता दुःखार्त्ता नेयं लङ्का भविष्यति ॥ २० ॥
कुम्भकर्णं हतं श्रुत्वा राघवेण महाबलम्।
अतिकायञ्च दुर्मर्षं लक्ष्मणेन हतं तदा ॥ २१ ॥
प्रियञ्चेन्द्रजितं पुत्रं रावणो नावबुध्यते ॥ २२ ॥
मम पुत्रो मम भ्राता मम भर्त्ता रणे हतः।
इत्येष श्रूयते शब्दो राक्षसीनां कुले कुले ॥ २३ ॥
रथाश्वनागाश्च हताश्च तत्र सहस्रशः।
रणे रामेण शूरेण हताश्चापि पदातयः ॥ २४ ॥
रुद्रो वा यदि वा विष्णुर्महेन्द्रो वा शतक्रतुः।
हन्ति नो रामरूपेण यदि वा स्वयमन्तकः ॥ २५ ॥
हतप्रवीरा रामेण निराशा जीविते वयम्।
अपश्यन्तो भयस्यान्तमनाथा विलपामहे ॥ २६ ॥
रामहस्ताद्दशग्रीवः शूरो दत्तमहावरः।
इदं भयं महाघोरं समुत्पन्नं न बुद्ध्यते ॥ २७ ॥

हतं विराधं संप्रेक्ष्य स्थितस्य रावणस्य तदेकमेव पर्य्याप्तं निदर्शनम्। रामस्य सदेवासुरसकललोकातिशायित्वावगमाय पर्य्याप्तं निदर्शनमित्यर्थः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

इन्द्रजितमपि हतं श्रुत्वा नावबुध्यते पराक्रममिति शेषः ॥ २२ ॥

कुले कुले गृहे गृहे ॥ २३ ॥ २४ ॥ २५ ॥

तं न देवा न गन्धर्वा न पिशाचा न राक्षसाः।
उपसृष्टं परित्रातुं शक्ता रामेण संयुगे ॥ २८ ॥
उत्पाताश्चापि दृश्यन्ते रावणस्य रणे रणे।
कथयन्ति हि रामेण रावणस्य निबर्हणम् ॥ २९ ॥
पितामहेन प्रीतेन देवदानवराक्षसैः।
रावणस्याभयं दत्तं मनुष्येभ्यो न याचितम् ॥ ३० ॥
तदिदं मानुषं मन्ये प्राप्तं निःसंशयं भयम्।
जीवितान्तकरं घोरं रक्षसां रावणस्य च ॥ ३१ ॥
पीड्यमानास्तु बलिना वरदानेन रक्षसा।
दीप्तैस्तपोभिर्विबुधाः पितामहमपूजयन् ॥ ३२ ॥
देवतानां हितार्थाय महात्मा वै पितामहः।
उवाच देवतास्तुष्ट इदं सर्वा महद्वचः ॥ ३३ ॥

रामहस्तात्प्राप्तमिदं स्वस्य भयं शूरो ब्रह्मदत्तमहावर इति मत्वा मदर्वान्न बुध्यते ॥ २७ ॥

उपसृष्टं हन्तुमारब्धम् ॥ २८ ॥

कथयन्तीति। तदुत्पातफलं माल्यवदादयो वृद्धा इति शेषः ॥ २९ ॥

रामेणास्य वधे उपपत्तिमाह। पितामहेनेति। देवदानवराक्षसैस्तेभ्यः ॥ ३० ॥ ३१ ॥

रावणेन पीड्यमानदेवैः प्रसादितस्य ब्रह्मणोऽनुग्रहादपि क्षयो राक्षसानामित्याह। पीड्यमानास्त्विति ॥ ३२ ॥ ३३ ॥

अद्यप्रभृति लोकांस्त्रीन् सर्वे दानवराक्षसाः ।
भयेन प्रावृता नित्यं विचरिष्यन्ति शाश्वतम् ॥ २४ ॥
दैवतैस्तु समागत्य सर्वैश्चेन्द्रपुरोगमैः ।
वृषभध्वजस्त्रिपुरहा महादेवः प्रतोषितः ॥ २५ ॥
प्रसन्नस्तु महादेवो देवानेतद्वचोऽब्रवीत् ।
उत्पत्स्यति हितार्थं वो नारी रक्षःक्षयावहा ॥ २६ ॥
एषा दैवैः प्रयुक्ता तु क्षुद्यथा दानवान् पुरा ।
भक्षयिष्यति नः सर्वान् राक्षसघ्नी सरावणान् ॥ २७ ॥
रावणस्यापनीतेन दुर्विनीतस्य दुर्मतेः ।
अयं निष्टानको घोरः शोकेन समभिप्लुतः ॥ २८ ॥
तं न पश्यामहे लोके यो नः शरणदो भवेत् ।
राघवेणोपसृष्टानां कालेनेव युगक्षये ॥ २९ ॥

दानवा राक्षसाश्च भयेन प्रावृताः देवेभ्यो भयं बिभ्राणा एव विचरिष्यन्ति। देवाः स्वतः परतो वास्मान् पीड़यिष्यन्तीति भययुक्ता एव भविष्यन्तीत्यर्थः ॥ २४ ॥

एवं ब्रह्मणः प्रसादात् सभयत्वमात्रं प्राप्तं संहाराधिकृतरुद्र-प्रसादेन तु नाश एवास्माकमित्याह। दैवतैरिति ॥ २५ ॥ २६ ॥

सा एषा सीतैवेत्याह। एषेति। पुरा पूर्वकल्पे। दैवैर्दानव-नाशार्थं प्रयुक्ता क्षुद्यथा दानवान् हरति स्म। एवं दैवैः प्रयुक्ता एषा सीतापि सरावणान् रावणसहितानस्मान् भक्षयिष्यति ॥ २७ ॥

नास्ति नः शरणं किञ्चिद्भये महति तिष्ठताम् ।
दावाग्निवेष्टितानां हि करेणूनां यथा वने ॥ ४० ॥
प्राप्तकालं कृतं तेन पौलस्त्येन महात्मना ।
यत एव भयं दृष्टं तमेव शरणं गतः ॥ ४१ ॥
इतीव सर्वा रजनीचरस्त्रियः
परस्परं सम्परिरभ्य बाहुभिः ।
विषेदुरार्त्तातिभयाभिपीड़िता
विनेदुरुच्चैश्च तदा सुदारुणम् ॥ ४२ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
पञ्चनवतितमः सर्गः ॥ ९५ ॥

अपनीतेन अनयेन । निष्ठानको नाशः शोकसहितः प्रामः ॥ ॥ ३८ ॥ ३९ ॥ ४० ॥

प्राप्तकालं कालोचितम् । पौलस्त्येन विभीषणेन । यत एव यस्मा-द्रामादेव भयं दृष्टम् । स्वमन्त्रशक्तिवैभवेनेति शेषः ॥ ४१ ॥ ४२ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे पञ्चनवतितमः सर्गः ॥ ९५ ॥

---

## षरणवतितमः सर्गः ।

आर्त्तानां राक्षसीनान्तु लङ्कायां वै कुले कुले ।
रावणः करुणं शब्दं शुश्राव परिदेवितम् ॥ १ ॥
स तु दीर्घं विनिःश्वस्य मुहूर्त्तं ध्यानमास्थितः ।
बभूव परमक्रुद्धो रावणो भीमदर्शनः ॥ २ ॥
सन्दश्य दशनैरोष्ठं क्रोधसंरक्तलोचनः ।
राक्षसैरपि दुर्दर्शः कालाग्निरिव मूर्त्तिमान् ॥ ३ ॥
उवाच च समीपस्थान् राक्षसान् राक्षसेश्वरः ।
क्रोधाव्यक्तकथस्तत्र निर्दहन्निव चक्षुषा ॥ ४ ॥
महोदरं महापार्श्वं विरूपाक्षञ्च राक्षसम् ।
शीघ्रं वदत सैन्यानि निर्य्यातेति ममाज्ञया ॥ ५ ॥
तस्य तद्वचनं श्रुत्वा राक्षसास्ते भयार्दिताः ।
चोदयामासुरव्यग्रान् राक्षसांस्तान् नृपाज्ञया ॥ ६ ॥
ते तु सर्वे तथेत्युक्त्वा राक्षसा भीमदर्शनाः ।

आर्त्तानामिति । कुले कुले गृहे गृहे ॥ १ ॥ २ ॥ ३ ॥
क्रोधेनाव्यक्ता कथा कथनं यस्य सः ॥ ४ ॥ ५ ॥

कृतस्वस्त्ययनाः सर्वे ते रणाभिमुखा ययुः ॥ ७ ॥
प्रतिपूज्य यथान्यायं रावणं ते महारथाः ।
तस्थुः प्राञ्जलयः सर्वे भर्त्तुर्विजयकाङ्क्षिणः ॥ ८ ॥
ततोवाच प्रहस्यैतान् रावणः क्रोधमूर्च्छितः ।
महोदरमहापार्श्वौ विरूपाक्षञ्च राक्षसम् ॥ ९ ॥
अद्य बाणैर्धनुर्मुक्तैर्युगान्तादित्यसन्निभैः ।
राघवं लक्ष्मणञ्चैव नेष्यामि यमसादनम् ॥ १० ॥
खरस्य कुम्भकर्णस्य प्रहस्तेन्द्रजितोस्तथा ।
करिष्यामि प्रतीकारमद्य शत्रुवधादहम् ॥ ११ ॥
नैवान्तरिक्षं न दिशो न च द्यौर्नापि सागराः ।
प्रकाशत्वं गमिष्यन्ति मद्बाणजलदावृताः ॥ १२ ॥
अद्य वानरमुख्यानां तानि यूथानि भागशः ।
धनुषा शरजालेन वधिष्यामि पतत्त्रिणा ॥ १३ ॥
अद्य वानरसैन्यानि रथेन पवनौजसा ।

अव्यग्रान् रावणप्रोत्साहनेन त्यक्तभयान् ॥ ६ ॥ ७ ॥ ८ ॥
ततोवाच तत उवाच । प्रहस्य । क्रोधजाटहास्य प्रहासः ॥ ९ ॥ ॥ १० ॥ ११ ॥
प्रकाशत्वं प्रकटत्वम् ॥ १२ ॥
पतत्त्रिणा प्रशस्तपक्षवता ॥ १३ ॥

धनुःसमुद्रादुद्भूतैर्मथिष्यामि शरोर्मिभिः ॥ १४ ॥
व्याकोशपद्मवक्त्राणि पद्मकेसरवर्चसाम्।
अद्य यूथतटाकानि गजवत् प्रमथाम्यहम् ॥ १५ ॥
सशरैरद्य वदनैः संख्ये वानरयूथपाः।
मण्डयिष्यन्ति वसुधां सनालैरिव पङ्कजैः ॥ १६ ॥
अद्य यूथप्रचण्डानां हरीणां द्रुमयोधिनाम्।
मुक्तेनैकेषुणा युद्धे भेत्स्यामि च शतं शतम् ॥ १७ ॥
हतो भ्राता च येषां वै येषाञ्च तनयो हतः।
वधेनाद्य रिपोस्तेषां करोम्यश्रुप्रमार्जनम् ॥ १८ ॥
अद्य मद्बाणनिर्भिन्नैः प्रस्तीर्णैर्गतचेतनैः।
करोमि वानरैर्युद्धे यत्नावेक्ष्यतलां महीम् ॥ १९ ॥
अद्य काकाश्च गृध्राश्च ये च मांसाशिनोऽपरे।
सर्वांस्तांस्तर्पयिष्यामि शत्रुमांसैः शराहतैः ॥ २० ॥

धनूरूपात् समुद्रात् ॥ १४ ॥

व्याकोशपद्मवक्त्राणि वक्त्ररूपविकसितपद्मानि। पद्मकेसरवर्चसां वानराणामिति शेषः। यूथरूपाणि तटाकानि प्रमथामि प्रमथिष्यामि ॥ १५ ॥

सशरैः शरसहितैर्वदनैः स्वीयैः। सशरत्वात् सनालैः पङ्कजैरिव ॥ ॥ १६ ॥ १७ ॥ १८ ॥

कल्प्यतां मे रथः शीघ्रं क्षिप्रमानीयतां धनुः।
अनुप्रयान्तु मां युद्धे येऽत्र शिष्टा निशाचराः॥ २१॥
तस्य तद्वचनं श्रुत्वा महापार्श्वोऽब्रवीद्वचः।
बलाध्यक्षान् स्थितांस्तत्र बलं सन्त्वर्य्यतामिति॥ २२॥
बलाध्यक्षास्तु संयत्ता राक्षसांस्तान् गृहे गृहे।
चोदयन्तः परिययुर्लङ्कां लघुपराक्रमाः॥ २३॥
ततो मुहूर्त्तान्निष्पेतू राक्षसा भीमदर्शनाः।
नदन्तो भीमवदना नानाप्रहरणैर्भुजैः॥ २४॥
असिभिः पट्टिशैः शूलैर्गदाभिर्मुसलैर्हलैः।
शक्तिभिस्तीक्ष्णधाराभिर्महद्भिः कूटमुद्गरैः॥ २५॥
यष्टिभिर्विविधैश्चक्रैर्निशितैश्च परश्वधैः।
भिन्दिपालैः शतघ्नीभिरन्यैश्चापि वरायुधैः॥ २६॥
अथानयन् बलाध्यक्षाश्चत्वारो रावणाज्ञया।
रथानां नियुतं साग्रं नागानां नियुतत्रयम्॥ २७॥
अश्वानां षष्टिकोव्यस्तु खरोष्ट्राणां तथैव च।
पदातयस्त्वसंख्याता जग्मुस्ते राजशासनात्॥ २८

यत्नेनावेक्ष्यमवेक्षितुं योग्यं तत्त्वं यस्यास्तथाभूताम्॥ १९॥ २०॥
॥ २१॥ २२। २३॥
भुजैरुपलक्षिताः॥ २४॥

बलाध्यक्षांश्च संस्थाप्य राक्षः सेनां पुरस्थिताम्।
एतस्मिन्नन्तरे सूतः स्थापयामास तं रथम्॥ २९॥
दिव्यास्त्रवरसम्पन्नं नानालङ्कारभूषितम्।
नानायुधसमाकीर्णं किङ्किणीजालसंयुतम्॥ ३०॥
नानारत्नपरिक्षिप्तं रत्नस्तम्भैर्विराजितम्।
जाम्बूनदमयैश्चैव सहस्रकलशैर्वृतम्॥ ३१॥
तं दृष्ट्वा राक्षसाः सर्वे विस्मयं परमं गताः।
तं दृष्ट्वा सहसोत्थाय रावणो राक्षसेश्वरः॥ ३२॥
कोटिसूर्य्यप्रतीकाशं ज्वलन्तमिव पावकम्।
द्रुतं सूतसमायुक्तं युक्ताष्टतुरगं रथम्।
आरुरोह तदा भीमं दीप्यमानं स्वतेजसा॥ ३३॥
ततः प्रयातः सहसा राक्षसैर्बहुभिर्वृतः।
रावणः सत्वगाम्भीर्य्याद्दारयन्निव मेदिनीम्॥ ३४॥
ततश्चासीन् महानादस्तूर्य्याणाञ्च ततस्ततः।
मृदङ्गैः पटहैः शङ्खैः कलहैः सह रक्षसाम्॥ ३५॥
आगतो रक्षसां राजा छत्रचामरसंयुतः।

इतरैरायुधविशेषैः॥ २५॥ २६॥ २७॥ २८॥ २९॥ ३०॥ ३१॥ ॥ ३२॥

अमायां छयादय इदं रथारोहणम्॥ ३३॥

सीतापहारी दुर्वृत्तो ब्रह्मघ्नो देवकण्टकः ।
योद्धुं रघुवरेणेति शुश्रुवे कलहध्वनिः ॥ ३६ ॥
तेन नादेन महता पृथिवी समकम्पत ।
तं शब्दं सहसा श्रुत्वा वानरा दुद्रुवुर्भयात् ॥ ३७ ॥
रावणस्तु महाप्राज्ञः सचिवैः परिवारितः ।
आजगाम महातेजा जयाय विजयश्रुति ॥ ३८ ॥
रावणेनाभ्यनुज्ञातौ महापार्श्वमहोदरौ ।
विरूपाक्षश्च दुर्धर्षौ रथानारुरुहुस्तदा ॥ ३९ ॥
ते तु हृष्टाभिनर्दन्तो भिन्दन्त इव मेदिनीम् ।
नादं घोरं विमुञ्चन्तो निर्य्ययुर्जयकाङ्क्षिणः ॥ ४० ॥
ततो युद्धाय तेजस्वी रक्षोगणबलैर्वृतः ।
निर्य्ययावुद्यतधनुः कालान्तकयमोपमः ॥ ४१ ॥
ततः प्रजविताश्वेन रथेन स महारथः ।
द्वारेण निर्य्ययौ तेन यत्र तौ रामलक्ष्मणौ ॥ ४२ ॥
ततो नष्टप्रभः सूर्य्यो दिशश्च तिमिरावृताः ।
द्विजाश्च नेदुर्घोराश्च सञ्चचाल च मेदिनी ॥ ४३ ॥

सत्वगाम्भीर्य्यात्　बलातिशयात् ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ॥ ३९ ॥ ४० ॥ ४१ ॥

प्रजविताश्वेन प्रकर्षेण सञ्जातवेगा अश्वा यस्य तेन ॥ ४२ ॥

ववर्ष रुधिरं देवश्चस्खलुश्च तुरङ्गमाः।
ध्वजाग्रे न्यपतत् गृध्रो विनेदुश्चाशिवाः शिवाः॥ ४४॥
नयनञ्चास्फुरद्वामं वामो बाहुरकम्पत।
विवर्णवदनश्चासीत् किञ्चिदभ्रश्यत स्वनः॥ ४५॥
ततो निष्पततो युद्धे दशग्रीवस्य रक्षसः।
रणे निधनशंसीनि रूपाण्येतानि जज्ञिरे॥ ४६॥
अन्तरिक्षात् पपातोल्का निर्घातसमनिःस्वना।
विनेदुरशिवा गृध्रा वायसैरभिमिश्रिताः॥ ४७॥
एतानचिन्तयन् घोरानुत्पातान् समवस्थितान्।
निर्ययौ रावणो मोहाद्वधार्थं कालचोदितः॥ ४८॥
तेषान्तु रथघोषेण राक्षसानां महात्मनाम्।
वानराणामपि चमूर्युद्धायैवाभ्यवर्त्तत।
अन्योऽन्यमाह्वयानानां क्रुद्धानां जयमिच्छताम्॥ ४९॥
ततः क्रुद्धो दशग्रीवः शरैः काञ्चनभूषणैः।
वानराणामनीकेषु चकार कदनं महत्॥ ५०॥
निकृत्तशिरसः केचिद्रावणेन वलीमुखाः।

अथ रावणस्य दुर्निमित्तान्याह,—नष्टप्रभ इत्यादि॥ ४३॥ ४४॥ ४५॥

एतानि रूपाणि। निधनसूचकानीत्यर्थः॥ ४६॥ ४७॥ ४८॥

केचिद्विच्छिन्नहृदयाः केचित्श्रोत्रविवर्जिताः ॥ ५१ ॥
निरुच्छ्वासा हताः केचित् केचित् पार्श्वेषु दारिताः।
केचिद्विभिन्नशिरसः केचिच्चक्षुर्विनाकृताः ॥ ५२ ॥

दशाननः क्रोधविवृत्तनेत्रो
यतो यतोऽभ्येति रथेन संख्ये।
ततस्ततस्तस्य शरप्रवेगं
सोढुं न शेकुर्हरियूथपास्ते ॥ ५३ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
षण्णवतितमः सर्गः ॥ ९६ ॥

आक्रयानानां स्पर्द्धया आक्रयमानानाम् ॥ ४९ ॥ ५० ॥ ५१ ॥
॥ ५२ ॥ ५३ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे षण्णवतितमः सर्गः ॥ ९६ ॥



## सप्तनवतितमः सर्गः।



तथा तैः कृत्तगात्रैस्तु दशग्रीवेण मार्गणैः।
बभूव वसुधा तत्र प्रकीर्णा हरिभिस्तदा॥ १॥
रावणस्याप्रसह्यन्तं शरसम्पातमेकतः।
न शेकुः सहितुं दीप्तं पतङ्गा ज्वलनं यथा॥ २॥
तेऽर्दिता निशितैर्बाणैः क्रोशन्तो विप्रदुद्रुवुः।
पावकार्चिःसमाविष्टा दह्यमाना यथा गजाः॥ ३॥
प्लवङ्गानामनीकानि महाभ्राणीव मारुतः।
संययौ समरे तस्मिन् विधमन् रावणः शरैः॥ ४॥
कदनं तरसा कृत्वा राक्षसेन्द्रो वनौकसाम्।
आससाद ततो युद्धे त्वरितं राघवं रणे॥ ५॥
सुग्रीवस्तान् कपीन् दृष्ट्वा भग्नान् विद्रावितान् रणे।
गुल्मे सुषेणं निक्षिप्य चक्रे युद्धे द्रुतं मनः॥ ६॥
आत्मनः सदृशं वीरं स तं निक्षिप्य वानरम्।

तथेति॥ १॥
एकतः एकैकस्मिन् प्रदेशे॥ २॥ ३॥ ४॥ ५॥
गुल्मे सेनासन्निवेशे॥ ६॥

सुग्रीवोऽभिमुखं शत्रुं प्रतस्थे पादपायुधः ॥ ७ ॥
पार्श्वतः पृष्ठतश्चास्य सर्वे वानरयूथपाः ।
अनुजग्मुर्महाशैलान् विविधांश्च वनस्पतीन् ॥ ८ ॥
ननर्द युधि सुग्रीवः स्वरेण महता महान् ।
पोथयन् विविधांश्चान्यान् ममन्थोत्तमराक्षसान् ॥ ९ ॥
ममर्द च महाकायो राक्षसान् वानरेश्वरः ।
युगान्तसमये वायुः प्रवृद्धानगमानिव ॥ १० ॥
राक्षसानामनीकेषु शैलवर्षं ववर्ष ह ।
अश्मवर्षं यथा मेघः पक्षिसङ्घेषु कानने ॥ ११ ॥
कपिराजविमुक्तैस्तैः शैलवर्षैस्तु राक्षसाः ।
विकर्णशिरसः पेतुर्विकीर्णा इव पर्वताः ॥ १२ ॥
अथ सङ्क्षीयमाणेषु राक्षसेषु समन्ततः ।
सुग्रीवेण प्रभग्नेषु नदत्सु च पतत्सु च ॥ १३ ॥
विरूपाक्षः स्वकं नाम धन्वी विश्राव्य राक्षसः ।
रथादाप्लुत्य दुर्धर्षो गजस्कन्धमुपारुहत् ॥ १४ ॥

आत्मनः सदृशम् आत्मतुल्यं सुषेणं निक्षिप्य ॥ ७ ॥

सर्वे वानरयूथपाः सुषेणं विनेति शेषः । महाशैलानित्यादेर्गृहीत्वेति शेषः ॥ ८ ॥

अन्यानवशिष्टानुत्तमराक्षसान् बलाध्यक्षराक्षसान् ॥ ९ ॥

अगमान् वृक्षान् ॥ १० ॥ ११ ॥ १२ ॥

स तं द्विपमथारुह्य विरूपाक्षो महाबलः।
ननर्द भीमनिर्ह्रादं वानरानभ्यधावत ॥ १५ ॥
सुग्रीवे स शरान् घोरान् विससर्ज चमूमुखे।
स्थापयामास चोद्विग्नान् राक्षसान् सम्प्रहर्षयन् ॥ १६ ॥
सोऽतिविद्धः शितैर्बाणैः कपीन्द्रस्तेन रक्षसा।
चुक्रोश च महाक्रोधो वधे चास्य मनो दधे ॥ १७ ॥
ततः पादपमुद्धृत्य शूरः सम्प्रधनो हरिः।
अभिपत्य जघानास्य प्रमुखे तं महागजम् ॥ १८ ॥
स तु प्रहाराभिहतः सुग्रीवेण महागजः।
अपासर्पद्धनुर्मात्रं निषसाद ननाद च ॥ १९ ॥
गजात्तु मथितात्तूर्णमपक्रम्य स वीर्य्यवान्।
राक्षसोऽभिमुखः शत्रुं प्रत्युद्गम्य ततः कपिम् ॥ २० ॥
आर्षभञ्चर्म खड्गञ्च प्रगृह्य लघुविक्रमः।
भर्त्सयन्निव सुग्रीवमाससाद व्यवस्थितम् ॥ २१ ॥

सङ्क्षीयमाणेषु हिंस्यमानेषु ॥ १३ ॥ १४ ॥ १५ ॥

उद्विग्नान् पलायनकृतोत्साहान् स्थापयामास पलायनान्निवर्त्तयामास ॥ १६ ॥ १७ ॥

सम्प्रधनः सम्यक् प्रधनं युद्धं यस्य सः। प्रमुखे प्रकृष्टे मुखप्रदेशे इत्यर्थः ॥ १८ ॥ १९ ॥ २० ॥

आर्षभं ऋषभकृत्तिपरिवीतचर्म फलकम् ॥ २१ ॥

स हि तस्यापि संगृह्य प्रगृह्य विपुलां शिलाम्।
विरूपाक्षस्य चिक्षेप सुग्रीवो जलदोपमाम्॥ २२॥
स तां शिलामापतन्तीं दृष्ट्वा राक्षसपुङ्गवः।
अपक्रम्य सुविक्रान्तः खड्गेन प्राहरत्तदा॥ २३॥
तेन खड्गप्रहारेण रक्षसा बलिना हतः।
मुहूर्त्तमभवद्भूमौ विसंज्ञ इव वानरः॥ २४॥
सहसा स तदोत्पत्य राक्षसस्य महाहवे।
मुष्टिं संवर्त्य वेगेन पातयामास वक्षसि॥ २५॥
मुष्टिप्रहाराभिहतो विरूपाक्षो निशाचरः।
तेन खड्गेन संक्रुद्धः सुग्रीवस्य चमूमुखे॥ २६॥
कवचं पातयामास पद्भ्यामभिहतोऽपतत्।
स समुत्थाय पतितः कपिस्तस्य व्यसर्जयत्॥ २७॥
तलप्रहारमशनेः समानं भीमनिःस्वनम्।
तलप्रहारं तद्रक्षः सुग्रीवेण समुद्यतम्॥ २८॥

तस्यापि तेनापि दत्तं प्रहारं संगृह्य गृहीत्वा॥ २२॥

स तामिति। अपक्रम्य शिलाप्रहारमोघीकरणार्थं पार्श्वतोपसृत्य सुग्रीवं प्राहरदित्यर्थः॥ २३॥ २४॥ २५॥ २६॥

अभिहतः सुग्रीवः पद्भ्यामपतत्। आकुञ्चितजानुरभवदित्यर्थः॥ २७॥ २८॥

नैपुण्यान् मोचयित्वैनं मुष्टिनोरसि ताड़यत् ।
ततस्तु संक्रुद्धतरः सुग्रीवो वानरेश्वरः ॥ २९ ॥
मोचितञ्चात्मनो दृष्ट्वा प्रहारं तेन रक्षसा ।
स ददर्शान्तरं तस्य विरूपाक्षस्य वानरः ॥ ३० ॥
ततोऽन्यं पातयत् क्रोधाच्छङ्खदेशे महातलम् ।
महेन्द्राशनिकल्पेन तजेनाभिहतः क्षितौ ॥ ३१ ॥
पपात रुधिरक्लिन्नः शोणितं हि समुद्गिरन् ।
स्रोतोभ्यस्तु विरूपाक्षो जलं प्रस्रवणादिव ॥ ३२ ॥
विवृत्तनयनं क्रोधात् सफेनं रुधिराप्लुतम् ।
ददृशुस्ते विरूपाक्षं विरूपाक्षतरं कृतम् ॥ ३३ ॥
स्फुरन्तं परिवर्त्तन्तं पार्श्वेण रुधिरोक्षितम् ।
करुणञ्च विनर्दन्तं ददृशुः कपयो रिपुम् ॥ ३४ ॥

तथा तु तौ संयति सम्प्रयुक्तौ
तरस्विनौ वानरराक्षसानाम् ।

नैपुण्याद्वञ्चनासामर्थ्यात् । मोचयित्वा मोघीकृत्य ॥ २९ ॥
अन्तरं प्रहारावसरम् ॥ ३० ॥
शङ्खदेशे ललाटास्थिप्रदेशे । तलं प्रसृतकरतलप्रहारम् ॥ ३१ ॥
प्रस्रवणो निर्झरमूलस्थानम् । प्रस्रवत्यस्मादिति व्युत्पत्तेः ॥ ३२ ॥
विरूपाक्षतरम् अतिविरूपाक्षम् ॥ ३३ ॥
पार्श्वेन परिवर्त्तन्तमित्यन्वयः ॥ ३४ ॥

बलार्णवौ सस्वनतुश्च भीमौ
महार्णवौ द्वाविव भिन्नसेतू ॥ ३५ ॥
विनाशितं प्रेच्य विरूपनेत्रं
महाबलं तं हरिपार्थिवेन ।
बलं समेतं कपिराक्षसाना-
मुद्वृत्तगङ्गाप्रतिमं बभूव ॥ ३६ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
सप्तनवतितमः सर्गः ॥ ९७ ॥

सम्प्रयुक्तौ युद्धाय सम्मुखतया स्थितौ ॥ ३५ ॥

उद्वृत्तगङ्गा उद्वेलगङ्गेत्यर्थः । वानरबलमानन्देन राक्षसबलं शोकेनेति शेषः ॥ ३६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे सप्तनवतितमः सर्गः ॥ ९७ ॥

---

## अष्टनवतितमः सर्गः।

हन्यमाने बले तूर्णमन्योऽन्यं ते महामृधे।
सरसीव महाघर्मे सूपक्षीणे बभूवतुः॥ १॥
स्वबलस्य तु घातेन विरूपाक्षवधेन च।
बभूव द्विगुणं क्रुद्धो रावणो राक्षसाधिपः॥ २॥
प्रक्षीणं स्वबलं दृष्ट्वा वध्यमानं वलीमुखैः।
बभूवास्य व्यथा युद्धे दृष्ट्वा दैवविपर्य्ययम्॥ ३॥
उवाच च समीपस्थं महोदरमनन्तरम्।
अस्मिन् काले महाबाहो! जयाशा त्वयि मे स्थिता॥ ४॥
जहि शत्रुचमूं वीर! दर्शयाद्य पराक्रमम्।
भर्त्तृपिण्डस्य कालोऽयं निर्वेष्टुं साधु युध्यताम्॥ ५॥
एवमुक्तस्तथेत्युक्त्वा राक्षसेन्द्रो महोदरः।
प्रविवेशारिसेनां स पतङ्ग इव पावकम्॥ ६॥

अन्योऽन्यं हन्यमाने ते बले सूपक्षीणे सुतरामुपक्षयवती बभूवतुः। सरसी इव सन्धिरार्थः॥ १॥ २॥ ३॥ ४॥

भर्त्तृपिण्डस्य स्वामिकृतान्नादिप्रदानोपकारस्य। निर्वेष्टुं प्रत्युपकारं कर्त्तुम्॥ ५॥ ६॥

ततः स कदनञ्चक्रे वानराणां महाबलः।
भर्त्तृवाक्येन तेजस्वी स्वेन वीर्य्येण चोदितः॥ ७॥
वानराश्च महासत्वाः प्रगृह्य विपुलाः शिलाः।
प्रविश्यारिबलं भीमं जघ्नुस्ते सर्वराक्षसान्॥ ८॥
महोदरः सुसंक्रुद्धः शरैः काञ्चनभूषणैः।
चिच्छेद पाणिपादोरु वानराणां महाहवे॥ ९॥
ततस्ते वानराः सर्वे राक्षसानां महामृधे।
दिशो दश द्रुताः केचित् केचित् सुग्रीवमाश्रिताः॥ १०॥
प्रभग्नं समरे दृष्ट्वा वानराणां महाबलम्।
अभिदुद्राव सुग्रीवो महोदरमनन्तरम्॥ ११॥
प्रगृह्य विपुलां घोरां महीधरसमां शिलाम्।
चिक्षेप च महातेजास्तद्वधाय हरीश्वरः॥ १२॥
तामापतन्तीं सहसा शिलां दृष्ट्वा महोदरः।
असम्भ्रान्तस्ततो बाणैर्निर्बिभेद ततः शिलाम्॥ १३॥
रक्षसा तेन बाणौघैर्निकृत्ता सा सहस्रधा।
निपपात तदा भूमौ गृध्रचक्रमिवाकुलम्॥ १४॥

भर्त्तृवाक्येन चोदितः स स्वेन वीर्य्येण कदनञ्चक्रे॥ ७॥ ८॥ ९॥ ॥ १०॥

अनन्तरं सन्निहितमित्यर्थः॥ ११॥ १२॥ १३॥

तान्तु भिन्नां शिलां दृष्ट्वा सुग्रीवः क्रोधमूर्च्छितः।
सालमुत्पाद्य चिक्षेप तं स चिच्छेद नैकधा॥ १५॥
शरैश्च विददारैनं शूरः परबलार्दनः।
स ददर्श ततः क्रुद्धः परिघं पतितं भुवि॥ १६॥
आविध्य तु स तं दीप्तं परिघं तस्य दर्शयन्।
परिघेणोग्रवेगेन जघानास्य हयोत्तमान्॥ १७॥
तस्माद्धतहयाद्वीरः सोऽवप्लुत्य महारथात्।
गदां जग्राह संक्रुद्धो राक्षसोऽथ महोदरः॥ १८॥
गदापरिघहस्तौ तौ युधि वीरौ समीयतुः।
नर्दन्तौ गोवृषप्रख्यौ घनाविव सविद्युतौ॥ १९॥
ततः क्रुद्धो गदां तस्य चिक्षेप रजनीचरः।
ज्वलन्तीं भास्कराभासां सुग्रीवाय महोदरः॥ २०॥
गदां तां सुमहाघोरामापतन्तीं महाबलः।

आकुलं गृध्रचक्रमिव निपपात। शिलाया अनेकधा भग्नत्वात्तत्सादृश्यम्॥ १४॥ १५॥

स सुग्रीवः॥ १६॥

दीप्तं परिघमाविध्य भ्रामयित्वा हस्तलाघवं तस्मै दर्शयंस्तद्धयान् जघान॥ १७॥ १८॥

समीयतुः सङ्गतौ बभूवतुः॥ १९॥

भास्करवदाभासते सा भास्कराभासा ताम्॥ २०॥

सुग्रीवो रोषताम्राक्षः समुद्यम्य महाहवे ॥ २१ ॥
आजघान गदां तस्य परिघेण हरीश्वरः।
पपात तरसा भिन्नः परिघस्तस्य भूतले ॥ २२ ॥
ततो जग्राह तेजस्वी सुग्रीवो वसुधातलात्।
आयसं मुसलं घोरं सर्वतो हेमभूषितम् ॥ २३ ॥
स तमुद्यम्य चिक्षेप सोऽप्यस्य प्राक्षिपद्गदाम्।
भिन्नावन्योऽन्यमासाद्य पेततुस्ते महीतले ॥ २४ ॥
ततो भिन्नप्रहरणौ मुष्टिभ्यां तौ समीयतुः।
तेजोबलसमाविष्टौ दीप्ताविव हुताशनौ ॥ २५ ॥
जघ्नतुस्तौ तदान्योऽन्यं नर्दन्तौ च पुनः पुनः।
तलैश्चान्योऽन्यमासाद्य पेततुश्च महीतले ॥ २६ ॥
उत्पेततुस्तदा तूर्णं जघ्नतुश्च परस्परम्।
भुजैश्चिक्षिपतुर्वीरावन्योऽन्यमपराजितौ ॥ २७ ॥
जग्मतुस्तौ श्रमं वीरौ बाहुयुद्धे परन्तपौ।
जहार च तदा खड्गमदूरपरिवर्त्तिनम् ॥ २८ ॥

आपतन्तीं गदां दृष्ट्वेति शेषः। समुद्यम्य परिघमिति शेषः ॥ २१ ॥
गदा पपात स परिघश्च भिन्न इत्यर्थः ॥ २२ ॥ २३ ॥
स सुग्रीवः। तं मुसलम्। सोऽपि महोदरोऽपि ॥ २४ ॥ २५ ॥
॥ २६ ॥ २७ ॥

ततो रोषपरीताङ्गौ नदन्तावभ्यधावताम्।
उद्यतासी रणे हृष्टौ युद्धे शस्त्रविशारदौ ॥ २९ ॥
दक्षिणं मण्डलञ्चोभौ सुत्वरं सम्परीयतुः।
अन्योऽन्यमभिसंक्रुद्धौ जये प्रणिहितावुभौ ॥ ३० ॥
स तु शूरो महावेगो वीर्य्यश्लाघी महोदरः।
महावर्म्मणि तं खड्गं पातयामास दुर्म्मतिः ॥ ३१ ॥
लग्नमुत्कर्षतः खड्गं खड्गेन कपिकुञ्जरः।
जहार सशिरस्त्राणं कुण्डलोपगतं शिरः ॥ ३२ ॥
निकृत्तशिरसस्तस्य पतितस्य महीतले।
तद्बलं राक्षसेन्द्रस्य दृष्ट्वा तत्र न दृश्यते ॥ ३३ ॥
हत्वा तं वानरैः सार्धं ननाद मुदितो हरिः।
चुक्रोध च दशग्रीवो बभौ हृष्टश्च राघवः ॥ ३४ ॥
विषण्णवदनाः सर्व्वे राक्षसा दीनचेतसः।

जहार जह्रतुः ॥ २८ ॥ २९ ॥

दक्षिणमण्डलञ्च चकाराद्वामञ्च सुतूर्णं सम्परीयतुरकुरुताम् ॥ ३० ॥

वीर्य्येण श्लाघत इति वीर्य्यश्लाघी ॥ ३१ ॥

सुग्रीवफलके लग्नं खड्गमुत्कर्षतो महोदरस्य शिरः खड्गेन जहार ॥ ३२ ॥

निकृत्तशिरसो राक्षसेन्द्रस्य बलं तद्राक्षसेन्द्रशिरो दृष्ट्वा तत्र स्थाने न दृश्यते। पलायितमिति यावत् ॥ ३३ ॥ ३४ ॥

विद्रवन्ति ततः सर्वे भयवित्रस्तचेतसः ॥ २५ ॥

महोदरं तं विनिपात्य भूमौ
महागिरेः कीर्णमिवैकदेशम्।
सूर्य्यात्मजस्तत्र रराज लक्ष्म्या
सूर्य्यः स्वतेजोभिरिवाप्रधृष्यः ॥ २६ ॥

अथ विजयमवाप्य वानरेन्द्रः
समरमुखे सुरसिद्धयक्षसङ्घैः।
अवनितलगतैश्च भूतसङ्घै-
र्हृषसमाकुलितैर्निरीक्ष्यमाणः ॥ २७ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
अष्टनवतितमः सर्गः ॥ ९८ ॥

सर्वे विषण्णवदना दीनचेतसश्च बभूवुरिति शेषः। भयवित्रस्तचेतसः भयकम्पितचित्ताः सर्वे विद्रवन्ति व्यद्रवन् ॥ २५ ॥

कीर्णं शीर्णम् ॥ २६ ॥

हर्षपदस्थाने हृषेति पाठश्छन्दोऽनुरोधात्। बभूवेति शेषः ॥ २७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे अष्टनवतितमः सर्गः ॥ ९८ ॥

## नवनवतितमः सर्गः ।

महोदरे तु निहते महापार्श्वो महाबलः ।
सुग्रीवेण समीक्ष्याथ क्रोधात् संरक्तलोचनः ॥ १ ॥
अङ्गदस्य चमूं भीमां क्षोभयामास मार्गणैः ।
स वानराणां मुख्यानामुत्तमाङ्गानि राक्षसः ॥ २ ॥
पातयामास कायेभ्यः फलं वृन्तादिवानिलः ।
केषाञ्चिदिषुभिर्बाहूं श्चिच्छेदाथ स राक्षसः ॥ ३ ॥
वानराणां सुसंरब्धः पार्श्वं केषाञ्चिदाक्षिपत् ।
तेऽर्दिता बाणवर्षेण महापार्श्वेन वानराः ॥ ४ ॥
विषादविमुखाः सर्वे बभूवुर्गतचेतसः ।

महोदरे इति । सुग्रीवेण महोदरे निहते सति तद्धकर्तारं सुग्रीवं महापार्श्वः समीक्ष्य ॥ १ ॥

अङ्गदचमूं क्षोभयामास ॥ २ ॥

वृन्तं प्रसवबन्धनम् ॥ ३ ॥ ४ ॥

निशम्य बलमुद्विग्नमङ्गदो राक्षसार्दितम् ॥ ५ ॥
वेगञ्चक्रे महावेगः समुद्र इव पर्वसु ।
आयसं परिघं गृह्य सूर्य्यरश्मिसमप्रभम् ॥ ६ ॥
समरे वानरश्रेष्ठो महापार्श्वे न्यपातयत् ।
स तु तेन प्रहारेण महापार्श्वो विचेतनः ।
ससूतस्यन्दनात्तस्माद्विसंज्ञश्चापतद्भुवि ॥ ७ ॥
तस्यर्क्षराजस्तेजस्वी नीलाञ्जनचयोपमः ।
निष्पत्य सुमहावीर्य्यः स्वयूथान्मेघसन्निभात् ॥ ८ ॥
प्रगृह्य गिरिशृङ्गाभां क्रुद्धः स विपुलां शिलाम् ।
अश्वान् जघान तरसा बभञ्ज स्यन्दनञ्च तम् ॥ ९ ॥
मुहूर्त्ताल्लब्धसंज्ञस्तु महापार्श्वो महाबलः ।
अङ्गदं बहुभिर्बाणैर्भूयस्तं प्रत्यविध्यत ॥ १० ॥
जाम्बवन्तं त्रिभिर्बाणैराजघान स्तनान्तरे ।
ऋक्षराजं गवाक्षञ्च जघान बहुभिः शरैः ॥ ११ ॥
गवाक्षं जाम्बवन्तञ्च स दृष्ट्वा शरपीड़ितौ ।
जग्राह परिघं घोरमङ्गदः क्रोधमूर्च्छितः ॥ १२ ॥

विषादेन विमुखाः ॥ ५ ॥ ६ ॥
ससूतस्यन्दनात् हतसूतसहितरथादित्यर्थः ॥ ७ ॥
ऋक्षराजो जाम्बवान् ॥ ८ ॥

तस्याङ्गदः सरोषाक्षो राक्षसस्य तमायसम्।
दूरस्थितस्य परिघं रविरश्मिसमप्रभम्॥ १३॥
द्वाभ्यां भुजाभ्यां संगृह्य भ्रामयित्वा च वेगवत्।
महापार्श्वाय चिक्षेप वधार्थं वालिनः सुतः॥ १४॥
स तु क्षिप्तो बलवता परिघस्तस्य रक्षसः।
धनुश्च सशरं हस्ताच्छिरस्त्राणञ्च पातयत्॥ १५॥
तं समासाद्य वेगेन वालिपुत्रः प्रतापवान्।
तलेनाभ्यहनत् क्रुद्धः कर्णमूले सकुण्डले॥ १६॥
स तु क्रुद्धो महावेगो महापार्श्वो महाद्युतिः।
करेणैकेन जग्राह सुमहान्तं परश्वधम्॥ १७॥
तं तैलधौतं विमलं शैलसारमयं दृढम्।
राक्षसः परमक्रुद्धो वालिपुत्रे न्यपातयत्॥ १८॥

गिरिशृङ्गाभां शिलां गृहीत्वाश्वान् जघान अनन्तरं स्यन्दनं बभञ्ज॥ ९॥ १०॥ ११॥ १२॥

दूरस्थितस्य राक्षसस्य वधार्थं परिघं द्वाभ्यां भुजाभ्यां संगृह्य गृहीत्वा भ्रामयित्वा च महापार्श्वाय चिक्षेपेत्यन्वयः॥ १३॥ १४॥

तस्य रक्षसो हस्तात् सशरं धनुस्तादेकं हस्तं शिरस्त्राणञ्चापातयत्। अतएवाग्रे वक्ष्यति। एकेन करेणेति॥ १५॥ १६॥ १७॥

तैलधौतं तेनातितीक्ष्णम्। शैलसारोऽयस्तन्मयम्॥ १८॥

तेन वामांसफलके भग्नं प्रत्यवपातितम् ।
अङ्गदो मोचयामास सरोषः स परश्वधम् ॥ १९ ॥
स वीरो वज्रसङ्काशमङ्गदो मुष्टिमात्मनः ।
संवर्त्तयत्सुसंक्रुद्धः पितुस्तुल्यपराक्रमः ॥ २० ॥
राक्षसस्य स्तनाभ्यासे मर्मज्ञो हृदयम्प्रति ।
इन्द्राशनिसमस्पर्शं स मुष्टिं विन्यपातयत् ॥ २१ ॥
तेन तस्य निपातेन राक्षसस्य महामृधे ।
पफाल हृदयञ्चास्य स पपात हतो भुवि ॥ २२ ॥
तस्मिन् विनिहते भूमौ तत्सैन्यं सम्प्रचुक्षुभे ।
अभवच्च महान् क्रोधः समरे रावणस्य तु ॥ २३ ॥
वानराणां प्रहृष्टानां सिंहनादः सुपुष्कलः ।
स्फोटयन्निव शब्देन लङ्कां साट्टालगोपुराम् ।
महेन्द्रेणेव देवानां नादः समभवन् महान् ॥ २४ ॥

अथेन्द्रशत्रुस्त्रिदशालयानां
वनौकसाञ्चैव महाप्रणादम्

मोचयामास मोघीचकार ॥ १९ ॥
संवर्त्तयत् समवर्त्तयत् । बबन्धेत्यर्थः ॥ २० ॥ २१ ॥
पफाल विशीर्णम् ॥ २२ ॥ २३ ॥
वानराणां सिंहनादो लङ्कां स्फोटयन्निव विदारयन्निवोदभूदिति

श्रुत्वा सरोषं युधि राक्षसेन्द्रः
पुनश्च युद्धाभिमुखोऽवतस्थे ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
नवनवतितमः सर्गः ॥ ९९ ॥

घोषः। इन्द्रेण सह देवानामिन्द्राङ्गदेन सह वानराणां सिंहनादः समभवत् ॥ २४ ॥ २५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे नवनवतितमः सर्गः ॥ ९९ ॥

---

## शततमः सर्गः ।



महोदरमहापार्श्वौ हतौ दृष्ट्वा स रावणः ।
तस्मिंश्च निहते वीरे विरूपाक्षे महाबले ॥ १ ॥
आविवेश महान् क्रोधो रावणन्तु महामृधे ।
सूतं सञ्चोदयामास वाक्यञ्चेदमुवाच ह ॥ २ ॥
निहतानाममात्यानां रुद्धस्य नगरस्य च ।
दुःखमेवापनेष्यामि हत्वा तौ रामलक्ष्मणौ ॥ ३ ॥
रामवृक्षं रणे हन्मि सीतापुष्पफलप्रदम् ।
प्रशाखा यस्य सुग्रीवो जाम्बवान् कुमुदो नलः ॥ ४ ॥
द्विविदश्चैव मैन्दश्च अङ्गदो गन्धमादनः ।

महोदरेति । हतौ दृष्ट्वा स रावणः क्रुद्धो जात इति शेषः ॥ ॥ १ ॥ २ ॥

रुद्धस्य नगरस्य । वानरबलैरिति शेषः । दुःखमपनेष्याम्येव ॥ ३ ॥

मूलोच्छेदं करिष्यामीत्याशयेन रामं सर्वाश्रयमहावृक्षत्वेन निरू-

हनूमांश्च सुषेणश्च सर्वे च हरियूथपाः ॥ ५ ॥
स दिशो दश घोषेण रथस्यातिरथो महान्।
नादयन् प्रययौ तूर्णं राघवञ्चाभ्यधावत ॥ ६ ॥
पूरिता तेन शब्देन सनदीगिरिकानना।
सञ्चचाल मही सर्वा चस्तसिंहमृगद्विजा ॥ ७ ॥
तामसं सुमहाघोरञ्चकारास्त्रं सुदारुणम्।
निर्ददाह कपीन् सर्वांस्ते प्रपेतुः समन्ततः ॥ ८ ॥
उत्पपात रजो भूमौ तैर्भग्नैः सम्प्रधावितैः।
न हि तत्सहितुं शेकुर्ब्रह्मणा निर्मितं स्वयम् ॥ ९ ॥
तान्यनीकान्यनेकानि रावणस्य शरोत्तमैः।
दृष्ट्वा भग्नानि शतशो राघवः पर्य्यवस्थितः ॥ १० ॥
ततो राक्षसशार्दूलो विद्राव्य हरिवाहिनीम्।
स ददर्श ततो रामं तिष्ठन्तमपराजितम् ॥ ११ ॥
लक्ष्मणेन सह भ्रात्रा विष्णुना वासवं यथा।

पर्यंति। रामहस्त्वमिति। सीता पुष्पं यस्य सः। स चासौ तेनैव पुष्पेण सर्वेषां वानराणां तत्तत्कर्मजफलप्रदस्तम्। सुग्रीवादयः प्रशाखा यस्य तं प्रशाखासहितं हन्मीति शेषः ॥ ४ ॥ ५ ॥

इत्युक्त्वा रथस्य घोषेण दश दिशो नादयन् ॥ ६ ॥ ७ ॥

तामसमस्त्रं तमोग्रहदेवताकमस्त्रम् ॥ ८ ॥

आलिखन्तमिवाकाशमवष्टभ्य महद्धनुः ॥ १२ ॥
पद्मपत्रविशालाक्षं दीर्घबाहुमरिन्दमम् ।
ततो रामो महातेजाः सौमित्रिसहितो बली ॥ १३ ॥
वानरांश्च रणे भग्नानापतन्तञ्च रावणम् ।
समीक्ष्य राघवो हृष्टो मध्ये जग्राह कार्मुकम् ॥ १४ ॥
विस्फारयितुमारेभे ततः स धनुरुत्तमम् ।
महावेगं महानादं निर्भिन्दन्निव मेदिनीम् ॥ १५ ॥
रावणस्य च बाणौघै रामविस्फारितेन च ।
शब्देन राक्षसास्तेन पेतुश्च शतशस्तदा ॥ १६ ॥
तयोः शरपथं प्राप्य रावणो राजपुत्रयोः ।
स बभौ च यथा राहुः समीपे शशिसूर्य्ययोः ॥ १७ ॥
तमिच्छन् प्रथमं योद्धुं लक्ष्मणो निशितैः शरैः ।
मुमोच धनुरायम्य शरानग्निशिखोपमान् ॥ १८ ॥
तान् मुक्तमात्रानाकाशे लक्ष्मणेन धनुष्मता ।

ब्रह्मणा स्वयं निर्मितं तामसमस्त्रं सहितुं सोढ़ुं न शेकुः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

राघवो हृष्टः । एकः शिष्टः शत्रुर्दृग्गोचरं प्राप्त इति हर्षः ॥ १४ ॥ १५ ॥

राघवबाणौघै रामविस्फारितेन च यः शब्दस्तेन पेतुः ॥ १६ ॥

बाणान् बाणैर्महातेजा रावणः प्रत्यवारयत् ॥ १९ ॥
एकमेकेन बाणेन त्रिभिस्त्रीन् दशभिर्दश।
लक्ष्मणस्य प्रचिच्छेद दर्शयन् पाणिलाघवम् ॥ २० ॥
अभ्यतिक्रम्य सौमित्रिं रावणः समितिञ्जयः।
आससाद रणे रामं स्थितं शैलमिवापरम् ॥ २१ ॥
स राघवं समासाद्य क्रोधसंरक्तलोचनः।
व्यसृजच्छरवर्षाणि रावणो राक्षसेश्वरः ॥ २२ ॥
शरधारास्ततो रामो रावणस्य धनुश्च्युताः।
दृष्ट्वैवापतिताः शीघ्रं भल्लान् जग्राह सत्वरम् ॥ २३ ॥
ताञ्छरौघांस्ततो भल्लैस्तीक्ष्णैश्चिच्छेद राघवः।
दीप्यमानान् महाघोराञ्छरानाशीविषोपमान् ॥ २४ ॥
राघवो रावणं तूर्णं रावणो राघवं तथा।
अन्योऽन्यं विविधैस्तीक्ष्णैः शरवर्षैर्ववर्षतुः ॥ २५ ॥

स रावणो राजपुत्रयोः समीपं प्राप्य चन्द्रसूर्ययोः समीपे राहुर्यथा बभौ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

अतिक्रम्य बाणैर्व्याकुलीकृत्य। शैलमिव स्थिरमचलं राममाससाद ॥ ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

राघवो रावणं रावणो राघवमित्यन्योऽन्यं शरवर्षैर्ववर्षतुर्ववृषतुः ॥ २५ ॥

चेरतुश्च चिरं चित्रं मण्डलं सव्यदक्षिणम् ।
बाणवेगात् समुत्क्षिप्तावन्योऽन्यमपराजितौ ॥ २६ ॥
तयोर्भूतानि विस्मेयुर्युगपत् सम्प्रयुध्यतोः ।
रौद्रयोः सायकमुचोर्यमान्तकनिकाशयोः ॥ २७ ॥
सततं विविधैर्बाणैर्बभूव गगनं तदा ।
घनैरिवातपापाये विद्युन्मालासमाकुलैः ॥ २८ ॥
गवाक्षितमिवाकाशं बभूव शरवृष्टिभिः ।
महावेगैः सुतीक्ष्णाग्रैर्गृध्रपत्रैः सुवाजितैः ॥ २९ ॥
शरान्धकारमाकाशञ्चक्रतुः प्रथमं तदा ।
गतेऽस्तं तपने चापि महामेघाविवोत्थितौ ॥ ३० ॥
तयोरभून्महायुद्धमन्योऽन्यवधकाङ्क्षिणोः ।
अनासाद्यमचिन्त्यञ्च वृत्रवासवयोरिव ॥ ३१ ॥
उभौ हि परमेष्वासावुभौ युद्धविशारदौ ।

अन्योऽन्यं बाणवेगात् समुत्क्षिप्तौ अन्योऽन्यं क्षिप्तवन्तौ । अपराजितौ अप्रतिहतौ ॥ २६ ॥

सायकं मुञ्चत इति सायकमुचौ तयोः ॥ २७ ॥

सततं व्याप्तम् ॥ २८ ॥

गवाक्षितमिव सञ्जातगवाक्षमिव । गृध्रपत्रैस्तद्बन्धनैः । सुवाजितैः सम्यक सम्पादितवेगैः । वाजं पुङ्खम् । शरवृष्टिविशेषणत्वात् ॥ २९॥

उभावस्त्रविदां मुख्यावुभौ युद्धे विचेरतुः ॥ ३२ ॥
उभौ हि येन व्रजतस्तेन तेन शरोर्मयः।
ऊर्मयो वायुनाविद्धा जग्मुः सागरयोरिव ॥ ३३ ॥
ततः संसक्तहस्तस्तु रावणो लोकरावणः।
नाराचमालां रामस्य ललाटे प्रत्यमुञ्चत ॥ ३४ ॥
रौद्रचापप्रयुक्तां तां नीलोत्पलदलप्रभाम्।
शिरसाधारयद्रामो न व्यथामभ्यपद्यत ॥ ३५ ॥
अथ मन्त्रानपि जपन् रौद्रमस्त्रमुदीरयन्।
शरान् भूयः समादाय रामः क्रोधसमन्वितः ॥ ३६ ॥
मुमोच च महातेजाश्चापमायम्य वीर्य्यवान्।
तान् शरान् राक्षसेन्द्राय चिक्षेपाच्छिन्नसायकः ॥ ३७ ॥
ते महामेघसङ्काशे कवचे पातिताः शराः।

तपने सूर्य्येऽस्तं गते चापि शब्दादस्ताचलं त्यक्त्वोदयाद्रिं गतेपीत्यर्थः। दिवापीति यावत्। यत्तु यथाश्रुतरीत्या रात्रावपीति व्याचक्षते। तत्र न कश्चिच्चमत्कारः ॥ ३० ॥ ३१ ॥ ३२ ॥

येन व्रजतः। येन येन मण्डलचारेणेत्यर्थः ॥ ३३ ॥

संसक्तहस्तो बाणप्रयोगे आसक्तहस्तः ॥ ३४ ॥ ३५ ॥

उदीरयन् प्रवर्त्तयन् ॥ ३६ ॥

अच्छिन्नसायकः अव्यवच्छिन्नसायकः निरन्तरप्रवर्त्तितबाणवर्ष इति यावत् ॥ ३७ ॥

अवध्ये राक्षसेन्द्रस्य न व्यथां जनयंस्तदा ॥ ३८ ॥
पुनरेवाथ तं रामो रथस्थं राक्षसाधिपम् ।
ललाटे परमास्त्रेण सर्वास्त्रकुशलोभिनत् ॥ ३९ ॥
ते भित्वा बाणरूपाणि पञ्चशीर्षा इवोरगाः ।
श्वसन्तो विविशुर्भूमिं रावणप्रतिकूलिताः ॥ ४० ॥
निहत्य राघवस्यास्त्रं रावणः क्रोधमूर्च्छितः ।
आसुरं सुमहाघोरमन्यदस्त्रञ्चकार सः ॥ ४१ ॥
सिंहव्याघ्रमुखांश्चापि कङ्ककोकमुखानपि ।
गृध्रश्येनमुखांश्चापि शृगालवदनांस्तथा ॥ ४२ ॥
ईहामृगमुखांश्चापि व्यादितास्यान् भयावहान् ।
पञ्चास्यान् लेलिहानांश्च ससर्ज निशितान् शरान् ॥ ४३ ॥
शरान् खरमुखांश्चान्यान् वराहमुखसंश्रितान् ।
श्वानकुक्कुटवक्त्रांश्च मकराशीविषाननान् ॥ ४४ ॥

अवध्ये अभेद्ये जनयन् अजनयन् ॥ ३८ ॥

परमास्त्रेणोत्कृष्टास्त्रेण योजितैर्बाणैरभिनत् ॥ ३९ ॥

बाणरूपाणि । प्रशंसायां रूपम् । प्रशस्ता बाणाः ; आर्षो लिङ्गव्यत्ययः । रावणप्रतिकूलिताः रावणेन निवारिता अपि श्वसन्तः पञ्चशीर्षा उरगा इव भूमिं विविशुः ॥ ४० ॥

चकार प्रादुश्चकार ॥ ४१ ॥ ४२ ॥

ईहामृगो वृकः । पञ्चास्यान् सिंहमुखान् ॥ ४३ ॥ ४४ ॥

एतांश्चान्यांश्च मायाभिः ससर्ज निशिताञ्छरान्।
रामम्प्रति महातेजाः क्रुद्धः सर्प इव श्वसन् ॥ ४५ ॥
आसुरेण समाविष्टः सोऽस्त्रेण रघुपुङ्गवः।
ससर्जास्त्रं महोत्साहं पावकं पावकोपमः ॥ ४६ ॥
अग्निदीप्तमुखान् बाणांस्तत्र सूर्य्यमुखानपि।
ग्रहनक्षत्रवर्णांश्च महोल्कामुखसंस्थितान् ॥ ४७ ॥
विद्युज्जिह्वोपमांश्चापि ससर्ज विविधाञ्छरान्।
ते रावणशरा घोरा राघवास्त्रसमाहताः ॥ ४८ ॥
विलयं जग्मुराकाशे जघ्नुश्चैव सहस्रशः।
तदस्त्रं निहतं दृष्ट्वा रामेणाक्लिष्टकर्मणा ॥ ४९ ॥
हृष्टा नेदुस्ततः सर्वे कपयः कामरूपिणः।
सुग्रीवाभिमुखा वीराः सम्परिक्षिप्य राघवम् ॥ ५० ॥

यदासुरमस्त्रं प्रादुश्चकार तदा ससर्जेत्यन्वयः ॥ ४५ ॥

समेऽस्त्रस्य प्रत्यस्त्रं पावकमिति तत्ससर्जेत्याह,—पावकमिति ॥ ४६ ॥

ततोऽखिलज्योतिर्गणमुखबाणोत्पत्तिरित्याह,—अग्निदीप्तमुखानिति ॥ ४७ ॥

विद्युज्जिह्वोपमान् विद्युदर्चिःसदृशान्। कालाजिह्वास्तथाचिंष इति हलायुधः ॥ ४८ ॥

विलयं जग्मुस्तथापि सहस्रशो वानरान् जघ्नुः ॥ ४९ ॥

ततस्तदस्त्रं विनिहत्य राघवः
प्रगृह्य तद्रावणबाहुनिःसृतम् ।
मुदान्वितो दाशरथिर्महात्मा
विनेदुरुच्चैर्मुदिताः कपीश्वराः ॥ ५१ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
शततमः सर्गः ॥ १०० ॥

सम्परिक्षिप्य परिवार्य्य ॥ ५० ॥ ५१ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे शततमः सर्गः ॥ १०० ॥

---

## एकशततमः सर्गः।

तस्मिन् प्रतिहतेऽस्त्रे तु रावणो राक्षसाधिपः।
क्रोधञ्च द्विगुणञ्चक्रे क्रोधाच्चास्त्रमनन्तरम् ॥ १ ॥
मयेन विहितं रौद्रमन्यदस्त्रं महाद्युतिः।
उत्स्रष्टुं रावणो भीमं राघवाय प्रचक्रमे ॥ २ ॥
ततः शूलानि निश्चेरुर्गदाश्च मुसलानि च।
कार्मुकाद्दीप्यमानानि वज्रसाराणि सर्वशः ॥ ३ ॥
मुद्गराः कूटपाशाश्च दीप्ताश्चाशनयस्तथा।
निपेतुर्विविधास्तीक्ष्णा वाता इव युगक्षये ॥ ४ ॥
तदस्त्रं राघवः श्रीमानुत्तमास्त्रविदां वरः।
जघान परमास्त्रेण गान्धर्वेण महाद्युतिः ॥ ५ ॥
तस्मिन् प्रतिहतेऽस्त्रे तु राघवेण महात्मना।
रावणः क्रोधताम्राक्षः सौरमस्त्रमुदीरयत् ॥ ६ ॥
ततश्चक्राणि निष्पेतुर्भास्वराणि महान्ति च।

तस्मिन् प्रतिहते इति। क्रोधाच्चास्त्रमनन्तरम्। चक्रे इति शेषः ॥ १ ॥

कार्मुकाङ्गीमवेगस्य दशग्रीवस्य धीमतः ॥ ७ ॥
तैरासीद्गगनं दीप्तं सम्पतद्भिः समन्ततः ।
पतद्भिश्च दिशो दीप्तैश्चन्द्रसूर्य्यग्रहैरिव ॥ ८ ॥
तानि चिच्छेद बाणौघैश्चक्राणि तु स राघवः ।
आयुधानि च चित्राणि रावणस्य चमूमुखे ॥ ९ ॥
तदस्त्रन्तु हतं दृष्ट्वा रावणो राक्षसाधिपः ।
विव्याध दशभिर्बाणै रामं सर्व्वेषु मर्मसु ॥ १० ॥
स विद्धो दशभिर्बाणैर्महाकार्मुकनिःसृतैः ।
रावणेन महातेजा न प्राकम्पत राघवः ॥ ११ ॥
ततो विव्याध गात्रेषु सर्वेषु समितिञ्जयः ।
राघवस्तु सुसंक्रुद्धो रावणं बहुभिः शरैः ॥ १२ ॥
एतस्मिन्नन्तरे क्रुद्धो राघवस्यानुजो बली ।
लक्ष्मणः सायकान् सप्त जग्राह परवीरहा ॥ १३ ॥
तैः सायकैर्महावेगै रावणस्य महाद्युतिः ।
ध्वजं मनुष्यशीर्षन्तु तस्य चिच्छेद नैकधा ॥ १४ ॥
सारथेश्चापि बाणेन शिरो ज्वलितकुण्डलम् ।

तत्किमस्त्रं तत्राह,—मयेनेति ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥
तानि सौराास्त्रनिःसृतचक्राणि । बाणबलादेव केवलश्चिच्छेद न प्रत्यस्त्रमपेक्ष्यतेस्म ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

जहार लक्ष्मणः श्रीमान्नैर्ऋतस्य महाबलः ॥ १५ ॥
तस्य बाणैश्च चिच्छेद धनुर्गजकरोपमम्।
लक्ष्मणो राक्षसेन्द्रस्य पञ्चभिर्निशितैस्तदा ॥ १६ ॥
नीलमेघनिभांश्चास्य सदश्वान् पर्वतोपमान्।
जघानाप्लुत्य गदया रावणस्य विभीषणः ॥ १७ ॥
हताश्वात्तु तदा वेगादवप्लुत्य महारथात्।
कोपमाहारयत्तीव्रं भ्रातरम्प्रति रावणः ॥ १८ ॥
ततः शक्तिं महाशक्तिः प्रदीप्तामशनीमिव।
विभीषणाय चिक्षेप राक्षसेन्द्रः प्रतापवान् ॥ १९ ॥
अप्राप्तामेव तां बाणैस्त्रिभिश्चिच्छेद लक्ष्मणः।
अथोदतिष्ठत्सन्नादो वानराणां महारणे ॥ २० ॥
सम्पपात त्रिधा छिन्ना शक्तिः काञ्चनमालिनी।
सविस्फुलिङ्गा ज्वलिता महोल्केव दिवश्च्युता ॥ २१ ॥
ततः सम्भावितत्तरां कालेनापि दुरासदाम्।
जग्राह विपुलां शक्तिं दीप्यमानां स्वतेजसा ॥ २२ ॥

मनुष्यः शीर्षे यस्य तम्। मनुष्यशीर्षयुक्तमित्यर्थ इत्यन्ये ॥ १४ ॥
॥ १५ ॥
गजकरोपमं धनुश्चिच्छेद ॥ १६ ॥ १७ ॥ १८ ॥
महाशक्तिर्महाबलः ॥ १९ ॥ २० ॥ २१ ॥

सा वेगिता बलवता रावणेन दुरात्मना ।
जज्वाल सुमहातेजा दीप्ताशनिसमप्रभा ॥ २३ ॥
एतस्मिन्नन्तरे वीरो लक्ष्मणस्तं विभीषणम् ।
प्राणसंशयमापन्नं तूर्णमभ्यवपद्यत ॥ २४ ॥
तं विमोचयितुं वीरश्चापमायम्य लक्ष्मणः ।
रावणं शक्तिहस्तं वै शरवर्षैरवाकिरत् ॥ २५ ॥
कीर्य्यमाणः शरौघेण विसृष्टेन महात्मना ।
स प्रहर्त्तुं मनश्चक्रे विमुखीकृतविक्रमः ॥ २६ ॥
मोचितं भ्रातरं दृष्ट्वा लक्ष्मणेन स रावणः ।
लक्ष्मणाभिमुखस्तिष्ठन्निदं वचनमब्रवीत् ॥ २७ ॥
मोचितस्ते बलश्लाघिन् ! यस्मादेवं विभीषणः ।
विमुच्य राक्षसं शक्तिस्त्वयीयं विनिपात्यते ॥ २८ ॥

सम्भाविततराम् अमोघेति सर्वविख्याताम् । दुरासदां दुःसहाम् ॥ २२ ॥

वेगिता कृतवेगा ॥ २३ ॥

तूर्णमभ्यवपद्यत । शक्तिसम्मुखं स्वयमागत्य विभीषणं रक्षितवानित्यर्थः ॥ २४ ॥ २५ ॥

महात्मना लक्ष्मणेन विसृष्टेन शरौघेण कीर्य्यमाणोऽतएव विमुखीकृतविक्रमः कुण्ठितभ्रातृवधविषयोत्साहोऽतएव भ्रातरं प्रहर्त्तुं मनश्चक्रे ॥ २६ ॥ २७ ॥ २८ ॥

एषा ते हृदयं भित्त्वा शक्तिर्लोहितलक्षणा।
मद्बाहुपरिघोत्सृष्टा प्राणानादाय यास्यति॥ २९॥
इत्येवमुक्त्वा तां शक्तिमष्टघण्टां महास्वनाम्।
मयेन मायाविहिताममोघां शत्रुघातिनीम्॥ ३०॥
लक्ष्मणाय समुद्दिश्य ज्वलन्तीमिव तेजसा।
रावणः परमक्रुद्धश्चिक्षेप च ननाद च॥ ३१॥
सा क्षिप्ता भीमवेगेन वज्राशनिसमस्वना।
शक्तिरभ्यपतद्वेगाल्लक्ष्मणं रणमूर्द्धनि॥ ३२॥
तामनुव्याहरच्छक्तिमापतन्तीं स राघवः।
स्वस्त्यस्तु लक्ष्मणायेति मोघा भव हतोद्यमा॥ ३३॥
रावणेन रणे शक्तिः क्रुद्धेनाशीविषोपमा।
मुक्ताशूरस्याभीतस्य लक्ष्मणस्य ममज्ज सा॥ ३४॥
न्यपतत् सा महावेगा लक्ष्मणस्य महोरसि।

लोहितलक्षणा शत्रुरुधिरग्रहणस्वभावा। २९॥ ३०॥ ३१॥ ३२॥

आपतन्तीं तां शक्तिं शक्त्यधिष्ठातृदेवतामुद्दिश्यानुव्याहरत्। तदेवाह,—लक्ष्मणाय स्वस्त्यस्तु। त्वं हतोद्यमा हतप्राणनाशोद्योगा अतएव मोघा प्राणापहारांशे मोघा भव। तच्छक्तिस्तु पीड़ामात्रेण चरितार्थास्त्विति भावः। स्पर्शमात्रेण प्राणापहरणसामर्थ्ययुक्तायाः शक्तेरनेन स्ववाक्येन मोघीकरणात् स्वस्य सत्यसङ्कल्पत्वं सूचितम्॥ ३३॥

जिह्वेवोरगराजस्य दीप्यमाना महाद्युतिः ॥ ३५ ॥
ततो रावणवेगेन सुदूरमवगाढ़या ।
शक्त्या विभिन्नहृदयः पपात भुवि लक्ष्मणः ॥ ३६ ॥
तदवस्थं समीपस्थो लक्ष्मणं प्रेक्ष्य राघवः ।
भ्रातृस्नेहान्महातेजा विषण्णहृदयोऽभवत् ॥ ३७ ॥
स मुहूर्त्तमिव ध्यात्वा बाष्पपर्य्याकुलेक्षणः ।
बभूव संरब्धतरो युगान्त इव पावकः ॥ ३८ ॥
न विषादस्य कालोऽयमिति सञ्चिन्त्य राघवः ।
चक्रे सुतुमुलं युद्धं रावणस्य वधे धृतः ।
सर्वयत्नेन महता लक्ष्मणं परिवीक्ष्य च ॥ ३९ ॥

सा मुक्ता शक्तिरभीतस्य भगवत्तत्त्वानुसन्धानेन निर्भयस्य लक्ष्मणस्योरसि आशु ममज्ज ॥ ३४ ॥

मुक्ता आशु उरसीति च्छेदस्य गूढ़त्वात् स्पष्टमेवाह,—क्वचित् । न्यपतदिति ॥ ३५ ॥ ३६ ॥ ३७ ॥

मुहूर्त्तमिव ध्यात्वा । किमिदानीं कर्त्तव्यमिति पर्य्यालोच्येत्यर्थः । संरब्धतरः युद्धे अधिकोत्साहवान् ॥ ३८ ॥

अथ विषादस्यायं न काल इति सञ्चिन्त्य लक्ष्मणञ्च सन्निरीक्ष्य महद्बोत्कृष्टेन सर्वयत्नेन सहजबलास्त्रबलेन रावणस्य वधे धृतो निश्चितो भूत्वा सुतुमुलं युद्धञ्चक्रे । अयञ्च वक्ष्यमाणार्थसंक्षेपः ॥ ३९ ॥

स ददर्श ततो रामः शक्त्या भिन्नं महाहवे।
लक्ष्मणं रुधिरादिग्धं सपन्नगमिवाचलम्॥ ४०॥
तामपि प्रहितां शक्तिं रावणेन बलीयसा।
यत्नतस्ते हरिश्रेष्ठा न शेकुरवमर्दितुम्॥ ४१॥
अर्दिताश्चैव बाणौघैस्ते प्रवेकेण रक्षसाम्।
सौमित्रेः सा विनिर्भिद्य प्रविष्टा धरणीतलम्॥ ४२॥
तां कराभ्यां परामृश्य रामः शक्तिं भयावहाम्।
बभञ्ज समरे क्रुद्धो बलवान् विचकर्ष च॥ ४३॥
तस्य निष्कर्षतः शक्तिं रावणेन बलीयसा।

तमेव प्रपञ्चयति। स ददर्शेति॥ ४०॥

तां शक्तिं लक्ष्मणगात्रादवमर्दितुमुद्धर्तुं यत्नतो न शेकुः। तत्र हेतुर्बलीयसा प्रहितत्वम्॥ ४१॥

हेत्वन्तरमप्याह,—अर्दिता इति। रक्षसां प्रवेकेण श्रेष्ठेन। किञ्च सा शक्तिः सौमित्रेर्देहं निर्भिद्य धरणीतलं भुवं प्रविष्टा स्पृष्टवती॥ ४२॥

तां शक्तिं कराभ्यां परामृश्य धृत्वा बलवान् बलवत्तरो रामो लक्ष्मणदेहात् विचकर्ष। विकृष्य बभञ्ज च। इयं शक्तिः सर्वदा शत्रुं निर्भिद्य रावणसमीपमेव प्राप्नोति। इदानीं रामेण मोघा भवेत्वया सत्यसङ्कल्पेन नाशितनिष्क्रमणशक्तिस्तत्रैव बभा। सा च भगवता विकृष्य भग्ना॥ ४३॥

शराः सर्व्वेषु गात्रेषु पातिता मर्म्मभेदिनः ॥ ४४ ॥
अचिन्तयित्वा तान् बाणान् समाश्लिष्य च लक्ष्मणम् ।
अब्रवीच्च हनूमन्तं सुग्रीवञ्च महाकपिम् ॥ ४५ ॥
लक्ष्मणं परिवार्य्यैवं तिष्ठध्वं वानरोत्तमाः ! ।
पराक्रमस्य कालोऽयं सम्प्राप्तो मे चिरेप्सितः ॥ ४६ ॥
पापात्मायं दशग्रीवो वध्यतां पापनिश्चयः ।
काङ्क्षितश्चातकस्येव घर्म्मान्ते मेघदर्शनम् ॥ ४७ ॥
अस्मिन् मुहूर्त्ते न चिरात् सत्यं प्रतिशृणोमि वः ।
अरावणमरामं वा जगद्द्रक्ष्यथ वानराः ! ॥ ४८ ॥
राज्यनाशं वने वासं दण्डके परिधावनम् ।
वैदेह्याश्च परामर्शं रक्षोभिश्च समागमम् ॥ ४९ ॥

एतदन्तरे रन्ध्रविद्राक्षसः प्रजहारेत्याह,—तस्येति । शक्तिं निष्कर्षतस्तस्य रामस्य गात्रेष्वित्यन्वयः ॥ ४४ ॥

समाश्लिष्येति । समाश्लेषोऽयं सकलपीड़ानिवृत्तिफलकः स्वतादात्म्यावभासनरूपः ॥ ४५ ॥ ४६ ॥

पापात्मायं वध्यतां मत्तोऽद्य वधं प्राप्नोतु । यतो घर्म्मान्ते चातकस्य मेघदर्शनमिव वधार्थमस्य दर्शनं मम चिरं काङ्क्षितम् । स्तोककस्येति पाठेऽपि चातकस्येत्येवार्थः । स्तोककश्चातकः समावित्यमरात् ॥ ४७ ॥

प्राप्तं दुःखं महद्घोरं क्लेशश्च निरयोपमः।
अद्य सर्वमहं त्यक्ष्ये निहत्वा रावणं रणे ॥ ५० ॥
यदर्थं वानरं सैन्यं समानीतमिदं मया।
सुग्रीवश्च कृतो राज्ये निहत्वा वालिनं रणे ॥ ५१ ॥
यदर्थं सागरः क्रान्तः सेतुर्बद्धश्च सागरे ॥ ५२ ॥
सोऽयमद्य रणे पापश्चक्षुर्विषयमागतः।
चक्षुर्विषयमागम्य नायं जीवितुमर्हति ॥ ५३ ॥
दृष्टिं दृष्टिविषस्येव सर्पस्य मम रावणः।
यथा वा वैनतेयस्य दृष्टिं प्राप्तो भुजङ्गमः ॥ ५४ ॥
सुखं पश्यथ दुर्धर्षा ! युद्धं वानरपुङ्गवाः !।
आसीनाः पर्वताग्रेषु ममेदं रावणस्य च ॥ ५५ ॥
अद्य पश्यन्तु रामस्य रामत्वं मम संयुगे।
त्रयो लोकाः सगन्धर्वाः सिद्धगन्धर्वचारणाः ॥ ५६ ॥

प्रतिशृणोमि प्रतिजाने। न चिरादित्यस्य शीघ्रमित्यर्थकस्या रावणमित्यादिनान्वयः ॥ ४८ ॥ ४९ ॥

राज्यनाशादिकृतं घोरं दुःखं मानसं प्राप्तम्। निरयोपमो यातनोपमः क्लेशः कायक्लेशश्च प्राप्तः ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥

दृष्टिविषस्य दर्शनमात्रेण संहारकरमहाविषवतः सर्पस्य दृष्टिं प्राप्तो मनुष्य इव न रावणो जीवितुमर्हति ॥ ५४ ॥ ५५ ॥

अद्य कर्म करिष्यामि यल्लोकाः सचराचराः ।
सदेवाः कथयिष्यन्ति यावद्भूमिर्धरिष्यति ॥ ५७ ॥
एवमुक्त्वा शितैर्बाणैस्तप्तकाञ्चनभूषणैः ।
आजघान रणे रामो दशग्रीवं समाहितः ॥ ५८ ॥
तथा प्रदीप्तैर्नाराचैर्मुसलैश्चापि रावणः ।
अभ्यवर्षत्तदा रामं धाराभिरिव तोयदः ॥ ५९ ॥
रामरावणमुक्तानामन्योऽन्यमभिनिघ्नताम् ।
वराणाञ्च शराणाञ्च बभूव तुमुलः स्वनः ॥ ६० ॥
विच्छिन्नाश्च विकीर्णाश्च रामरावणयोः शराः ।
अन्तरिक्षात् प्रदीप्ताग्रा निपेतुर्धरणीतले ॥ ६१ ॥
तयोर्ज्यातलनिर्घोषो रामरावणयोर्महान् ।
त्रासनः सर्वभूतानां बभूवाद्भुतदर्शनः ॥ ६२ ॥

रामस्य रामत्वं त्रीन् लोकान् सर्षिदेवान् धर्मेण सत्येन शौर्येण च रमयतीत्यन्वर्थं रामत्वम् । तदुचितकर्माद्य करिष्यामीति भावः ॥ ॥ ५६ ॥

यावद्भूमिर्धरिष्यति प्राणिनस्तावद्यन्मे कर्म सचराचराः सदेवा लोका जनाः कथयिष्यन्ति तादृशं कर्म करिष्यामि ॥ ५७ ॥ ५८ ॥ ५९ ॥

वराणां शराणां श्रेष्ठानां शराणाम् । चान्मुसलानाम् ॥ ६० ॥ ॥ ६१ ॥ ६२ ॥

विकीर्य्यमाणः शरजालवृष्टिभि-
र्महात्मना दीप्तधनुष्मतार्द्दितः।
भयात् प्रदुद्राव समेत्य रावणो
यथानिलेनाभिहतो बलाहकः॥ ६३॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
एकाधिकशततमः सर्गः॥ १०१॥

भयात् भ्रातृपीड़ाजनितकोपेन सर्वथा मां हनिष्यत्येवेत्यर्थः। इदं पलायनममासायङ्काले॥ ६३॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे एकाधिकशततमः सर्गः॥ १०१॥

---

# द्व्यधिकशततमः सर्गः ।



शक्त्या निपातितं दृष्ट्वा रावणेन बलीयसा ।
लक्ष्मणं समरे शूरं शोणितौघपरिप्लुतम् ॥ १ ॥

स दत्त्वा तुमुलं युद्धं रावणस्य दुरात्मनः ।
विसृजन्नेव बाणौघान् सुषेणमिदमब्रवीत् ॥ २ ॥

एष रावणवीर्येण लक्ष्मणः पतितो भुवि ।
सर्पवच्चेष्टते वीरो मम शोकमुदीरयन् ॥ ३ ॥

शोणितार्द्रमिमं वीरं प्राणैः प्रियतरं मम ।
पश्यतो मम का शक्तिर्योद्धुं पर्याकुलात्मनः ॥ ४ ॥

अयं स समरश्लाघी भ्राता मे शुभलक्षणः ।
यदि पञ्चत्वमापन्नः प्राणैर्मे किं सुखेन वा ॥ ५ ॥

शक्त्येति ॥ १ ॥

बाणौघान् विसृजन् रावणस्य तुमुलं युद्धं दत्त्वा तस्मिन् पलायिते लक्ष्मणपीडानिवृत्त्यर्थं सुषेणमिदमब्रवीत् ॥ २ ॥

शोकमुदीरयन् जनयन् ॥ ३ ॥

प्राणैः प्राणेभ्यः ॥ ४ ॥ ५ ॥

लज्जतीव हि मे वीर्य्यं भ्रश्यतीव कराद्धनुः।
सायका व्यवसीदन्ति दृष्टिर्बाष्पवशं गता ॥ ६ ॥
अवसीदन्ति गात्राणि स्वप्नयाने नृणामिव।
चिन्ता मे वर्त्तते तीव्रा मुमूर्षापि च जायते ॥ ७ ॥
भ्रातरं निहतं दृष्ट्वा रावणेन दुरात्मना।
विष्टनन्तन्तु दुःखार्त्तं मर्मण्यभिहतं भृशम् ॥ ८ ॥
परं विषादमापन्नो विललापाकुलेन्द्रियः।
भ्रातरं निहतं दृष्ट्वा लक्ष्मणं रणपांसुषु ॥ ९ ॥
विजयोऽपि हि मे शूर ! न प्रियायोपकल्पते।
अचक्षुर्विषयश्चन्द्रः कां प्रीतिं जनयिष्यति ॥ १० ॥
किं मे युद्धेन किं प्राणैर्युद्धकार्य्यं न विद्यते।
यत्रायं निहतः शेते रणमूर्द्धनि लक्ष्मणः ॥ ११ ॥
यथेव मां वनं यान्तमनुयाति महाद्युतिः।
अहमप्यनुयास्यामि तथैवैनं यमक्षयम् ॥ १२ ॥
इष्टबन्धुजनो नित्यं मां स नित्यमनुव्रतः।

---

मज्जतीवेति परस्मैपदमार्षम् ॥ ६ ॥
स्वप्नयाने। स्वप्ने इत्यर्थे आर्षमस्य साधुत्वम् ॥ ७ ॥
भ्रातरं निहतमित्यादिसार्धश्लोकः कविवाक्यम्। विष्टनन्तं विकृतशब्दं कुर्वन्तम् ॥ ८ ॥

इमामवस्थां गमितो राक्षसैः कूटयोधिभिः॥ १३॥
देशे देशे कलत्राणि देशे देशे च बान्धवाः।
तन्तु देशं न पश्यामि यत्र भ्राता सहोदरः॥ १४॥
किन्तु राज्येन दुर्द्धर्ष! लक्ष्मणेन विना मम।
कथं वक्ष्याम्यहं त्वम्बां सुमित्रां पुत्रवत्सलाम्॥ १५॥
उपालम्भं न शक्ष्यामि सोढ़ुं दत्तं सुमित्रया।
किन्नु वक्ष्यामि कौशल्यां मातरं किन्नु कैकयीम्॥ १६॥
भरतं किन्नु वक्ष्यामि शत्रुघ्नञ्च महाबलम्।
सह तेन वनं यातो विना तेनागतः कथम्॥ १७॥
इहैव मरणं श्रेयो न तु बन्धुविगर्हणम्।
किं मया दुष्कृतं कर्म कृतमन्यत्र जन्मनि॥ १८॥
येन मे धार्मिको भ्राता निहतश्चाग्रतः स्थितः।
हा भ्रातर्मनुजश्रेष्ठ! शूराणां प्रवर प्रभो!॥ १९॥
एकाकी किन्नु मां त्यक्त्वा परलोकाय गच्छसि।
विलपन्तञ्च मां भ्रातः! किमर्थं नावभाषसे॥ २०॥
उत्तिष्ठ पश्य किं शेषे दीनं मां पश्य चक्षुषा।
शोकार्त्तस्य प्रमत्तस्य पर्वतेषु वनेषु च॥ २१॥
विषण्णस्य महाबाहो! समाश्वासयिता मम।

रणपांसुषु। लुण्ठन्तमिति शेषः। तादृशं भ्रातरं दृष्ट्वा विजयोऽपि

राममेवं ब्रुवाणन्तु शोकव्याकुलितेन्द्रियम् ॥ २२ ॥
आश्वासयन्नुवाचेदं सुषेणः परमं वचः ।
त्यजेमां नरशार्दूल ! बुद्धिं वैक्लव्यकारिणीम् ॥ २३ ॥
शोकसञ्जननीं चिन्तां तुल्यां बाणैश्चमूमुखे ।
नैव पञ्चत्वमापन्नो लक्ष्मणो लक्ष्मिवर्धनः ॥ २४ ॥
नह्यस्य विकृतं वक्त्रं न च श्यामत्वमागतम् ।
सुप्रभं च प्रसन्नं च मुखमस्य निरीक्ष्यताम् ॥ २५ ॥
पद्मपत्रतलौ हस्तौ सुप्रसन्ने च लोचने ।
नेदृशं दृश्यते रूपं गतासूनां विशाम्पते ! ॥ २६ ॥
विषादं मा कृथा वीर ! सप्राणोऽयमरिन्दम ! ।
आख्याति तु प्रसुप्तस्य स्रस्तगात्रस्य भूतले ॥ २७ ॥
सोच्छ्वासं हृदयं वीर ! कम्पमानं मुहुर्मुहुः ।
एवमुक्त्वा महाप्राज्ञः सुषेणो राघवं वचः ॥ २८ ॥

से न प्रियायेत्यर्थः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

बाणैः प्राचुर्येणैतैस्तुल्याम् । न पञ्चत्वं मृतिमापन्नः । श्वासाद्यनुभवात ॥ २४ ॥

नापि मरिष्यति लक्षणाभावादित्याह,—नह्यस्येति ॥ २५ ॥

पद्मपत्रतलौ पद्मपत्रवद्रक्तवर्णकरतलवन्तौ ॥ २६ ॥

समीपस्थमुवाचेदं हनूमन्तं महाकपिम् ।
सौम्य ! शीघ्रमितो गत्वा पर्वतं हि महोदयम् ॥ २९ ॥
पूर्वन्तु कथितो योऽसौ वीर ! जाम्बवता तव ।
दक्षिणे शिखरे जातां महौषधिमिहानय ॥ ३० ॥
विशल्यकरणीं नाम्ना सावर्ण्यकरणीं तथा ।
सञ्जीवकरणीं वीर ! सन्धानीञ्च महौषधीम् ॥ ३१ ॥
सञ्जीवनार्थं वीरस्य लक्ष्मणस्य त्वमानय ।
इत्येवमुक्तो हनुमान् गत्वा चौषधिपर्वतम् ।
चिन्तामभ्यगमच्छ्रीमानजानंस्ता महौषधीः ॥ ३२ ॥
तस्य बुद्धिः समुत्पन्ना मारुतेरमितौजसः ।
इदमेव गमिष्यामि गृहीत्वा शिखरं गिरेः ॥ ३३ ॥
अस्मिंस्तु शिखरे जातामोषधीं तां सुखावहाम् ।
प्रतर्कणावगच्छामि सुषेणो ह्येवमब्रवीत् ॥ ३४ ॥

•भूतले प्रसुप्तस्य स्रस्तगात्रस्येव मुहुर्मुहुः कम्पमानस्य हृदयममुं सोच्छ्वासमाख्याति ॥ २७ ॥ २८ ॥ २९ ॥

योऽसौ जाम्बवता ते कथितस्तमोषधिपर्वतं गत्वा तस्य दक्षिणशिखरे जातामोषधीमानय ॥ ३० ॥

•सावर्ण्यकरणीं पूर्ववर्णसमानवर्णकरणीम् ॥ ३१ ॥

अजानंस्ता महौषधीरिति । पूर्वदृष्टानामप्यपरिचये पुराणान्तरोक्तकालनेमियुद्धकृतचित्तचाञ्चल्यं हेतुरिति बोध्यम् ॥ ३२ ॥ ३३ ॥

अगृह्य यदि गच्छामि विशल्यकरणीमहम्।
कालात्ययेन दोषः स्याद्वैक्लव्यञ्च महद्भवेत् ॥ ३५ ॥
इति सञ्चिन्त्य हनुमान् गत्वा क्षिप्रं महाबलः।
आसाद्य पर्वतश्रेष्ठं त्रिःप्रकम्प्य गिरेस्तटम् ॥ ३६ ॥
फुल्लनानातरुगणं समुत्पाट्य महाबलः।
गृहीत्वा हरिशार्दूलो हस्ताभ्यां समतोलयत् ॥ ३७ ॥
स नीलमिव जीमूतं तोयपूर्णं नभस्तलात्।
उत्पपात गृहीत्वा तु हनूमान् शिखरं गिरेः ॥ ३८ ॥

अस्मिंस्तु शिखरे इति। अस्मिन्नेव शिखरे जातां तामोषधीं प्रतर्क्यागच्छामि। हि यतः सुषेण एवमेवं लक्षणशिखरे तामब्रवीत् ॥ ३४ ॥

अगृह्येति। अत्र शिखरे स्थितामन्यामेव जानामि इयं विशल्यकरणीति। विशल्यां न जानामि। अनुभवाभावात्। अतस्तां विशल्यकरणीं [illegible] लक्षणत्वादवश्यमपेक्षितां यद्यगृहीत्वा अन्यां वा तदाभासां गृहीत्वा गच्छामि तदा महद्वैक्लव्यम् अचतुरत्वादि-दोषः स्यात्। विचारकरणे तु कालात्ययेन लक्ष्मणस्य प्राणनाशो दोषः स्यात् ॥ ३५ ॥

इत्युक्तमादिकं सञ्चिन्त्य त्रिःप्रकम्प्य। स्वेन पुरास्थापि तस्यापि पुनरुत्पाटनार्थं त्रिःकम्पनम्। पूर्वं संगृहीतौषधीनां मूर्च्छितयूथपेषु व्ययात् पुनरस्य प्रेषणमिति बोध्यम् ॥ ३६ ॥ ३७ ॥

गिरेः शिखरं गृहीत्वा स्थलान्नभ उत्पपात ॥ ३८ ॥

समागम्य महावेगः संन्यस्य शिखरं गिरेः।
विश्रम्य किञ्चिद्धनुमान् सुषेणमिदमब्रवीत्॥ ३९॥
ओषधीर्नावगच्छामि ताऽ अहं हरिपुङ्गव!।
तदिदं शिखरं कृत्स्नं गिरेस्तस्याहृतं मया॥ ४०॥
एवं कथयमानन्तु प्रशस्य पवनात्मजम्।
सुषेणो वानरश्रेष्ठो जग्राहोत्पाट्य चौषधीः॥ ४१॥
विस्मितास्तु बभूवुस्ते सर्वे वानरपुङ्गवाः।
दृष्ट्वा तु हनुमत्कर्म सुरैरपि सुदुष्करम्॥ ४२॥
ततः सङ्क्षोदयित्वा तामौषधीं वानरोत्तमः।
लक्ष्मणस्य ददौ नस्तः सुषेणः सुमहाद्युतिः॥ ४३॥
सशल्यः स समाघ्राय लक्ष्मणः परवीरहा।
विशल्यो विरुजः शीघ्रमुदतिष्ठन्महीतलात्॥ ४४॥
तमुत्थितन्तु हरयो भूतलात् प्रेक्ष्य लक्ष्मणम्।
साधु साध्विति सुप्रीता लक्ष्मणं प्रत्यपूजयन्॥ ४५॥
एह्येहीत्यब्रवीद्रामो लक्ष्मणं परवीरहा।
सस्वजे गाढमालिङ्ग्य बाष्पपर्याकुलेक्षणः॥ ४६॥
अब्रवीच्च परिष्वज्य सौमित्रिं राघवस्तदा।

संन्यस्य सुषेणसमीप इति शेषः॥ ३९॥ ४०॥ ४१॥ ४२॥
संक्षोदयित्वा। सम्मर्द्येत्यर्थः॥ ४३॥ ४४॥ ४५॥

दिष्ट्या त्वां वीर! पश्यामि मरणात् पुनरागतम् ॥ ४७ ॥
न हि मे जीवितेनार्थः सीतया च जयेन वा।
को हि मे जीवितेनार्थस्त्वयि पञ्चत्वमागते ॥ ४८ ॥
इत्येवं ब्रुवतस्तस्य राघवस्य महात्मनः
खिन्नः शिथिलया वाचा लक्ष्मणो वाक्यमब्रवीत् ॥ ४९ ॥
तां प्रतिज्ञां प्रतिज्ञाय पुरा सत्यपराक्रम!।
लघुः कश्चिदिवासत्त्वो नैवं त्वं वक्तुमर्हसि ॥ ५० ॥
न हि प्रतिज्ञां कुर्वन्ति वितथां सत्यवादिनः।
लक्षणं हि महत्त्वस्य प्रतिज्ञापरिपालनम् ॥ ५१ ॥
नैराश्यमुपगन्तुञ्च नालं ते मत्कृतेऽनघ!।
वधेन रावणस्याद्य प्रतिज्ञामनुपालय ॥ ५२ ॥
न जीवन्यास्यते शत्रुस्तव बाणवशंगतः।
नर्दतस्तीक्ष्णदंष्ट्रस्य सिंहस्येव महागजः ॥ ५३ ॥

दिष्ट्येति। उत्थितं लक्ष्मणं राम दिष्ट्येत्यब्रवीत् ॥ ४६ ॥ ४७ ॥
॥ ४८ ॥

शिथिलया वाचा खिन्नः। को हि मे जीवितेनार्थ इत्येवं रूपया रावणवधविभीषणराज्यदानप्रतिज्ञाशैथिल्यकरया वाचा खिन्न इत्यर्थः ॥ ४९ ॥

तदेवाह,—तामिति। तां मदुक्तरूपाम् ॥ ५० ॥ ५१ ॥

मत्कृते नैराश्यमुपगन्तुं नालं न युक्तम्। दैवादिपत्तावपीति

अहन्तु वधमिच्छामि शीघ्रमस्य दुरात्मनः।
यावदस्तं न यात्येष कृतकर्मा दिवाकरः॥ ५४॥
यदि वधमिच्छसि रावणस्य संख्ये
यदि च कृतां हि तवेच्छसि प्रतिज्ञाम्।
यदि तव राजसुताभिलाष आर्य्य!
कुरु च वचो मम शीघ्रमद्य वीर!॥ ५५॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
द्व्यधिकशततमः सर्गः॥ १०२॥

शेषः। प्रतिज्ञामनुपालय दैवगत्या ममापि स्वस्थतया स्वस्थचित्तः सन् प्रतिज्ञां पालय॥ ५२॥ ५३॥

कृतकर्मा अद्यतनकर्त्तव्यांशे कृतलोकानुग्रहः। यावदस्तं न याती-त्यनेनाश्विनशुक्लप्रतिपद्येषा वार्त्तेति गम्यते॥ ५४॥ ५५॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
युद्धकाण्डे द्व्यधिकशततमः सर्गः॥ १०२॥

---

# अधिकशततमः सर्गः

लक्ष्मणेन तु तद्वाक्यमुक्तं श्रुत्वा स राघवः ।
सन्दधे परवीरघ्नो धनुरादाय वीर्य्यवान् ॥ १ ॥
रावणाय शरान् घोरान् विससर्ज चमूमुखे ।
अथान्यं रथमास्थाय रावणो राक्षसाधिपः ॥ २ ॥
अभ्यधावत काकुत्स्थं स्वर्भानुरिव भास्करम् ।
दशग्रीवो रथस्थस्तु रामं वज्रोपमैः शरैः ।
आजघान महाशैलं धाराभिरिव तोयदः ३ ॥
दीप्तपावकसङ्काशैः शरैः काञ्चनभूषणैः ।
अभ्यवर्षद्रणे रामो दशग्रीवं समाहितः ॥ ४ ॥
भूमौ स्थितस्य रामस्य रथस्थस्य च रक्षसः ।
न समं युद्धमित्याहुर्देवगन्धर्वकिन्नराः ॥ ५ ॥
ततो देववरः श्रीमान् श्रुत्वा तेषां वचोऽमृतम् ।

लक्ष्मणेनेति ॥ १ ॥

रावणाय शरान् विससर्ज । अथान्यं रथमित्यनेन चास्मिन् स्थाने रावणेन शुक्राज्ञया जयनिमित्तं निकुम्भिलायामारब्धहोमकर्मणो वानर-द्वारा हिंसनं पुराणान्तरोक्तमनुसन्धेयमिति सूचितम् । पूर्वं रथात्

आहूय मातलिं शक्रो वचनञ्चेदमब्रवीत् ॥ ६ ॥
रथेन मम भूयिष्ठं शीघ्रं याहि रघूत्तमम्।
आहूय भूतलं यातः कुरु देवहितं महत् ॥ ७ ॥
इत्युक्तो देवराजेन मातलिर्देवसारथिः।
प्रणम्य शिरसा देवं ततो वचनमब्रवीत् ॥ ८ ॥
शीघ्रं यास्यामि देवेन्द्र! सारथ्यञ्च करोम्यहम्।
ततो हयैश्च संयोज्य हरितैः स्यन्दनोत्तमम्।
ततः काञ्चनचित्राङ्गः किङ्किणीशतभूषितः ॥ ९ ॥
तरुणादित्यसङ्काशो वैदूर्य्यमयकूबरः।
सदश्वैः काञ्चनापीडैर्युक्तः श्वेतप्रकीर्णकैः ॥ १० ॥
हरिभिः सूर्य्यसङ्काशैर्हेमजालविभूषितैः।
रुक्मवेणुध्वजः श्रीमान् देवराजरथो वरः ॥ ११ ॥

पलायनेनत्या रावणादेश्यकशरविसर्गस्य रणभूमावसम्भवात्। आश्विनप्रतिपन्मध्याह्ने रतद्युद्धप्रवृत्तिः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

मम रथेन शीघ्रं रघूत्तमं याहि। भूतलं यातः प्राप्तश्च आहूय रघूत्तमं सम्बोधनपूर्वं देवराजरथोऽयमिति बोधयित्वा महद्देवहितं कुर्वित्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥

काञ्चनापीडैः स्वर्णाभरणैः। श्वेतप्रकीर्णकैः सितचामराद्यलङ्कारवद्भिः। चामरन्तु प्रकीर्णकमित्यमरः ॥ १० ॥

देवराजरथः योऽस्तीति शेषः। तमादायेत्युत्तरेण सम्बन्धः ॥ ११ ॥

देवराजेन सन्दिष्टो रथमारुह्य मातलिः।
अभ्यवर्त्तत काकुत्स्थमवतीर्य्य त्रिविष्टपात्॥ १२॥
अब्रवीच्च तदा रामं सप्रतोदो रथे स्थितः।
प्राञ्जलिर्मातलिर्वाक्यं सहस्राक्षस्य सारथिः॥ १३॥
सहस्राक्षेण काकुत्स्थ! रथोऽयं विजयाय ते।
दत्तस्तव महासत्त्व! श्रीमन् शत्रुनिबर्हण!॥ १४॥
इदमैन्द्रं महच्चापं कवचञ्चाग्निसन्निभम्।
शराश्चादित्यसङ्काशाः शक्तिश्च विमला शिवा॥ १५॥
आरुह्येमं रथं वीर! राक्षसं जहि रावणम्।
मया सारथिना देव! महेन्द्र इव दानवान्॥ १६॥
इत्युक्तः सम्परिक्रम्य रथं तमभिवाद्य च।
आरुरोह तदा रामो लोकान् लक्ष्म्या विराजयन्॥ १७॥
तद्बभौ चाद्भुतं युद्धं द्वैरथं रोमहर्षणम्।
रामस्य च महाबाहो रावणस्य च रक्षसः॥ १८॥

देवराजेन सन्दिष्टः शीघ्रं गच्छेत्याज्ञप्तो मातलिरित्यन्वयः। पूर्वाज्ञया वस्तुसम्भीकरणं पुनराज्ञया मनुष्यलोकं प्रतिचलनमिति बोध्यम्॥
॥ १२॥ १३॥ १४॥

इदं दत्तमित्यनुषज्यते॥ १५॥ १६॥

सम्परिक्रम्य प्रदक्षिणीकृत्य॥ १७॥

स गान्धर्वेण गान्धर्वं दैवं दैवेन राघवः।
अस्त्रं राक्षसराजस्य जघान परमास्त्रवित्॥ १९॥
अस्त्रन्तु परमं घोरं राक्षसं राक्षसाधिपः।
ससर्ज परमक्रुद्धः पुनरेव निशाचरः॥ २०॥
ते रावणधनुर्मुक्ताः शराः काञ्चनभूषणाः।
अभ्यवर्त्तन्त काकुत्स्थं सर्पा भूत्वा महाविषाः॥ २१॥
ते दीप्तवदना दीप्तं वमन्तो ज्वलनं मुखैः।
राममेवाभ्यवर्त्तन्त व्यादितास्या भयानकाः॥ २२॥
तैर्वासुकिसमस्पर्शैर्दीप्तभोगैर्महाविषैः।
दिशश्च सन्तताः सर्वा विदिशश्च समावृताः॥ २३॥
तान् दृष्ट्वा पन्नगान् रामः समापतत आहवे।
अस्त्रं गारुत्मतं घोरं प्रादुश्चक्रे भयावहम्॥ २४॥
ते राघवधनुर्मुक्ता रुक्मपुङ्खाः शिखिप्रभाः।
सुपर्णाः काञ्चना भूत्वा विचेरुः सर्पशत्रवः॥ २५॥
ते तान् सर्वान् शरान् जघ्नुः सर्परूपान् महाजवान्।

द्वैरथं द्वौ रथौ ययोस्तौ द्विरथौ तयोरिदं द्वैरथम्॥ १८॥
॥ १९॥ २०॥ २१॥
व्यादितास्या व्यात्तवदनाः॥ २१॥ २२॥
प्रादुश्चक्रे प्रयुयुजे॥ २४॥

सुपर्णरूपा रामस्य विशिखाः कामरूपिणः ॥ २६ ॥
अस्त्रे प्रतिहते क्रुद्धो रावणो राक्षसाधिपः ।
अभ्यवर्षत्तदा रामं घोराभिः शरवृष्टिभिः ॥ २७ ॥
ततः शरसहस्रेण राममक्लिष्टकारिणम् ।
अर्दयित्वा शरौघेण मातलिं प्रत्यविध्यत ॥ २८ ॥
चिच्छेद केतुमुद्दिश्य शरेणैकेन रावणः ।
पातयित्वा रथोपस्थे रथात् केतुञ्च काञ्चनम् ॥ २९ ॥
ऐन्द्रानपि जघानाश्वान् शरजालेन रावणः ।
विषेदुर्देवगन्धर्वचारणा दानवैः सह ॥ ३० ॥
राममार्त्तं तदा दृष्ट्वा सिद्धाश्च परमर्षयः ।
व्यथिता वानरेन्द्राश्च बभूवुः सविभीषणाः ॥ ३१ ॥
रामचन्द्रमसं दृष्ट्वा ग्रस्तं रावणराहुणा ।
प्राजापत्यञ्च नक्षत्रं रोहिणीं शशिनः प्रियाम् ॥ ३२ ॥
समाक्रम्य बुधस्तस्थौ प्रजानामहितावहः ।
सधूमपरिवृत्तोर्मिः प्रज्वलन्निव सागरः ॥ ३३ ॥

शिखिप्रभा अग्निप्रभाः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

केतुमुद्दिश्य प्रक्षिप्तेनैकेन शरेण केतुं चिच्छेद। छिन्नञ्च तं रथाग्रदेशाद्ध्वंदेशाद्रथोपस्थे पातयित्वा ॥ २९ ॥

अश्वानपि जघान ॥ ३० ॥ ३१ ॥

उत्पपात तदा क्रुद्धः स्पृशन्निव दिवाकरम् ।
शस्त्रवर्णः सुपरुषो मन्दरश्मिर्दिवाकरः ॥ ३४ ॥
अदृश्यत कबन्धाङ्कः संसक्तो धूमकेतुना ।
कोशलानाञ्च नक्षत्रं व्यक्तमिन्द्राग्निदैवतम् ॥ ३५ ॥
आहत्याङ्गारकस्तस्थौ विशाखामपि चाम्बरे ।
दशास्यो विंशतिभुजः प्रगृहीतशरासनः ॥ ३६ ॥
अदृश्यत दशग्रीवो मैनाक इव पर्वतः ।
निरस्यमानो रामस्तु दशग्रीवेण रक्षसा ॥ ३७ ॥
नाशक्नोदभिसन्धातुं सायकान् रणमूर्द्धनि ।
स कृत्वा भ्रुकुटिं क्रुद्धः किञ्चित् संरक्तलोचनः ॥ [illegible] ॥
जगाम सुमहाक्रोधं निर्दहन्निव राक्षसान् ।
तस्य क्रुद्धस्य वदनं दृष्ट्वा रामस्य धीमतः ।
सर्वभूतानि वित्रेसुः प्राकम्पत च मेदिनी ॥ ३८ ॥

अथ रामभयावहानुत्पातानाह,—प्राजापत्यमिति। प्रजापतिदैवत्यनक्षत्रभूतां रोहिणीमित्यर्थः ॥ ३२ ॥ ३३ ॥

दिवाकरं स्पृशन्निवोत्पपात। अत्युच्चार्मिर्जात इत्यर्थः। शस्त्रवर्णः कृष्णान्तर्मण्डलः ॥ ३४ ॥

कबन्धाङ्कः कबन्धोऽङ्को यस्य सः ॥ ३५ ॥

विशाखं विशाखाख्यनक्षत्रम्। एते उत्पाता रामस्य तथामनुष्यधर्मनटनसूचका इति बोध्यम् ॥ ३६ ॥ ३७ ॥ ३८ ॥

सिंहशार्दूलवान्शैलः सञ्चचाल चलद्रुमः।
बभूव चापि क्षुभितः समुद्रः सरितांपतिः॥ ४०॥
खराश्च खरनिर्घोषा गगने परुषा घनाः।
औत्पातिकाश्च नर्दन्तः समन्तात् परिचक्रमुः॥ ४१॥
रामं दृष्ट्वा सुसंक्रुद्धमुत्पातांश्चैव दारुणान्।
वित्रेसुः सर्वभूतानि रावणस्याभवद्भयम्॥ ४२॥
विमानस्थास्तदा देवा गन्धर्वाश्च महोरगाः।
ऋषिदानवदैत्याश्च गरुत्मन्तश्च खेचराः॥ ४३॥
ददृशुस्ते तदा युद्धं लोकसंवर्त्तसंस्थितम्।
नानाप्रहरणैर्भीमैः शूरयोः सम्प्रयुध्यतोः॥ ४४॥
ऊचुः सुरासुराः सर्वे तदा विग्रहमागताः।
प्रेक्षमाणा महायुद्धं वाक्यं भक्त्या प्रहृष्टवत्॥ ४५॥
दशग्रीवं जयेत्याहुरसुराः समवस्थिताः।
देवा राममथोचुस्ते त्वं जयेति पुनः पुनः॥ ४६॥

क्रुद्धः स रामः सुमहाक्रोधं जगाम। तादृशक्रोधप्राप्तो स्वजनार्त्ति-भूर्तवैपरीत्य रावणपराक्रमस्य निमित्तम्॥ ३९॥

चलद्रुम इति बङ्गग्राहिः। महद्द्रुम इति पाठान्तरम्॥ ४०॥

औत्पातिकाः उत्पातप्रवृत्ताः॥ ४१॥ ४२॥ ४३॥

लोकानां संवर्त्तः प्रलयस्तद्वत्संस्थितं संस्थानं यस्य तत्॥ ४४॥

एतस्मिन्नन्तरे क्रोधात् राघवस्य च रावणः।
प्रहर्त्तुंकामो दुष्टात्मा स्पृशन् प्रहरणं महत् ॥ ४७ ॥
वज्रसारं महानादं सर्वशत्रुनिबर्हणम्।
शैलशृङ्गनिभैः कूटैश्चित्तदृष्टिभयावहम् ॥ ४८ ॥
सधूममिव तीक्ष्णाग्रं युगान्ताग्निचयोपमम्।
अतिरौद्रमनासाद्यं कालेनापि दुरासदम् ॥ ४९ ॥
त्रासनं सर्वभूतानां दारणं भेदनन्तथा।
प्रदीप्त इव रोषेण शूलं जग्राह रावणः ॥ ५० ॥
तच्छूलं परमक्रुद्धो जग्राह युधि वीर्य्यवान्।
अनीकैः समरे शूरै राक्षसैः परिवारितः ॥ ५१ ॥
समुद्यम्य महाकायो ननाद युधि भैरवम्।
संरक्तनयनो रोषात् स्वसैन्यमभिहर्षयन् ॥ ५२ ॥
पृथिवीञ्चान्तरिक्षञ्च दिशश्च प्रदिशस्तथा।
प्राकम्पयत्तदा शब्दो राक्षसेन्द्रस्य दारुणः ॥ ५३ ॥
*अतिकायस्य नादेन तेन तस्य दुरात्मनः।

विग्रहमागताः रामरावणपक्षपातादिविरोधपूर्वकमभिनिवेशं प्राप्ताः।
संहृष्टवत्प्रहृष्टाः सन्तः ॥ ४५ ॥ ४६ ॥ ४७ ॥
कूटैः शूलस्य दलत्रयशिखरैः ॥ ४८ ॥
अग्निचयोऽग्निसमूहः ॥ ४९ ॥ ५० ॥

सर्वभूतानि वित्रेसुः सागरश्च प्रचुक्षुभे ॥ ५४ ॥
स गृहीत्वा महावीर्य्यः शूलं तद्रावणो महत्।
विनद्य सुमहानादं रामं परुषमब्रवीत् ॥ ५५ ॥
शूलोऽयं वज्रसारस्ते राम ! रोषान्मयोद्यतः।
तव भ्रातृसहायस्य सद्यः प्राणान् हरिष्यति ॥ ५६ ॥
रक्षसामद्य शूराणां निहतानां चमूमुखे।
त्वान्निहत्य रणश्लाघी करोमि तरसा समम् ॥ ५७ ॥
तिष्ठेदानीन्निहन्मि त्वामेषः शूलेन राघव !।
एवमुक्त्वा स चिक्षेप तच्छूलं राक्षसाधिपः ॥ ५८ ॥
तद्रावणकरान्मुक्तं विद्युन्मालासमावृतम्।
अष्टघण्टं महानादं वियद्गतमशोभत ॥ ५९ ॥
तच्छूलं राघवो दृष्ट्वा ज्वलन्तं घोरदर्शनम्।
ससर्ज विशिखान् रामश्चापमायम्य वीर्य्यवान् ॥ ६० ॥
आपतन्तं शरौघेण वारयामास राघवः।
उत्पतन्तं युगान्ताग्निं जलौघैरिव वासवः ॥ ६१ ॥
निर्ददाह स तान् बाणान् रामकार्मुकनिःसृतान्।

अनीकैः अनेकानीकसंख्यैः ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥
त्वां निहत्य रक्षसां समं करोमि। रक्षोभिः समं करिष्यामीत्यर्थः ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥

रावणस्य महान् शूलः पतङ्गानिव पावकः ॥ ६२ ॥
तान् दृष्ट्वा भस्मसाद्भूतान् शूलसंस्पर्शचूर्णितान् ।
सायकानन्तरिक्षस्थान् राघवः क्रोधमूर्च्छितः ॥ ६३ ॥
स तां मातलिनानीतां शक्तिं वासवसम्मताम् ।
जग्राह परमक्रुद्धो राघवो रघुनन्दनः ॥ ६४ ॥
सा तोलिता बलवता शक्तिर्घण्टाकृतस्वना ।
नभः प्रज्वालयामास युगान्तोल्केव सप्रभा ॥ ६५ ॥
सा क्षिप्ता राक्षसेन्द्रस्य तस्मिञ्छूले पपात ह ।
भिन्नः शक्त्या महान् शूलो निपपात गतद्युतिः ॥ ६६ ॥
निर्बिभेद ततो बाणैर्हयानस्य महाजवान् ।
रामः क्षिप्रैर्महावेगैर्बाणैर्वाज्रैरजिह्मगैः ॥ ६७ ॥
निर्बिभेदोरसि तदा रावणं निशितैः शरैः ।
राघवः परमायत्तो ललाटे पत्रिभिस्त्रिभिः ॥ ६८ ॥
स शरैर्भिन्नसर्वाङ्गो गात्रप्रस्रुतशोणितः ।
राक्षसेन्द्रसमूहस्थः फुल्लाशोक इवाबभौ ॥ ६९ ॥
　　स रामबाणैरतिविद्धगात्रो
　　निशाचरेन्द्रः क्षतजार्द्रगात्रः ।

वारयामास । प्रथमं वेगभङ्गं कृतवानित्यर्थः ॥ ६१ ॥ ६२ ॥ ६३ ॥
॥ ६४ ॥ ६५ ॥ ६६ ॥

जगाम खेदञ्च समाजमध्ये

क्रोधञ्च चक्रे सुभृशं तदानीम् ॥ ७० ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे

त्र्यधिकशततमः सर्गः ॥ १०३ ॥

बाणवद्भिः प्रच्छाद्यमानैः ॥ ६७ ॥ ६८ ॥

गात्रेभ्यः प्रस्तुतं शोणितं यस्य सः। समूढस्थः समूढतया स्थितः। बहुभिरःपातित्वात्तथात्वम् ॥ ६९ ॥ ७० ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके

युद्धकाण्डे त्र्यधिकशततमः सर्गः ॥ १०३ ॥

---

## चतुरधिकशततमः सर्गः

स तु तेन तदा क्रोधात् काकुत्स्थेनार्दितो भृशम्
रावणः समरश्लाघी महाक्रोधमुपागमत् ॥ १ ॥
स दीप्तनयनोऽमर्षाच्चापमुद्यम्य वीर्य्यवान् ।
अभ्यर्दयत् सुसंक्रुद्धो राघवं परमाहवे ॥ २ ॥
बाणधारासहस्रैस्तु स तोयद इवाम्बरात् ।
राघवं रावणो बाणैस्तटाकमिव पूरयन् ॥ ३ ॥
पूरितः शरजालेन धनुर्मुक्तेन संयुगे ।
महागिरिरिवाकम्प्यः काकुत्स्थो न प्रकम्पते ॥ ४ ॥
स शरैः शरजालानि वारयन् समरे स्थितः ।
गभस्तीनिव सूर्य्यस्य प्रतिजग्राह वीर्य्यवान् ॥ ५ ॥
ततः शरसहस्राणि क्षिप्रहस्तो निशाचरः ।
निजघानोरसि क्रुद्धो राघवस्य महात्मनः ॥ ६ ॥
सशोणितसमादिग्धः समरे लक्ष्मणाग्रजः ।
दृष्टः फुल्ल इवारण्ये सुमहान् किंशुकद्रुमः ॥ ७ ॥

स तु तेनेति ॥ १ ॥ २ ॥

शराभिघातसंरब्धः सोऽभिजग्राह सायकान्।
काकुत्स्थः सुमहातेजा युगान्तादित्यवर्च्चसः॥ ८॥
ततोऽन्योन्यं सुसंरब्धौ तावुभौ रामरावणौ।
शरान्धकारे समरे नोपलक्षयतान्तदा॥ ९॥
ततः क्रोधसमाविष्टो रामो दशरथात्मजः।
उवाच रावणं वीरः प्रहस्य परुषं वचः॥ १०॥
मम भार्य्या जनस्थानादज्ञानाद्राक्षसाधम!।
हृता ते विवशा यस्मात्तस्मात्त्वन्नासि वीर्य्यवान्॥ ११॥
मया विरहितां दीनां वर्त्तमानां महावने।
वैदेहीं प्रसभं हृत्वा शूरोऽहमिति मन्यसे॥ १२॥
स्त्रीषु शूर! विनाथासु परदाराभिमर्शनम्।
कृत्वा कापुरुषं कर्म्म शूरोऽहमिति मन्यसे॥ १३॥
भिन्नमर्य्याद निर्लज्ज चारित्रेष्वनवस्थित।
दर्पान्मृत्युमुपादाय शूरोऽहमिति मन्यसे॥ १४॥

अम्बरात् पतिताभिधाराभिस्तोयदस्तटाकमिव स रावणो राघवं बाणधारासहस्रैः पूरयन्नभ्यर्दयदिति शेषः॥ ३॥ ४॥ ५॥ ६॥ ७॥ ८॥

अन्योऽन्यं नोपलक्षयतामित्यन्वयः॥ ९॥

प्रहस्येति। कोपविकारजोऽयं प्रहासः॥ १०॥

अज्ञानादविवेकात् मत्स्वरूपाज्ञानाच्च। तस्मात्त्वं वीर्य्यवान्नासि च! मत्क्रोधदीपकेन तेन पापेन शीघ्रं विनङ्क्ष्यसीत्यर्थः॥ ११॥ १२॥

शूरेण धनदभ्राचा बलैः समुदितेन च।
श्लाघनीयं महत्कर्म यशस्यञ्च कृतं त्वया ॥ १५ ॥
उत्सेकेनाभिपन्नस्य गर्हितस्याहितस्य च।
कर्मणः प्राप्नुहीदानीं तस्याद्य सुमहत् फलम् ॥ १६ ॥
शूरोऽहमिति चात्मानमवगच्छसि दुर्मते !
नैव लज्जास्ति ते सीताञ्चौरवद्व्यपकर्षतः ॥ १७ ॥
यदि मत्सन्निधौ सीता धर्षिता स्यात्त्वया बलात्।
भ्रातरन्तु खरं पश्येस्तदा मत्सायकैर्हतः ॥ १८ ॥
दिष्ट्यासि मम मन्दात्मन् ! चक्षुर्विषयमागतः।
अद्य त्वां सायकैस्तीक्ष्णैर्नयामि यमसादनम् ॥ १९ ॥
अद्य ते मच्छरैश्छिन्नं शिरोज्ज्वलितकुण्डलम्।
क्रव्यादा व्यपकर्षन्तु विकीर्णं रणपांसुषु ॥ २० ॥
निपत्योरसि गृध्रास्ते क्षितौ क्षिप्तस्य रावण !
पिबन्तु रुधिरं तर्षाद्बाणशल्यान्तरोत्थितम् ॥ २१ ॥
अद्य मद्बाणभिन्नस्य गतासोः पतितस्य ते।

विनाथासु असन्निहितनाथासु स्त्रीषु शूरेत्यन्वयः ॥ १३ ॥ १४ ॥
श्लाघनीयं यशस्यञ्च महत्कर्म कृतं त्वयेति व्यङ्ग्योक्तिः ॥ १५ ॥
तदेव स्पष्टमाह,—उत्सेकेनेति। गर्वेणाभिपन्नस्यानुष्ठितस्य। अहितस्य इहामुत्रानर्थरूपस्य ॥ १६ ॥ १७ ॥
तदा तदैव ॥ १८ ॥ १९ ॥ २० ॥

कर्षन्त्वस्त्राणि पतगा गरुत्मन्त इवोरगान् ॥ २२ ॥

इत्येवं स वदन् वीरो रामः शत्रुनिबर्हणः।

राक्षसेन्द्रं समीपस्थं शरवर्षैरवाकिरत् ॥ २३ ॥

बभूव द्विगुणं वीर्य्यं बलं हर्षश्च संयुगे।

रामस्यास्त्रबलञ्चैव शत्रोर्निधनकाङ्क्षिणः ॥ २४ ॥

प्रादुर्बभूवुरस्त्राणि सर्वाणि विदितात्मनः।

प्रहर्षाच्च महातेजाः शीघ्रहस्ततरोऽभवत् ॥ २५ ॥

शुभान्येतानि चिह्नानि विज्ञायात्मगतानि सः।

भूय एवार्दयद्रामो रावणं राक्षसान्तकृत् ॥ २६ ॥

हरीणाञ्चाश्मनिकरैः शरवर्षैश्च राघवात्।

हन्यमानो दशग्रीवो विघूर्णहृदयोऽभवत् ॥ २७ ॥

यदा च शस्त्रं नारेभे न चकर्ष शरासनम्।

नास्य प्रत्यकरोद्वीर्य्यं विक्लवेनान्तरात्मना ॥ २८ ॥

तर्षात् पिपासया। बाणशल्यान्तरोत्थितं बाणानां यानि शल्यानि तदुक्ततादान्तराच्छिद्रादुत्थितम् ॥ २१ ॥ २२ ॥ २३ ॥

रामस्य वीर्य्याद्विद्विगुणं बभूवापकारस्मरणादिति शेषः ॥ २४ ॥

अस्त्राणि प्रादुर्बभूवुः अस्त्रदेवताः सन्निहिता अभूवन्। प्रहर्षादस्त्रदेवतासन्निधिजात् ॥ २५ ॥

भूयोऽभ्यधिकम् ॥ २६ ॥

राघवाद्राघवस्य। राघवेणाभ्युक्तादिति वा। विघूर्णहृदयः विकलहृदयः ॥ २७ ॥

छिन्नाश्चास्य शरास्तेन शस्त्राणि विविधानि च।
मरणार्थाय वर्त्तन्ते मृत्युकालोऽभ्यवर्त्तत ॥ २९ ॥
सूतस्तु रथनेतास्य तदवस्थं निरीक्ष्य तम्।
शनैर्युद्धादसम्भ्रान्तो रथं तस्यापवाहयत् ॥ ३० ॥

रथञ्च तस्याथ जवेन सारथि-
र्निवार्य्य भीमं जलदस्वनं तदा।
जगाम भीत्या समरान् महीपतिं
निरस्तवीर्य्यं पतितं समीक्ष्य ॥ ३१ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
चतुरधिकशततमः सर्गः ॥ १०४ ॥

विप्लवेन विसंज्ञेनान्तरात्मना यदा वीर्य्यं तत्कार्य्यं नारेभे शस्त्रं शस्त्रप्रयोगञ्च नारेभे तदा रामोऽस्य न प्रत्यकरोत्। संहाराय नातिष्ठदिति भावः ॥ २८ ॥

अपि तु मूर्च्छातः प्रागेव छिन्नाः शरा अस्य रावणस्य मरणार्थाय मरणरूपप्रयोजनाय प्रवर्त्तन्ते स्म। एवमस्य मृत्युकालोऽभ्यवर्त्तत उपस्थितः ॥ २९ ॥

मृत्युकाले उपस्थितेऽस्य रथं सूतोऽपवाहयत् ॥ ३० ॥ ३१ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्धकाण्डे चतुरधिकशततमः सर्गः ॥ १०४ ॥

## पञ्चाधिकशततमः सर्गः

स तु मोहात् सुसंक्रुद्धः कृतान्तबलचोदितः ।
क्रोधसंरक्तनयनो रावणः सूतमब्रवीत् ॥ १ ॥
हीनवीर्य्यमिवाशक्तं पौरुषेण विवर्जितम् ।
भीरुं लघुमिवासत्वं विहीनमिव तेजसा ॥ २ ॥
विमुक्तमिव मायाभिरस्त्रैरिव बहिष्कृतम् ।
मामवज्ञाय दुर्बुद्धे ! स्वया बुद्ध्या विचेष्टसे ॥ ३ ॥
किमर्थं मामवज्ञाय मच्छन्दमनवेक्ष्य च ।
त्वया शत्रुसमक्षं मे रथोऽयमपवाहितः ॥ ४ ॥
त्वयाद्य हि ममानार्य्य ! चिरकालमुपार्जितम् ।
यशो वीर्य्यञ्च तेजश्च प्रत्ययश्च विनाशितः ॥ ५ ॥

स तु मोहादिति । शत्रुर्मोहेन मुक्त इति शेषः ॥ १ ॥
हीनवीर्य्यं हीनबलम् । अशक्तम् अस्त्रादिप्रयोगसामर्थ्यहीनम् ।
लघुमल्पचित्तम् । असत्वमधीरम् । तेजः पराभिभवसामर्थ्यम् ॥ २ ॥
अवज्ञायावमत्य स्वबुद्ध्या स्वेच्छया ॥ ३ ॥
मच्छन्दं मदभिप्रायम् ॥ ४ ॥
प्रत्ययः मद्विषया लोकस्य शूरत्वविश्वासः ॥ ५ ॥

शत्रोः प्रख्यातवीर्य्यस्य रञ्जनीयस्य विक्रमैः ।
पश्यतो युद्धलुब्धोऽहं कृतः कापुरुषस्त्वया ॥ ६ ॥
यस्त्वं कथमिदं मोहान्नचेद्वहसि दुर्मते ! ।
सत्योऽयं प्रतितर्को मे परेण त्वमुपस्कृतः ॥ ७ ॥
न हि तद्विद्यते कर्म सुहृदो हितकाङ्क्षिणः ।
रिपूणां सदृशं त्वेतद्य त्त्वयैतदनुष्ठितम् ॥ ८ ॥
निवर्त्तय रथं शीघ्रं यावन्नापैति मे रिपुः ।
यदि वाध्युषितोऽसि त्वं स्मर्य्यते यदि मे गुणः ॥ ९ ॥
एवं परुषमुक्तस्तु हितबुद्धिरबुद्धिना ।
अब्रवीद्रावणं सूतो हितं सानुनयं वचः ॥ १० ॥
न भीतोऽस्मि न मूढोऽस्मि नोपजप्तोऽस्मि शत्रुभिः ।

शत्रोः पश्यतः सतस्त्वयाहं कापुरुषः कुत्सितपुरुषः कृतः ॥ ६ ॥

यद्यतस्त्वमिमं रथं कथमपि चेन्नोद्वहसि । मोहादपि अज्ञानादपि शत्रोरभिमुखं न प्रापयसि । स त्वं परेणोपस्कृतः । उत्कोचेन विकारं प्रापित इत्येवं मे प्रति तर्कः सत्यः । उपाद्दैकृतेऽर्थे करोतेः सुट् ॥ ७ ॥

न हि तत्त्वदनुष्ठितं कर्म सुहृदो विद्यते भवति । यत्त्वयानुष्ठितं तथापवाहनकर्मेत्यर्थः ॥ ८ ॥

अध्युषितश्चिरकालं मत्समीपे स्थितः । मे गुणः मत्कृतोपकार इत्यर्थः ॥ ९ ॥

हितबुद्धिः सूतः ॥ १० ॥

न प्रमत्तो न निःस्नेहो विस्मृता न च सत्क्रिया ॥ ११ ॥
मया तु हितकामेन यशश्च परिरक्षता।
स्नेहप्रसन्नमनसा हितमित्यप्रियं कृतम् ॥ १२ ॥
नास्मिन्नर्थे महाराज! त्वं मां प्रियहिते रतम्।
कच्चिल्लघुरिवानार्य्यो दोषतो गन्तुमर्हसि ॥ १३ ॥
श्रूयतां प्रतिदास्यामि यन्निमित्तं मया रथः।
नदीवेग इवाम्भोभिः संयुगे विनिवर्त्तितः ॥ १४ ॥
श्रमं तवावगच्छामि महता रणकर्मणा।
न हि ते वीर्य्यसौमुख्यं प्रकर्षं नोपधारये ॥ १५ ॥
रथोद्वहनखिन्नाश्च भग्ना मे रथवाजिनः।

नोपजप्तः उपजापं भेदं न प्रापितः। सत्क्रिया त्वत्कृतेति भावः ॥ ११ ॥

यशश्च परिरक्षता जीवनरक्षणेनात्मीयं त्वदीयञ्च यशो रक्षते-त्यर्थः। स्नेहप्रसन्नमनसा स्नेहार्द्रहृदयेन। रथापवाहनं शूरत्वात्तवा-प्रियमपि हितमिति निश्चित्य कृतम् ॥ १२ ॥

अस्मिन्नर्थे युद्धादपोहनरूपे कार्य्ये अनार्य्यो लघुरिव अविमृश्य-कारी क्षुद्र इव दोषतो गन्तुं दोषवत्त्वेन ज्ञातुं नार्हसि। मयि दुष्ट-बुद्धिं कर्त्तुं नार्हसीत्यर्थः ॥ १३ ॥

कुतस्तत्राह,—श्रूयतामिति। यदुत्तरं प्रतिदास्यामि तत् श्रूयताम्। यन्निमित्तं रथो निवर्त्तितस्तच्च श्रूयताम्। रथो रथवेगः। चन्द्रोदयेन प्रवृद्धसमुद्राम्भोभिर्नदीवेग इव। संयुगे संयुगान्निवर्त्तितः ॥ १४ ॥

दीना घर्मपरिश्रान्ता गावो वर्षहता इव ॥ १६ ॥
निमित्तानि च भूयिष्ठं यानि प्रादुर्भवन्ति नः ।
तेषु तेष्वभिपन्नेषु लक्षयाम्यप्रदक्षिणम् ॥ १७ ॥
देशकालौ च विज्ञेयौ लक्षणानीङ्गितानि च ।
दैन्यं हर्षश्च खेदश्च रथिनश्च महाबल ! ॥ १८ ॥
स्थलनिम्नानि भूमेश्च समानि विषमाणि च ।
युद्धकालश्च विज्ञेयः परस्यान्तरदर्शनम् ॥ १९ ॥
उपयानापयाने च स्थानं प्रत्यपसर्पणम् ।
सर्वमेतद्रथस्थेन ज्ञेयं रथकुटुम्बिना ॥ २० ॥

रणकर्मणा युद्धेन । वीर्य्यसांमुख्यं वीर्य्यकार्य्यं प्रति सांमुख्यं वीर्य्यसांमुख्यम् । प्रकर्षं शत्रोरपेक्षयाधिक्यम् । प्रहारमिति पाठे शत्रुविषयकमित्यर्थः ॥ १५ ॥ १६ ॥

निमित्तानि दुर्निमित्तानि । अभिपन्नेषु जातेषु । अप्रदक्षिणं प्रतिकूलं लक्षयामीति सम्बन्धः ॥ १७ ॥

ननु सन्निमानि किं तवैतद्विचारेणेत्याशङ्क्याह,—देशेत्यादिना । लक्षणानि शुभाशुभनिमित्तानि । इङ्गितानि मुखप्रसादवैवर्ण्यादिचेष्टाश्च । दैन्यमनुत्साहः ॥ १८ ॥

स्थलं समम् । निम्नं नीचम् । तस्यैव विवरणं समानीत्यादि । अन्तरदर्शनं प्रहारार्यच्छिद्रदर्शनम् ॥ १९ ॥

उपयानापयाने रथस्य रिपुसमीपप्रापणनिवर्त्तने । तत्कालावितिं यावत् । स्थानं स्थैर्य्येणावस्थानम् । प्रत्यपसर्पणम् अभिमुख

तव विश्रामहेतोऽस्तु तथैषां रथवाजिनाम्।
रौद्रं वर्जयता खेदं क्षमं कृतमिदं मया॥ २१॥
स्वेच्छया न मया वीर! रथोऽयमपवाहितः।
भर्तुः स्नेहपरीतेन मयेदं यत् कृतं प्रभो!॥ २२॥
आज्ञापय यथातत्त्वं वक्ष्यस्यरिनिषूदन!
तत्करिष्याम्यहं वीर! गतानृण्येन चेतसा॥ २३॥
सन्तुष्टस्तेन वाक्येन रावणस्तस्य सारथेः।
प्रशस्यैनं बहुविधं युद्धलुब्धोऽब्रवीदिदम्॥ २४॥
रथं शीघ्रमिमं सूत! राघवाभिमुखं नय।
नाहत्वा समरे शत्रून्निवर्त्तिष्यति रावणः॥ २५॥
एवमुक्त्वा रथस्थस्य रावणो राक्षसेश्वरः।
ददौ तस्य शुभं ह्येकं हस्ताभरणमुत्तमम्।
श्रुत्वा रावणवाक्यानि सारथिः संन्यवर्त्तत॥ २६॥

स्थितस्यैव पृष्ठतोपसरणम्। रथकुटुम्बिना रथनिर्वाहकेण सारथिना॥ २०॥

रौद्रं क्रूरं खेदं वर्जयतापरिहरता॥ २१॥

स्वेच्छया निमित्तं विना। मया यदिदं कृतं तद्भर्तृस्नेहपरीतेन तद्रक्षणेनैव कृतम्॥ २२॥

यथा तत्त्वं तत्कार्य्यस्वरूपं वक्ष्यसि तत्करिष्यामि। गतानृण्येन दत्तस्वामिऋणया क्वापि मनो न बध्नतेत्यर्थः॥ २३॥ २४॥ २५॥ २६॥

ततो द्रुतं रावणवाक्यचोदितः
प्रचोदयामास हयान् स सारथिः ।
स राक्षसेन्द्रस्य ततो महारथः
क्षणेन रामस्य रणाग्रतोऽभवत् ॥ २७ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
पञ्चाधिकशततमः सर्गः ॥ १०५ ॥

महारथ इति कर्मधारयः । रणाग्रतः रणे अग्रतः । सम्मुख इत्यर्थः । रणेऽग्रत इति पाठान्तरम् ॥ २७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्ध-
काण्डे पञ्चाधिकशततमः सर्गः ॥ १०५ ॥

---

## षष्ठोत्तरशततमः सर्गः ।



ततो युद्धपरिश्रान्तं समरे चिन्तया स्थितम् ।
रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ॥ १ ॥
दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् ।
उपगम्याब्रवीद्राममगस्त्यो भगवांस्तदा ॥ २ ॥

अथ रावणवैभवं दृष्ट्वा त्रस्तमिव भगवन्तं रामं भगवद्ब्रह्मदत्तरावणवैभवनिवर्त्तनस्य भगवद्ब्रह्मानुग्रहैकसाध्यत्वात्तदनुग्रहसिद्धये विद्यामण्डलऋषिरगस्त्यो ब्रह्मरूपादित्यहृदयदेवताकत्वादादित्यहृदयाख्यं स्तोत्रमुपदिशति सेत्याह,—ततो युद्धेत्यादि । अस्य स्तोत्रस्यागस्त्यऋषिरनुष्टुप्छन्दः आदित्यहृदयभूतो भगवान् ब्रह्मा देवता । निरस्ताशेषविघ्नतया ब्रह्मविद्यासिद्धौ सर्वत्रजयसिद्धौ च विनियोगः । अस्य षडङ्गं प्रणवेन रश्मिमते नम इत्यनेन वा । गायत्र्या षडङ्गमित्यन्ये । ततो युद्धेत्यादित्वरस्वेत्यन्तं स्तोत्रम् । एवं भयनाटनं तन्मूलकमगस्त्यादुपदेशग्रहणं लोकानुग्रहाय । लोकस्य जयसाधनवस्तुप्रकाशनार्थमिति तत्त्वम् । युद्धपरिश्रान्तं तमिव स्थितम् । समरे समरविषये चिन्तया प्रबलोऽयमरिः कथं जेतव्य इति चिन्तया युक्तम् । सारथिनापवाहितं रावणं प्रातर्युद्धायाग्रतो रामसम्मुखे समुपस्थितं दृष्ट्वा । स्थितं धनुरवष्टभ्य स्थितं रामम् ॥ १ ॥

राम ! राम ! महाबाहो ! शृणु गुह्यं सनातनम् ।
येन सर्वानरीन् वत्स ! समरे विजयिष्यसे ॥ ३ ॥
आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् ।
जयावहं जपं नित्यमक्षयं परमं शिवम् ॥ ४ ॥
सर्वमङ्गलमाङ्गल्यं सर्वपापप्रणाशनम् ।
चिन्ताशोकप्रशमनमायुर्वर्द्धनमुत्तमम् ॥ ५ ॥
रश्मिमन्तं समुद्यन्तं देवासुरनमस्कृतम् ।

दैवतैः समागम्य मिलित्वा रणं द्रष्टुमभ्यागतो भगवानगस्त्योऽन्तर्यामिभगवत्प्रेरणया दैवनियोगतस्तोक्तविशेषणं राममुपागम्योद्यति भास्करेऽब्रवीत् ॥ २ ॥

किमब्रवीत्तदाह,—राम रामेत्यादि। येन स्तोत्रेण सर्वानरीन् विजेष्यसि। तद्गुह्यं रहस्यम्। सनातनं प्रवाहानादिभूतम्। अनेन स्वकल्पितत्वनिरासः। शृणु ॥ ३ ॥

आदित्यहृदयं य एषोऽन्तरादित्ये हिरण्मय इत्याद्यशेषश्रुतिप्रसिद्धं ब्रह्म तद्देवताकत्वात्तदाख्यं स्तोत्रम्। पुण्यं पुण्यजनकम्। अनेन पारत्रिकं फलमुक्तम्। सर्वशत्रुविनाशनम्। जयावहमित्यैहिकं फलम्। जपं जप्यत इति जपं स्तोत्रम्। परमफलमाह,—अक्षयं परमं शिवम् अपवर्गाख्यं तत्प्रदमित्यर्थः। कदा तत्राह,—नित्यं यदि नित्यवत् फलनिरपेक्षं तदा तत् फलमिति भावः। जपेन्नित्यमिति पाठान्तरम् ॥ ४ ॥

ऐहिकानि फलान्तराणि। सर्वमङ्गलमाङ्गल्यं सर्वमङ्गलरूपाणामपि मङ्गलप्रदम् ॥ ५ ॥

पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम् ॥ ६ ॥
सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः ।
एष देवासुरगणान् लोकान् पाति गभस्तिभिः ॥ ७ ॥

रश्मिमन्तं पञ्चेन्द्रियद्वारानेकज्ञानरश्मिमन्तं ज्योतिरूपरश्मिमन्तञ्च । रश्मिशब्दो भक्तवाची तदन्तं तन्मध्ये भासमानमित्यर्थं तीर्थ आह,—रश्मिमते नमः १ समुद्यन्तं लोकान् क्रियासु प्रवर्त्तयन्तम्। उदयगिरावुदयं प्राप्तञ्च । समुद्यते नमः २ एवं नमोऽन्ता एतेऽस्य नमस्कारार्चनमन्त्रा इति उच्यन्ते । देवैः सात्त्विकवृत्तिभिः । असुरैराजसतामसवृत्तिभिश्च नमस्कृतम् । साक्षिचैतन्यत्वेन नित्यमुपजीवितम् । इन्द्रविरोचनादीनामविशेषादुपास्यञ्च । देवासुरनमस्कृताय नमः ३ विवस्वान् विशेषेण वसमान् । पृषोदरादित्वादुकारलोपः । वसुनिधिरित्यर्थः । सकलव्यवहाराधिष्ठानत्वादसुमन्तम् । खोदयेन सकलव्यवहारप्रवर्त्तकत्वाच्च वसुमत्त्वम्। विवस्वते नमः ४ भास्करं ज्ञानज्ञेयभासः करोति इति भास्करम् । तस्य भासा सर्वमिदं विभातीति श्रुतेः । भास्कराय नमः ५ भुवनानां मूलादिब्रह्मरन्ध्रान्तयोगाधारभूमीनामीश्वरमधिष्ठातारम् । भूराद्यशेषभुवनानां प्रकाशकतयेश्वरञ्च । भुवनेश्वराय नमः ६ ॥ ६ ॥

रश्मिमदादिशब्दप्रतिपाद्यस्य ब्रह्मत्वं स्फुटयन्नाह,—सर्वेति । हि यस्मात् सर्वदेवोपादानकारणत्वादेष सर्वदेवात्मकः । इदं सर्वात्मकत्वोपलक्षणम् । सर्वदेवात्मकाय नमः ७ तेजस्वी सर्वभासनसमर्थतेजोयुक्तः । तेजस्विने नमः ८ रश्मिभिर्ज्ञानरश्मिभिः सर्वं वस्तुजातं भावयति [illegible] सः । रश्मिभिर्योगिनो भावयति ब्रह्म-

एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः ।
महेन्द्रो धनदः कालो यमः सोमो ह्यपाम्पतिः ॥ ८ ॥

लोकं प्रापयतीत्यर्थं इत्यन्ये । रश्मिभावनाय नमः ९ एष एतन्मण्डल-वर्त्ती । देवासुरगणान् तेषां लोकांश्च गभस्तिभिर्ज्ञानज्ञेयरश्मिभिः पाति । याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति इति श्रुतेर्वृष्टिद्वाराऽन्नहविरादिदानेन देवादिगणान् लोकान् मनुष्यादींश्च यः पाति । देवासुरगणलोकपालाय नमः । अत्रैव पातीत्युक्त्या सूर्य्यस्य पुरतस्थितत्वनिर्देशेन सूर्य्योदयकाले एतत् स्तोत्रदानमिति लभ्यते १० ॥ ७ ॥

एषः स्वोऽन्तरादित्ये हिरण्मयः पुरुष इति श्रुतेर्योगजनितसा-क्षात्कारविषयः पुरोदृश्यमानश्च ब्रह्मानिस्तुलैश्वर्य्यविद्यास्रष्टृत्वशक्तिः । ब्रह्मणे नमः ११ विष्णुः । स्वसृष्टपरिपालनप्रयोजनकतया परिगृहीत-विष्णुमूर्त्तिर्नारायणः । विष्णवे नमः १२ शिवोऽपरिमितकल्याणपुण्य-स्वभावः त्रिगपरश्वादिचिह्नो भगवान् महादेवश्च । शिवाय नमः १३ जीवज्योतिर्द्वारा सर्वाणीन्द्रियाणि स्कन्दतीति स्कन्दः । भगवान् मयूर-वाहनश्च । स्कन्दाय नमः १४ । प्रजानां जन्यवस्तूनां स्वामी । स्वशक्ति-द्वारा सर्वोपादानत्वात् । दण्डयज्ञायुधचिह्नो भगवान् यज्ञेश्वरश्च । प्रजापतये नमः १५ । महेन्द्रः । इदि परमैश्वर्य्येऽष्टन् सर्वधातुभ्यः । परमैश्वर्य्यकाष्ठां प्राप्तः । वज्रहस्तत्वादिचिह्नो देवराजश्च । महेन्द्राय नमः १६ धनश्चैतन्यंसर्वानुग्रहाय सर्वस्यान्तर्ददातिस्थापयतीति धनदः । अन्नादो वसुदान इत्युक्तसकलफलदः कुबेरश्च । धनदाय नमः १७ कालः बुद्धिवृत्तिमपरोक्षतया कलयतीति कालः । मण्डलस्पन्दानुमेयः क्रिया-

पितरो वसवः साध्या अश्विनौ मरुतो मनुः।
वायुर्वह्निः प्रजाः प्राणश्चर्तुकर्त्ता प्रभाकरः॥ ९॥

परिच्छेदकश्च कालः। कालाय नमः १८ यमयतीति यमः सर्वान्तर्यामी। यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः। तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः। अविवादो भेदाभाव इति मनुः। पितृपतिश्च। यमाय नमः १९ सोमः। उमा उः केवलनिपातः मा प्रभा। उ सर्वदा प्रभया सहितः सोमो भगवानर्द्धनारीश्वरश्च। सोमः पवते जनितामतीनामिति श्रुतेः सर्वकारणं सोमशब्दवाच्यम्। उमया शक्त्या प्रकृत्याख्ययासहित इत्यर्थमन्ये। सोमाय नमः २० आपः सत्वं चित्तात्मकं तस्यान्तःकरणोपाधिवशतोऽनन्तस्य पतिः। वरुणश्च। अपां पतये नमः २१॥ ८॥

पितरो बीजप्रदास्तद्रूपोऽयं सर्वेषां बीजप्रदः। तासां ब्रह्ममहद्योनिरहं बीजप्रदः पितेत्युक्तेः। बहुत्वं पूजार्थम्। कव्यवाहनादयः पितृदेवताश्च। पितृदेवतायै नमः २२ वसुरहमर्थः। अष्टौ वसवश्च। वसुमूर्त्तये नमः २३ साध्याः। प्राधान्येन योगिनां प्रसाधनीयत्वात् साध्याः। देवगणविशेषश्च साध्याः। साध्यमूर्त्तये नमः २४ अश्विनौ। अश्नातेर्वन् प्रत्ययान्तोऽश्वशब्दः। सर्वव्याप्तौ देवभिषजौ च। अश्विमूर्त्तये नमः २५ मरुत्। म्रङ्प्राणत्यागेऽस्य धातो रुतिप्रत्ययान्तं रूपम्। अनर्थमारकश्चैकोनपञ्चाशत्संख्यमरुद्गणश्च। मरुन्मूर्त्तये नमः २६ मनुत इति मनुः सर्वज्ञ आदिराजश्च। मनवे नमः २७ वातीति वायुः। वा गतिगन्धनयोः। गतिर्ज्ञानञ्च। ज्ञाता ज्ञापकश्च। पञ्चवृत्तिः प्राणश्च। वायुमूर्त्तये नमः २८ वहतीति वह्निः। स्वमहिम्नि स्वयं प्रतिष्ठितो भूत्वा

आदित्यः सविता सूर्य्यः खगः पूषा गभस्तिमान् ।
सुवर्णसदृशो भानुर्हिरण्यरेता दिवाकरः ॥ १० ॥

स्वस्मिन् सर्वं सारं वहतीति वह्निः । अग्निश्च । वह्नये नमः २९ प्रजायन्ते जीवात्मनेति प्रजाः । प्रकृष्टजनिमन्तो विभूत्यध्यायोक्तास्व देवास्व । प्रजारूपाय नमः ३० प्राणयतीति प्राणः । न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेता उपाश्रिता इति श्रुतेः प्राणयात्राप्रवर्त्तकः प्राणः । प्राणाय नमः ३१ ऋतूनां स्थानानां कर्त्ता उपादानम् । वसन्ताद्यृतुकर्त्ता संवत्सरात्मा कालश्च । ऋतुकर्त्रे नमः ३२ ऋतुः सुदर्शनः काल इति सहस्रनामसु पाठात् । ऋतुरिति पाठे भिन्नं पदमिति तीर्थः । कर्त्ता सकलजगत्कर्त्ता । प्रभाकरो भास्करवत् । शब्दस्याप्यर्थतादात्म्येन देवतास्वरूपत्वाद्भास्करप्रभाकरयोः शब्दयोः शब्दभेदेन मूर्त्यन्तरत्वं ज्ञेयम् । प्रभाकराय नमः ३३ ॥ ९ ॥

यस्मात् सर्वमादत्ते एतस्मादादित्य इत्यौपनिषदव्युत्पत्त्याऽशेषविषयभोक्ता आदित्यः । मण्डलादित्यो मण्डलाभिमानी अदितिपुत्रश्च । आदित्याय नमः ३४ सविता षूङ्प्राणिप्रसवे । अन्तःकरणोपाधिनाऽपरिमितचिदात्मवर्गस्रष्टा रश्मिभिः पर्जन्यादिप्रवृत्त्या तत्तदन्नादिस्रष्टा । सवित्रे नमः ३५ सर्त्तेः सूर्य्यः सवर्गः । सूर्य्य एकाकी चरतीति श्रुतेः । कर्मप्रेरको वा । सूर्य्याय नमः ३६ खं परमाकाशं हृदयाकाशश्च गच्छतीति खगः । खगाय नमः ३७ पुष्णातीति पूषा स्थितिकर्त्ता । पूष्णे नमः ३८ गभस्तिमान् रश्मिवत्समानार्थः । शब्दभेदान् मूर्त्तिभेदः । यद्वा । गभस्तिभिः सर्वव्यापिनी लक्ष्मीस्तद्वान् । यथा सर्वगतो विष्णुस्तथैवेयं

हरिदश्वः सहस्रार्चिः सप्तसप्तिर्मरीचिमान्।
तिमिरोन्मथनः शम्भुस्त्वष्टा मार्त्तण्डकोंऽशुमान्॥ ११॥

द्विजोत्तमेति पराशरस्मृतेः। गभस्तिमते नमः ३९ सुवर्णसदृशः। आत्मलाभान्न परं विद्यत इति श्रुतेः सुवर्णसदृशनिधिलाभतुल्यलाभः। आप्रशस्तात् सर्वं एवं सुवर्णं इति श्रुतेः सुवर्णसदृशमूर्त्तिश्च। सुवर्णसदृशाय नमः ४० सुवर्णस्तपन इति पाठे द्वासुपर्णा इति श्रुतेः सुपर्णत्वं ब्रह्मणः। तपतीति तपन इति तीर्थः। भानुर्भासकः। भानवे नमः ४१ हिरण्यं तेजः ब्रह्मरूपं तद्रेतो जगदुत्पत्तिबीजं यस्य सः। यद्वा हिरण्यं रेतोऽण्डोत्पादकं द्रव्यं यस्य सः। यद्वा हिरण्यं तत्साधनं पारद एव रेतो यस्येत्यर्थः। हिरण्यरेतसे नमः ४२ अक्षराधिक्यमार्षम्। दिवेत्यव्ययं प्रकाशवाचकम्। प्रकाशं करोतीति दिवाकरः। दिवाकराय नमः ४३॥ १०॥

हरितो दिशोऽश्नोति व्याप्नोतीति हरिदश्वः। श्यामवर्णाश्वश्च। हरिदश्वाय नमः ४४ सहस्राण्यनन्तान्यर्चींषि ज्ञानानि यस्य सः। यद्वा। सहस्रसंख्यानि अर्चींषि रश्मयो यस्य। सहस्रार्चिषे नमः ४५ सप्तसप्तिः। सप्तशीर्षण्याः प्राणा इन्द्रियाणि द्वे चक्षुषी द्वे श्रोत्रे द्वे, नासिके वाक्चैकेति सप्तप्राणाः प्रभवन्ति तस्मादिति श्रुतेः। सप्तप्राणानां सप्तिः प्रवृत्तिर्यतः सः। सप्तसंख्याश्वश्च। हयसैन्धवसप्तय इति कोशः। सप्तसप्तये नमः ४६ मरीचिमच्छब्दो गभस्तिमच्छब्देन व्याख्यातः। मरीचिमते नमः ४७ अज्ञानलक्षणं तिमिरमुन्मथ्नातीति तिमिरोन्मथनः अन्धकारनाशनश्च। तिमिरोन्मथनाय नमः ४८ शमपवर्गादिरूपं सुखमस्माद्भवतीति शम्भुः। शम्भवे नमः ४९ त्वक्षति

हिरण्यगर्भः शिशिरस्तपनोऽहस्करो रविः।
अग्निगर्भोऽदितेः पुत्रः शङ्खः शिशिरनाशनः॥ १२॥
व्योमनाथस्तमोभेदी ऋग्यजुःसामपारगः।
घनवृष्टिरपां मित्रो विन्ध्यवीथी प्लवङ्गमः॥ १३॥

तनूकरोति भक्तानामुत्पत्तिप्रलयरूपानर्थप्रवाहदुःखानीति त्वष्टा। त्वष्ट्रे नमः ५० मृतनचेतनमण्डं ब्रह्माण्डं जीवयतीति मार्त्तण्डः स एव मार्त्तण्डकः। मार्त्तण्डकाय नमः ५१ अंशुमान् मरीचिमत्पर्य्यायः। अंशुमान् सर्वव्यापकः। अशू व्याप्ताविति धातुः। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित इति श्रुतेरिति तीर्थः। अंशुमते नमः ५२॥ ११॥

हिरण्यगर्भः। सकलजगदुत्पत्तिस्थितिप्रलयकर्त्ता ब्रह्मविष्णुरुद्ररूपो हिरण्यगर्भः। भगवते हिरण्यगर्भाय नम इति द्वादशाक्षरी आदित्यहृदयरहस्यमिति कतकः ५३ शिशिरः शीतः सुखस्वभावः। शिशिराय नमः ५४ तपनः। तप ऐश्वर्य्ये। स्वभावत एव सर्वेश्वर इत्यर्थः। तपनाय नमः ५५ अहस्करो दिवाकरपर्य्यायः। अहस्कराय नमः ५६ रौति उपदिशति हिरण्यगर्भादिभ्य इति रविः। यो वेदांश्च प्रहिणोति तस्मा इति श्रुतेः। रवये नमः ५७ अग्निः कालाग्निरुद्रो गर्भे यस्य सोऽग्निगर्भः। नारायणाद्रुद्रो जायतेति श्रुतेः। अग्निगर्भाय नमः ५८ दितिर्नाशो न विद्यते यस्याः सा अदितिर्ब्रह्मविद्या तस्याः पुत्रस्तल्लभ्यत्वात्। आदित्यश्च। अदितेः पुत्राय नमः ५९ शञ्च सुखञ्च शङ्खः। परमानन्दगमनात्मेत्यर्थः। शङ्खाय नमः ६० शिशिरं जाड्यं मन्दबुद्धित्वं नाशयतीति शिशिरनाशनः। हिमनाशकश्च। शिशिरनाशनाय नमः ६१॥ १२॥

आतपी मण्डली मृत्युः पिङ्गलः सर्वतापनः।
कविर्विश्वो महातेजा रक्तः सर्वभवोद्भवः॥ १४॥

व्योमनाथः आकाशकर्त्ता। आत्मन आकाशः सम्भूत इति श्रुतेः। व्योमनाथाय नमः ६२ तमोभेदी तिमिरोन्मथनपर्य्यायः। तमोभेदिने नमः ६३ ऋगादीनां पारस्तत्तदुपनिषत्तद्गततत्त्वैकप्रतिपाद्यः। ऋग्यजुःसामपारगाय नमः ६४। घनाऽधिका वृष्टिः सकलकर्मफलदानरूपा यस्मात् सः। घना सम्पूर्णा वृष्टिर्यस्मादिति च। घनवृष्टये नमः ६५ अपां सात्त्विकानां मित्रस्तेतन्त्यदानेनोपकर्त्ताऽपां मित्रः जलानामुत्पादकस्त। अपां मित्राय नमः ६६ विन्ध्यं गहनं दुर्गम्। एवञ्च दुर्गे सौषुम्ने ब्रह्मनाडीमार्गे प्लवङ्गमः शीघ्रगन्ता। किञ्च विन्ध्यवीथी सूर्य्यमार्गस्तेन शीघ्रगन्ता च। विन्ध्यवीथीप्लवङ्गमाय नमः ६७॥ १३॥

आतपी आसमन्तात्तपो जगन्निर्माणसङ्कल्पः सोऽस्यास्तीत्यातपी। तप आलोचने। आतपिने नमः ६८ मण्डलं किरणसमूहस्तद्वान्। यद्वा। मण्ड्यतेऽनेनेति मण्डलं कौस्तुभादि तद्वान्। मण्डलिने नमः ६९ मृत्युः सर्वमृत्युसम्पादकः। अमुमाहुः परं मृत्युमिति श्रुतेः। मृत्यवे नमः ७० पिङ्गलः पिङ्गलनाडीप्रवर्त्तनेन कर्ममार्गप्रवर्त्तक इत्यर्थः। पीतवर्णश्च। पिङ्गलाय नमः ७१ सर्वतापनः सर्वसंहर्त्ता। तपदाहे। सर्वतापनाय नमः ७२ कविः सर्वज्ञः। कवयिता च। कवये नमः ७३ विश्वो विश्वरूपः। विश्वमेवेदं पुरुष इति श्रुतेः। विश्वस्मै नमः ७४ महत्तेजःस्वरूपं यस्य सः। महातेजसे नमः ७५ रक्तः पालनेन सर्वरञ्जकः। रक्तवर्णश्च। रक्ताय नमः ७६ सर्वभवोद्भवः सर्वकार्य्यवर्गोत्पत्तिहेतुः। सर्वभवोद्भवाय नमः ७७॥ १४॥

नक्षत्रग्रहताराणामधिपो विश्वभावनः ।
तेजसामपि तेजस्वी द्वादशात्मन्नमोऽस्तु ते ॥ १५ ॥
नमः पूर्वाय गिरये पश्चिमायाद्रये नमः ।
ज्योतिर्गणानाम्पतये दिनाधिपतये नमः ॥ १६ ॥
जयाय जयभद्राय हर्य्यश्वाय नमो नमः ।
नमो नमः सहस्रांशो आदित्याय नमो नमः ॥ १७ ॥

नक्षत्रादीनामन्तर्य्यामितयाऽधिपः प्रवर्त्तकः । नक्षत्रग्रहताराधिपाय नमः ७८ विश्वभावनः सर्वोद्भवपर्य्यायः । विश्वभावनाय नमः ७९ तेजसामग्न्यादितेजसामपि सत्तास्फूर्त्तिसाधकचिन्मयतेजोरूपः । येन सूर्य्यस्तपति तेजसेद्ध इति श्रुतेः । तेजसामपि तेजस्विने नमः ८० द्वादशात्मन् द्वादशमासस्वरूप । प्रागनुक्रान्तसर्वमूर्त्तिरूपाय तुभ्यं नम इत्यर्थः । द्वादशात्मने नमः ८१ ॥ १५ ॥

पूर्वाय गिरये । तदन्तर्य्यामिणे इत्यर्थः । पूर्वाय गिरये नमः ८२ एवं पश्चिमायाद्रये इति । पश्चिमाद्रये नमः ८३ ज्योतिर्गणानाम्पतये । नक्षत्रग्रहताराधिपपर्य्यायः । ज्योतिर्गणानाम्पतये नमः ८४ दिनाधिपतये इति दिवाकरपर्य्यायः । दिनाधिपतये नमः ८५ ॥ १६ ॥

जयाय ब्रह्मलोकान्तसकलजयप्रदाय । जयाख्यब्रह्मद्वारपालमूर्त्तये च । जयमूर्त्तये नमः ८६ जयभद्राय ब्रह्मलोकादिजयप्राप्यं यद्भद्रं भूमानन्दस्तदात्मकाय । जयभद्राख्यद्वितीयद्वारपालमूर्त्तये च । जयभद्राय नमः ८७ इमावेव शापवशतोऽवतीर्णौ रावणकुम्भकर्णौ । हर्य्यश्वो हरिदश्वपर्य्यायः । हर्य्यश्वाय नमः ८८ सहस्रांशो इति सहस्रार्चिःपर्य्यायः । सहस्रमनन्ता जीवा अंशरूपांशा यस्य सः । ममैवांशो जीवः

नम उग्राय वीराय सारङ्गाय नमो नमः।
नमः पद्मप्रबोधाय प्रचण्डाय नमोऽस्तु ते॥ १८॥
ब्रह्मेशानाच्युतेशाय सूरायादित्यवर्चसे।
भास्वते सर्वभक्षाय रौद्राय वपुषे नमः॥ १९॥

लोके जीवभूत इति स्मृतेः। सहस्रांशवे नमः ८९ आदरातिशयाय नमः शब्दस्य द्विरुक्तिः। आदित्येति नाम्नः प्राधान्यबोधनाय तस्य द्विरुक्तिः। आदित्याय नमः ९०॥ १७॥

उग्राय इन्द्रियनिग्राहकाय। रुद्ररूपाय च। उग्राय नमः ९१ वीराय इन्द्रियप्रवर्त्तने स्वतन्त्राय। त्रिपुरसंहारक्षमपराक्रमयुताय च। वीराय नमः ९२ सारं प्रणवस्तत्प्रतिपाद्याय। सारङ्गाय नमः ९३ पद्मं हृदयकमलं बाह्यञ्च पद्मं तद्बोधकाय। पद्मप्रबोधाय नमः ९४ प्रचण्डाय सर्वसमर्थाय अतिकोपनाय च। प्रचण्डाय नमः ९५॥ १८॥

ब्रह्मेशानाच्युतानां सृष्टिसंहारस्थितिकर्तॄणामीशाय स्वामिने। सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम्। स संज्ञां याति भगवानेक एव जनार्दन इति स्मृतेः। प्रातरादौ ब्रह्माच्युतेशानश्च। ब्रह्मेशानाच्युतेशाय नमः ९६। सूरः सूर्यपर्यायः। सूराय नमः ९७ आदित्यस्यान्तरं वर्चो ज्ञानं तद्रूपाय। आदित्यवर्चसे नमः ९८ भास्वते चिदचित्प्रकाशवते। भास्वते नमः ९९ सर्वभक्षाय सर्वं विषयजातं भक्षयतीति सर्वभक्षस्तस्मै। यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदन इति श्रुतेः। सर्वभक्षाय नमः १०० रुद्दुःखन्तन्मूलौ रागद्वेषौ तन्मूलाज्ञानञ्च विद्रावयतीति रुद्रस्तस्येदं रौद्रम्। अज्ञानसंहारसमर्थज्ञानाकारायेत्यर्थः। रौद्रवपुषे नमः १०१॥ १९॥

तमोघ्नाय हिमघ्नाय शत्रुघ्नायामितात्मने ।
कृतघ्नघ्नाय देवाय ज्योतिषाम्पतये नमः ॥ २० ॥
तप्तचामीकराभाय हरये विश्वकर्मणे ।
नमस्तमोभिनिघ्नाय रुचये लोकसाक्षिणे ॥ २१ ॥
नाशयत्येष वै भूतं तमेव सृजति प्रभुः ।

तमोघ्नहिमोघ्नौ तिमिरोन्मथनशिशिरनाशनपर्य्यायौ । तमोघ्नाय नमः १०२ हिमघ्नाय नमः १०३ शत्रुर्देहाहम्भावः । निजतत्त्वभगवदनुसन्धानजसौख्येन तस्य शातनात्तस्य हन्ता । रिपुकृतशगदादिहन्ता च । शत्रुघ्नाय नमः १०४ अमितात्मने कालदेशपरिच्छेदरहितस्वरूपाय । अमितात्मने नमः १०५ कृतघ्नघ्नाय कृतश्चेतनत्वलक्षणं भगवत्कृतमुपकारं घ्नन्ति विस्मरन्ति ते कृतघ्ना भगवद्विमुखा अज्ञाः संसारिणस्तान् संसारानर्थप्रापणेन हन्ति तादृशाय । कृतघ्नघ्नाय नमः १०६ देवाय चिदानन्दज्योतिःस्वरूपाय । अजागतकृत्यस्य निजोदयेन प्रवर्त्तनशीलस्य । देवाय नमः १०७ ज्योतिषां पतये इति ज्योतिर्गणानां पतये इत्येतत्पर्य्यायः । ज्योतिषां पतये नमः १०८ ॥ २० ॥

तप्तचामीकराभाय सुवर्णसदृशायेत्येतत्पर्य्यायः । तप्तचामीकराभाय नमः १०९ हरत्यशेषमज्ञानं तत्कार्य्यञ्चेति हरिस्तस्मै । हरये नमः ११० विश्वं सर्वं कर्म यस्य तस्मै । सर्वकर्मा सर्वकाम इति स्मृतेः । विश्वकर्मणे नमः १११ तमोभिनिघ्नस्तमोनिघ्नपर्य्यायः । तमोभिनिघ्नाय नमः ११२ रुचये चिल्लक्षणदीप्तिमते । रुचये नमः ११३ लोक्यत इति लोको दृश्यप्रपञ्चस्तत्साक्षिणे साक्षाद्द्रष्ट्रे । लोकानां पापपुण्यसाक्षिणे च । लोकसाक्षिणे नमः ११४ ॥ २१ ॥

पायत्येष तपत्येष वर्षत्येष गभस्तिभिः ॥ २२ ॥
एष सुप्तेषु जागर्त्ति भूतेषु परिनिष्ठितः।
एष चैवाग्निहोत्रञ्च फलञ्चैवाग्निहोत्रिणाम् ॥ २३ ॥
देवाश्च क्रतवश्चैव क्रतूनां फलमेव च।
यानि कृत्यानि लोकेषु सर्वेषु परमप्रभुः ॥ २४ ॥

एष इत्युक्तार्थः। भूतं प्रपञ्चं प्रतिसुप्ति नाशयति। भूतं प्राणिजातं तत्तदायुरन्ते नाशयति। स्वदिनान्ते च नाशयति। तेन भूतनाशाय नमः ११५ तमेव उक्तमेव उक्तभूतं जागरादौ अहरादौ च सृजति। भूतस्रष्ट्रे नमः ११६ प्रभुः प्रकर्षेण स्वशक्तिवैभवेन सकलप्रपञ्चात्मना भवतीति प्रभुः सकलप्रपञ्चस्य साक्षादधिष्ठाता च। प्रभवे नमः ११७ पायति शोषयति गभस्तिभिः। पायते नमः ११८ तपति नाशयति। तपते नमः ११९ वर्षति सृजति। वर्षते नमः १२० ॥ २२ ॥

एष करणेषु सुप्तेषु उपरतेषु स्वयमनुपरतशक्तिनित्यचिद्रूपो जागर्त्ति। निजमण्डलादर्शनतः प्राणिषु सुप्तेषु तदगोचरदेशस्थे स्वमण्डले जागर्त्ति च। सुप्तेषु जाग्रते नमः १२१ भूतेषु परिनिष्ठितः अन्तर्यामितया स्थितः। भूतेषु परिनिष्ठिताय नमः १२२ अग्नयः पञ्चेन्द्रियवह्नयः पञ्चाग्नयस्तेषु होत्रं होमस्तत्तद्विषयानुभवरूपः। अग्निहोत्राय नमः १२३ अग्निहोत्रिणां बाह्याभ्यन्तराग्निहोत्रानुष्ठातॄणां प्राप्यं यत् स्वर्गापवर्गरूपं फलं तत्प्रदश्च। अग्निहोत्रिणां फलदाय नमः १२४ ॥ २३ ॥

देवाः क्रतुदेवा अष्टौ वसव एकादशरुद्रेत्यादिक्रमेणोपदिष्टास्त्रयस्त्रिंशद्देवाः। क्रतवः सोमाद्यश्वमेधान्ताः। क्रतुफलं श्रुत्युक्तं स्वर्गादि। किञ्च सर्वेषु लोकेषु प्राणिषु यानि कृत्यानि क्रियास्तत्साधनानि च अर-

एनमापत्सु कृच्छ्रेषु कान्तारेषु भयेषु च ।
कीर्त्तयन् पुरुषः कश्चिन्नावसीदति राघव ! ॥ २५ ॥
पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम् ।
एतत्त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यति ॥ २६ ॥
अस्मिन् क्षणे महाबाहो ! रावणं त्वं जयिष्यसि ।
एवमुक्त्वा ततोऽगस्त्यो जगाम स यथागतम् ॥ २७ ॥
एतत् श्रुत्वा महातेजा नष्टशोकोऽभवत्तदा ।

त्विग्यजमानसमिदाज्यपश्वादीनि तैर्निजभक्तद्विजानां सङ्घटने परम-प्रभुः परमसमर्थः। परमसमर्थाय भगवते ब्रह्मणे नमः १२५ एवं पञ्चविंशत्युत्तरशतसंख्या भगवत्पूजारहस्यनाममन्त्रा इति कतकः। सर्वदेवात्मको ह्येष इत्यारभ्य लोकसाक्षिणे इत्यन्ताष्टोत्तरशतसंख्या एवादित्यहृदयस्तोत्रनाममन्त्रा इति तीर्थः ॥ २४ ॥

एवं कथितस्य स्तोत्रस्य फलमाह,—एनमिति। आदित्यहृदयस्तवं कीर्त्तयन् आपदादिषु कश्चिदपि द्विजो नावसीदति न दुःखनिमग्नो भवति। यद्वैनमादित्यहृदयार्थभूतं सूर्य्यमापदादिनिमित्तेषु उक्तैर्नाम-मन्त्रैर्विशिष्य कीर्त्तयन् स्तुवन्नावसीदति अत्रापत्कालमृत्युः। कृच्छ्रं ज्वरादिदुःखम्। भयश्चौरादिनिमित्तम् ॥ २५ ॥

यदेवमतः पूजयस्वैनम् आदित्यहृदयार्थम्। देवदेवं देवानां ब्रह्म-विष्णुरुद्राणामपि देवमुपास्यम्। जगतां जनिमृतिधर्मिणां भूरादि-लोकानां संसारमात्रस्य च पतिम्। एतदादित्यहृदयं स्तोत्रं त्रिगुणितं सञ्जातत्रिगुणं* यथा तथा जप्त्वा विजयिष्यति। रिपून् जय इति शेषः ॥ २६ ॥ २७ ॥

धारयामास सुप्रीतो राघवः प्रयतात्मवान् ॥ २८ ॥
आदित्यं प्रेक्ष्य जप्त्वेदं परं हर्षमवाप्तवान्।
त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्य्यवान् ॥ २९ ॥
रावणं प्रेक्ष्य हृष्टात्मा जयार्थं समुपागमत्।
सर्वयत्नेन महता वृतस्तस्य वधेऽभवत् ॥ ३० ॥

अथ रविरवदन्निरीक्ष्य रामं
मुदितमनाः परमं प्रहृष्यमाणः।
निशिचरपतिसङ्क्षयं विदित्वा
सुरगणमध्यगतो वचस्त्वरेति ॥ ३१ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
षष्ठोत्तरशततमः सर्गः ॥ १०६ ॥

नष्टशोको नष्टो रावणविषयचिन्तारूपः शोको यस्य सः ॥ २८ ॥
इदं शीघ्रसिद्धिकरं स्तोत्रं जप्त्वा हृष्टात्मा प्रातर्युद्धायागतं रावणं प्रेक्ष्य जयार्थं मनसा भगवन्तमगमत् ध्यातवान् ॥ २९ ॥ ३० ॥
अथ रविः रामं निरीक्ष्य निशाचरपतिसंक्षयं तत्कालं विदित्वा स्वलीलामूर्त्या सुरगणमध्यगतः सन् साक्षात्त्वरेति वचोऽवदत् ॥ ३१ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्ध-
काण्डे षष्ठोत्तरशततमः सर्गः ॥ १०६ ॥

# सप्तोत्तरशततमः सर्गः ।



सारथिः स रथं हृष्टः परसैन्याप्रधर्षणम् ।
गन्धर्वनगराकारं समुच्छ्रितपताकिनम् ॥ १ ॥
युक्तं परमसम्पन्नैर्वाजिभिर्हेममालिभिः ।
युद्धोपकरणैः पूर्णं पताकाध्वजमालिनम् ॥ २ ॥
ग्रसन्तमिव चाकाशं नादयन्तं वसुन्धराम् ।
प्रणाशं परसैन्यानां स्वसैन्यस्य प्रहर्षणम् ॥ ३ ॥
रावणस्य रथं क्षिप्रञ्चोदयामास सारथिः ।
तमापतन्तं सहसा स्वनवन्तं महाध्वजम् ॥ ४ ॥
रथं राक्षसराजस्य नरराजो ददर्श ह ।
कृष्णवाजिसमायुक्तं युक्तं रौद्रेण वर्चसा ॥ ५ ॥

स सारथिः रावणस्य सारथिः हृष्टः सन् उच्यमानगुणं रथञ्चोदयामासेत्यन्वयः । गन्धर्वनगराकारं तद्वदाश्चर्यदर्शनम् ॥ १ ॥

परमसम्पन्नैः परमैः रथवहनोचितगुणैर्जवादिभिः सम्पन्नैः । पताकाध्वजानां मालाऽस्मिन्नस्ति तम् । अनेन ध्वजबाहुल्यमुक्तम् । समुच्छ्रितपताकिनमित्यनेन च तदौन्नत्यमुक्तम् ॥ २ ॥

प्रणाशं प्रणाशकरम् ॥ ३ ॥

दीप्यमानमिवाकाशे विमानं सूर्य्यवर्चसम्।
तडित्पताकागहनं दर्शितेन्द्रायुधप्रभम्॥ ६॥
शरधारा विमुञ्चन्तं धाराधरमिवाम्बुदम्।
स दृष्ट्वा मेघसङ्काशमापतन्तं रथं रिपोः॥ ७॥
गिरेर्वज्राभिमृष्टस्य दीर्य्यतः सदृशस्वनम्।
विस्फारयन् वै वेगेन बालचन्द्रानतं धनुः॥ ८॥
उवाच मातलिं रामः सहस्राक्षस्य सारथिम्।
मातले! पश्य संरब्धमापतन्तं रथं रिपोः॥ ९॥
यथापसव्यं पतता वेगेन महता पुनः।
समरे हन्तुमात्मानं तथाऽनेन कृता मतिः॥ १०॥

द्वितीयरथसारथिशब्दो धनेनविशेषणाव्यवधानात् पूर्वाकाविस्मरणार्थौ तदनुवादकाविव॥ ४॥ ५॥

तडित्पताकागहनं तडित्तुल्यपताकाभिर्गहनं सङ्कीर्णम्। दर्शितेन्द्रायुधप्रभं दर्शिता इन्द्रायुधस्य प्रभा येन तम्। दर्शितेन्द्रायुधायुधमिति पाठे दर्शितानीन्द्रायुधेन सदृशान्यायुधानि येन तमित्यर्थः॥ ॥ ६॥ ७॥

वज्राभिमृष्टस्य वज्राभिहतस्य दीर्य्यतो गिरेः स्वनस्य सदृशस्वनम्। बालचन्द्रवन्नतम्॥ ८॥ ९॥

यथानुभूयमानप्रकारेणापसव्यं प्रदक्षिणं महता रथवेगेन पततानेन रावणेन समरे आत्मानं मां हन्तुं मतिः कृता। प्रथमपादच्छिन्नेन रथकारलक्षणं सुनिमित्तसम्पादनेनेति शेषः॥ १०॥

तदप्रमादमातिष्ठ प्रत्युद्गच्छ रथं रिपोः।
विध्वंसयितुमिच्छामि वायुर्मेघमिवोत्थितम् ॥ ११ ॥
अविक्लवमसम्भ्रान्तमव्यग्रहृदयेक्षणम्।
रश्मिसञ्चारनियतं प्रचोदय रथं द्रुतम् ॥ १२ ॥
कामं न त्वं समाधेयः पुरन्दररथोचितः।
युयुत्सुरहमेकाग्रः स्मारये त्वां न शिक्षये॥ १३ ॥
परितुष्टः स रामस्य तेन वाक्येन मातलिः।
प्रचोदयामास रथं सुरसारथिसत्तमः ॥ १४ ॥
अपसव्यं ततः कुर्वन् रावणस्य महारथम्।
चक्रसम्भूतरजसा रावणं व्यवधूनयत् ॥ १५ ॥

तत्तस्मादप्रमादं सावधानम् आतिष्ठासनस्थैर्य्येण रिपो रावणस्य रथं प्रति प्रत्युद्गच्छ। पादचिह्नेनैवेति शेषः ॥ ११ ॥

अविक्लवादिचतुर्गुणयुक्तं यथा तथा द्रुतं रथं प्रचोदय। अविक्लवत्वमभीरुत्वम्। असम्भ्रान्तत्वं स्थानक्षोभादक्षुभितचित्तत्वम्। अव्यग्रमस्थीयहृदयेक्षणं यत्र। रश्मिसञ्चारनियतम्। रश्मिसञ्चारे नैपुण्यं तत्तत्कालानुगुण्येन संयमनमोचनव्यवस्थावत्त्वम् ॥ १२ ॥

यस्मात् पुरन्दररथोचितस्त्वं यद्यपि कामं न समाधेयो न शिक्षणीयः। अथापि युयुत्सुरेकाग्रोऽहं स्मारये सहजं सारथ्यकर्म स्मारये न शिक्षये ॥ १३ ॥ १४ ॥

अपसव्यं प्रदक्षिणप्रचारं व्यवधूनयत् अकम्पयत् ॥ १५ ॥

ततः क्रुद्धो दशग्रीवस्ताम्रविस्फारितेक्षणः।
रथप्रतिमुखं रामं सायकैरवधूनयत् ॥ १६ ॥
धर्षणामर्षितो रामो धैर्य्यं रोषेण लम्भयन्।
जग्राह सुमहावेगमैन्द्रं युधि शरासनम् ॥ १७ ॥
शरांश्च सुमहावेगान् सूर्य्यरश्मिसमप्रभान्।
तदुपोढं महद्युद्धमन्योऽन्यवधकाङ्क्षिणोः।
परस्पराभिमुखयोर्दृप्तयोरिव सिंहयोः ॥ १८ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः।
समीयुर्द्वैरथं द्रष्टुं रावणक्षयकाङ्क्षिणः ॥ १९ ॥
समुत्पेतुरथोत्पाता दारुणा रोमहर्षणाः।
रावणस्य विनाशाय राघवस्योदयाय च ॥ २० ॥
ववर्ष रुधिरं देवो रावणस्य रथोपरि।
वाता मण्डलिनस्तीव्रा व्यपसव्यं प्रचक्रमुः ॥ २१ ॥

रथेन प्रतिमुखं सम्मुखं रथप्रतिमुखम् ॥ १६ ॥

धर्षणेनामर्षितः। रोषेण सह धैर्य्यं युद्धारभटीं लम्भयन् प्रापुवन्। इन्द्रस्येदं ऐन्द्रं शरासनं जग्राह। किञ्चैन्द्रं पारमेश्वरम् इदिपरमैश्वर्य्ये इत्युक्तेः। निजायुधं जग्राहेत्यर्थः ॥ १७ ॥

तत्तदा महद्युद्धमुपोढ़मारब्धमभूत् ॥ १८ ॥

द्वाभ्यां रथाभ्यां प्रवर्त्तितं द्वयो रथयोरिदं वा द्वैरथं युद्धं द्रष्टुं समीयुर्मिलित्वा गताः ॥ १९ ॥ २० ॥

महद्गृध्रकुलञ्चास्य भ्रममाणं नभस्थले।
येन येन रथो जाति तेन तेन प्रधावति ॥ २२ ॥
सन्ध्यया चावृता लङ्का जपापुष्पनिकाशया।
दृश्यते सम्प्रदीप्तेव दिवसेऽपि वसुन्धरा ॥ २३ ॥
सनिर्घाता महोल्काश्च सम्प्रपेतुर्महास्वनाः।
विषादयंस्ते रक्षांसि रावणस्य तदाहिताः ॥ २४ ॥
रावणश्च यतस्तत्र प्रचचाल वसुन्धरा।
रक्षसाञ्च प्रहरतां गृहीता इव बाहवः ॥ २५ ॥
ताम्राः पीताः सिताः श्वेताः पतिताः सूर्य्यरश्मयः।

उत्पातानाह,—ववर्षेति। मण्डलिनो वाता वात्यारूपा इत्यर्थः। तीव्रास्तीव्रवेगाः। व्यपसव्यं विगतमपसव्यं प्रदक्षिणं यथा तथा। वामावर्त्ता इत्यर्थः ॥ २१ ॥

येन येनेति। मार्गेणेत्यर्थः। गृध्रकुलस्य मृतमांसभोजिनो रावणेन सहागमनेन रावणस्यासन्नमरणं सूच्यते ॥ २२ ॥

जपापुष्पनिकाशया सन्ध्ययावृता लङ्का सम्प्रदीप्तेव दृश्यते। अकालेऽपीति शेषः। तदेवाह,—दिवसेऽपीति। वसुन्धरेति लङ्काविशेषणम् ॥ २३ ॥

सम्प्रपेतुः। रावणस्य पुरस्तादिति शेषः। तदा तस्मिन् काले। अहिताः अनर्थसूचकाः ॥ २४ ॥

वसुन्धरा लङ्कापर्य्यन्तभूः। गृहीता इवेति भयात् स्तब्धा इति शेषः ॥ २५ ॥

दृश्यन्ते रावणस्याग्रे पर्वतस्येव धातवः ॥ २६ ॥
गृध्रैरनुगताश्चास्य वमन्त्यो ज्वलनं मुखैः।
प्रणेदुर्मुखमीक्षन्त्यः संरब्धमशिवं शिवाः ॥ २७ ॥
प्रतिकूलं ववौ वायू रणे पांसून् समुत्किरन्।
तस्य राक्षसराजस्य कुर्वन् दृष्टिविलोपनम् ॥ २८ ॥
निपेतुरिन्द्राशनयः सैन्ये चास्य समन्ततः।
दुर्विषह्यस्वरा घोरं विना जलधरोदयम् ॥ २९ ॥
दिशश्च प्रदिशः सर्वा बभूवुस्तिमिरावृताः।
पांसुवर्षेण महता दुर्दर्शञ्च नभोऽभवत् ॥ ३० ॥
कुर्वन्त्यः कलहं घोरं सारिकास्तद्रथम्प्रति।
निपेतुः शतशस्तत्र दारुणा दारुणारुताः ॥ ३१ ॥
जघनेभ्यः स्फुलिङ्गांश्च नेत्रेभ्योऽश्रूणि सन्ततम्।
मुमुचुस्तस्य तुरगास्तुल्यमग्निञ्च वारि च ॥ ३२ ॥
एवम्प्रकारा बहवः समुत्पाता भयावहाः।

पर्वतस्य धातव इव ताम्रादिरूपाः। सूर्य्यस्य रश्मयो रावणस्याग्रे पतिताः सन्तो दृश्यन्त इति सम्बन्धः ॥ २६ ॥

अस्य मुखमीक्षन्त्य इत्यन्वयः ॥ २७ ॥

दृष्टिविलोपनम् अप्रकाशोद्दीप्तवालम् ॥ २८ ॥

इन्द्राशनय इत्यनेन अयुधाशनिव्यावृत्तिः ॥ २९ ॥ ३० ॥

तद्रथं रावणरथम्प्रति ॥ ३१ ॥

रावणस्य विनाशाय दारुणाः सम्प्रजज्ञिरे ॥ ३३ ॥

रामस्यापि निमित्तानि सौम्यानि च शिवानि च ।

बभूवुर्जयशंसीनि प्रादुर्भूतानि सर्वशः ॥ ३४ ॥

निमित्तानीह सौम्यानि राघवस्य जयाय वै ।

दृष्ट्वा परमसंहृष्टो हतं मेने च रावणम् ॥ ३५ ॥

ततो निरीक्ष्यात्मगतानि राघवो

रणे निमित्तानि निमित्तकोविदः ।

जगाम हर्षञ्च पराञ्च निर्वृति-

ञ्चकार युद्धे ह्यधिकञ्च विक्रमम् ॥ ३६ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे

सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

तुल्यमर्मिषु वारि च । जघनेभ्य इत्याद्युक्तप्रकारेणेति शेषः ॥ ३२ ॥
॥ ३३ ॥ ३४ ॥

परमसंहृष्टो लक्ष्मणो मातलिर्वेति शेषः ॥ ३५ ॥ ३६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके

युद्धकाण्डे सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

---

## अष्टोत्तरशततमः सर्गः

ततः प्रवृत्तं सुक्रूरं रामरावणयोस्तदा ।
सुमहत् द्वैरथं युद्धं सर्वलोकभयावहम् ॥ १ ॥
ततो राक्षससैन्यञ्च हरीणाञ्च महद्बलम् ।
प्रगृहीतप्रहरणं निश्चेष्टं समवर्त्तत ॥ २ ॥
सम्प्रयुद्धौ तु तौ दृष्ट्वा बलवन्नरराक्षसौ ।
व्याक्षिप्तहृदयाः सर्वे परं विस्मयमागताः ॥ ३ ॥
नानाप्रहरणैर्व्यग्रैर्भुजैर्विस्मितबुद्धयः ।
तस्थुः प्रेक्ष्य च सर्वे ते नाभिजग्मुः परस्परम् ॥ ४ ॥
रक्षसां रावणञ्चापि वानराणाञ्च राघवम् ।
पश्यतां विस्मिताक्षाणां सैन्यञ्चित्रमिवाबभौ ॥ ५ ॥

तत इति । द्वैरथं व्याख्यातम् । सुमहत् अनेकदिनव्यापि ॥ १ ॥

प्रतिगृहीतप्रहरणमपि निश्चेष्टं समवर्त्तत निरुद्योगमवातिष्ठत । तद्युद्धदर्शनपारवश्यादिति शेषः ॥ २ ॥

तदेवाह,—सम्प्रयुद्धाविति । सम्यक् युद्धारम्भप्रवृत्तौ ॥ ३ ॥

भुजैरुपलक्षिता इति शेषः । नाभिजग्मुः प्रहर्त्तुं परस्परमिति शेषः ॥ ४ ॥

तौ तु तत्र निमित्तानि दृष्ट्वा राघवरावणौ ।
कृतबुद्धी स्थिरामर्षौ युयुधाते ह्यभीतवत् ॥ ६ ॥
जेतव्यमिति काकुत्स्थो ! मर्त्तव्यमिति रावणः ।
धृतौ स्ववीर्य्यसर्वस्वं युद्धेऽदर्शयतान्तदा ॥ ७ ॥
ततः क्रोधाद्दशग्रीवः शरान् सन्धाय वीर्य्यवान् ।
मुमोच ध्वजमुद्दिश्य राघवस्य रथे स्थितम् ॥ ८ ॥
ते शरास्तमनासाद्य पुरन्दररथध्वजम् ।
रथशक्तिं परामृश्य निपेतुर्धरणीतले ॥ ९ ॥
ततो रामोऽपि संक्रुद्धश्चापमाकृष्य वीर्य्यवान् ।
कृतप्रतिकृतं कर्त्तुं मनसा सम्प्रचक्रमे ॥ १० ॥
रावणध्वजमुद्दिश्य मुमोच निशितं शरम् ।
महासर्पमिवासह्यं ज्वलन्तं स्वेन तेजसा ॥ ११ ॥
रामश्चिक्षेप तेजस्वी केतुमुद्दिश्य सायकम् ।
जगाम स महीं भित्वा दशग्रीवध्वजं शरः ॥ १२ ॥

विस्मिताच्छायां विस्मयपरवशेन्द्रियाणां हरिरक्षसामिति शेषः । चित्रमिव चित्रलिखितमिव ॥ ५ ॥

कृतबुद्धी युद्धविषये निश्चितबुद्धी । अभीतवदभीतार्हम् ॥ ६ ॥

निश्चयमाह,—जेतव्यमिति मर्त्तव्यमिति । मृत्युरूपशत्रौ प्रवृत्तव्यमित्यर्थ इति कतकः । इति धृतौ एवं निश्चयवन्तौ । अदर्शयतामिति च्छेदः ॥ ७ ॥ ८ ॥

स निकृत्तोऽपतद्भूमौ रावणस्यन्दनध्वजः।
ध्वजस्योन्मथनं दृष्ट्वा रावणः स महाबलः॥ १३॥
सम्प्रदीप्तोऽभवत् क्रोधादमर्षात् प्रदहन्निव।
स रोषवशमापन्नः शरवर्षं ववर्ष ह॥ १४॥
रामस्य तुरगान् दीप्तैः शरैर्विव्याध रावणः।
ते दिव्या हरयस्तत्र नास्खलन्नापि बभ्रमुः॥ १५॥
बभूवुः स्वस्थहृदयाः पद्मनालैरिवाहताः।
तेषामसम्भ्रमं दृष्ट्वा वाजिनां रावणस्तदा॥ १६॥
भूय एव सुसंक्रुद्धः शरवर्षं मुमोच ह।
गदाश्च परिघांश्चैव चक्राणि मुशलानि च॥ १७॥
गिरिशृङ्गाणि वृक्षांश्च तथा शूलपरश्वधान्।
मायाविहितमेतत्तु शस्त्रवर्षमपातयत्।
सहस्रशस्तदा बाणानश्रान्तहृदयोद्यमः॥ १८॥

रथशक्तिं दिव्यरथवैभवं रथावयवविशेषं वा परामृश्य प्राप्य तन्महिम्ना केवलं धरणीतले पेतुः॥ ९॥ १०॥ ११॥ १२॥ १३॥ १४॥

स्खलनाद्यभावे स्वस्थहृदयत्वे च हेतुर्दिव्या इति॥ १५॥

पद्मनालैः पद्मदण्डैः॥ १६॥ १७॥

गिरिशृङ्गादीनां पातनं कुतस्तत्राह,—मायाविहितमिति। एतद्गिरिवृक्षादिवर्षम्। शस्त्रवर्षं मुक्तगदादिशस्त्रवर्षम्॥ १८॥

तुमुलं त्रासजननं भीमं भीमप्रतिस्वनम्।
तद्वर्षमभवद्युद्धे नैकशस्त्रमयं महत्॥ १९॥
विमुच्य राघवरथं समन्ताद्वानरे बले।
सायकैरन्तरिक्षञ्च चकार सुनिरन्तरम्॥ २०॥
मुमोच च दशग्रीवो निःसङ्गेनान्तरात्मना।
व्यायच्छमानन्तं दृष्ट्वा तत्परं रावणं रणे॥ २१॥
प्रहसन्निव काकुत्स्थः सन्दधे निशिताञ्छरान्।
स मुमोच ततो बाणाञ्छतशोऽथ सहस्रशः॥ २२॥
तान् दृष्ट्वा रावणश्चक्रे स्वशरैः खन्निरन्तरम्।
ताभ्यां नियुक्तेन तदा शरवर्षेण भास्वता॥ २३॥
शरबद्धमिवाभाति द्वितीयं भास्वदम्बरम्।
नानिमित्तोऽभवद्बाणो नानिर्भेत्ता न निष्फलः॥ २४॥

भीमः प्रतिस्वनो यस्मिंस्तत्। नैकशस्त्रमयं नानाशस्त्रप्रचुरम्। तद्वर्षं प्रागुक्तशस्त्रवर्षम्॥ १९॥

राघवरथं विमुच्य क्रोधातिशयेन युक्तत्वाल्लक्ष्यभूतं रामरथमतिक्रम्य वानरे बलेऽपतत्॥ २०॥

निःसङ्गेन प्राणाशासङ्गरहितेन। तत्परं तदनन्तरम्। व्यायच्छमानं व्यायच्छन्तं प्रवर्त्तयन्तम्॥ २१॥ २२॥ २३॥

शरबद्धं शररचितं द्वितीयमम्बरमित्यर्थः। भास्वत् भासमानम्। नानिमित्तः निमित्तं लक्ष्यमप्राप्य वर्त्तमानो नास्ति। न निष्फलः लक्ष्य-

अन्योऽन्यमभिसंहत्य निपेतुर्धरणीतले।
तथा विसृजतोर्बाणान् रामरावणयोर्मृधे ॥ २५ ॥
प्रायुध्येतामविच्छिन्नमस्यन्तौ सव्यदक्षिणम्।
चक्रतुश्च शरैर्घोरैर्निरुच्छ्वासमिवाम्बरम् ॥ २६ ॥
रावणस्य हयान् रामो हयान् रामस्य रावणः।
जघ्नतुस्तौ तदान्योऽन्यं कृतानुकृतकारिणौ ॥ २७ ॥
एवन्तु तौ सुसंक्रुद्धौ चक्रतुर्युद्धमुत्तमम्।
मुहूर्त्तमभवद्युद्धं तुमुलं रोमहर्षणम् ॥ २८ ॥
प्रयुध्यमानौ समरे महाबलौ
शितैः शरैरावणलक्ष्मणाग्रजौ।

वेधपरप्रयुक्तवारणान्यतरप्रयोजनहीनो नाभवत्। नानिर्भेत्ता अभेत्ता न। नातियत्न इति पाठे परप्रयुक्तनिवारणाय यत्नातिक्रान्तो न। निवारणाय प्रयुक्तो निवारयत्येवेत्यर्थः ॥ २४ ॥

बाणान् विसृजतोस्तयोर्बाणाः अन्योऽन्यमभिसंहत्य स्व स्व प्रयोगकार्य्यं कृत्वैव धरणीतले निपेतुः ॥ २५ ॥

सव्यञ्च दक्षिणञ्च सव्यदक्षिणम्। अत्यन्तसंयोगे द्वितीया। उभयपार्श्वयोरविच्छिन्नं शरानस्यन्तौ। निरुच्छ्वासं नीरन्ध्रम् ॥ २६ ॥

कृतस्यानुकृतं प्रतिक्रिया तत्कारणशीलौ ॥ २७ ॥ २८ ॥

तुमुलं रोमहर्षणम्। एतदनन्तरं प्रयुध्यमानावित्येकं श्लोकं प्रक्षिप्यात्र सर्गावच्छेदं कुर्वन्ति तदयुक्तम्। पश्चादपि तुमुलयुद्धस्यैव

ध्वजावपातेन स राक्षसाधिपो
भग्नं प्रचुक्रोध तदा रघूत्तमे ॥ २९ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
अष्टोत्तरशततमः सर्गः ॥ १०८ ॥

सत्त्वादेकप्रकरणत्वाच्च । अनवच्छेदस्यैव बहुषु पुस्तकेषु दर्शनाच्चेति कतकः ॥ २९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्ध-
काण्डे अष्टोत्तरशततमः सर्गः ॥ १०८ ॥

---

## नवोत्तरशततमः सर्गः ।

तौ तथा युध्यमानौ तु समरे रामरावणौ ।
ददृशुः सर्वभूतानि विस्मितेनान्तरात्मना ॥ १ ॥
अर्दयन्तौ तु समरे तयोस्तौ स्यन्दनोत्तमौ ।
परस्परमभिक्रुद्धौ परस्परमभिद्रुतौ ॥ २ ॥
परस्परवधे युक्तौ घोररूपौ बभूवतुः ।
मण्डलानि च वीथीश्च गतप्रत्यागतानि च ॥ ३ ॥
दर्शयन्तौ बहुविधां सूतौ सारथ्यजां गतिम् ।
अर्दयन् रावणं रामो राघवञ्चापि रावणः ॥ ४ ॥
गतिवेगं समापन्नौ प्रतिवेगनिवर्त्तने ।
क्षिपतोः शरजालानि तयोस्तौ स्यन्दनोत्तमौ ॥ ५ ॥
चेरतुः संयुगमहीं सासारौ जलदाविव ।
दर्शयित्वा तदा तौ तु गतिं बहुविधां रणे ॥ ६ ॥
परस्परस्याभिमुखौ पुनरेव च तस्थतुः ।

ताविति ॥ १ ॥ २ ॥ ३ ॥
सारथ्यजां सूतकर्मनैपुण्यजाम् । अर्दयन् बभूवेति शेषः ॥ ४ ॥ ५

धुरन्धुरेण रथयोर्वक्त्रं वक्त्रेण वाजिनाम् ॥ ७ ॥
पताकाश्च पताकाभिः समीयुः स्थितयोस्तदा ।
रावणस्य ततो रामो धनुर्मुक्तैः शितैः शरैः ॥ ८ ॥
चतुर्भिश्चतुरो दीप्तान् हयान् प्रत्यपसर्पयत् ।
स क्रोधवशमापन्नो हयानामपसर्पणे ॥ ९ ॥
मुमोच निशितान् बाणान् राघवाय दशाननः ।
सोऽतिविद्धो बलवता दशग्रीवेण राघवः ॥ १० ॥
जगाम न विकारञ्च न चापि व्यथितोऽभवत् ।
चिक्षेप च पुनर्बाणान् वज्रसारसमस्वनान् ॥ ११ ॥
सारथिं वज्रहस्तस्य समादिश्य दशाननः ।
मातलेस्तु महावेगाः शरीरे पतिताः शराः ॥ १२ ॥
न सूक्ष्ममपि सम्मोहं व्यथां वा प्रददुर्युधि ।
तया धर्षणया क्रुद्धो मातलेर्न तथात्मनः ॥ १३ ॥

सासारौ धारासम्पातश्चासारस्तत्सहितौ ॥ ६ ॥ ७ ॥ ८ ॥

प्रत्यपसर्पयत् । प्रत्यपसर्पणं नामात्यन्ताभिमुख्यानामेव पश्चार्धेनापसर्पणम् ॥ ९ ॥ १० ॥

चिक्षेप रावणः क्षिप्तवान् ॥ ११ ॥ १२ ॥

मातलेर्व्यथां न प्रददुः । देवत्वेन दिव्यशक्तिमत्त्वात् । अपसर्पणकाले रावणेन प्रक्षिप्तानामतिवेधसामर्थ्यायोगाच्च । यथा मातलेर्धर्षणया क्रुद्धस्तथा आत्मनो धर्षणया न क्रुद्धः ॥ १३ ॥

चकार शरजालेन राघवो विमुखं रिपुम्।
विंशतिं त्रिंशतिं षष्टिं शतशोऽथ सहस्रशः॥ १४॥
मुमोच राघवो वीरः सायकान् स्यन्दने रिपोः।
रावणोऽपि ततः क्रुद्धो रथस्थो राक्षसेश्वरः॥ १५॥
गदामुसलवर्षेण रामं प्रत्यर्दयद्रणे।
तत्प्रयुक्तं पुनर्युद्धं तुमुलं रोमहर्षणम्॥ १६॥
गदानां मुसलानाञ्च परिघाणाञ्च निःस्वनैः।
शराणां पुङ्खवातैश्च क्षुभिताः सप्तसागराः॥ १७॥
क्षुब्धानां सागराणाञ्च पातालतलवासिनः।
व्यथिता दानवाः सर्वे पन्नगाश्च सहस्रशः॥ १८॥
चकम्पे मेदिनी कृत्स्ना सशैलवनकानना।
भास्करो निष्प्रभश्चासीन्न ववौ चापि मारुतः॥ १९॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः।
चिन्तामापेदिरे सर्वे सकिन्नरमहोरगाः॥ २०॥
स्वस्ति गोब्राह्मणेभ्यस्तु लोकास्तिष्ठन्तु शाश्वताः।
जयतां राघवः संख्ये रावणं राक्षसेश्वरम्॥ २१॥

अतएव रिपुं विमुखञ्चकार॥ १४॥ १५॥ १६॥ १७॥

क्षुब्धानां सागराणामधोदेशवर्त्तिपातालवासिनो व्यथिता जाता इति शेषः॥ १८॥ १९॥ २०॥ २१॥

एवं जपन्तोऽपश्यंस्ते देवाः सर्षिगणास्तदा ।
रामरावणयोर्युद्धं सुघोरं रोमहर्षणम् ॥ २२ ॥
गन्धर्वाप्सरसां सङ्घा दृष्ट्वा युद्धमनूपमम् ।
सागरश्चाम्बरप्रख्यमम्बरं सागरोपमम् ॥ २३ ॥
रामरावणयोर्युद्धं रामरावणयोरिव ।
एवं ब्रुवन्तो ददृशुस्तद्युद्धं रामरावणम् ॥ २४ ॥
ततः क्रोधान् महाबाहू रघूणां कीर्त्तिवर्द्धनः ।
सन्धाय धनुषा रामः शरमाशीविषोपमम् ॥ २५ ॥
रावणस्य शिरोच्छिन्दच्छ्रीमज्ज्वलितकुण्डलम् ।

जपन्तः वदन्तः ॥ २२ ॥

वचनप्रकारमाह,—गन्धर्वाप्सरसामिति। अनूपममिति दीर्घ आर्षः। दृष्ट्वा युद्धमनूपममित्युत्तरं सागरश्चाम्बरप्रख्यमम्बरं सागरोपममिति पाठे सागरं नैल्यवैपुल्यादिनाम्बरप्रख्यमाकाशतुल्यमिति वक्तुं शक्यम्। एव-मम्बरमपि सागरोपममिति शक्यम्। रामरावणयोर्युद्धन्तु तदतिरिक्त-तादृशयुद्धासम्भवात् स्वतुल्यमित्येव वक्तुं शक्यम्। तेनानुपमत्वं फल-तीति अनन्वयोऽत्रालङ्कारः। पूर्वार्धेतूपमेयोपमेति कतकः। सागरशब्दे लिङ्गव्यत्यय आर्षः। अर्धर्चादिर्वासः। गगनं गगनाकारं सागरः सागरोपम इति पाठे। अर्धद्वयेऽप्यनन्वय एवेति बोध्यम्। एवं ब्रुवन्तो गन्धर्वादिसङ्घास्तद्युद्धं ददृशुः। रामरावणं तत्कर्तृकमित्यर्थः॥ २३ ॥ ॥ २४ ॥

ततस्तदावाक्यश्रवणानन्तरम् ॥ २५ ॥

तच्छिरः पतितं भूमौ दृष्टं लोकैस्त्रिभिस्तदा ॥ २६ ॥
तस्यैव सदृशञ्चान्यद्रावणस्योत्थितं शिरः।
तत् क्षिप्रं क्षिप्रहस्तेन रामेण क्षिप्रकारिणा ॥ २७ ॥
द्वितीयं रावणशिरश्छिन्नं संयति सायकैः।
छिन्नमात्रञ्च तच्छीर्षं पुनरेव प्रदृश्यते ॥ २८ ॥
तदप्यशनिसङ्काशैश्छिन्नं रामस्य सायकैः।
एवमेव शतं छिन्नं शिरसां तुल्यवर्च्चसाम् ॥ २९ ॥
न चैव रावणस्यान्तो दृश्यते जीवितक्षये।
ततः सर्व्वास्त्रविद्वीरः कौशल्यानन्दवर्धनः ॥ ३० ॥
मार्गणैर्बहुभिर्युक्तश्चिन्तयामास राघवः।
मारीचो निहतो यैस्तु खरो यैस्तु सदूषणः ॥ ३१ ॥
क्रौञ्चावटे विराधस्तु कबन्धो दण्डकावने।
यैः साला गिरयो भग्ना वाली च क्षुभितोऽम्बुधिः ॥ ३२ ॥

शिरोऽच्छिन्दत्। एकैकश इति शेषः। सकृद्दशशिरसां छेदे तु न पुनःप्ररोह इति कतकः ॥ २६ ॥

तस्यैव सदृशम्। यद्भूमौ पतितं तस्यैव सदृशमित्यर्थः ॥ २७ ॥ २८ ॥

एवमेव शतं छिन्नमिति पाठः। तुल्यवर्चसां तुल्याकाराणां शिरसां शतं रामेण छिन्नम्। एवञ्च भगवतः सर्वतोभद्रचक्रपदशतं रामेण रावणीयशिरःशतकमलैः पूजितमिति कतकः ॥ २९ ॥

रावणस्य जीवितक्षयेऽन्तो निश्चयो न दृश्यते ॥ ३० ॥ ३१ ॥

न इमे सायकाः सर्वे युद्धे प्रात्ययिका मम।
किन्नु तत्कारणं येन रावणे मन्दतेजसः॥ ३३॥
इति चिन्तापरश्चासीदप्रमत्तश्च संयुगे।
ववर्ष शरवर्षाणि राघवो रावणोरसि॥ ३४॥
रावणोऽपि ततः क्रुद्धो रथस्थो राक्षसेश्वरः।
गदामुषलवर्षेण रामं प्रत्यर्दयद्रणे॥ ३५॥
तत्प्रवृत्तं महद्युद्धं तुमुलं रोमहर्षणम्।
अन्तरिक्षे च भूमौ च पुनश्च गिरिमूर्धनि॥ ३६॥
देवदानवयक्षाणां पिशाचोरगरक्षसाम्।
पश्यतां तन्महद्युद्धं सर्वरात्रमवर्त्तत॥ ३७॥
नैव रात्रिं न दिवसं न मुहूर्त्तं न च क्षणम्।

क्रौञ्चावटे क्रौञ्चवनसम्बन्धिन्यवटे श्वभ्रे॥ ३२॥

प्रात्ययिकाः अमोघत्वेन निश्चिताः॥ ३३॥ ३४॥ ३५॥

अन्तरिक्ष इत्यादि। रथयोः कामगत्वात्तत्र तत्र कियत्कालं स्थितेरिति भावः॥ ३६॥

सर्वरात्रम्। जातावेकवचनम्। तेनानेकाहोरात्रानित्यर्थः। वस्तुतः अवम सकारस्तृतीयस्तेन त्रय उच्यन्ते। यवर्गे च वकारश्चतुर्थस्तेन चत्वार उच्यन्ते। मिलित्वा सप्तरात्रमित्यर्थः। सप्तरात्रमेव च तयोर्द्वैरथं युद्धमिति वक्ष्यमाणपाद्मकालिकायुराणयोः स्पष्टमिति दिक्॥ ३७॥

रामरावणयोर्युद्धं विराममुपगच्छति ॥ ३८ ॥

दशरथसुतराक्षसेन्द्रयोस्तयो-
र्जयमनवेक्ष्य रणे स राघवस्य।
सुरवररथसारथिर्महात्मा
रणरतराममुवाच वाक्यमाशु ॥ ३९ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
नवोत्तरशततमः सर्गः ॥ १०९ ॥

तदेवाह,—नैव रात्रिर्मिति ॥ ३८ ॥

तयोर्मध्ये राघवस्य जयमनवेक्ष्यादृष्ट्वा स सुरवरस्य सारथिरिति। रणे रतो रणरतः रणरतश्चासौ रामश्च तम् ॥ ३९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्ध-
काण्डे नवोत्तरशततमः सर्गः ॥ १०९ ॥

---

## दशाधिकशततमः सर्गः

अथ संस्मारयामास मातली राघवं तदा ।
अजानन्निव किं वीर ! त्वमेनमनुवर्त्तसे ॥ १ ॥
विसृजास्मै वधाय त्वमस्त्रं पैतामहं प्रभो ! ।
विनाशकालः कथितो यः सुरैः सोऽद्य वर्त्तते ॥ २ ॥
ततः संस्मारितो रामस्तेन वाक्येन मातलेः ।
जग्राह स शरं दीप्तं निःश्वसन्तमिवोरगम् ॥ ३ ॥
यं तस्मै प्रथमं प्रादादगस्त्यो भगवानृषिः ।
ब्रह्मदत्तं महद्बाणममोघं युधि वीर्य्यवान् ॥ ४ ॥
ब्रह्मणा निर्मितं पूर्वमिन्द्रार्थममितौजसा ।
दत्तं सुरपतेः पूर्वं त्रिलोकजयकाङ्क्षिणः ॥ ५ ॥
यस्य वाजेषु पवनः फले पावकभास्करौ ।
शरीरमाकाशमयं गौरवे मेरुमन्दरौ ॥ ६ ॥

एनमनुवर्त्तसे । एतत्प्रतिभयमनुसरसीत्यर्थः ॥ १ ॥
अस्मै एनम्प्रति ॥ २ ॥ ३ ॥
ब्रह्मदत्तं ब्रह्मणेन्द्राय दत्तम् ॥ ४ ॥
ब्रह्मदत्तशब्दस्योक्त एवार्थः स्पष्टीक्रियते । ब्रह्मणेत्यादि ॥ ५ ॥

जाज्वल्यमानं वपुषा सुपुङ्खं हेमभूषितम्।
तेजसा सर्वभूतानां कृतं भास्करवर्चसम्॥ ७॥
सधूममिव कालाग्निं दीप्तमाशीविषोपमम्।
नरनागाश्ववृन्दानां भेदनं चिप्रकारिणम्॥ ८॥
द्वाराणां परिघानाञ्च गिरीणाञ्चापि भेदनम्।
नानारुधिरदिग्धाङ्गं मेदोदिग्धं सुदारुणम्॥ ९॥
वज्रसारं महानादं नानासमितिदारणम्।
सर्वविचासनं भीमं श्वसन्तमिव पन्नगम्॥ १०॥
कङ्कगृध्रबकानाञ्च गोमायुगणरक्षसाम्।
नित्यभक्षप्रदं युद्धे यमरूपं भयावहम्॥ ११॥

अस्य बाणस्य ब्रह्मानुग्रहवैशिष्ट्यमाह,—यस्येति। वाजेषु वेग-साधनपक्षेषु। तत्र तत्र पवनादीनामधिदेवतात्वेनावस्थानं बोध्यम्। शरीरं मध्यभाग आकाशमयम्। आसमन्तात् काशते प्रकाशते इत्या-काशो ब्रह्मा भगवान् भूताकाशो वा। तेन व्याप्तिसामर्थ्यम्। पवन-वत्त्वेन गतिसामर्थ्यम्। पावकादिमत्त्वेन दुःसहत्वम्। तर्हि लघुः स्यात्त-त्राह,—गौरवे इति॥ ६॥

सर्वभूतानां पृथिव्यादीनाम्। तेजसा सारांसेन॥ ७॥

क्षिप्रकारिणं शीघ्रभेदकारिणम्॥ ८॥

द्वाराणां गोपुराणाम्॥ ९॥

नानासमितिदारणमित्यन्वर्थं नाम भगवत्कृतं रामबाणस्य॥१०॥
॥ ११॥

नन्दनं वानरेन्द्राणां रक्षसामवसादनम्।
वाजितं विविधैर्वाजैश्चारुचित्रैर्गरुत्मतः॥ १२॥
तमुत्तमेषुं लोकानामिक्ष्वाकुभयनाशनम्।
द्विषतां कीर्त्तिहरणं प्रहर्षकरमात्मनः॥ १३॥
अभिमन्त्र्य ततो रामस्तं महेषुं महाबलः।
वेदप्रोक्तेन विधिना सन्दधे कार्मुके बली॥ १४॥
तस्मिन् सन्धीयमाने तु राघवेण शरोत्तमे।
सर्वभूतानि सन्त्रेसुश्चचाल च वसुन्धरा॥ १५॥
स रावणाय संक्रुद्धो भृशमायम्य कार्मुकम्।
चिक्षेप परमायत्तः शरं मर्मविदारणम्॥ १६॥
स वज्र इव दुर्धर्षो वज्रिबाहुविसर्जितः।
कृतान्त इव चावार्य्योऽन्यपतद्रावणोरसि॥ १७॥
स विसृष्टो महावेगः शरीरान्तकरः शरः।
बिभेद हृदयं तस्य रावणस्य दुरात्मनः॥ १८॥

गरुत्मतो वाजैः पक्षैः॥ १२॥

इक्ष्वाकुः रामस्तत्पक्षाणां भयनाशनं तमुत्तमेषुमभिमन्त्र्येत्यनेनान्वयः॥ १३॥

अभिमन्त्र्य ब्रह्मास्त्रविद्यया। वेदो धनुर्वेदस्तेन प्रोक्तो यो मुष्टिदृष्टिस्थितिसन्धानादीनां विधिर्विधानं मार्गस्तेनेत्यर्थः॥ १४॥ १५॥

परमायत्तः परमयत्नवान्॥ १६॥

वज्रिबाह्विति। वज्रितुल्यबलरामबाहुविनिःसृत इत्यर्थः। वज्र-

रुधिराक्तः स वेगेन शरीरान्तकरः शरः।
रावणस्य हरन् प्राणान् विवेश धरणीतलम् ॥ १९ ॥
स शरो रावणं हत्वा रुधिरार्द्रकृतच्छविः।
कृतकर्मा निभृतवत् स तूणीं पुनराविशत् ॥ २० ॥
तस्य हस्ताद्धतस्याशु कार्मुकञ्चापि सायकम्।
निपपात सह प्राणैर्भ्रश्यमानस्य जीवितात् ॥ २१ ॥
गतासुर्भीमवेगस्तु नैरृतेन्द्रो महाद्युतिः।
पपात स्यन्दनाद्भूमौ वृत्रो वज्रहतो यथा ॥ २२ ॥
तं दृष्ट्वा पतितं भूमौ हतशेषा निशाचराः।
हतनाथा भयत्रस्ताः सर्वतः सम्प्रदुद्रुवुः ॥ २३ ॥
सर्वतश्चाभिपेतुस्तान् वानरान् द्रुमयोधिनः।
दशग्रीववधं दृष्ट्वा विजयं राघवस्य च ॥ २४ ॥
अर्दिता वानरैर्भ्रष्टा लङ्कामभ्यपतन् भयात्।
हताश्रयत्वात् करुणैर्बाष्पप्रस्रवणैर्मुखैः ॥ २५ ॥

कवचवन्नामेत्यादि वा। वस्तुतो वज्रिबाहुविसर्जितो वज्र इव दुर्धर्ष इत्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥

निभृतवत् विनीतवत् ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

अभिपेतुस्तान् प्रसृतराक्षसानित्यर्थः ॥ २४ ॥

हताश्रयत्वात् हत आश्रयो येषां तत्त्वात्। बाष्पप्रस्रवणैर्मुखैः करुणाः शोकवह्निरुपलक्षिताः सन्तो लङ्कामभ्यपतन् ॥ २५ ॥

ततो विनेदुः संहृष्टा वानरा जितकाशिनः ।
वदन्तो राघवजयं रावणस्य च तद्वधम् ॥ २६ ॥
अथान्तरिक्षे व्यनदत् सौम्यस्त्रिदशदुन्दुभिः ।
दिव्यगन्धवहस्तत्र मारुतःसुसुखो ववौ ॥ २७ ॥
निपपातान्तरिक्षाच्च पुष्पवृष्टिस्तदा भुवि ।
किरन्ती राघवरथं दुरावापा मनोहरा ॥ २८ ॥
राघवस्तवसंयुक्ता गगने च विशुश्रुवे ।
साधु साध्विति वागग्र्या देवतानां महात्मनाम् ॥ २९ ॥
आविवेश महान् हर्षो देवानाञ्चारणैः सह ।
रावणे निहते रौद्रे सर्वलोकभयङ्करे ॥ ३० ॥
ततः सकामं सुग्रीवमङ्गदञ्च विभीषणम् ।
चकार राघवः प्रीतो हत्वा राक्षसपुङ्गवम् ॥ ३१ ॥
ततः प्रजग्मुः प्रशमं मरुद्गणा
दिशः प्रसेदुर्विमलं नभोऽभवत् ।

तद्वधम् । तं वधमित्यर्थः ॥ २६ ॥ २७ ॥

दुरावापा आप्तुमशक्या ॥ २८ ॥

राघवस्तवसंयुक्ता साधु साध्विति वाक् गगनेऽपि सुश्रुवे ॥ २९ ॥ ॥ ३० ॥

राक्षसपुङ्गवं हत्वा सुग्रीवादिकं सकामं सम्पूर्णकामञ्चकार । रावणवधेन रामकार्य्ये सिद्धे किल तेषां राज्यं शाश्वतं प्रतिष्ठितं भवति ॥ ३१ ॥

महो चकम्पे न च मारुतो ववौ
स्थिरप्रभश्चाप्यभवद्दिवाकरः ॥ ३२ ॥
ततस्तु सुग्रीवविभीषणाङ्गदाः
सुहृद्विशिष्टाः सहलक्ष्मणास्तदा ।
समेत्य हृष्टा विजयेन राघवं
रणेऽभिरामं विधिनाभ्यपूजयन् ॥ ३३ ॥
स तु निहतरिपुः स्थिरप्रतिज्ञः
स्वजनबलाभिवृतो रणे बभूव ।
रघुकुलनृपनन्दनो महौजा-
स्त्रिदशगणैरभिसंवृतो महेन्द्रः ॥ ३४ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
दशाधिकशततमः सर्गः ॥ ११० ॥

मही न चकम्पे । मारुतो न ववौ । क्रूर इति शेषः । मही चकम्पे न हीति पाठे मारुतो ववौ सुख इति शेषः । स्थिरप्रभश्चेति । अनेनाश्विनशुक्लनवम्यां यामावशेषदिने इति बोधितम् ॥ ३२ ॥

रणेऽभिरामं रणविषये सर्वजगत्पूजनीयपराक्रमम् ॥ ३३ ॥

रामः स्वजनबलाभिवृतो बभूव । महेन्द्रश्च त्रिदशगणाभिसंवृते बभूव ॥ ३४ ॥

अत्र युद्धदिवसगणनायां कतकतीर्थौ । पूर्वं सुवेलारोहणदिने ततोऽस्तमगमत् सूर्यः सन्ध्यया प्रतिरञ्जितः । पूर्णचन्द्रप्रदीप्ता च क्षपा

समतिवर्त्तते इत्युक्तेस्तद्दिनं चतुर्दशीपूर्णिमान्यतरदिति स्पष्टम् । ततः कृष्णप्रतिपदि युद्धारम्भस्तस्यामेव रात्रौ नागपाशबन्धतद्विमोक्षौ । द्वितीयायां धूम्राक्षवधः । तृतीयायां वज्रदंष्ट्रस्य । चतुर्थ्यामकम्पनस्य । पञ्चम्यां प्रहस्तस्य । षष्ठ्यां रावणभङ्गः । सप्तम्यां कुम्भकर्णवधः । अष्टम्यामतिकायादेः । नवम्यामिन्द्रजितो ब्रह्मास्त्रप्रयोगः । दशम्यां दिवा निकुम्भवधः । तद्रात्रौ मकराक्षवधः । एकादश्यादित्रयोदश्यन्तदिनत्रयेण इन्द्रजिद्वधः । चतुर्दश्यां मूलबलवधः । अमायां रावणयुद्धारम्भ तद्वधाविति पञ्चदशदिनानि सर्वं युद्धमिति । अत्रेदं वक्तव्यम् । कोयं कृष्णप्रतिपत् माघकृष्णस्य वा चैत्रकृष्णस्य वा । नाद्यः चैत्रे पुष्यनक्षत्रेऽयोध्यातो वनं प्रति रामस्य प्रस्थानमिति स्पष्टमयोध्याकाण्डे । चैत्रे पुष्यश्च शुक्लपक्ष एव तत्रापि नवम्यादिदिनत्रये एवेति स्पष्टमेव ज्योतिषादौ । तत्र नवमीरिक्तात्वादभिषेकायोग्या दशम्येव तु पूर्णत्वाद्योग्या । एवञ्च चैत्रशुक्लदशम्यां प्रस्थानम् । तत्र माघकृष्णामायां युद्धसमाप्तौ तदुत्तरपञ्चम्यां भरद्वाजाश्रमागमनम् ।

पूर्णे चतुर्दशे वर्षे पञ्चम्यां लक्ष्मणाग्रजः ।
भरद्वाजाश्रमं प्राप्य ववन्दे नियतो मुनिम् ॥

इति वक्ष्यमाणत्वात् । तत्र च न चतुर्दशवर्षसमाप्तिरिति भगवतः प्रतिज्ञाहानिः । पूर्णे चतुर्दशे वर्षे इत्युक्तेरसङ्गतिश्च । युद्धोत्तरं तावत्कालं लङ्कायामवस्थानस्यालाभाच्च । चैत्रशुक्लपञ्चम्यां तत्रागमनेऽपि पञ्चदिनन्यूनतैवेति तद्धानिस्तदवस्थैव । तदुत्तरद्वितीयदिने एवायोध्याप्रवेशस्य लाभात् । अमान्तमानेन चैत्रकृष्णोत्तरपञ्चम्यां तदाश्रमगतावपि चतुर्दशवर्षतो बहुदिनाधिक्येन चतुर्दशवर्षसमाप्तिदिनेऽयोध्यानागमे मया प्राणा देया इति भरतप्रतिज्ञाहानिः । सा च प्रतिज्ञा चित्रकूटे

रामसन्निधावित्ययोध्याकाण्डान्ते स्पष्टम्। एतेन चैत्रकृष्णप्रतिपदि युद्धारम्भस्तच्छुक्लप्रतिपदि रावणसंहार इति तीर्थोक्तश्चैत्रकृष्णस्येत्यन्त्योऽपि परास्तः। पूर्णिमान्तमानेन तिथिबद्धद्वादशमासैर्वर्षगणने पञ्चदिनानां न्यूनत्वात्। अमान्तमानेन चैत्रकृष्णपञ्चम्यां बहुदिनाधिक्यम्। सावनमानेन षष्ठ्युत्तरत्रिशतदिनैर्वर्षगणने तु तिथिबद्धवर्षात् तत्र षड्दिनाधिक्येन चतुर्दशवर्षाणाञ्चतुरशीत्यहोरात्रवृद्धा बहुदिन न्यूनतैव। किञ्च महाभारते युधिष्ठिरवनवासे त्रयोदशवर्षमिति किञ्चित्कालादर्वागेव तेषां प्राकट्ये दुर्य्योधनेन तदसमाप्तौ एषां प्राकट्येन पुनस्तावत्पर्य्यन्तं पुनरेतैर्वनवासः कर्त्तव्यो भविष्यतीति भीष्मं प्रत्युक्ते भीष्मवाक्यं विराटपर्वणि।

> पञ्चमे पञ्चमे वर्षे द्वौ मासावुपजायतः।
> एषामभ्यधिका मासाः पञ्च च द्वादशक्षपाः॥
> त्रयोदशानां वर्षाणामिति मे धीयते मतिः।
> सर्वं यथावच्चरितं यद्यदेभिः प्रतिश्रुतम्॥
> एवमेतत् ध्रुवं ज्ञात्वा ततो बीभत्सुरागतः।
> सर्वे चैव महात्मानः सर्वे धर्मार्थकोविदाः॥
> येषां युधिष्ठिरो राजा कस्माद्धर्मे पराभ्नयुरिति।

एवञ्चेदृशव्यवहारेऽतिबद्धद्वादशमासैरेव वर्षगणना। अधिकमासगणना नोचितैव। एवञ्चाधिकमासगणनायां धर्महानौ न्याय्यत्वे च स्थिते कस्माद्रामस्तानुपेक्षेत्। भरतो वा तान्न गणयेत्। एवञ्चामान्तमानेन चतुर्दशीयाश्विनकृष्णे। पूर्णिमान्तमानेन कार्त्तिककृष्णे षष्ठ्यां तत्समाप्तिरित्यायाति। अन्यथा चैत्रशुक्लदशम्यामारब्धस्य वनवासस्य षष्ठ्यां चतुर्दशवर्षसमाप्तिर्न कथमप्युपपद्यते। तद्दूयाने

तु एकादशदिनन्यूनषण्मासानां चतुर्दशवर्षेषु वृद्धावुपपद्यत एव सा। तस्मात् द्वादशसमात्युत्तरं त्रयोदशे किञ्चिद्व्यतीते अरण्य काण्डोक्तमन्त्रीत्याफाल्गुनाष्टम्यां रावणकृतसीतापहारः। ततस्तु-र्दशे किञ्चिद्व्यतीते रामस्य लङ्कासमीपगमनम्। वर्त्तते दशमो मासो द्वौ तु शेषौ प्लवङ्गमेति सीतोक्तिः सावनमानेन स्वहरणदिनतः काल-गणनया। तत्र पूर्णचन्द्रप्रदीप्ता चेति रामोक्त्या पौषशुक्लचतुर्दश्यां पूर्णिमायां वा त्रिकूटशिखरप्राप्ती रामस्य। किञ्च हनूमतो लङ्का-प्रवेशोत्तरं सीतादर्शनकाले हिमव्यपायेन च शीतरश्मिरभ्युत्थितो नैकसहस्ररश्मिरिति वाक्येन द्वौ मासौ रक्षितव्यौ मे योवधिस्ते मया कृत इति रावणवाक्येन मार्गशुक्लदशम्युत्तरं हनूमतो लङ्काप्रवेशो दिन-द्वयान्तरे लभ्यते इति निरूपितं सुन्दरकाण्डे। ततो मार्गकृष्णाष्टम्यां राघवप्रस्थानस्यान्यत्रोक्तत्वेन पौषपौर्णिमात्वमेवोचितं तत्प्राप्तिदिनस्य। ततो दशपञ्चदिनानि सेनानिवेशदूतप्रेषणादिना गतानि। ततो युद्धा-रम्भस्तत्र तदारभ्य भाद्रश्रावणाभयामान्तं लङ्कापुरात् बहिः सेनयोः सङ्कुलं युद्धम्। ततो बहुराक्षसक्षयेण भीता राक्षसा लङ्कां प्रविष्टा इति तद्दिनेऽवहारः। तदुत्तरप्रतिपदिरात्राविन्द्रजित्कृतशरबन्ध इत्यादि। अतएव शरबन्धबद्धराघवदर्शनकाले सीतावाक्यम्। तीर्त्वा सागर-मक्षोभ्यं भ्रातरौ गोष्पदे हताविति। अनेन बहुदिनयुद्धे बहुषु राक्षसेषु क्षयितेषु कतिपययूथपरूपेऽत्यल्पावशिष्टे सैन्ये तयोः शरबन्ध इति लभ्यते। तथा अयं ते सुमहान् कालः शयानस्य महाबलेति कुम्भकर्णंप्रति रावणोक्त्या साम्प्रतनिद्रायाः षण्मासाधिकत्वप्रतीते-रप्येवमेवोचितम्। निरूपितञ्चैतत् प्राक्। सेतुबन्धादिवृत्तान्तं त्वं न जानीषे इति कुम्भकर्णंप्रति रावणोक्त्या पूर्वमन्त्रकरणोत्तरं मध्ये जाग-

रणाभावस्य प्रतीतेः। किञ्च। प्रारब्धनदिनं न कृष्णप्रतिपत्। तस्याः पूर्णिमोत्तरत्वेन सम्पूर्णरात्रौ चन्द्रसत्तया तस्मिंस्तमसि दारुणे इत्या-द्युक्तेरसङ्गत्यापत्तेरतः सा शुक्लप्रतिपदाद्या। रवञ्चामान्तपक्षमाद्यं युद्धमित्यस्यात्यन्तमसङ्गत्यापत्तिः। यत्तु अमायामेव रावणवध इति तत्तु न युक्तम्। इन्द्रजिद्वधोत्तरम्। अभ्युत्थानं त्वमद्यैव कृष्णपक्षचतुर्दशीम्। कृत्वा निर्य्याह्यमावास्यां विजयाय बलैर्वृत इति रावणम्प्रति सुपार्श्वस्योक्त्या। चतुर्दश्यां रावणप्रेषितबलवधोत्तरममायां निर्गतराव-णेन रामलक्ष्मणयोर्युद्धे रात्रौ लक्ष्मणस्य शक्तिघातोत्तरं रावणलङ्का-प्रवेशस्योक्ततया ततो लक्ष्मणचिकित्सोत्तरं पुनारामरावणयुद्धस्य वा-ल्मीकिनैव स्पष्टमुक्ततया तदसम्भवात्। किञ्च। आदित्यहृदयस्या-दित्यं प्रेक्ष्य जप्त्वेदं परं हर्षमवाप्तवानित्यनेन सूर्य्यदर्शनोत्तरं जपस्योक्त-तया रावणमरणोत्तरं स्थिरप्रभश्चाप्यभवद्दिवाकर इत्युक्त्या दिवात-द्वधप्रतीत्या च चिरकालयुद्धोत्तरं लक्ष्मणे शक्तिघातस्य तदर्थमोषधी-पर्वतानयनस्य चोक्तत्वेनामारात्रौ शक्तिघातप्रतीत्या रणाद्रावणापगमस्य प्रतीत्या च तद्विरोधात्। तथा पाद्मे।

ततो जज्ञे महायुद्धं सङ्कुलं कपिरक्षसाम्।
मध्याह्ने प्रथमं युद्धं प्रारब्धं प्रतिपद्यभूत्॥

प्रतिपदि शुक्लप्रतिपदीत्यर्थः। उक्तयुक्तेः ततो निशि समागम्य मायावी शक्रजित् बली। बबन्ध नागपाशैस्तौ राघवौ च हरिव्रजान्। ततः चिरकालसङ्कुलयुद्धोत्तरम्। अन्यथा तस्यां निशीत्येव वदेत्। अये द्वितीयेऽह्नि वध्यामिति चोक्त्या दारुणे तमसीति रामायणोक्त्या च भाद्र-श्रावणोभयामोत्तरप्रतिपद्येव तदिति बोध्यम्।

वैनतेयस्तदाभ्येत्य तानि चास्त्राण्यमोचयत्।

द्वितीयेऽहनि धूम्राक्षं हनूमान्निजघान वै ॥
तृतीयेऽह्नि वज्रदंष्ट्रं खड्गाच्चिच्छेद चाङ्गदः ।
जघान हनुमान् भूयश्चतुर्थे ह्यकम्पनम् ॥
प्रहस्तं पञ्चमीतिथ्यां नीलश्चिच्छेद मूर्द्धनि ।
रावणः परिभूतोऽभूत् षष्ठ्यां रामेण धन्विना ॥
अथ लङ्केश्वरः खिन्नः कुम्भकर्णं सहोदरम् ।
शूलमुद्गरघाताश्वधावनाद्यैरबोधयत् ॥
जघान तं कुम्भकर्णं रामः सप्तमवासरे ।

इदं बोधनं दिनद्वयेन। तं बोधितं कुम्भकर्णम्। सप्तमवासरे बोधनोत्तरं सप्तमवासरे इत्यर्थः। यत्तु बोधनं षष्ठ्यां रात्रौ सप्तम्या-मेतद्वध इति तन्न। तदुत्थापने उक्तस्यातिप्रयासस्य रात्रिमात्रेणास-म्भवात्। रावणमन्दिरगमनकाले सूर्य्यप्रभया रावणमन्दिरस्याति-भास्वरत्ववर्णनेन मन्त्रादिना सप्तम्यां युद्धासम्भवात्। इन्द्रजितो दिन-त्रयेण वधोऽस्य यामषट्केनेत्यस्यासङ्गतत्वाच्च। एवञ्च भाद्रपूर्णिमा-यामेतद्वधः।

जघान लक्ष्मणोऽन्येद्युरतिकायं दशास्यजम्।
बबन्धान्येद्युरिन्द्रारिर्ब्रह्मास्त्रेण नृपौ कपीन् ॥
हनूमता समानीतो महौषधमहीधरः।
तस्यानिलस्पर्शवशात् सर्वे एते समुत्थिताः ॥
अन्येद्युः कपिराट् कुम्भं निकुम्भं वायुजोऽवधीत् ।
तस्यां निशि रघुश्रेष्ठो जघान मकरेक्षणम् ॥
मायासीतावधश्चक्रे शक्रजिद्रणमूर्द्धनि ।
तेन खिन्नोऽभवद्राम आश्वस्तो लक्ष्मणेन सः ॥

त्रयोदशाहे सौमित्रिस्त्रिदिनं योधयन् बली।
जघान शक्रजेतारं रामध्यानेन हेतुना॥

अन्येद्युः अन्येषु दिवसेषु। अत्रातिकायग्रहणं त्रिशिरो देवान्तकनरान्तकमहोदरमहापार्श्वोपलक्षणम्। लक्ष्मणग्रहणमङ्गदहनूमतोरप्युपलक्षणम्। एवं षड्भिर्दिनैः षण्णां बधः। पूर्वं क्रमेणैव तद्वधोक्तेः। अन्येद्युः सप्तम्याम्। पर्वतानयनमष्टम्याम्। अन्यद्युर्नवम्याम्। तस्यां निशि नवमीरात्रौ तदन्ते मायासीतावधः। ततो दशमीचतुर्थ्यामारभ्य त्रयोदशीचतुर्थ्यामपर्य्यन्तमिन्द्रजिद्वधः।

ततोऽवधीत् मूलबलं चतुर्दश्यां रघूद्वहः।
दर्शेऽथ निर्य्ययौ राजा योद्धुं रामेण संयुगे॥
चतुरङ्गबलैः सार्धं मन्त्रिभिर्दशकन्धरः।
छत्रचामरसंयुक्तः सर्वाभरणभूषितः॥
महारथगतो द्वारादुत्तरान्निर्य्ययौ बहिः।
आगतो रक्षसां राजा ब्रह्मघ्नो देवकण्टकः॥
योद्धुं रघुवरेणेति शुश्रुवे कलहध्वनिः।
तत्र युद्धं समभवद्वानराणाञ्च रक्षसाम्॥
रामरावणयोश्चैव तथा सौमित्रिणा सह।
शक्तिश्चिक्षेप संक्रुद्धः सोऽनुजं प्रति रावणः॥
वक्षसा धारयामास सौमित्रिस्तां वियद्गताम्।
तया स बाध्यमानः सन् पपात धरणीतले॥
हनूमता जीवितोऽभूदोषध्यानयनात् पुनः।
ततः क्रुद्धो महातेजा राघवो राक्षसान्तकः॥
जघान राक्षसान् सर्वान् शरैः कालान्तकोपमैः।

भयात् प्रदुद्राव रणो लङ्कां प्रति निशाचरः ॥
जगद्राममयं पश्यन्निर्वेदात् स्वगृहं विशत् ।
निकुम्भिलां ततः प्राप्य होमस्थले जिगीषया ॥
ध्वंसितं वानरेन्द्रैस्तदभिचारात्मकं रिपोः ।
पुनरुत्थाय पौलस्त्यो रामेण सह योधितुम् ॥
दिव्यं स्यन्दनमारुह्य राक्षसैर्निर्ययौ बहिः ।

इदं निर्गमनमाश्विनशुक्लप्रतिपदि ।

ततः शतमखो दिव्यं रथं हर्य्यश्वसंयुतम् ।
राघवाय स्वसूतेन प्रेषयामास भक्तिमान् ॥
तन्तु मातलिनानीतमारुह्य रथसत्तमम् ।
स्तूयमानः सुरगणैर्युयुधे तेन रक्षसा ॥
ततो युद्धमभूत् घोरं रामरावणयोर्महत् ।
सप्ताह्निकमहोरात्रं शस्त्रास्त्रैरतिभीषणैरिति ।

ततो मातलिरथागमनदिनोत्तरम् । एवञ्च नवम्यां तद्वधः । तदुक्तं कालिकापुराणे ।

रामस्यानुग्रहार्थं वै रावणस्य वधाय च ।
रात्रावेव महादेवी ब्रह्मणा बोधिता पुरा ॥
ततस्तु त्यक्तनिद्रा सा नन्दायामाश्विनेऽसिते ।
जगाम नगरीं लङ्कां यत्रासीद्राघवः पुरा ॥

आगत इति शेषः । इदञ्चागमनं रात्र्यन्ते तदेव मातलिरथागमनम् ।

तत्र गत्वा महादेवी तदा तौ रामरावणौ ।
युद्धेन योजयामास स्वयमन्तर्हिताम्बिका ॥

राक्षसानां वानराणां जग्ध्वा सा मांसशोणितम्।
रामरावणयोर्युद्धं सप्ताहं साऽन्वयोजयत्॥
व्यतीते सप्तमे रात्रे नवम्यां रावणं ततः।
रामेण घातयामास महामाया जगन्मयी॥
यावत्तयोः स्वयं देवी युद्धकेलिमुदैक्षत।
तावत्तु अष्टरात्राणि सर्वैर्देवैः सुपूजिता॥
निहते रावणे वीरे नवम्यां सकलैः सुरैः॥
विशेषपूजां दुर्गायाश्चक्रे लोकपितामहः।

सकलैः सुरैरित्यस्य सहेति शेषः।

रामरावणबाणैस्तु युद्धस्थाविष्य भीतिदम्।
तृतीयायान्तु लङ्कायाः पूर्वोत्तरदिशि स्थितम्॥
स्वातिनक्षत्रयुक्तायां भीतं सुरबलं महत्।
शान्त्यर्थं वारयामास देवेन्द्रो वचनाद्धरेः॥

शान्त्यर्थं भयशान्त्यर्थम्।

ततस्तु श्रवणे माघ दशम्यां चण्डिकां शुभाम्।
विसृज्य चक्रे शान्त्यर्थं बलनीराजनं हरिः॥

रिपुजनितभयशान्त्यर्थमित्यर्थः।

नीराजितबलः शक्रस्तत्र रामं सलक्ष्मणम्।
सम्भाष्य प्रययौ स्वर्गं सह देवैः शचीपतिः॥
इति वृत्तं पुरा कल्पे मनोः स्वायम्भुवेऽन्तरे।
पुरा कल्पे यथा वृत्तं प्रतिकल्पं तथैव तु॥
प्रवर्त्तते स्वयं देवी दैत्यानां नाशनाय वै।

स्वायम्भुवमन्वन्तरकल्पे पुरा कल्पे इत्यर्थः।

प्रतिकल्पं प्रतिमन्वन्तरमित्यर्थः । जलप्लवसामान्येन तत्रापि कल्पव्यवहारात् ।

प्रतिकल्पं भवेद्रामो रावणश्चापि राक्षसः ।
तथैव जायते युद्धं तथैव चित्रागमः ॥
एवं रामसहस्राणि रावणानां तथैव च ।
भवितव्यानि भूतानि तेषु देवी प्रवर्त्तते ॥
तां पूजन्ति सुराः सर्वे बलं नीराजयन्ति च ।
तथैव च नराः सर्वे कुर्युः पूजां यथाविधि ॥
बलनीराजनं राजा कुर्य्यात् बलविवृद्धये इति ।

इयञ्च ब्रह्मबोधिता महादेवी घटे प्रविष्टा सीतेव भगवच्छक्तिरूपेति प्रतिभाति । अतएव ब्रह्मवैवर्त्ते प्रथमेंऽशविभागे । प्रतिकल्पं विष्णोश्चरितं कीदृशमिति नारदप्रश्ने ब्रह्मवाक्यम् ।

स एव भगवानत्र प्रतिमन्वन्तरं मुने !
वधाय दुष्टदैत्यानां भूमिभारहृतां भुवि ॥
कलिद्वापरयोः सन्धौ भविष्यति न संशयः ।
प्रतिकल्पं त्वेवमेव भविष्यति न संशय इति ॥

सहस्रशो रामोऽपि भविता ब्रह्मणो दिने इति ब्रह्मवैवर्त्ते प्रथमविभागस्थे राधां प्रति कृष्णवाक्ये । दिने इति जातावेकवचनम् । दिनेष्वित्यर्थः । पूर्वं प्रतिमन्वन्तरमित्युक्तेः । प्रतिचतुर्युगं रामाद्यवतार इति तु न युक्तम् । चतुर्विंशतितमचतुर्युग्यां रामावतारस्याष्टाविंशतितमचतुर्युग्यां कृष्णावतारस्य हरिवंशे पुराणान्तरे च प्रसिद्धत्वादिति दिक् । आग्निवेश्य रामायणमिति प्रसिद्धग्रन्थेषु ।

रामः पञ्चदशे वर्षे षड्वर्षामपि मैथिलीम् ।

उपयमं त्वयोध्यायां द्वादशाब्दानुवास सः॥
सप्तविंशतिमे वर्षे वनवासमकल्पयत्।
अष्टादश तु वर्षाणि सीतायास्तु तदाभवन्॥
त्रिरात्रमुदकाहारश्चतुर्थेऽह्नि फलाशनः।
पञ्चमे चित्रकूटे तु रामो वासमकारयत्॥
अथ त्रयोदशे वर्षे पञ्चवट्यां महामनाः।
रामो विरूपयामास घोरां शूर्पणखां वने॥
ततो माघसिताष्टम्यां मुहूर्ते वृन्दसंज्ञके।
राघवाभ्यां विना सीतां जहार दशकन्धरः॥

माघे शुक्लचतुर्दश्यामिति पाठान्तरम्।

मार्गशुक्लदशम्यान्तु वसन्तौ रावणालये।
सम्पातिर्दशमे मासे आचख्यौ वानरेषु ताम्।
एकादश्यां महेन्द्राग्रात् पुप्लुवे शतयोजनम्।
तत्राचिरेषे सीताया दर्शनं हि हनूमतः॥
द्वादश्यां शिंशपावृक्षे हनूमान् पर्य्यवस्थितः।
तस्यां निशायां सीताया विश्वासालापसत्कथाः॥
अक्षादिभिस्त्रयोदश्यां ततो युद्धमवर्त्तत।
वधो ह्यक्षकुमारस्य वनविध्वंसनं तथा॥
ब्रह्मास्त्रेण चतुर्दश्यां बद्धः शक्रजिता कपिः।
वह्निना पुच्छयुक्तेन लङ्कायाः दहनं तथा॥
पौर्णमास्यां महेन्द्राद्रौ पुनरागमनं कपेः।
मार्गासितप्रतिपदः पञ्चभिः पथि वासरैः॥
पुनरागम्य षष्ठेऽह्नि ध्वस्तं मधुवनञ्च तैः।

सप्तम्यां प्रत्यभिज्ञानदानं शुद्धिनिवेदनम् ॥
अष्टम्युत्तरफल्गुन्यां मुहूर्त्ते विजयाभिधे ।
मध्यं प्राप्ते सहस्रांशौ प्रस्थानं राघवस्य तु ।
वासरे सप्तमेऽम्भोधौ स्कन्धावारनिवेशनम् ॥
पौषशुक्लप्रतिपदस्तृतीयायावदम्बुधेः ।
उपस्थानंससैन्यस्य राघवस्य बभूव ह ॥
विभीषणश्चतुर्थ्यां वै रामेण सह सङ्गतः ।
समुद्रतरणार्थाय पञ्चम्यां मन्त्रउद्गमः ॥
प्रायोपवेशनञ्चक्रे रामो दिनचतुष्टयम् ।
समुद्रवरलाभश्च सेतूपायप्रकीर्त्तनम् ॥
सेतोर्दशम्यामारम्भस्त्रयोदश्यां समापनम् ।
चतुर्दश्यां सुवेलाग्रे रामः सैन्यं न्यवेशयत् ॥
पौर्णमास्यां द्वितीयान्तं त्रिदिनैः सैन्यतारणम् ।
तृतीयाया दशम्यन्तं मन्त्रः गुल्मनिवेशने ॥
शुकसारणयोः सैन्यप्राप्तिरेकादशे दिने ।
माघे सितायां द्वादश्यां सैन्यसंख्या कृता तु वै ॥
सारणेन कपीनान्तु सारासारोपवर्णनम् ।
त्रयोदश्याद्यमां यावच्चतुर्थ्यां दिवसैस्त्रिभिः ॥
रावणः सैन्यसंख्यानं रणायोत्साहनं तथा ।
ययावथाङ्गदो दौत्यं माघशुक्लादिवासरे ॥
माघशुक्लद्वितीयादिदिनैः सप्तभिरेव तु ।
रक्षसां वानराणाञ्च युद्धमासीत् सुदारुणम् ॥
माघशुक्लनवम्यान्तु रात्राविन्द्रजिता रणे ।

रामलक्ष्मणयोर्नागपाशैर्बन्धो बभूव ह॥
नागपाशविमोक्षार्थं दशम्यां गरुडोऽभ्यगात्।
अवावहारः कथितो दशम्यादिदिनद्वयम्॥
द्वादश्यामाञ्जनेयेन धूम्राक्षस्य वधः कृतः।
त्रयोदश्यान्तु तेनैव निहतो कम्पनो रणे॥
माघशुक्लचतुर्दश्यां यावत् कृष्णादिवासरम्।
त्रिदिनेन प्रहस्तस्य नीलेन विहितो वधः॥
माघासितद्वितीयायाश्चतुर्थ्यां तन्त्रिभिर्दिनैः।
रामेण तुमुले युद्धे रावणो द्रावितो रणात्॥
पञ्चम्याश्चाष्टमीयावद्रावणेन प्रबोधितः।
कुम्भकर्णः समुत्तस्थावत्तायुद्धचतुर्दिनम्॥
कुम्भकर्णो दिनैः षड्भिर्नवम्यास्तु चतुर्दशीम्।
रामेण निहतो युद्धे बहुवानरभक्षकः॥
अमावास्या दिने शोकादवहारो बभूव ह।
फाल्गुनादिप्रतिपदश्चतुर्थ्यन्तद्दिनैस्ततः॥
नरान्तकप्रभृतयो निहताः पञ्च राक्षसाः।
पञ्चम्याः सप्तमी यावदतिकायवधस्त्र्यहात्॥
अष्टम्या द्वादशी यावन्निहतो दिनपञ्चकात्।
निकुम्भकुम्भावूर्ध्वन्तु मकराक्षश्चतुर्द्दिनैः॥
फाल्गुनस्य द्वितीयायां लक्ष्मो शक्रजिता जितम्।
तृतीयायास्तु सप्तम्यां हरयः पञ्चवासरात्॥
ओषध्यानयने व्यग्रास्तदासीदवहारकः।
तत्र त्रयोदशीं यावद्दिनैः षड्भिस्तु शक्रजित्॥

लक्ष्मणेन हतो युद्धे विभ्रितोऽभिचरन् क्रमात् ।
चतुर्दश्यां दशग्रीवो रणदीक्षाविधिं क्रमात् ॥
अमावास्यां ययौ वीरो युद्धाय दशकन्धरः ।
चैत्रशुक्लप्रतिपदः पञ्चमी दिनपञ्चकैः ॥
रावणस्य प्रधानानां युध्यतामभवत् क्षयः ।
चैत्रषष्ठ्यष्टमीयावन्महापार्श्वादिमारणम् ॥
चैत्रशुक्लनवम्यान्तु सौमित्रेः शक्तिभेदनम् ।
द्रोणाद्रिराञ्जनेयेन लक्ष्मणार्थमुपाहृतः ॥
दशम्यामवहारोऽभूद्रात्रौ युद्धं नरक्षसोः ।
एकादश्यान्तु रामाय रथो मातलिसारथिः ॥
अष्टादशदिने रामो द्वैरथे रावणं वधीत् ।
द्वादश्याः शुक्लपक्षस्य यावत् कृष्णचतुर्दशीम् ॥
माघशुक्लद्वितीयायाश्चैत्रकृष्णचतुर्दशीम् ।
अष्टासीतिदिनं युद्धं मध्ये पञ्चदशाह्निकम् ॥
युद्धावहारं संग्रामस्त्रिसप्ततिदिनान्यभूत् ।
संस्कारो रावणादीनाममावास्यादिनेऽभवत् ॥
वैशाखादितिथौ रामः सुवेलं पुनरागमत् ।
अभिषिक्तो द्वितीयायां लङ्काराज्ये विभीषणः ॥
सीताशुद्धिस्तृतीयायां देवेभ्यो वरलम्भनम् ।
वैशाखस्य चतुर्थ्यान्तु रामः पुष्पकमास्थितः ॥
पूर्णे चतुर्दशे वर्षे पञ्चम्यां माधवस्य तु ।
भरद्वाजाश्रमं रामः ससीतः पुनरागमत् ॥
नन्दिग्रामे तु षष्ठ्यां वै भरतेन समागतः ।

सप्तम्यामभिषिक्तो सावयोध्यायां रघूत्तमः ॥
जानकी रामसहिता रावणस्य निवेशने।

मनु १४ मासान् स्थिता पञ्चदशवासरसंयुतेति। तत्तु सर्वांशे अनिश्चितप्रामाण्यम्। कालिकापुराणादिविरोधात्। इदं कल्पान्तरविषयमिति न युक्तम्। तद्विरोधादेव। तस्मात् क्रियाविरोधे पुराणेषु उपसंहार एव न्याय्यः। शाखान्तरोक्ताङ्गोपसंहारवत्। यथा कुम्भकर्णवधोऽत्र रामेणोक्तो भारते लक्ष्मणेन तादृशे विषये न तु कल्पभेदेन व्यवस्था। जन्मविषये एव तु हरिवंशोक्ता सेति बोध्यम्।

इति रामाभिरामे श्रीरामोये रामायणतिलके
युद्धकाण्डे दशाधिकशततमः सर्गः॥ ११०॥

---

# एकादशाधिकशततमः सर्गः

भ्रातरं निहतं दृष्ट्वा शयानं निर्जितं रणे ।
शोकवेगपरीतात्मा विललाप विभीषणः ॥ १ ॥

वीर विक्रान्त विख्यात प्रवीण नयकोविद ! ।
महार्हशयनोपेत किं शेषे निहतो भुवि ॥ २ ॥

निक्षिप्य दीर्घौ निश्चेष्टौ भुजावङ्गदभूषितौ ।
मुकुटेनापवृत्तेन भास्कराकारवर्चसा ॥ ३ ॥

तदिदं वीर ! सम्प्राप्तं यन्मया पूर्वमीरितम् ।
काममोहपरीतस्य यत्तन्न रुचितं तव ॥ ४

यन्न दर्पात् प्रहस्तो वा नेन्द्रजिन्नापरे जनाः ।

अथ विभीषणविलापः । भ्रातरमिति ॥ १ ॥

प्रवीण समर्थ ॥ २ ॥

अपवृत्तेन रामबाणैस्त्याजितेन मुकुटेनोपलक्षितः ॥ ३ ॥

यन्मया पूर्वमीरितं त्वन्निधनान्तसर्वरक्षोनाशरूपं तदिदं सम्प्राप्तम् । उक्तस्यैव विवरणम् ॥ काममोहेति । काममोहपरीतस्य ते यन्मे वचो न रुचितम् ॥ ४ ॥

न कुम्भकर्णोऽतिरथो नातिकायो नरान्तकः।
न स्वयं बहुमन्येथास्तस्योदर्कोऽयमागतः॥ ५॥
गतः सेतुः सुनीतानां गतो धर्मस्य विग्रहः।
गतः सत्त्वस्य सङ्क्षेपः सुहस्तानां गतिर्गता॥ ६॥
आदित्यः पतितो भूमौ मग्नस्तमसि चन्द्रमाः।
चित्रभानुः प्रशान्तार्चिर्व्यवसायो निरुद्यमः।
अस्मिन्निपतिते वीरे भूमौ शस्त्रभृताम्वरे॥ ७॥
किं शेषमिह लोकस्य गतसत्त्वस्य सम्प्रति।
रणे राक्षसशार्दूले प्रसुप्त इव पांसुषु॥ ८॥

यत्र प्रहस्तादयः दर्पाद्भवान्न बहुमन्यन्त। स्वयञ्च वचो न बहुमन्येथास्तस्योदर्कं उत्तरकालिकविपाक आगतः प्राप्तः॥ ५॥

सुनीतानां धार्मिकाणां सेतुर्गतः। विग्रहः स्वरूपम्। सत्त्वस्य बलस्य सङ्क्षेपः संग्रहस्थानम्। सुहस्तानां वीराणाम्। गतिर्गता प्राप्ता। त्वयेति शेषः॥ ६॥

अस्मिन् भूमौ पतिते सति आदित्यभूमिपातादितुल्यं दृश्यते। व्यवसायः प्रवृत्तिलक्षणो धर्मः। निरुद्यमः त्वत्तुल्याश्रयाभावान्निर्व्यापारोऽभूदित्यर्थः॥ ७॥

रणे त्वयि पांसुषु प्रसुप्त इव जाते। इह लङ्कायां वर्त्तमानस्य गतसत्त्वस्य गताधारबलस्य लोकस्य किं शेषं न किमपि। सर्वं नष्टमित्यर्थः॥ ८॥

धृतिप्रवाल: प्रसभाग्र्यपुष्प-
स्तपोबल: शौर्य्यनिबद्धमूल: ।
रणे महान् राक्षसराजवृक्ष:
सम्मर्दितो राघवमारुतेन ॥ ९ ॥

तेजो विषाण: कुलवंशवंश:
कोपप्रसादापरगात्रहस्त: ।
इक्ष्वाकुसिंहावगृहीतदेह:
सुप्त: क्षितौ रावणगन्धहस्ती ॥ १० ॥

पराक्रमोत्साहविजृम्भितार्चि-
र्नि:श्वासधूम: स्वबलप्रताप: ।
प्रतापवान् संयति राक्षसाग्नि-
र्निर्वापितो रामपयोधरेण ॥ ११ ॥

धृतिर्धैर्य्यमेव प्रवाला यस्य सः। प्रसभोहठ एवाग्र्यं पुष्पं यस्य सः। तप एव बलं यस्य सः। शौर्य्यमेव निबद्धं दृढावस्थितिसाधनं मूलं यस्य सः ॥ ९ ॥

विषाणं दन्तः। कुलं पितृपैतामहादयस्तेषां वंशः समूह एव वंशः पृष्ठावयवविशेषो यस्य सः। वंशोवेणौकुले वर्गे पृष्ठस्यावयवेऽपि चेति विश्वः। कोपापरगात्रः कोप एवापरगात्रं पादाद्यवयवा यस्य सः। प्रसादहस्तः प्रसादः प्रसन्नतैव हस्तः शुण्डादण्ड इत्यर्थः। इक्ष्वाकुसिंहेन रामरूपसिंहेनावगृहीतः पातितो देहो यस्य सः ॥ १० ॥

सिंहर्चलाङ्गूलककुद्विषाणः
पराभिजिद्गन्धनगन्धवाहः।
रक्षोवृषश्चापलकर्णचक्षुः
क्षितीश्वरव्याघ्रहतोऽवसन्नः॥ १२॥
वदन्तं हेतुमद्वाक्यं परिदृष्टार्थनिश्चयम्।
रामः शोकसमाविष्टमित्युवाच विभीषणम्॥ १३॥
नायं विनष्टो निश्चेष्टः समरे चण्डविक्रमः।
अत्युन्नतमहोत्साहः पतितोऽयमशङ्कितः॥ १४॥

पराक्रमोत्साहरूपं विजृम्भितमर्चिर्यस्य सः। क्रोधजो निःश्वास एव धूमो यस्य सः। स्वबलमेव प्रतापो दाहशक्तिर्यस्य सः। अत एव प्रतापवान्॥ ११॥

सिंहर्क्षाः राक्षसास्त एव लाङ्गूलं ककुद्विषाणे च यस्य सः। सिंहर्क्षा राक्षसाः प्रोक्ता यक्षा उष्णीषिणोमता इति निघण्टुः। पराभिजित्परजेता। गन्धने पराक्रमाद्युत्साहे गन्धवाहो वायुतुल्यः। गन्धन गन्धवाह इति पाक्तः पाठः। गन्धहस्तीति पाठे मत्तगजतुल्यः। रक्षो वृषो रावणः। चापलं धर्मादिविषयस्खलनमेव कर्णचक्षुर्यस्य। क्षितीश्वरव्याघ्रो रामव्याघ्रः॥ १२॥

परिदृष्टः प्रकाश्यमानोऽर्थनिश्चयो यस्मात् तत्॥ १३॥

अयं समरे निश्चेष्टोऽशक्तो भूत्वा न विनष्टः। अपि तु चण्डविक्रमत्वादिगुणएकरवायम्। अशङ्कितो मृत्युशङ्कारहित एव दैवात् पतितः॥ १४॥

नैवं विनष्टाः शोच्यन्ते क्षत्रधर्मव्यवस्थिताः।
वृद्धिमाशंसमाना ये निपतन्ति रणाजिरे ॥ १५ ॥
येन सेन्द्रास्त्रयो लोकास्त्रासिता युधि धीमता।
अस्मिन् कालसमायुक्ते न कालः परिशोचितुम् ॥ १६ ॥
नैकान्तविजयो युद्धे भूतपूर्वः कदाचन।
परैर्वा हन्यते वीरः परान् वा हन्ति संयुगे ॥ १७ ॥
इयं हि पूर्वैः सन्दिष्टा गतिः क्षत्रियसम्मता।
क्षत्रियो निहतः संख्ये न शोच्य इति निश्चयः ॥ १८ ॥
तदेवं निश्चयं दृष्ट्वा तत्त्वमास्थाय विज्वरः।
यदिहानन्तरं कार्य्यं कल्पयन्तदनुचिन्तय ॥ १९ ॥
तमुक्तवाक्यं विक्रान्तं राजपुत्रं विभीषणः।

किं ततस्तत्राह। नैवमिति। वृद्धिं जयादिकमाशंसमानाः सन्तो ये रणाजिरे निपतन्ति। क्षत्रधर्मस्थिता एवं विनष्टास्ते न शोच्यन्ते पुण्यलोकप्राप्तेरिति भावः ॥ १५ ॥

कालसमायुक्ते कालधर्मसम्बद्धे। एवं दुर्गायुक्तस्य मरणमेव सम्यगिति भावः ॥ १६ ॥

न भूतपूर्व इत्येतदेवोपपादयति। परैरिति ॥ १७ ॥

इयं हि या गतिरनेन प्राप्ता इयङ्गतिः पूर्वैर्मन्वादिभिः संदिष्टा उपदिष्टा। क्षत्रियसम्मता क्षत्रियपूजितोत्तमा गतिरेव। अतः सङ्ग्रहतः क्षत्रियो न शोच्य इति निश्चयः ॥ १८ ॥

उवाच शोकसन्तप्तो भ्रातुर्हितमनन्तरम्॥ २०॥

योऽयं विमर्देष्वविभग्नपूर्वः
सुरैः समस्तैरपि वासवेन।
भवन्तमासाद्य रणे विभग्नो
वेलामिवासाद्य यथा समुद्रः॥ २१॥

अनेन दत्तानि वनीपकेषु
भुक्ताश्च भोगा निभृताश्च भृत्याः।
धनानि मित्रेषु समर्पितानि
वैराण्यमित्रेषु निपातितानि॥ २२॥

एषो हिताग्निश्च महातपाश्च
वेदान्तगः कर्मसु चाग्र्यशूरः।
एतस्य यत् प्रेतगतस्य कृत्यं
तत्कर्त्तुमिच्छामि तव प्रसादात्॥ २३॥

तत् तस्मादेवं निश्चयं दृष्ट्वा ज्ञात्वा तत्त्वमास्थाय निश्चितत्वमवलम्ब्य राम यत्कार्यमनुष्ठेयं तदनुचिन्तय। सत्वमास्थायेति पाठे सत्वगुणमास्थायेत्यर्थः॥ १९। २०॥

विमर्देषु युद्धेषु॥ २१॥

वनीपकेषु याचकेष्वनेन दत्तानि दानानीति शेषः। निभृताः नितरां पोषिताः॥ २२॥

एषो हिताग्निरित्यार्षः सन्धिः। आहिताग्निरितिच्छेदः। वेदा-

स तस्य वाक्यैः करुणैर्महात्मा
सम्बोधितः साधु विभीषणेन।
आज्ञापयामास नरेन्द्रसूनुः
स्वर्गीयमाधानमदीनसत्वः ॥ २४ ॥
मरणान्तानि वैराणि निवृत्तं नः प्रयोजनम्।
क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
एकादशाधिकशततमः सर्गः ॥ १११ ॥

न्तगः अधीतोपनिषत्कः। कर्मसु अग्निहोत्रादिषु। अग्र्यश्शूरः परमानुष्ठाता परमकर्मठ इत्यर्थः ॥ २३ ॥

तस्य स्वर्गीयं स्वर्गार्हम् आधानं विधानं प्रेतकृत्यम् ॥ २४ ॥

तवेव ममापि स्नेहविषयोऽतः संस्कारविषयां शङ्कां माकुर्वित्यर्थः ॥ २५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्धकाण्डे
एकादशाधिकशततमः सर्गः ॥ १११ ॥

---

## द्वादशाधिकशततमः सर्गः



रावणं निहतं दृष्ट्वा राघवेण महात्मना ।
अन्तःपुराद्विनिष्पेतू राक्षस्यः शोककर्षिताः ॥ १ ॥
वार्य्यमाणाः सुबहुशो वेष्टन्त्यो रणपांसुषु ।
विमुक्तकेश्यः शोकार्त्ता गावो वत्सहता यथा ॥ २ ॥
उत्तरेण विनिष्क्रम्य द्वारेण सह राक्षसैः ।
प्रविश्यायोधनं घोरं विचिन्वन्त्यो हतं पतिम् ॥ ३ ॥
आर्य्यपुत्रेति वादिन्यो हा नाथेति च सर्वशः ।
परिपेतुः कबन्धाङ्कां महीं शोणितकर्द्दमाम् ॥ ४ ॥
ता बाष्पपरिपूर्णाक्ष्यो भर्तृशोकपराजिताः ।
करिण्य इव नर्दन्त्यः करेण्वो हतयूथपाः ॥ ५ ॥
ददृशुस्ता महाकायं महावीर्य्यं महाद्युतिम् ।

रावणमिति ॥ १ ॥

वार्य्यमाणाः पांसुवेष्टनाद्बहुशो निवार्य्यमाणा अपि रणपांसुषु वेष्टन्त्यः । वत्सहताः हृतवत्साः । अयमर्थात्मवियोगजशोकमात्रे दृष्टान्तः ॥ २ ॥ ३ ॥ ४ ॥

रावणं निहतं भूमौ नीलाञ्जनचयोपमम् ॥ ६ ॥
ताः पतिं सहसा दृष्ट्वा शयानं रणपांसुषु ।
निपेतुस्तस्य गात्रेषु छिन्ना वनलता इव ॥ ७ ॥
बहुमानात् परिष्वज्य काचिदेनं रुरोद ह ।
चरणौ काचिदालम्ब्य काचित्कण्ठेऽवलम्ब्य च ॥ ८ ॥
उत्क्षिप्य च भुजौ काचिद्भूमौ सुपरिवर्त्तते ।
हतस्य वदनं दृष्ट्वा काचिन्मोहमुपागमत् ॥ ९ ॥
काचिदङ्के शिरः कृत्वा रुरोद मुखमीक्षती ।
स्नापयन्ती मुखं बाष्पैस्तुषारैरिव पङ्कजम् ॥ १० ॥
एवमार्त्ताः पतिं दृष्ट्वा रावणं निहतं भुवि ।
चुक्रुशुर्बहुधा शोकार्त्ता भूयस्ताः पर्य्यदेवयन् ॥ ११ ॥
येन वित्रासितः शक्रो येन वित्रासितो यमः ।
येन वैश्रवणो राजा पुष्पकेण वियोजितः ॥ १२ ॥
गन्धर्वाणामृषीणाञ्च सुराणाञ्च महात्मनाम् ।
भयं येन रणे दत्तं सोऽयं शेते रणे हतः ॥ १३ ॥
असुरेभ्यः सुरेभ्यो वा पन्नगेभ्योऽपि वा तथा ।
भयं यो न विजानाति तस्येदं मानुषाद्भयम् ॥ १४ ॥

हतयूथपाः करेण्व इव दद्रुशुः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥
सुपरिवर्त्तते लुण्ठतिस्म ॥ ९ ॥

अवध्यो देवतानां यस्तथा दानवरक्षसाम्।
हतः सोऽयं रणे शेते मानुषेण पदातिना॥ १५॥
यो न शक्यः सुरैर्हन्तुं न यक्षैर्नासुरैस्तथा।
सोऽयं कश्चिदिवासत्वो मृत्युं मर्त्येन लम्भितः॥ १६॥
एवं वदन्त्यो रुरुदुस्तस्य ता दुःखिताः स्त्रियः।
भूय एव च दुःखार्त्ता विलेपुश्च पुनः पुनः॥ १७॥
अशृण्वता तु सुहृदां सततं हितवादिनाम्।
मरणायाहृता सीता राक्षसाश्च निपातिताः॥ १८॥
ब्रुवाणोऽपि हितं वाक्यमिष्टो भ्राता विभीषणः।
दृष्टं परुषितो मोहात्त्वयात्मवधकाङ्क्षिणा॥ १९॥
यदि निर्य्यातिता ते स्यात् सीता रामाय मैथिली।
न नः स्याद्व्यसनं घोरमिदं मूलहरं महत्॥ २०॥

ख्यापयन्तोऽस्य वैकल्यितत्वात् पक्षेमित्वाभावः॥ १०॥ ११॥
॥ १२॥ १३॥ १४॥ १५॥
असत्वः कश्चिदिव दुर्बलः प्राकृतप्राणीव। लम्भितः प्रापितः॥
॥ १६॥ १७॥
सुहृदां वाक्यमिति शेषः। एता वयम् आत्मा च ते त्वया इदानीं समम् एककाल एव पातिताः॥ १८॥
हितं वाक्यं ब्रुवाणोऽपि यत् परुषितस्तत् फलं दृष्टमित्यर्थः॥ १९॥

कृत्तकामो भवेद्भ्राता रामो मित्रकुलं भवेत्।
वयश्चाविधवाः सर्वाः सकामा न च शत्रवः ॥ २१ ॥
त्वया पुनर्नृशंसेन सीतां संरुन्धता बलात्।
राक्षसा वयमात्मा च त्रयं तुल्यं निपातितम् ॥ २२ ॥
न कामकारः कामं वा तव राक्षसपुङ्गव !।
दैवञ्चेष्टयते सर्वं हतं दैवेन हन्यते ॥ २३ ॥
वानराणां विनाशोऽयं राक्षसानाञ्च ते रणे।
तव चैव महाबाहो ! दैवयोगादुपागतः ॥ २४ ॥

यदि ते त्वया सीता निर्य्यातिता समर्पिता स्यात्तदा नः इदं व्यसनं न स्यात् ॥ २० ॥

भ्राता कृत्तकामो निष्पन्नमनोरथः। स्ववाक्यकरणात्। मित्रकुलं मित्रपक्षः। वयमविधवाः स्याम। शत्रवश्च सकामा न स्युः ॥ २१ ॥
॥ २२ ॥

एवं रावणीयस्वेच्छाचरणस्य नाशहेतुतामुक्त्वेदानीं तन्निरासपूर्वकं दैवस्य तत्कारणत्वं दर्शयति। नेति। कामं पर्य्याप्तम्। तव न कामकारो न त्वदिच्छाप्रवर्त्तितोऽयं व्यवहारः। कुतो यतो दैवं सर्वं प्राणिजातञ्चेष्टयते तत् तत्कर्मानुसारेणातो दैवहतमेव केनचिन्निमित्तेन हन्यते ॥ २३ ॥

ते तव रणे वानराणां राक्षसानां तव चायं विनाशो दैवादुपागतः ॥ २४ ॥

नैवार्थेन च कामेन विक्रमेण न चाज्ञया।
शक्या दैवगतिर्लोके निवर्त्तयितुमुद्यता॥ २५॥
विलेपुरेवं दीनास्ता राक्षसाधिपयोषितः।
कुरर्य्य इव दुःखार्त्ता बाष्पपर्य्याकुलेक्षणाः॥ २६॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
द्वादशाधिकशततमः सर्गः॥ ११२॥

अर्थेन धनेन। कामेनेच्छया। आज्ञया मर्य्यादाव्यवस्थापनशक्त्या। उद्यता फलोन्मुखीभूता॥ २५। २६॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्ध-
काण्डे द्वादशाधिकशततमः सर्गः॥ ११२॥

---

# त्रयोदशाधिकशततमः सर्गः

तासां विलपमानानां तदा राक्षसयोषिताम् ।
ज्येष्ठपत्नी प्रिया दीना भर्त्तारं समुदैक्षत ॥ १ ॥
दशग्रीवं हतं दृष्ट्वा रामेणाचिन्त्यकर्मणा ।
पतिं मण्डोदरी तत्र कृपणा पर्य्यदेवयत् ॥ २ ॥
ननु नाम महाबाहो ! तव वैश्रवणानुज ! ।
क्रुद्धस्य प्रमुखे स्थातुं त्रस्यत्यपि पुरन्दरः ॥ ३ ॥
ऋषयश्च महान्तोऽपि गन्धर्वाश्च यशस्विनः ।
ननु नाम तवोद्वेगाच्चारणाश्च दिशो गताः ॥ ४ ॥
स त्वं मानुषमात्रेण रामेण युधि निर्जितः ।
न व्यपत्रपसे राजन् ! किमिदं राक्षसेश्वर ! ॥ ५ ॥

तासामिति ॥ १ ॥

मण्डोदरी मण्डनभूतोदरी । कृशोदरीत्यर्थः । मन्दोदरीति पाठेऽप्ययमेवार्थः ॥ २ ॥

पुरन्दरोऽपि त्रस्यति ॥ ३ ॥

तवोद्वेगात्त्वत्त उद्वेगं प्राप्य ॥ ४ ॥

कथं त्रैलोक्यमाक्रम्य श्रिया वीर्य्येण चान्वितम्।
अविषह्यं जघान त्वां मानुषो वनगोचरः॥ ६॥
मानुषाणामविषये चरतः कामरूपिणः।
विनाशस्तव रामेण संयुगे नोपपद्यते॥ ७॥
न चैतत्कर्म रामस्य श्रद्दधामि चमूमुखे।
सर्वतः समुपेतस्य तव तेनाभिमर्षणम्॥ ८॥
अथवा रामरूपेण कृतान्तः स्वयमागतः।
मायां तव विनाशाय विधायाप्रतितर्किताम्॥ ९॥
अथवा वासवेन त्वं धर्षितोऽसि महाबल!।
वासवस्य तु का शक्तिस्त्वां द्रष्टुमपि संयुगे॥ १०॥

वीर्य्येण त्रैलोक्यमाक्रम्य श्रियान्वितं त्वां मानुषो जघानेति यदत्र किमिति न व्यपत्रपसे॥ ५। ६॥

मानुषाणामविषये अगोचरे। लङ्काद्वीपरूपे देशे इत्यर्थः॥ ७॥

सर्वतः समुपेतस्य जयोपेतस्य तव तेन रामेण यदभिमर्षणं प्रधर्षणमेतद्रामस्य कर्मेति न श्रद्दधामि॥ ८॥

ननु प्रत्यक्षसिद्धे कथमश्रद्धेत्यरुच्या पक्षान्तरमथवेति। तव नाशायाप्रतितर्किताम् अचिन्तनीयोपपत्तिकां मायां विधाय कृतान्तो रामरूपेणागत इति मन्ये इति शेषः॥ ९॥

अथवा रामरूपेण वासवेन त्वं धर्षितोऽसि। एतन्नोपपद्यत इत्याह,—वासवस्येति। महाबलत्वादिविशेषणं त्वां द्रष्टुमपि वासवस्य तु कुतः शक्तिः॥ १०॥

महाबलं महावीर्य्यं देवशत्रुं महौजसम्।
व्यक्तमेष महायोगी परमात्मा सनातनः॥ ११॥

अनादिमध्यनिधनो महतः परमो महान्।
तमसः परमो धाता शङ्खचक्रगदाधरः॥ १२॥

श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः।
मानुषं रूपमास्थाय विष्णुः सत्यपराक्रमः॥ १३॥

सर्वैः परिवृतो देवैर्वानरत्वमुपागतैः।
सर्वलोकेश्वरः श्रीमान् लोकानां हितकाम्यया॥ १४॥

अतो व्यक्तमित्यादि। सत्यमेव मन्दोदरी जानीते भगवत्कृपया। महायोगी स्वाभाविकसर्वशक्तियुक्तः। परमात्मा आत्मनामप्यात्मा। सर्वान्तर्य्यामीत्यर्थः। य आत्मनि तिष्ठन्नात्मनमन्तरोऽयमयतीति श्रुतेः। सनातनः सदास्तित्वयुक्तः॥ ११॥

अनादिमध्यनिधनः जन्मवृद्धिनाशहीनः। महतः परमो महान् महतो महीयान्। तपसः परमः प्रकृतेः प्रवर्त्तकः। तपसः परम इति पाठे सर्वतः फलद इत्यर्थः। धाता स्रष्टा। यतो वा इमानि भूतानि जायन्त इत्युक्तेः। इदानीं विग्रहगुणानाह,—शङ्खेत्यादि॥ १२॥

नित्यश्रीरनपायिलक्ष्मीकः। अजय्यो जेतुमशक्यः। शाश्वतोऽपक्षयरहितः। ध्रुवः परिणामशून्यः। अनेन षड्भावविकारशून्यत्वमुक्तम्। महायोगित्यादिविशेषणविशिष्टो यो विष्णुः स एव राम इत्यर्थः॥ १३॥ १४॥

सराक्षसपरीवारं देवशत्रुं भयावहम्।
इन्द्रियाणि पुरा जित्वा जितं त्रिभुवनं त्वया॥ १५॥
स्मरद्भिरिव तद्वैरमिन्द्रियैरेव निर्जितः।
यदैव हि जनस्थाने राक्षसैर्बहुभिर्वृतः॥ १६॥
खरस्तु निहतो भ्राता तदा रामो न मानुषः।
यदैव नगरीं लङ्कां दुष्प्रवेशां सुरैरपि॥ १७॥
प्रविष्टो हनुमान् वीर्य्यात्तदैव व्यथिता वयम्।
क्रियतामविरोधश्च राघवेणेति यन्मया॥ १८॥
उच्यमानं न गृह्णासि तस्येयं व्युष्टिरागता।
अकस्माच्चाभिकामोऽसि सीतां राक्षसपुङ्गव !॥ १९॥
ऐश्वर्य्यस्य विनाशाय देहस्य स्वजनस्य च।
अरुन्धत्या विशिष्टान्तां रोहिण्याश्चापि दुर्मते !॥ २०॥

सराक्षसपरीवारं राक्षसरूपपरीवारसहितम्। हतवानिति शेषः। देवशत्रुं भयावहमित्यनेन भगवतो वैषम्यनैर्घृण्ये परिहृते। अवतारप्रयोजनञ्च देवभयनिवृत्तिरूपं दर्शितम्। पुरा भगवदुद्देशेन तपोऽनुष्ठानकाले॥ १५॥

तद्वैरं स्वजयनिमित्तं वैरं स्मरद्भिरिन्द्रियैरकर्मप्रवृत्तिसम्पादनेन निर्जितः॥ १६॥ १७॥ १८॥

व्युष्टिः फलम्। सीताम्प्रति अभिकामः कामुकः॥ १९॥ २०॥

सीतां धर्षयता मान्यां त्वया ह्यसदृशं कृतम् ।
वसुधाया हि वसुधां श्रियाः श्रीं भर्तृवत्सलाम् ॥ २१ ॥
सीतां सर्वानवद्याङ्गीमरण्ये विजने शुभाम् ।
आनयित्वा तु तां दीनां छद्मनात्मस्वदूषणम् ॥ २२ ॥
अप्राप्य तञ्चैव कामं मैथिली सङ्गमे कृतम् ।
पतिव्रतायास्तपसा नूनं दग्धोऽसि मे प्रभो ! ॥ २३ ॥
तदैव यन्न दग्धस्त्वं धर्षयंस्तनुमध्यमाम् ।
देवा बिभ्यति ते सर्वे सेन्द्राः साग्निपुरोगमाः ॥ २४ ॥
अवश्यमेव लभते फलं पापस्य कर्मणः ।
भर्त्तः ! पर्य्यागते काले कर्त्ता नास्त्यत्र संशयः ॥ २५ ॥

मान्याम् उपास्यदेवताम् । वसुधायाः सर्वक्षमावन्निदर्शनभूतायाः वसुधां निदर्शनभूमिम् । एवं सर्वसौभाग्ययुक्तानां निदर्शनभूतश्रियोऽपि निदर्शनभूताम् ॥ २१ ॥

छद्मना आनयित्वा आनीय । आत्मस्वदूषणम् । स्वशब्दः स्वीयवाची आत्मनः स्वकुलस्य नाशनं कृतमिति शेषः ॥ २२ ॥

मैथिलीसङ्गमे कृतं तं काममप्राप्य पतिव्रतायास्तस्यास्तपसा नूनं निश्चयेन दग्धोऽसि । मे प्रभो मे भर्त्तः ॥ २३ ॥

तां धर्षयंस्तदैवधर्षणसमय एव न दग्ध इति यत् । येन माहात्म्येन देवा बिभ्यति तेन माहात्म्येनेत्यर्थः ॥ २४ ॥

काले परिपाकसमये पर्य्यागते सति ॥ २५ ॥

शुभकृच्छुभमाप्नोति पापकृत् पापमश्नुते।
विभीषणः सुखं प्राप्तस्त्वं प्राप्तः पापमीदृशम्॥ २६॥
सन्त्यन्याः प्रमदास्तुभ्य रूपेणाभ्यधिकास्ततः।
अनङ्गवशमापन्नस्त्वन्तु मोहान्न बुध्यसे॥ २७॥
न कुलेन न रूपेण न दाक्षिण्येन मैथिली।
मयाधिका वा तुल्या वा तत्तु मोहान्न बुध्यसे॥ २८॥
सर्वदा सर्वभूतानां नास्ति मृत्युरलक्षणः।
तव तद्वदयं मृत्युर्मैथिलीकृतलक्षणः॥ २९॥
सीतानिमित्तजो मृत्युस्त्वया दूरादुपाहृतः।
मैथिली सह रामेण विशोका विहरिष्यति॥ ३०॥
अल्पपुण्या त्वहं घोरे पतिता शोकसागरे।
कैलासे मन्दरे मेरौ तथा चैत्ररथे वने॥ ३१॥
देवोद्यानेषु सर्वेषु विहृत्य सहिता त्वया।
विमानेनानुरूपेण या याम्यतुलया श्रिया॥ ३२॥

शुभं सुखम्। पापं दुःखम्॥ २६॥

तुभ्यं तव। ततः सीतातोऽपि॥ २७॥

मैथिली कुलादिना मदधिका न मत्तुल्यापि नाथापि तत्तु तथा त्वन्तु त्वं मोहान्न बुध्यसे॥ २८॥

अलक्षणोऽनिमित्तः। मैथिलीकृतलक्षणः मैथिलीकृतं लक्षणं निमित्तं यस्य सः। मैथिलीहेतुक इत्यर्थः॥ २९॥ ३०॥ ३१॥

पश्यन्ती विविधान् देशांस्तांस्तांश्चित्रस्रगम्बरा।
भ्रंशिता कामभोगेभ्यः सास्मि वीर! वधात्तव ॥ ३३ ॥
सैवान्येवास्मि संवृत्ता धिग्राज्ञां चञ्चलां श्रियम्।
हा राजन्! सुकुमारं ते सुभ्रु! सुत्वक् समुन्नसम् ॥ ३४ ॥
कान्तिश्रीद्युतिभिस्तुल्यमिन्दुपद्मदिवाकरैः।
किरीटकूटोज्ज्वलितं ताम्रास्यं दीप्तकुण्डलम् ॥ ३५ ॥
मदव्याकुललोलाक्षं भूत्वा यत् पानभूमिषु।
विविधस्रग्धरञ्चारु वल्गुस्मितकथं शुभम् ॥ ३६ ॥
तदेवाद्य तवैवं हि वक्त्रं न भ्राजते प्रभो!।
रामसायकनिर्भिन्नं रक्तं रुधिरविस्रवैः ॥ ३७ ॥

श्रिया उपलक्षितेति शेषः ॥ ३२ ॥ ३३ ॥

सैवाहं सौभाग्यलक्षणवत्येव तव वधादन्येव विधवेव संवृत्तेत्यर्थः। अथान्येवेतीवकारेण दैवस्थित्या वस्तुतोऽवैधव्यं सूचितम्। सुभ्रु शोभनभ्रूयुतम्। सुत्वक् शोभनत्वगिन्द्रियस्थानम् ॥ ३४ ॥

कान्तिः आह्लादकरी प्रभा तया चन्द्रतुल्यम्। श्रीरुज्ज्वलता तया पद्मवत्। द्युतिः पराभिभवसामर्थ्यं तेजस्तेन रवितुल्यम्। कूटः समूहः। ताम्रास्यन्ताम्रोष्ठम् ॥ ३५ ॥

पानभूमिषु मदव्याकुललोलाक्षं भूत्वा यदभ्राजतेति शेषः। चारु सुन्दरम्। वल्गु चञ्चलम्। स्मितकथं स्मितोपेतकथायुतम् ॥ ३६ ॥

तदेव ते वक्त्रम्। एवमेव कथामापन्नं न भ्राजते। तामवस्थामाह,—रामेति। रक्तं रक्तवर्णम् ॥ ३७ ॥

विशीर्णमेदोमस्तिष्कं रूचं स्यन्दनरेणुभिः ।
हा पश्चिमा ! मे सम्प्राप्ता दशा वैधव्यदायिनी ॥ ३८ ॥
या मयासीन्न सम्बुद्धा कदाचिदपि मन्दया ।
पिता दानवराजो मे भर्त्ता मे राक्षसेश्वरः ॥ ३९ ॥
पुत्रो मे शक्रनिर्जेता इत्यहं गर्विता भृशम् ।
दृप्तारिमथनाः क्रूराः प्रख्यातबलपौरुषाः ॥ ४० ॥
अकुतश्चिद्भया नाथा ममेत्यासीन् मतिर्ध्रुवा ।
तेषामेवं प्रभावाणां युष्माकं राक्षसर्षभाः ॥ ४१ ॥
कथं भयमसम्बुद्धं मानुषादिदमागतम् ।
स्निग्धेन्द्रनीलनीलन्तु प्रांशुशैलोपमं महत् ॥ ४२ ॥
केयूराङ्गदवैदूर्य्यमुक्ताहारस्रगुज्ज्वलम् ।
कान्तं विहारेष्वधिकं दीप्तं संग्रामभूमिषु ॥ ४३ ॥
भात्याभरणभाभिर्यद्विद्युद्भिरिव तोयदः ।
तदेवाद्य शरीरन्ते तीक्ष्णैर्नैकशरैश्चितम् ॥ ४४ ॥

विशीर्णं मेदोऽस्थिगतमांसं मस्तिष्कं मज्जा च यस्य तत् । सा वैधव्यदा पश्चिमा दशा मे मया सम्प्राप्ता ॥ ३८ ॥

या मया सम्बुद्धा नासीत् । दानवराजो मयः ॥ ३९ ॥

अहं गर्विता त्रिभुवनपतिपुत्रपितृत्वात् । दृप्तारिमथनत्वादिधर्मा मम नाथास्त्रातारः सन्तीति मम ध्रुवा दृढ़ा मतिरासीत् ॥ ४० ॥ ४१ ॥
॥ ४२ ॥ ४३ ॥ ४४ ॥

पुनर्दुर्लभसंस्पर्शं परिष्वक्तुं न शक्यते।
श्वाविधः शललैर्यद्वत् लग्नैर्बाणैर्निरन्तरम्॥ ४५॥
स्वर्पितैर्मर्मसु भृशं संछिन्नस्नायुबन्धनम्।
क्षितौ निपतितं राजन्! श्यामं वै रुधिरच्छवि॥ ४६॥
वज्रप्रहारमभितो विकीर्ण इव पर्वतः।
हा स्वप्नः सत्यमेवेदं त्वं रामेण कथं हतः॥ ४७॥
त्वं मृत्योरपि मृत्युः स्याः कथं मृत्युवशं गतः।
त्रैलोक्यवसुभोक्तारं त्रैलोक्योद्वेगदं महत्॥ ४८॥
जेतारं लोकपालानां क्षेप्तारं शङ्करस्य च।
दृप्तानां निगृहीतारमाविष्कृतपराक्रमम्॥ ४९॥
लोकक्षोभयितारञ्च साधुभूतविदारणम्।
ओजसा दृप्तवाक्यानां वक्तारं रिपुसन्निधौ॥ ५०॥
स्वयूथभृत्यगोप्तारं हन्तारं भीमकर्मणाम्।

श्वाविधः शल्यकस्य। शललैः कण्टकैरिव लग्नैर्बाणैर्निरन्तरम्। क्षतमिति शेषः॥ ४५॥

तथा मर्मसु स्वर्पितैर्बाणैः सञ्छिन्नस्नायुबन्धनम्। रुधिरच्छवि तत्सम्बन्धेन रक्तकान्ति॥ ४६॥

वज्रप्रहारमभितो विकीर्णः पर्वत इव ते शरीरं विकीर्णम्। हा खेदे। स्वप्न इवेदं कथं सत्यमेव जातम्॥ ४७॥

वसु रत्नम्। महत् अत्यर्थम्॥ ४८॥ ४९॥

हन्तारं दानवेन्द्राणां यक्षाणाञ्च सहस्रशः ॥ ५१ ॥
निवातकवचानान्तु निग्रहीतारमाहवे ।
नैकयज्ञविलोप्तारं त्रातारं स्वजनस्य च ॥ ५२ ॥
धर्म्मव्यवस्थाभेत्तारं मायास्रष्टारमाहवे ।
देवासुरनृकन्यानामाहर्त्तारं ततस्ततः ॥ ५३ ॥
शत्रुस्त्रीशोकदातारं नेतारं स्वजनस्य च ।
लङ्काद्वीपस्य गोप्तारं कर्त्तारं भीमकर्म्मणाम् ॥ ५४ ॥
अस्माकं कामभोगानां दातारं रथिनां वरम् ।
एवम्प्रभावं भर्त्तारं दृष्ट्वा रामेण पातितम् ॥ ५५ ॥
स्थिरास्मि या देहमिमं धारयामि हतप्रिया ।
शयनेषु महार्हेषु शयित्वा राक्षसेश्वर ! ॥ ५६ ॥
इह कस्मात् प्रसुप्तोऽसि धरण्यां रेणुगुण्ठितः ।
यदा मे तनयः शस्तो लक्ष्मणेनेन्द्रजित् युधि ॥ ५७ ॥
तदा त्वभिहता तीव्रमद्य त्वस्मि निपातिता ।

¹ साधुभूतानां साधुजनानां विदारयाम् । ओजसा बलेन । दृप्त-वाक्यानां गर्विष्ठवचसाम् ॥ ५० ॥ ५१ ॥

आहवे निग्रहीतारं जेतारमिति यावत् ॥ ५२ ॥ ५३ ॥ ५४ ॥

एवं प्रभावं त्वां हतं दृष्ट्वा हतप्रिया इमं देहं धारयामि । अतः स्थिरा कठिनहृदयास्मीति जाने ॥ ५५ ॥ ५६ ॥ ५७ ॥

साहं बन्धुजनैर्हीना हीना नाथेन च त्वया ॥ ५८ ॥
विहीना कामभोगैश्च शोचिष्ये शाश्वतीः समाः ।
प्रपन्नो दीर्घमध्वानं राजन्नद्य सुदुर्गमम् ॥ ५९ ॥
नय मामपि दुःखार्त्तां न वर्त्तिष्ये त्वया विना ।
कस्मात्त्वं मां विहायेह कृपणां गन्तुमिच्छसि ॥ ६० ॥
दीनां विलपतीं मन्दां किञ्च मां नाभिभाषसे ।
दृष्ट्वा न खल्वभिक्रुद्धो मामिहानवगुण्ठिताम् ॥ ६१ ॥
निर्गतां नगरद्वारात् पद्ध्यामेवागतां प्रभो ! ।
पश्येष्टदार ! दारांस्ते भ्रष्टलज्जावगुण्ठनान् ॥ ६२ ॥
बहिर्निष्पतितान् सर्वान् कथं दृष्ट्वा न कुप्यसि ।
अयं क्रीड़ासहायस्ते नाथ ! लालप्यते जनः ॥ ६३ ॥
न चैनमाश्वासयसि किं वा न बहुमन्यसे ।
यास्त्वया विधवा राजन् ! कृता नैकाः कुलस्त्रियः ॥ ६४ ॥
पतिव्रता धर्मरता गुरुशुश्रूषणे रताः ।
ताभिः शोकाभितप्ताभिः शप्तः परवशं गतः ॥ ६५ ॥

तदा त्वभिहता अभिघातमात्रं प्राप्ता । अद्य तु निपातितास्मि ॥ ५८ ॥ ५९ ॥ ६० ॥

अनवगुण्ठितां भ्रष्टावगुण्ठनाम् ॥ ६१ ॥

भ्रष्टं लज्जारूपमवगुण्ठनं येषां तान् ॥ ६२ ॥ ६३ ॥

नैकाः कुलस्त्रियश्चस्थादानामिति शेषः ॥ ६४ ॥

त्वया विप्रकृताभिस्तु तदा शप्तस्तदागतम्।
प्रवादः सत्यमेवायं त्वाम्प्रति प्रायशो नृप! ॥ ६६ ॥
पतिव्रतानां नाकस्मात् पतन्त्यश्रूणि भूतले।
कथञ्च नाम ते राजन्! लोकानाक्रम्य तेजसा ॥ ६७ ॥
नारीचौर्य्यमिदं क्षुद्रं कृतं शौटीर्य्यमानिना।
अपनीयाश्रमाद्रामं यन्मृगच्छद्मना त्वया ॥ ६८ ॥
आनीता रामपत्नी सा अपनीय च लक्ष्मणम्।
कातर्य्यञ्च न ते युद्धे कदाचित् संस्मराम्यहम् ॥ ६९ ॥
तत्तु भाग्यविपर्य्यासान्नूनन्ते पक्वलक्षणम्।
अतीतानागतार्थज्ञो वर्त्तमानविचक्षणः ॥ ७० ॥
मैथिलीमाहृतां दृष्ट्वा ध्यात्वा निःश्वस्य चायतम्।
सत्यवाक् स महाबाहो! देवरो मे यदब्रवीत् ॥ ७१ ॥

यच्छप्तस्तत्फलं त्वं परवशं प्रभुवशं गतः ॥ ६५ ॥

त्वया विप्रकृताभिः कृतापकाराभिस्तदापकारसमये यच्छप्तस्तत् फलमागतम्। विप्रकृतानां पतिव्रतानामश्रूण्यकस्मात् किञ्चिदनर्थं[illegible] विना भूतले न पतन्तीति योऽयं प्रवादः प्रायशो जने वर्त्तते प्रवर्त्तते स सत्यं त्वां प्रति जातः। तवानर्थकर एव जात इत्यर्थः ॥ ६६ ॥ ६७ ॥

शौटीर्य्यमानिना वीरमानिना ॥ ६८ ॥

कातर्य्यं कातरत्वम् ॥ ६९ ॥

पक्वलक्षणं पक्वस्य आसन्नविनाशस्य लक्षणमित्यर्थः ॥ ७० ॥

अयं राक्षसमुख्यानां विनाशः प्रत्युपस्थितः ।
कामक्रोधसमुत्थेन व्यसनेन प्रसङ्गिना ॥ ७२ ॥
निवृत्तस्त्वत्कृते नार्थः सोऽयं मूलहरो महान् ।
त्वया कृतमिदं सर्वमनाथं राक्षसं कुलम् ॥ ७३ ॥
नहि त्वं शोचितव्यो मे प्रख्यातबलपौरुषः ।
स्त्रीस्वभावात्तु मे बुद्धिः कारुण्ये परिवर्त्तते ॥ ७४ ॥
सुकृतं दुष्कृतञ्च त्वं गृहीत्वा स्वां गतिं गतः ।
आत्मानमनुशोचामि त्वद्विनाशेन दुःखिताम् ॥ ७५ ॥
सुहृदां हितकामानां न श्रुतं वचनं त्वया ।
भ्रातृणाञ्चैव कात्स्न्येन हितमुक्तं दशानन ! ॥ ७६ ॥
हेत्वर्थयुक्तं विधिवच्छ्रेयस्करमदारुणम् ।
विभीषणेनाभिहितं न कृतं हेतुमत्त्वया ॥ ७७ ॥
मारीचकुम्भकर्णाभ्यां वाक्यं मम पितुस्तथा ।

मे देवरो विभीषणो राक्षसानां विनाश आगत इति यदब्रवीत्तदागतमिति शेषः ॥ ७१ ॥

व्यसनेन स्त्रीप्रसक्तिलक्षणेन । प्रसङ्गिना प्रसक्तिमता ॥ ७२ ॥

त्वत् कृते नार्थोऽशेषैश्वर्य्यलक्षणो निवृत्तः। यतः सोऽयं परस्त्रीप्रसक्तिरूपो मूलहरोऽनर्थं इति शेषः ॥ ७३ ॥ ७४ ॥

दुःखितां सम्प्राप्तदुःखाम् ॥ ७५ ॥

सुहृदां मारीचादीनाम् ॥ ७६ ॥

न कृतं वीर्य्यमत्तेन तस्येदं फलमीदृशम् ॥ ७८ ॥
नीलजीमूतसङ्काश पीताम्बर शुभाङ्गद ! ।
स्वगात्राणि विनिक्षिप्य किं शेषे रुधिरावृतः ॥ ७९ ॥
प्रसुप्त इव शोकार्त्तां किं मां न प्रतिभाषसे ।
महावीर्य्यस्य दक्षस्य संयुगेष्वपलायिनः ॥ ८० ॥
यातुधानस्य दौहित्रीं किं मां न प्रतिभाषसे ।
उत्तिष्ठोत्तिष्ठ किं शेषे नवे परिभवे कृते ॥ ८१ ॥
अद्य वै निर्भया लङ्कां प्रविष्टाः सूर्य्यरश्मयः ।
येन सूदयसे शत्रून् समरे सूर्य्यवर्च्चसा ॥ ८२ ॥
वज्रं वज्रधरस्येव सोऽयं ते सततार्च्चितः ।
रणे बहुप्रहरणो हेमजालपरिष्कृतः ॥ ८३ ॥
परिघो व्यवकीर्णस्ते बाणैश्छिन्नः सहस्रधा ।
प्रियामिवोपसंगृह्य किं शेषे रणमेदिनीम् ॥ ८४ ॥
अप्रियामिव कस्माच्च मां नेच्छस्यभिभाषितुम् ।
धिगस्तु हृदयं यस्या ममेदं न सहस्रधा ॥ ८५ ॥

अदाक्षं साम्यम्। हेत्वर्थयुक्तं हेतुप्रयोजनाभ्यां सहितम्। हेतुमत्कृतम्। फलवन्नानुष्ठितमित्यर्थः ॥ ७७ ॥

मारीचकुम्भकर्णाभ्यामभिहितमिति शेषः ॥ ७८ ॥

विनिक्षिप्य भूतले इति शेषः ॥ ७९ ॥ ८० ॥

यातुधानस्य सुमालेः ॥ ८१ ॥ ८२ ॥

त्वयि पञ्चत्वमापन्ने फलते शोकपीड़ितम्।
इत्येवं विलपन्ती सा बाष्पपर्य्याकुलेक्षणा॥ ८६॥
स्नेहोपस्कन्नहृदया तदा मोहमुपागमत्।
कश्मलाभिहता सन्ना बभौ सा रावणोरसि॥ ८७॥
सन्ध्यानुरक्ते जलदे दीप्ता विद्युदिवोज्ज्वला।
तथागतां समुत्थाप्य सपत्न्यस्तां भृशातुराः॥ ८८॥
पर्य्यवस्थापयामासू रुदत्यो रुदतीं भृशम्।
किं ते न विदिता देवि! लोकानां स्थितिरध्रुवा॥ ८९॥
दशाविभागपर्य्याये राज्ञां वै चञ्चलाः श्रियः।
इत्येवमुच्यमाना सा सशब्दं प्ररुरोद ह॥ ९०॥
स्नपयन्ती तदास्रेण स्तनौ वक्त्रं सुनिर्मलम्।
एतस्मिन्नन्तरे रामो विभीषणमुवाच ह॥ ९१॥
संस्कारः क्रियतां भ्रातुः स्त्रीगणः परिसान्त्व्यताम्।

ते त्वया सततमर्चितः पूजितः। वज्रप्रहरणो वज्रहन्ता॥ ८३॥
॥ ८४॥ ८५॥

फलते स्फुटति॥ ८६॥

कश्मलो मूर्च्छा। सन्ना पीड़िता॥ ८७॥ ८८॥

दशाविभागस्य पुण्यपरिपाकदशाविशेषस्य पर्य्याये विनाशे राज्ञां चञ्चलाः श्रियस्ते न विदिताः किम्। एवं लोकानां स्थितिरध्रुवा चञ्चलेत्यपि ते किं न विदितम्॥ ८९॥ ९०॥ ९१॥

तमुवाच ततो धीमान्-विभीषण इदं वचः ॥ ८२ ॥
विमृश्य बुद्ध्या प्रश्रितं धर्मार्थसहितं हितम्।
त्यक्तधर्मव्रतं क्रूरं नृशंसमनृतं तथा ॥ ८३ ॥
नाहमर्हामि संस्कर्त्तुं परदाराभिमर्शिनम्।
भ्रातृरूपो हि मे शत्रुरेष सर्वाहिते रतः ॥ ८४ ॥
रावणो नार्हते पूजां पूज्योऽपि गुरुगौरवात्।
नृशंस इति मां राम! वक्ष्यन्ति मनुजा भुवि ॥ ८५ ॥
श्रुत्वा तस्यागुणान् सर्वे वक्ष्यन्ति सुकृतं पुनः।
तच्छ्रुत्वा परमप्रीतो रामो धर्मभृताम्बरः ॥ ८६ ॥
विभीषणमुवाचेदं वाक्यज्ञं वाक्यकोविदः।
तवापि मे प्रियं कार्य्यं त्वत्प्रभावान्मया जितम् ॥ ८७ ॥
अवश्यन्तु क्षमं वाच्यो मया त्वं राक्षसेश्वर!।

प्रश्रितं राममनोऽनुकूलं यथा तथा रामं प्रत्युवाच ॥ ८२ ॥

त्यक्तो धर्मो व्रतञ्च येन तम्। अनृतमनृतवादिनम् ॥ ८३ ॥ ८४ ॥

गुरुगौरवात् पूज्योऽपि उक्तदोषान्मत्तः पूजां नार्हते नार्हति। हे राम सर्वे मनुजाः पूर्वं भ्रातुरसंस्कारश्रवणान्मां नृशंस इति वक्ष्यन्ति। पश्चात्तस्यागुणान् श्रुत्वा पुनः सुकृतं सम्यक् कृतमित्येवं वक्ष्यन्ति ॥ ८५ ॥ ८६ ॥

तवापीति। सुग्रीवस्येव तवापि प्रियं राज्याभिषेकलक्षणं मया कार्य्यं कर्त्तव्यम्। हि यतस्त्वत्प्रभावान्मया जितम् ॥ ८७ ॥

अधर्मानृतसंयुक्तः काममेष निशाचरः ॥ ९८ ॥
तेजस्वी बलवान् शूरः संग्रामेषु च नित्यशः ।
शतक्रतुमुखैर्देवैः श्रूयते न पराजितः ॥ ९९ ॥
महात्मा बलसम्पन्नो रावणो लोकरावणः ।
मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम् ॥ १०० ॥
क्रियतामस्य संस्कारो ममाप्येष यथा तव ।
त्वत्सकाशान् महाबाहो ! संस्कारं विधिपूर्वकम् ॥ १०१ ॥

तस्मादवश्यं त्वमम् अभिषेकसम्पादनयोग्यं यत् कृत्यं प्रेतनिर्हारलक्षणं तन्मया त्वं वाच्यः। यद्यप्ययं त्वदुक्तदोषवांस्तथापि गुणबाहुल्यात् संस्कार्य्य एवेत्याह,—अधर्मेत्यादि ॥ ९८ ॥ ९९ ॥

त्वच्छत्रुत्वादसंस्कार्य्य इति चेत्तत्राह,—मरणान्तानीति। नः सात्त्विकानामस्माकं प्रयोजनं वैरनिर्य्यातनरूपं निर्वृत्तं सम्पन्नमतःपरं न वैरप्रयोजनमस्ति ॥ १०० ॥

यदेवमतोऽस्य संस्कारः क्रियतामिति। एष यथा तव भ्राता संस्कारादिना तवानुग्राह्यस्तथा ममाप्यनुग्राह्य एव। चतुर्विधमुक्तिष्वेकापि नास्य। तदुक्तं विष्णुपुराणे। हिरण्यकशिपोर्विष्णुरयमित्येवं न मनस्यभूत्। दशाननत्वेऽप्यनङ्गपराधीनतया जानकीसमासक्तचेतसो दाशरथिरूपदर्शनमेवासीत्। नायमच्युत इत्यासक्तिर्विपद्यतोऽन्तःकरणस्य मानुषबुद्धिरेव केवलमभूदिति। अतएव रावणकुम्भकर्णयोः शिशुपालदन्तवक्ररूपेण जन्म श्रूयते। न हि भगवत्सालोक्यं प्राप्तयोरपि जन्म भवति किन्तु ब्रह्मणा सह मुक्तिरेवेति सिद्धान्तः ॥ १०१ ॥

क्षिप्रमर्हति धर्मेण त्वं यशोभाक् भविष्यसि।
राघवस्य वचः श्रुत्वा त्वरमाणो विभीषणः ॥ १०२ ॥
संस्कारयितुमारेभे भ्रातरं रावणं हतम्।
स प्रविश्य पुरीं लङ्कां राक्षसेन्द्रो विभीषणः ॥ १०३ ॥
रावणस्याग्निहोत्रन्तु निर्य्यापयति सत्वरम्।
शकटान् दारुरूपाणि अग्नीन् वै याजकांस्तथा ॥ १०४ ॥
तथा चन्दनकाष्ठानि काष्ठानि विविधानि च।
अगुरूणि सुगन्धीनि गन्धांश्च सुरभींस्तथा ॥ १०५ ॥
मणिमुक्ताप्रवालानि निर्य्यापयति राक्षसः।
आजगाम मुहूर्त्तेन राक्षसैः परिवारितः ॥ १०६ ॥
ततो माल्यवता सार्द्धं क्रियामेव चकार सः।
सौवर्णीं शिबिकां दिव्यामारोप्य क्षौमवाससम् ॥ १०७ ॥
रावणं राक्षसाधीशमश्रुपूर्णमुखा द्विजाः।
तूर्य्यघोषैश्च विविधैस्तुवद्भिश्चाभिनन्दितम् ॥ १०८ ॥
पताकाभिश्च चित्राभिः सुमनोभिश्च चित्रिताम्।

यशोभागिति रामवाक्येन त्यक्तवैरो भ्रातरं संस्कृतवानिति ख्यातिरेव भविष्यतीत्यर्थः ॥ १०२ ॥ १०३ ॥

निर्य्यापयति। स्मेति शेषः ॥ १०४ ॥ १०५ ॥ १०६ ॥ १०७ ॥

द्विजाः राक्षसद्विजाः। स्तुवद्भिर्बन्दिजनैरभिनन्दितम् अभिनन्दितमिव। रावणं शिबिकामारोप्य द्विजा ययुरिति शेषः ॥ १०८ ॥

उत्क्षिप्य शिबिकान्तान्तु विभीषणपुरोगमाः ॥ १०९

दक्षिणाभिमुखाः सर्व्वे गृह्य काष्ठानि भेजिरे।

अग्नयो दीप्यमानास्ते तदाध्वर्य्युसमीरिताः ॥ ११० ॥

शरणाभिगताः सर्व्वे पुरस्तात्तस्य ते ययुः।

अन्तःपुराणि सर्व्वाणि रुदमानानि सत्वरम् ॥ १११ ॥

पृष्ठतोऽनुययुस्तानि प्लवमानानि सर्व्वतः।

रावणं प्रयते देशे स्थाप्य ते भृशदुःखिताः ॥ ११२ ॥

चितां चन्दनकाष्ठैश्च पद्मकोशीरचन्दनैः।

ब्राह्म्या संवर्त्तयामासू राङ्कवास्तरणावृताम् ॥ ११३ ॥

प्रचक्रू राक्षसेन्द्रस्य पितृमेधमनुत्तमम्।

वेदिञ्च दक्षिणाप्राच्यां यथास्थानञ्च पावकम् ॥ ११४ ॥

पताकादिभिश्चित्रितां शिबिकां वाहकैरुत्थाप्य विभीषणादयः ॥ १०९ ॥

काष्ठानि गृहीत्वा दक्षिणामुखाः श्मशानमार्गं भेजिरे ॥ ११० ॥

शरणाभिगताः आधारस्थानकुण्डस्थाः ॥ १११ ॥

प्लवमानानि चलनाभ्यासाभावात्त्वरयाच प्लवमानानीव ॥ ११२ ॥

पद्मको गन्धवृक्षः। ब्राह्म्या वेदमार्गानुगतक्रियया। रङ्कुः कृष्णसारमृगस्तत्सम्बन्धिराङ्कवन्तेनास्तरणेनावृतां संवर्त्तयामासुः चक्रुः ॥ ११३ ॥

पितृमेधं पितृमेधविहितं कर्म प्रचक्रुः। तत्प्रकारो वेदिञ्चेत्यादि। दक्षिणाप्राच्यां चितायाः दक्षिणा प्राग्देशे इत्यर्थः। यथास्थानं पाव-

पृषदाज्येन सम्पूर्णं स्रुवं स्कन्धे प्रचिक्षिपुः।
पादयोः शकटं प्रापुरूर्वोश्चोलूखलं तदा ॥ ११५ ॥
दारुपात्राणि सर्वाणि अरणिञ्चोत्तरारणिम्।
दत्वा तु मुसलञ्चान्यं यथास्थानं विचक्रमुः ॥ ११६ ॥
शास्त्रदृष्टेन विधिना महर्षिविहितेन च।
तत्र मेध्यं पशुं हत्वा राक्षसेन्द्रस्य राक्षसाः ॥ ११७ ॥
परिस्तरणिकां राज्ञो घृताक्तां समवेशयन्।
गन्धैर्माल्यैरलङ्कृत्य रावणं दीनमानसाः ॥ ११८ ॥

कश्च प्रचक्रुः। दक्षिणपूर्वदेशे आहवनीयं निदधाति उत्तरपश्चिमे गार्हपत्यं दक्षिणपश्चिमे दक्षिणाग्निमिति सूत्रोक्तस्थानमनतिक्रम्येत्यर्थः ॥ ११४ ॥

पृषदाज्येन सदध्याज्येन सम्पूर्णेनोपलक्षितं स्रुवं स्कन्धे स्कन्धदेशे प्रचिक्षिपुः। यद्यपि नासिके स्रुवावित्यापस्तम्बनोक्तं तथापि सूत्रान्तरात् स्कन्धेऽपि निक्षेपः स्रुवस्य बोध्यः। तथा पादयोः शकटमूर्वोरुलूखलमिति च सूत्रान्तरादेव बोध्यम्। ११५ ॥

दारुपात्रादि सर्वं सूत्रोक्ततत्तत्स्थाने दत्वा अन्यं मुसलश्चातुर्मास्यमुसलञ्च यथास्थानं दत्वा च विचक्रमुः पितृमेधञ्चक्रुः ॥ ११६ ॥

शास्त्रदृष्टेन श्रुतिदृष्टेन महर्षिविहितेन कल्पसूत्रदृष्टविधिविहितेन ॥ ११७ ॥

परिस्तीर्य्यते मुखमनयेति परिस्तरणिकावपातां राक्षसेन्द्रस्य मुखे समवेशयन्। वपास्यमुखं प्रोर्णोतीति सूत्रात्। तीर्थन्तु अनुस्तरणिकी

विभीषणसहायास्ते वस्त्रैश्च विविधैरपि ।
लाजैरवकिरन्ति स्म बाष्पपूर्णमुखास्तथा ॥ ११९ ॥
स ददौ पावकं तस्य विधियुक्तं विभीषणः ।
स्नात्वा चैवार्द्रवस्त्रेण तिलान् दर्भविमिश्रितान् ॥ १२० ॥
उदकेन च संमिश्रान् प्रदाय विधिपूर्वकम् ।
ताः स्त्रियोऽनुनयामास सान्त्वयित्वा पुनः पुनः ॥ १२१ ॥
गम्यतामिति ताः सर्वा विविशुर्नगरं ततः ।
प्रविष्टासु पुरीं स्त्रीषु राक्षसेन्द्रो विभीषणः ।
रामपार्श्वमुपागम्य समतिष्ठद्विनीतवत् ॥ १२२ ॥
रामोऽपि सह सैन्येन ससुग्रीवः सलक्ष्मणः ।
हर्षं लेभे रिपुं हत्वा वृत्रं वज्रधरो यथा ॥ १२३ ॥

राज्ञ इति पठित्वानुस्तरणिकीं राजगवीं तामालभ्य तत्कर्मणा यजमान-मात्रूतवन्त इत्यर्थः । मृतायानुस्तरणीं घ्नन्तीति श्रुतेरित्याह ॥ ११८ ॥

वस्त्रैश्चेति । अलङ्कृत्येत्यनुकर्षः ॥ ११९ ॥ १२० ॥

विधिपूर्वकं प्रदाय स्थित इति शेषः । ननु निहतं रावणं दृष्ट्वा रामेणाक्लिष्टकर्मणा । तत्यजुस्तं महाभागं पञ्चभूतानि रावणम् । शरीरधातवो ह्यस्य मांसं रुधिरमेव च । नेशुर्ब्रह्मास्त्रनिर्दग्धा न च भस्माप्यदृश्यतेति महाभारते उक्तत्वेन कस्य वाल्मीकिना श्मशानानयन-पूर्वकं दाह उक्त इति चेन्न । तस्य रामरावणतेजोवर्णनविषयेऽत्युक्त्य-लङ्कारपरत्वादिति वदन्ति ॥ १२१ ॥

ततो विमुक्ता सशरं शरासनं
महेन्द्रदत्तं कवचं स तत्यजत्।
विमुच्य रोषं रिपुनिग्रहात्ततो
रामः स सौम्यत्वमुपागतोऽरिहा ॥ १२४ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे त्रयो-
दशाधिकशततमः सर्गः ॥ ११३ ॥

गम्यतामित्युवाचेत्यर्थः। रावणपत्नीरिति शेषः ॥ १२२ ॥ १२३ ॥
॥ १२४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्ध-
काण्डे त्रयोदशाधिकशततमः सर्गः ॥ ११३ ॥

---

## चतुर्दशाधिकशततमः सर्गः ।

ते रावणवधं दृष्ट्वा देवगन्धर्वदानवाः ।
जग्मुः स्वैः स्वैर्विमानैस्ते कथयन्तः शुभाः कथाः ॥ १ ॥
रावणस्य वधं घोरं राघवस्य पराक्रमम् ।
सुयुद्धं वानराणाञ्च सुग्रीवस्य च मन्त्रितम् ॥ २ ॥
अनुरागञ्च वीर्य्यञ्च मारुतेर्लक्ष्मणस्य च ।
पतिव्रतात्वं सीताया हनूमति पराक्रमम् ॥ ३ ॥
कथयन्तो महाभागा जग्मुर्हृष्टा यथागतम् ।
राघवस्तु रथं दिव्यमिन्द्रदत्तं शिखिप्रभम् ॥ ४ ॥
अनुज्ञाप्य महाबाहुर्मातलिं प्रत्यपूजयत् ।
राघवेणाभ्यनुज्ञातो मातलिः शक्रसारथिः ॥ ५ ॥

ते रावणेति ॥ १ ॥

सुग्रीवस्य मन्त्रितं सेनासन्धेतनसीतान्वेषणादिसर्वकार्य्यसाधकं मन्त्र-सामर्थ्यम् ॥ २ ॥

मारुतिलक्ष्मणयो रामेऽनुरागं वीर्य्यञ्च ॥ ३ ॥

इन्द्रदत्तं इन्द्रप्रेषितम् ॥ ४ ॥

दिव्यं तं रथमास्थाय दिवमिवोत्पपात ह।
तस्मिंस्तु दिवमारूढ़े सरथे रथिनां वरः॥ ६॥
राघवः परमप्रीतः सुग्रीवं परिषस्वजे।
परिष्वज्य च सुग्रीवं लक्ष्मणेनाभिवादितः॥ ७॥
पूज्यमानो हरिगणैराजगाम बलालयम्।
अथोवाच स काकुत्स्थः समीपपरिवर्त्तिनम्॥ ८॥
सौमित्रिं मित्रसम्पन्नं लक्ष्मणं शुभलक्षणम्।
विभीषणमिमं सौम्य! लङ्कायामभिषेचय॥ ९॥
अनुरक्तस्तु भक्तञ्च तथा पूर्वोपकारिणम्।
एष मे परमः कामो यदिमं रावणानुजम्॥ १०॥
लङ्कायां सौम्य! पश्येयमभिषिक्तं विभीषणम्।
एवमुक्तस्तु सौमित्री राघवेण महात्मना॥ ११॥

अनुज्ञाप्य रथ गच्छेत्याज्ञां दत्वा। यद्यपि भारते सीताया आगमनोत्तरं रथादवतरणं भगवत उक्तं तथापि तत्र पौर्वापर्य्यक्रमे तात्पर्य्याभावान्न क्षतिः॥ ५॥ ६॥

लक्ष्मणेनाभिवादितः राघवः॥ ७॥

बलालयं सेनानिवेशस्थानम्। अथ त्रिभिर्दिनैर्दशरात्रैकादशाहद्वादशाहकर्त्तव्यक्रियासमाप्तौ चतुर्थेऽह्नीत्यर्थः। नात्र दशाहमाशौचमिति भ्रमितव्यम्। उद्यतैराहवे शस्त्रैः क्षत्रधर्मंहतस्य तु। सद्यः सन्तिष्ठते यज्ञस्तथाशौचमिति स्थितिरिति मनूक्तेः॥ ८॥

तथेत्युक्त्वा सुसंहृष्टः सौवर्णं घटमाददे ।
तं घटं वानरेन्द्राणां हस्ते दत्त्वा मनोजवान् ॥ १२ ॥
व्यादिदेश महासत्त्वो समुद्रसलिलं तदा ।
अतिशीघ्रं ततो गत्वा वानरास्ते मनोजवाः ॥ १३ ॥
आगतास्तु जलं गृह्य समुद्राद्वानरोत्तमाः ।
ततस्त्वेकं घटं गृह्य संस्थाप्य परमासने ॥ १४ ॥
घटेन तेन सौमित्रिरभ्यषिञ्चद्विभीषणम् ।
लङ्कायां रक्षसां मध्ये राजानं रामशासनात् ॥ १५ ॥
विधिना मन्त्रदृष्टेन सुहृद्गणसमावृतः ।
अभ्यषिञ्चंस्तदा सर्वे राक्षसा वानरास्तथा ॥ १६ ॥
प्रहर्षमतुलं गत्वा तुष्टुवू राममेव हि ।
तस्यामात्या जहृषिरे भक्ता ये चास्य राक्षसाः ॥ १७ ॥

लङ्कायामभिषेचय । रावणसिंहासने स्थाप्यादिति शेषः ॥ ९ ॥ ॥ १० ॥ ११ ॥

तं घटं हस्ते इति जातावेकवचनम् । मनोजवान् वानरान् व्यादिदेश ॥ १२ ॥

समुद्रसलिलं तदानयनम् ॥ १३ ॥

समुद्राच्चतुःसमुद्रेभ्य इत्यर्थः । परमासने विभीषणं संस्थाप्य तमभ्यषिञ्चत् ॥ १४ ॥ १५ ॥

मन्त्रदृष्टेन वेददृष्टेन ॥ १६ ॥

दृष्ट्वाभिषिक्तं लङ्कायां राक्षसेन्द्रं विभीषणम्।
राघवः परमां प्रीतिं जगाम सहलक्ष्मणः॥ १८॥
सान्त्वयित्वा प्रकृतयस्ततो राममुपागमत्।
दध्यक्षतान् मोदकांश्च लाजाः सुमनसस्तथा॥ १९॥
आजह्रुरथं संहृष्टाः पौरास्तस्मै निशाचराः।
स तान् गृहीत्वा दुर्धर्षो राघवाय न्यवेदयत्॥ २०॥
माङ्गल्यं मङ्गलं सर्वं लक्ष्मणाय च वीर्य्यवान्।
कृतकार्य्यं समृद्धार्थं दृष्ट्वा रामो विभीषणम्।
प्रतिजग्राह तत्सर्वं तस्यैव प्रतिकाम्यया॥ २१॥
ततः शैलोपमं वीरं प्राञ्जलिं प्रणतं स्थितम्।
उवाचेदं वचो रामो हनूमन्तं प्लवङ्गमम्॥ २२॥

भक्ताः ये चास्य विभीषणस्यामात्यव्यतिरिक्ता भक्तास्तेपीत्यर्थः॥॥ १७॥ १८॥

प्रकृतयः प्रकृतीः स्वपुरराष्ट्रप्रजाः॥ १९॥

पौरास्तस्मै विभीषणायाजह्रुः। रामसमीपगमनवेलायामिति शेषः। तानपह्वतान् पदार्थान्॥ २०॥

लक्ष्मणाय च न्यवेदयत्। प्रतिकाम्या इच्छा॥ २१॥

ततः अभिषेकोत्तरं दिनद्वये तस्य प्रजासान्त्वनोत्तरं रामपूजार्थमागते विभीषणे तत्पूजां कृत्वा नगरं गते सति सप्तमे दिने इत्यर्थः॥ २२॥

अनुज्ञाप्य महाराजमिमं सौम्य ! विभीषणम् ।
प्रविश्य नगरीं लङ्कां कौशलं ब्रूहि मैथिलीम् ॥ २३ ॥
वैदेह्या मां च कुशलं सुग्रीवस्य सलक्ष्मणम् ।
आचक्ष्व वदतां श्रेष्ठ ! रावणस्य हतं रणे ॥ २४ ॥
प्रियमेतदिहाख्याहि वैदेह्यास्त्वं हरीश्वर ! ।
प्रतिगृह्य तु सन्देशमुपावर्त्तितुमर्हसि ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
चतुर्दशाधिकशततमः सर्गः ॥ ११४ ॥

अनुज्ञाप्य पुराधिपतित्वात् कर्त्तव्येऽर्थे तदनुज्ञापियत्वाम् । आदौ सीतायाम् कुशलप्रश्नस्ततः स्वकुशलनिवेदनम् । २३ । २४ ।
सन्देशं वैदेह्याः प्रतिसन्देशमित्यर्थः ॥ २५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्धकाण्डे
चतुर्दशाधिकशततमः सर्गः ॥ ११४ ॥

## पञ्चदशाधिकशततमः सर्गः ।



इति प्रतिसमादिष्टो हनुमान् मारुतात्मजः ।
प्रविवेश पुरीं लङ्कां पूज्यमानो निशाचरैः ॥ १ ॥
प्रविश्य च पुरीं लङ्कामनुज्ञाप्य विभीषणम् ।
ततस्तेनाभ्यनुज्ञातो हनुमान् वृक्षवाटिकाम् ॥ २ ॥
स प्रविश्य यथान्यायं सीताया विदितो हरिः ।
ददर्श मृजया हीनां सातङ्कां रोहिणीमिव ॥ ३ ॥
वृक्षमूले निरानन्दां राक्षसीभिः परीवृताम् ।
निभृतः प्रणतः प्रह्वः सोऽभिगम्याभिवाद्य च ॥ ४ ॥
दृष्ट्वा समागतं देवी हनूमन्तं महाबलम् ।
तूष्णीमास्त तदा दृष्ट्वा स्मृत्वा हृष्टाभवत्तदा ॥ ५ ॥
सौम्यं तस्या मुखं दृष्ट्वा हनुमान् प्लवगोत्तमः ।
रामस्य वचनं सर्वमाख्यातुमुपचक्रमे ॥ ६ ॥

इति प्रतीति । सीतां प्रति समादिष्ट इत्यर्थः ॥ १ ॥ २ ॥
मृजया स्नानादिसंस्कारेण । सातङ्कां ग्रहपीडासहिताम् ॥ ३ ॥
निभृतो निश्चलः । प्रह्वो नम्रः । अभिवाद्य च स्थित इति शेषः ॥ ४ ॥ ५ ॥ ६ ॥

वैदेहि ! कुशली रामः सुग्रीवः सहलक्ष्मणः।
कुशलन्त्वाह सिद्धार्थो हतशत्रुरमित्रजित् ॥ ७ ॥
विभीषणसहायेन रामेण हरिभिः सह।
निहतो रावणो देवि ! लक्ष्मणेन च वीर्य्यवान् ॥ ८ ॥
प्रियमाख्यामि ते देवि ! भूयश्च त्वां सभाजये।
तव प्रभावाद्धर्मज्ञे ! महान् रामेण संयुगे ॥ ९ ॥
लब्धोऽयं विजयः सीते ! स्वस्था भव गतज्वरा।
रावणश्च हतः शत्रुर्लङ्का चैव वशीकृता ॥ १० ॥
मया ह्यलब्धनिद्रेण धृतेन तव निर्जये।
प्रतिज्ञैषा विनिस्तीर्णा बध्वा सेतुं महोदधौ ॥ ११ ॥
सम्भ्रमश्च न कर्त्तव्यो वर्त्तन्त्या रावणालये।
विभीषणविधेयं हि लङ्कैश्वर्य्यमिदं कृतम् ॥ १२ ॥
तदाश्वसिहि विस्रब्धं स्वगृहे परिवर्त्तसे।

कुशलं त्वा त्वामाहेत्यर्थः ॥ ७ ॥ ८ ॥

कोऽसौ सन्देशस्तत्राह,—प्रियमिति। हे देवि ते प्रियमाख्यामि। त्वां भूयः सभाजये प्रीणयामि। तव प्रभावात्तव पातिव्रत्यवैभवात् संयुगे रामेणायं महान् विजयो लब्धः ॥ ९ ॥ १० ॥

तव निर्जये। शत्रोरिति शेषः। धृतेन कृतनिश्चयेन। एषा प्रतिज्ञा शत्रुं हत्वा सीतां प्रत्यानेष्यामीत्येवं रूपा ॥ ११ ॥

सम्भ्रमो भयम्। वर्त्तन्त्या वर्त्तमानया। यतो विभीषणविधेयं लङ्कैश्वर्य्यं कृतं तस्मात्त्वं स्वगृहे एव परिवर्त्तसे आश्वसिहि ॥ १२ ॥

अयशाम्येति संहृष्टस्त्वद्दर्शनसमुत्सुकः ॥ १३ ॥

एवमुक्ता तु सा देवी सीता शशिनिभानना।

प्रहर्षेणावरुद्धा सा व्याहर्त्तुं न शशाक ह ॥ १४ ॥

ततोऽब्रवीत् हरिवरः सीतामप्रतिजल्पतीम्।

किन्त्वं चिन्तयसे देवि! किञ्च मां नाभिभाषसे ॥ १५ ॥

एवमुक्ता हनुमता सीता धर्मपथे स्थिता।

अब्रवीत्परमप्रीता बाष्पगद्गदया गिरा ॥ १६ ॥

प्रियमेतदुपश्रुत्य भर्त्तुर्विजयसंश्रितम्।

प्रहर्षवशमापन्ना निर्वाक्यास्मि क्षणान्तरम् ॥ १७ ॥

न हि पश्यामि सदृशं चिन्तयन्ती प्लवङ्गम!।

आख्यानकस्य भवतो दातुं प्रत्यभिनन्दनम् ॥ १८ ॥

न च पश्यामि सदृशं पृथिव्यां तव किञ्चन।

सदृशं यत्प्रियाख्याने तव दत्वा भवेत् सुखम् ॥ १९ ॥

अयशाम्येति संहृष्ट इति पाठः। अयं विभीषणः ॥ १३ ॥ १४ ॥ ॥ १५ ॥ १६ ॥

क्षणान्तरं क्षणरूपकालावकाशमात्रम् ॥ १७ ॥

न केवलं हर्षवशादेव निर्वाक्या किन्तु प्रियाख्यातुस्तव तत्सदृश-देयवस्त्वभावादपीत्याह,—न हीति। प्रत्यभिनन्दनं देयवस्तु। आख्या-नकस्य त्वत्कृतप्रियाख्यानकस्य सदृशं नास्तीत्यर्थः। स्वार्थे कः ॥ १८ ॥

उक्तमेवानन्दवशात् पुनराह,—न चेति। ईदृशप्रियाख्याने यत्तस्य सदृशं समं तव दातुं योग्यं तत् पृथिव्यामपि न पश्यामि ॥ १९ ॥

हिरण्यं वा सुवर्णं वा रत्नानि विविधानि च।
राज्यं वा त्रिषु लोकेषु नैतदर्हति भाषितम्॥ २०॥
एवमुक्तस्तु वैदेह्या प्रत्युवाच प्लवङ्गमः।
प्रगृहीताञ्जलिर्हर्षात् सीतायाः प्रमुखे स्थितः॥ २१॥
भर्तुः प्रियहिते युक्ते भर्तुर्विजयकाङ्क्षिणि।
स्निग्धमेवंविधं वाक्यं त्वमेवार्हस्यनिन्दिते !॥ २२॥
तवैतद्वचनं देवि ! त्वत्तोऽस्मि प्रियं महत्।
रत्नौघाद्विविधाच्चापि देवराज्याद्विशिष्यते॥
अर्थतश्च मया प्राप्ता देवराज्यादयो गुणाः।
हतशत्रुं विजयिनं रामं पश्यामि सुस्थितम्॥
तस्य तद्वचनं श्रुत्वा मैथिली जनकात्मजा।
ततः शुभतरं वाक्यमुवाच पवनात्मजम्॥ २३॥
अतिलक्षणसम्पन्नं माधुर्यगुणभूषणम्।
बुद्ध्या ह्यष्टाङ्गया युक्तं त्वमेवार्हसि भाषितुम्॥ २४॥

त्वद्भाषितं मद्दत्तं प्रत्यभिनन्दनत्वेन हिरण्यादिकं नार्हति। अत-एव तन्निष्क्रयभूतं देयं वस्तु लोके नास्तीत्यर्थः॥ २०॥ २१॥

स्निग्धं स्नेहोचितम्। एवंविधम् अष्टकर्णोतिदार्ढ्यमित्येवं रूपम्। त्वमेव भाषितुमर्हसि नान्या। अतस्त्वया मदीयं यदिदं वचनमुक्तं तदेव परमं प्रत्यभिनन्दनमिति शेषः॥ २२॥

एतदुत्तरं तवैतद्वचनमित्यादिश्लोकद्वयं प्रक्षिप्तमिति कतकः॥ २३॥

श्लाघनीयोऽनिलस्य त्वं सुतः परमधार्मिकः।
बलं शौर्य्यं श्रुतं सत्वं विक्रमो दाक्ष्यमुत्तमम् ॥ २५ ॥
तेजः क्षमा धृतिः स्थैर्य्यं विनीतत्व न संशयः।
एते चान्ये च बहवो गुणास्त्वय्येव शोभनाः ॥ २६ ॥
अथोवाच पुनः सीतामसम्भ्रान्तो विनीतवत्।
प्रगृहीताञ्जलिर्हर्षात् सीतायाः प्रमुखे स्थितः ॥ २७ ॥
इमास्तु खलु राक्षस्यो यदि त्वमनुमन्यसे।
हन्तुमिच्छामि ताः सर्वा याभिस्त्वन्तर्जिता पुरा ॥ २८ ॥
क्लिश्यन्तीं पतिदेवां त्वामशोकवनिकां गताम्।
घोररूपसमाचाराः क्रूराः क्रूरतरेक्षणाः ॥ २९ ॥
इह श्रुता मया देवि ! राक्षस्यो विकृताननाः।
असकृत्परुषैर्वाक्यैर्वदन्त्यो रावणाज्ञया ॥ ३० ॥

अतिलक्षणसम्पन्नम् आकाङ्क्षायोग्यतादिलक्षणसम्पन्नं व्याकरण-लक्षणसम्पन्नञ्च। माधुर्य्यञ्च श्रवणेन्द्रियानन्दजनकत्वम्। तद्रूपगुण एव भूषणं यस्य तत्। अष्टाङ्गया। शुश्रूषाश्रवणञ्चैव ग्रहणं धारणं तथा ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानञ्च धीगुणा इत्युक्ताष्टाङ्गबुद्ध्या युक्तम् ॥ २४ ॥

बलमायाससहिष्णुता। शौर्य्यं युद्धोत्साहः। सत्वं शारीरः सारः ॥ २५ ॥

तेजः पराभिभवसामर्थ्यम्। एवमाद्या बहवो गुणास्त्वय्येव सन्ति नान्यत्र ॥ २६ ॥

विकृता विकृताकारा: क्रूरा: क्रूरकचेक्षणा: ।
इच्छामि विविधैर्घातैर्हन्तुमेता: सुदारुणा: ॥ ३१ ॥
राक्षसो दारुणकथा वरमेतत् प्रयच्छ मे ।
मुष्टिभि: पार्ष्णिघातैश्च विशालैश्चैव बाहुभि: ॥ ३२ ॥
जङ्घाजानुप्रहारैश्च दन्तानाञ्चैव पीड़नै: ।
भक्षणै: कर्णनासानां केशानां लुञ्चनैस्तथा ॥ ३३ ॥
निपात्य हन्तुमिच्छामि तव विप्रियकारिणी: ।
एवम्प्रहारैर्बहुभि: सम्प्रहार्य्य यशस्विनि ॥ ३४ ॥
घातये तीव्ररूपाभिर्य्याभिस्त्वं तर्जिता पुरा ।
इत्युक्ता सा हनुमता कृपणा दीनवत्सला ॥ ३५ ॥
हनूमन्तमुवाचेदं चिन्तयित्वा विमृश्य च ।
राजसंश्रयवश्यानां कुर्वतीनां पराज्ञया ॥ ३६ ॥
विधेयानाञ्च दासीनां क: कुप्येद्वानरोत्तम! ।
भाग्यवैषम्यदोषेण पुरस्तात् दुष्कृतेन च ॥ ३७ ॥
मयैतत्प्राप्यते सर्वं स्वकृतं ह्युपभुज्यते ।

असम्भ्रान्त: तुष्ट्याऽविक्षतचित्त: । विनीतवत् विनीतार्हम् । २७ । ॥ २८ । २९ ॥ ३० ॥ ३१ ।

एतद्वरम् अपकारिराक्षसीगणवधरूपम् । ३२ । ३३ ॥ ३४ ॥ ३५ ।

राजसंश्रयादेव राजवश्यानां पराज्ञया कुर्वतीनां शुभमशुभं वेति शेष: । ३६ ।

मैवं वद महाबाहो ! दैवी ह्येषा परा गतिः ॥ ३८ ॥
प्राप्तव्यन्तु दशायोगान् मयैतदिति निश्चितम् ।
दासीनां रावणस्याहं मर्षयामीह दुर्बला ॥ ३९ ॥
आज्ञप्ता राक्षसेनेह राक्षस्यस्तर्जयन्ति माम् ।
हते तस्मिन् न कुर्वन्ति तर्जनं मारुतात्मज ! ॥ ४० ॥
अयं व्याघ्रसमीपेतु पुराणो धर्मसंहितः ।
ऋक्षेण गीतः श्लोकोऽस्ति तन्निबोध प्लवङ्गम ! ॥ ४१ ॥
न परः पापमादत्ते परेषां पापकर्मणाम् ।
समयो रक्षितव्यस्तु सन्तश्चारित्रभूषणाः ॥ ४२ ॥

पुरस्ताद्दुष्कृतेन पूर्वदुष्कृतेनेत्यर्थः ॥ ३७ ॥ ३८ ॥

रावणस्य दासीनामेतत्तर्जनादिकं दशायोगात् कर्मपरिपाककाल-सम्बन्धात् प्राप्तव्यमिति मया निश्चितम् । अतस्तत्कालसम्बन्धादेव दुर्बला-ऽहं तन्मर्षयामीत्यर्थः ॥ ३९ ॥

राक्षसीतर्जने राजाज्ञामूलत्वमन्वयव्यतिरेकाभ्यां दर्शयति । आ-ज्ञप्ता इति ॥ ४० ॥

ईदृशे विषये क्षमैवोचितेति इतिहासमुखेनाह,—अयमिति ॥ ४१ ॥

श्लोकमेवाह,—न पर इति । कश्चिदरण्ये व्याघ्रानुद्रुतः कश्चिद्व्याधो ऋक्षारूढं वृक्षमारुहत् । वृक्षमूलस्थो व्याघ्रो वृक्षस्थं ऋक्षं वन्याना-मस्माकं शत्रुममुं व्याधं वृक्षात् पातयेत्यब्रवीत् । एवमुक्तो ऋक्षः स्वाङ्कस्थमागतमेनं न पातयिष्यामि तथात्वे धर्महानिः स्यादित्युक्त्वा सुष्वाप । ततः ऋक्षं पातयेति व्याघ्रेणोदितो व्याधः ऋक्षमपातयत्

पापानां वा शुभानां वा वधार्हाणामथापि वा।
कार्य्यं कारुण्यमार्य्येण न कश्चिन्नापराध्यति ॥ ४३ ॥
लोकहिंसाविहाराणां क्रूराणां पापकर्मणाम्।
कुर्वतामपि पापानि नैव कार्य्यमशोभनम् ॥ ४४ ॥
एवमुक्तस्तु हनुमान् सीतया वाक्यकोविदः।
प्रत्युवाच ततः सीतां रामपत्नीमनिन्दिताम् ॥ ४५ ॥
युक्ता रामस्य भवती धर्मपत्नी गुणान्विता।
प्रतिसन्दिश मां देवि! गमिष्ये यत्र राघवः ॥ ४६ ॥
एवमुक्ता हनुमता वैदेही जनकात्मजा।

स ऋक्षोऽभ्यासबलेन शाखान्तरमवलम्ब्य नापतत्। तदनन्तरं कृताप-राधमेनं पातयेति पुनर्व्याघ्रेणोक्तोऽपि ऋक्षो बहुशः कृतापराधमप्येनं तुभ्यं न दास्यामीत्यभिधाय ररक्षेति पौराणिकी गाथेति तीर्थस्तत्र-त्योऽयं श्लोकः। परेषां पापकर्मणां परानुद्दिश्य पापं कुर्वतां परः प्राज्ञः पुरुषः पापं प्रत्यपकाररूपं नादत्ते न करोति। समयः अपकर्त्तृष्वपि प्रत्यपकारवर्जनरूप आचारो रक्षितव्य एव। हि यतः सन्तश्चारित्र-भूषणाः ॥ ४२ ॥

पापानां वा शुभानां वेति। शुभेष्विव पापेषु वधार्हेष्वपि आर्य्येण कारुण्यं कार्य्यं कर्त्तव्यम्। इतरौ वा शब्दौ वाक्यालङ्कारे। ननु साप-राधेष्ववश्यं दण्डः कार्य्योऽत आह,—न कश्चिदिति। कश्चिदपि नाप-राध्यतीति न। सर्वोऽप्यपराध्यत्येवेत्यर्थः। तस्मात् सर्वत्र दयैवोचितेति भावः ॥ ४३ ॥

साब्रवीत् द्रष्टुमिच्छामि भर्त्तारं भक्तवत्सलम् ॥ ४७ ॥
तस्यास्तद्वचनं श्रुत्वा हनूमान् मारुतात्मजः।
हर्षयन् मैथिलीं वाक्यमुवाचेदं महामतिः ॥ ४८ ॥
पूर्णचन्द्रमुखं रामं द्रक्ष्यस्यद्य सलक्ष्मणम्।
स्थितमित्रं हतामित्रं शचीवेन्द्रं सुरेश्वरम् ॥ ४९ ॥
तामेवमुक्त्वा भ्राजन्तीं सीतां साक्षादिव श्रियम्।
आजगाम महातेजा हनूमान् यत्र राघवः ॥ ५० ॥

सपदि हरिवरस्ततो हनूमान्
प्रतिवचनं जनकेश्वरात्मजायाः।
कथितमकथयद्यथाक्रमेण
त्रिदशवरप्रतिमाय राघवाय ॥ ५१ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
पञ्चदशाधिकशततमः सर्गः ॥ ११५ ॥

राक्षसानां परहिंसैव स्वभाव इत्यतोऽपि न वध्या इत्याह,—लोकेति। अशोभनं दारुणम् ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ॥ ५० ॥ ५१ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्धकाण्डे पञ्चदशाधिकशततमः सर्गः ॥ ११५ ॥

# षोडशाधिकशततमः सर्गः



तमुवाच महाप्राज्ञः सोऽभिवाद्य प्लवङ्गमः ।
रामं कमलपत्राक्षं वरं सर्वधनुष्मताम् ॥ १ ॥
यन्निमित्तोऽयमारम्भः कर्मणां यः फलोदयः ।
तां देवीं शोकसन्तप्तां द्रष्टुमर्हसि मैथिलीम् ॥ २ ॥
सा हि शोकसमाविष्टा बाष्पपर्याकुलेक्षणा ।
मैथिली विजयं श्रुत्वा द्रष्टुं त्वामभिकाङ्क्षति ॥ ३ ॥
पूर्वकात् प्रत्ययाच्चाहमुक्तो विश्वस्तया तया ।
द्रष्टुमिच्छामि भर्तारमिति पर्याकुलेक्षणा ॥ ४ ॥
एवमुक्तो हनुमता रामो धर्मभृतां वरः ।
आगच्छत् सहसा ध्यानमीषद्बाष्पपरिप्लुतः ॥ ५ ॥

तमुवाचेति ॥ १ ॥

आरम्भ उद्योगः । कर्मणां सेतुबन्धरावणवधादीनाम् । यः फलोदयः फलरूपः ॥ २ ॥ ३ ॥

पूर्वकात् प्रत्ययात् सन्देशकालिकादात्मीयोऽयमिति विश्वासाद्भर्तारं द्रष्टुमिच्छामीत्यहमुक्तः, अतः पर्याकुलेक्षणा आसीदिति शेषः ॥ ४ ॥

स दीर्घमभिनि:श्वस्य जगतीमवलोकयन्।
उवाच मेघसङ्काशं विभीषणमुपस्थितम् ॥ ६ ॥
दिव्याङ्गरागां वैदेहीं दिव्याभरणभूषिताम्।
इह सीतां शिर:स्नातामुपस्थापय मा चिरम् ॥ ७ ॥
एवमुक्तस्तु रामेण त्वरमाणो विभीषण:।
प्रविश्यान्त:पुरं सीतां स्त्रीभि: स्वाभिरचोदयत् ॥ ८ ॥
तत: सीतां महाभागां दृष्ट्वोवाच विभीषण:।
मूर्ध्नि बद्धाञ्जलि: श्रीमान् विनीतो राक्षसेश्वर: ॥ ९ ॥
दिव्याङ्गरागा वैदेहि ! दिव्याभरणभूषिता।
यानमारोह भद्रन्ते भर्त्ता त्वां द्रष्टुमिच्छति ॥ १० ॥
एवमुक्ता तु वैदेही प्रत्युवाच विभीषणम्।
अस्नात्वा द्रष्टुमिच्छामि भर्त्तारं राक्षसेश्वर ! ॥ ११ ॥
तस्यास्तद्वचनं श्रुत्वा प्रत्युवाच विभीषण:।

ध्यानमागच्छत्। परगृहोषिता परगृहे महान् लोकापवादो निर्दोषायाः परित्यागे च महान् दोष इति कार्य्यदौस्थ्यात् किं कर्त्तव्यमिति चिन्तयामासेत्यर्थः। वस्तुतो मुख्यसीतालाभोऽस्मेः कथं स्यादिति चिन्ता च ॥ ५ ॥ ६ ॥

दिव्याङ्गरागामिति। तैस्तस्याश्चपाधिक्याभिव्यक्तौ इदमैश्वर्य्यं मे उद्यम इति सर्वान् ज्ञापयितुमेवम्वादः ॥ ७ ॥ ८ ॥

ततः स्वस्त्रीणां तत्समीपगमनानन्तरम् ॥ ९ ॥ १० ॥

यथाह रामो भर्त्ता ते तत्तथा कर्त्तुमर्हसि ॥ १२ ॥
तस्य तद्वचनं श्रुत्वा मैथिली पतिदेवता ।
भर्तृभक्त्यावृता साध्वी तथेति प्रत्यभाषत ॥ १३ ॥
ततः सीतां शिरःस्नातां संयुक्तां प्रतिकर्मणा ।
महार्हाभरणोपेतां महार्हाम्बरधारिणीम् ॥ १४ ॥
आरोप्य शिबिकां सीतां राक्षसैर्बहुनोचितैः ।
राक्षसैर्बहुभिर्गुप्तामाजहार विभीषणः ॥ १५ ॥
सोऽभिगम्य महात्मानं ज्ञात्वापि ध्यानमास्थितम् ।
प्रणतश्च प्रहृष्टश्च प्राप्तां सीतां न्यवेदयत् ॥ १६ ॥
तामागतामुपश्रुत्य रक्षोगृहचिरोषिताम् ।

अस्नात्वा द्रष्टुमिच्छामि भर्त्तारं विनापि स्नानमकृत्वैव द्रष्टुमिच्छामीत्यर्थः ॥ ११ ॥

तस्यास्तद्वचनं स्नानाद्यनङ्गीकारवचनम् । यथा राम आह तथा कर्त्तुमर्हसि । तां दृष्ट्वा चारुसर्वाङ्गीं यानस्थां शोककर्शिताम् । मलोपचितसर्वाङ्गीं जटिलां कृष्णवाससम् । उवाच रामो वैदेहीं परामर्शविशङ्कित इति भारते तु मलोपचितेत्यर्द्धं पूर्वमिति शेषः ॥ १२ ॥

भर्तृभक्त्या आवृताऽन्विता ॥ १३ ॥ १४ ॥

स्त्रीयुक्तवाहनवहनोचितैः । परीक्षितैरित्यर्थः ॥ १५ ॥

ज्ञात्वापि विभीषणागमनं ज्ञात्वापि ध्यानमास्थितम् । अतःपरं किं वक्तव्यं किं कर्त्तव्यमिति चिन्तायुक्तमित्यर्थः ॥ १६ ॥

रोषं हर्षञ्च दैन्यञ्च राघवः प्राप शत्रुहा ॥ १७ ॥
ततो यानगतां सीतां सविमर्शं विचारयन्।
विभीषणमिदं वाक्यमहृष्टो राघवोऽब्रवीत् ॥ १८ ॥
राक्षसाधिपते! सौम्य! नित्यं मद्विजये रत।
वैदेहीसन्निकर्षं मे क्षिप्रं समभिगच्छतु ॥ १९ ॥
तस्य तद्वचनं श्रुत्वा राघवस्य विभीषणः।
तूर्णमुत्सारणं तत्र कारयामास धर्मवित् ॥ २० ॥
कञ्चुकोष्णीषिणस्तत्र वेत्रझर्झरपाणयः।
उत्सारयन्तस्तान् योधान् समन्तात् परिचक्रमुः ॥ २१ ॥
ऋक्षाणां वानराणाञ्च राक्षसानाञ्च सर्वशः।
वृन्दान्युत्सार्य्यमाणानि दूरमुत्तस्थुरन्ततः ॥ २२ ॥
तेषामुत्सार्य्यमाणानां निःस्वनः सुमहानभूत्।
वायुनोद्धूयमानस्य सागरस्येव निःस्वनः ॥ २३ ॥

रोषं सर्वानर्थमूलयाऽनया किल ससुहृद्बान्धवेनेदं बहुदुःखमनुभूतमिति रोषः। यद्वा रावणगृहे चिरोषितत्वनिमित्तकआरोपितौ रोषाभाविप्रपर्योपयोगौ। चिरवियुक्ताया अद्यदर्शनमिति हर्षः। चिरकालं मत्प्रतीक्षयानया बहुदुःखमनुभूतमिति दैन्यम् ॥ १७ ॥

अहृष्टः उक्तधर्मभयाक्रान्तत्वात् प्रकटहर्षरहितः ॥ १८ ॥ १९ ॥

उत्सारणम्। जनस्येति शेषः ॥ २० ॥

वेत्रैर्वेणुदण्डैर्झर्झरास्ताडप्रग्रन्थवन्तः पाणयो येषाम् ॥ २१ ॥

उत्सार्य्यमाणान् दृष्ट्वाथ जगत्यां जातसम्भ्रमान्।
दाक्षिण्यात्तदमर्षाच्च वारयामास राघवः॥ २४॥
संरम्भाच्चाब्रवीद्रामश्चक्षुषा प्रदहन्निव।
विभीषणं महाप्राज्ञं सोपालम्भमिदं वचः॥ २५॥
किमर्थं मामनादृत्य क्लिश्यतेऽयं त्वया जनः।
निवर्त्तयैनमुद्वेगं जनोऽयं स्वजनो मम॥ २६॥
न गृहाणि न वस्त्राणि न प्राकारस्तिरस्क्रिया।
नेदृशा राजसत्कारा वृत्तमावरणं स्त्रियः॥ २७॥
व्यसनेषु न कृच्छ्रेषु न युद्धेषु स्वयंवरे।
न क्रतौ नोविवाहे वा दर्शनं दूष्यते स्त्रियः॥ २८॥

उत्तस्थुः उत्थाय जग्मुः॥ २२॥ २३॥

दाक्षिण्यात् स्वभक्तवानरसेनासु दाक्षिण्यात् कृपाविशेषात्। तद-मर्षात्। मदाज्ञां विनोत्सारयतीति विभीषणेऽमर्षः॥ २४॥

संरम्भात् कोपात्॥ २५॥

एनमुद्वेगं निवर्त्तयास्य जनस्येति शेषः। कथमेवं युज्यते तत्राह,—जनोऽयमिति। स्वजनः भार्य्यादि स्वजनसदृश एव॥ २६॥

किञ्च व्यर्थोऽयं जनापसरणप्रयास इत्याह,—न गृहाणीति। गृहा-दिरयं तिरस्क्रिया आवरणा। ईदृशा जनापसरणादिव्यापारा न स्त्रिया आवरणं किन्तु राजसत्कार एव केवलं कृष्णचामरादिवत्। किं तर्ह्यावरणं तत्राह,—वृत्तमेवावरणमिति॥ २७॥

सैषा विपद्गता चैव कृच्छ्रेण च समन्विता।
दर्शने नास्ति दोषोऽस्या मत्समीपे विशेषतः ॥ २९ ॥
विसृज्य शिबिकां तस्मात् पद्भ्यामेवापसर्पतु।
समीपे मम वैदेहीं पश्यन्त्वेते वनौकसः ॥ ३० ॥
एवमुक्तस्तु रामेण सविमर्शो विभीषणः।
रामस्योपानयत् सीतां सन्निकर्षं विनीतवत् ॥ ३१ ॥
ततो लक्ष्मणसुग्रीवौ हनूमांश्च प्लवङ्गमः।
निशम्य वाक्यं रामस्य बभूवुर्व्यथिता भृशम् ॥ ३२ ॥
लज्जया त्ववलीयन्ती स्वेषु गात्रेषु मैथिली।
विभीषणेनानुगता भर्त्तारं साभ्यवर्त्तत ॥ ३३ ॥

अपि चेदानीं दर्शनमपि नास्या दोषायेत्याह,—व्यसनेष्विति। व्यसनं विपत्तिकालः। कृच्छ्रं पीड़ा ॥ २८ ॥

प्रकृते दर्शनस्यादोषत्वसाधकं धर्ममाह,—सैषेति ॥ २९ ॥

पश्यन्तु वैदेहीमित्यनुकर्षः ॥ ३० ॥

सविमर्शः एवम्वादादस्यां प्रायेणाभिमानो नास्ति जिघृक्षा च नास्ति। यदि तौ स्यातान्तदा राजपत्न्युचितमुपचारमनुमन्येतैवेति चिन्तायुक्त इत्यर्थः ॥ ३१ ॥

अनयैव बुद्ध्या लक्ष्मणादेरपि व्यथा ॥ ३२ ॥

लज्जयावलीयन्ती जनसमक्षं भर्तृसमीपस्थितिजन्यलज्जयावलीयन्ती सङ्कोचं गच्छन्ती ॥ ३३ ॥

विस्मयाच्च प्रहर्षाच्च स्नेहाच्च पतिदेवता ।
उदैक्षत मुखं भर्त्तुः सौम्यं सौम्यतरानना ॥ ३४ ॥

अथ समपनुदन्मनःक्लमं सा
सुचिरमदृष्टमुदीक्ष्य वै प्रियस्य ।
वदनमुदितपूर्णचन्द्रकान्तं
विमलशशाङ्कनिभानना तदासीत् ॥ ३५ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
षोड़शाधिकशततमः सर्गः ॥ ११६ ॥

विस्मयादिति । बहुमित्रपरिवारसम्पत्तिदर्शनजो विस्मयः । प्रिय-प्रियदर्शनजो हर्षः । ३४ ।

समपनुदत्समपानुदत् । ३५ ।

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्ध-काण्डे षोड़शाधिकशततमः सर्गः ॥ ११६ ॥

## सप्तदशाधिकशततमः सर्गः ।



तान्तु पार्श्वे स्थितां प्रह्वां रामः सम्प्रेक्ष्य मैथिलीम् ।
हृदयान्तर्गतं भावं व्याहर्त्तुमुपचक्रमे ॥ १ ॥
एषासि निर्जिता भद्रे ! शत्रुं जित्वा रणाजिरे ।
पौरुषाद्यदनुष्ठेयं मयैतदुपपादितम् ॥ २ ॥
गतोऽस्म्यन्तममर्षस्य धर्षणा सम्प्रमार्जिता ।
अवमानश्च शत्रुश्च युगपन्निहतौ मया ॥ ३ ॥
अद्य मे पौरुषं दृष्टमद्य मे सफलः श्रमः ।
अद्य तीर्णप्रतिज्ञोऽहं प्रभवाम्यद्य चात्मनः ॥ ४ ॥

तान्त्विति ॥ १ ॥

एषा त्वं शत्रुं जित्वा निर्जिता शत्रोः प्रत्याहृता । पौरुषात् पुरुषयत्नात् ॥ २ ॥

अमर्षस्य क्रोधस्यान्तङ्गतः । धर्षणा शत्रुकृतस्वदारहरणजन्याभिभवः ॥ ३ ॥

अद्य मे पौरुषं दृष्टम् । लोकैरिति शेषः । तीर्णप्रतिज्ञः तीर्णा-रावणवधविषया प्रतिज्ञा येन सः ॥ ४ ॥

या त्वं विरहिता नीता चलचित्तेन रक्षसा ।
दैवसम्पादितो दोषो मानुषेण मया जित: ॥ ५ ॥
सम्प्राप्तमवमानं यस्तेजसा न प्रमार्जति ।
कस्तस्य पौरुषेणार्थो महताप्यल्पचेतस: ॥ ६ ॥
लङ्घनञ्च समुद्रस्य लङ्कायाश्चापि मर्दनम् ।
सफलं तस्य च श्लाघ्यमद्य कर्म हनूमत: ॥ ७ ॥
युद्धे विक्रमतश्चैव हितं मन्त्रयतस्तथा ।
सुग्रीवस्य ससैन्यस्य सफलोऽद्य परिश्रम: ॥ ८ ॥
विभीषणस्य च तथा सफलोऽद्य परिश्रम: ।
विगुणं भ्रातरं त्यक्त्वा यो मां स्वयमुपस्थित: ॥ ९ ॥
इत्येवं वदत: श्रुत्वा सीता रामस्य तद्वच: ।
मृगीवोत्फुल्लनयना बभूवाश्रुपरिप्लुता ॥ १० ॥
पश्यतस्तान्तु रामस्य समीपे हृदयप्रियाम् ।
जनवादभयाद्राज्ञो बभूव हृदयं द्विधा ॥ ११ ॥

मया विरहिता या त्वच्चलचित्तेन रक्षसानीता असौ दैवसम्पादित-स्त्वद्दोषो मानुषेण मनुष्यसाध्यपराक्रमेण मयाजितोऽपनीतः ॥ ५ ॥ ६ ॥

अद्य सफलमित्यन्वयः ॥ ७ ॥ ८ ॥ ९ ॥

इत्येवं वदत इत्यर्थात् त्वया मे प्रयोजनं नास्तीति प्रतिपादनाद् दुःखेनाश्रुपरिप्लुता बभूव ॥ १० ॥

सीतामुत्पलपत्राक्षीं नीलकुञ्चितमूर्धजाम् ।
अपश्यद्वरारोहां मध्ये वानररक्षसाम् ॥ १२ ॥
अप्रमेयं मनुष्येण धर्षणां प्रतिमार्जता ।
तत्कृत रावणं हत्वा मयेदं मानकाङ्क्षिणा ॥ १३ ॥
निर्जिता जीवलोकस्य तपसा भावितात्मना ।
अगस्त्येन दुराधर्षा मुनिना दक्षिणेव दिक् ॥ १४ ॥
विदितश्चास्तु भद्रन्ते योऽयं रणपरिश्रमः ।
सुतीर्णः सुहृदां वीर्य्यान्न त्वदर्थं मया कृतः ॥ १५ ॥
रक्षता तु मया वृत्तमपवादञ्च सर्वतः ।
प्रख्यातस्यात्मवंशस्य न्यङ्गञ्च परिमार्जता ॥ १६ ॥
प्राप्तचारित्रसन्देहा मम प्रतिमुखे स्थिता ।
दीपो नेत्रातुरस्येव प्रतिकूलासि मे दृढ़ा ॥ १७ ॥
तद्गच्छ त्वाऽनुजानेऽद्य यथेष्टं जनकात्मजे ! ।

तद्रूपदर्शनादङ्गीकारबुद्धिः । जनवादभयात् त्यागबुद्धिः । भावसन्धिरयं ॥ ११ ॥ १२ ॥ १३ ॥

जीवलोकस्य दुराधर्षेत्यन्वयः । इल्वलवातापिभयादिति शेषः । रावणभयात् प्राणिमात्रस्य दुराधर्षा युद्धेन निर्जिता ॥ १४ ॥ १५ ॥

अपवादं स्वदारापहारिणं हन्तुं नाशक्नोदित्यपवादं परिमार्जता । न्यङ्गं नीचत्वं परिमार्जतेदं कृतमिति शेषः ॥ १६ ॥

एता दश दिशो भद्रे ! कार्य्यमस्ति न मे त्वया ॥ १८ ॥
कः पुमांस्तु कुले जातः स्त्रियं परगृहोषिताम् ।
तेजस्वी पुनरादद्यात् सुहृल्लोभेन चेतसा ॥ १९ ॥
रावणाङ्कपरिक्लिष्टां दृष्टां दुष्टेन चक्षुषा ।
कथं त्वां पुनरादद्यां कुलं व्यपदिशन् महत् ॥ २० ॥
यदर्थं निर्जिता मे त्वं सोऽयमासादितो मया ।
नास्ति मे त्वय्यभिष्वङ्गो यथेष्टं गम्यतामिति ॥ २१ ॥
तदद्य व्याहृतं भद्रे ! मयैतत् कृतबुद्धिना ।
लक्ष्मणेवाथ भरते कुरु बुद्धिं यथासुखम् ॥ २२ ॥
शत्रुघ्ने वाथ सुग्रीवे राक्षसे वा विभीषणे ।
निवेशय मनः सीते ! यथा वा सुखमात्मनः ॥ २३ ॥
न हि त्वां रावणो दृष्ट्वा दिव्यरूपां मनोरमाम् ।

नेत्रातुरस्य नेत्ररोगिणः ॥ १७ ॥ १८ ॥

सुहृल्लोभेन सुहृच्चिरकालसन्निध इति लोभोऽभिगृध्नुता यस्य तेन ॥१९॥

रावणस्य दुष्टेन चक्षुषा कामोपहतनेत्रेण दृष्टाम् । एवञ्च विगान-वदग्राह्यामित्यर्थः ॥ २० ॥ २१ ॥

कृतबुद्धिना निश्चितबुद्धिना । अस्मदीयेषु यत्र कुत्रापि तिष्ठे-त्याह,—लक्ष्मण इत्यादि ॥ २२ ॥

यथा वा सुखम् । स्वमातृपितृकुलेष्वेवेत्यर्थः ॥ २३ ॥

मर्षयत्यचिरं सीते ! स्वगृहे पर्य्यवस्थिताम् ॥ २४ ॥

ततः प्रियार्हश्रवणा तदप्रियं
प्रियादुपश्रुत्य चिरस्य मानिनी।
मुमोच बाष्पं रुदती तदा भृशं
गजेन्द्रहस्ताभिहतेव वल्लरी ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे सप्तदशाधिकशततमः सर्गः ॥ ११७ ॥

सर्वलोकस्य मम च त्वयि वृत्तः सन्देहो दुर्निवार इत्याह,—न हि त्वामित्यादि ॥ २४ ॥

प्रियार्हश्रवणा प्रियश्रवणार्हेत्यर्थः। गजेन्द्रहस्ताभिहता वल्लरी यथा बाष्पं मुमोचेत्यर्थः ॥ २५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्धकाण्डे सप्तदशाधिकशततमः सर्गः ॥ ११७ ॥

---

## अष्टदशाधिकशततमः सर्गः ।

एवमुक्ता तु वैदेही परुषं रोमहर्षणम् ।
राघवेण सरोषेण श्रुत्वा प्रव्यथिताभवत् ॥ १ ॥
सा तदाऽश्रुतपूर्वं हि जने महति मैथिली ।
श्रुत्वा भर्त्तुर्वचो घोरं लज्जयावनताभवत् ॥ २ ॥
प्रविशन्तीव गात्राणि स्वानि सा जनकात्मजा ।
वाक्शरैस्तैः सशल्येव भृशमश्रूण्यवर्त्तयत् ॥ ३ ॥
ततो बाष्पपरिक्लिन्नं प्रमार्जन्ती स्वमाननम् ।
शनैर्गद्गदया वाचा भर्त्तारमिदमब्रवीत् ॥ ४ ॥
किं मामसदृशं वाक्यमीदृशं श्रोत्रदारुणम् ।
रूक्षं श्रावयसे वीर ! प्राकृतः प्राकृतामिव ॥ ५ ॥

एवमिति ॥ १ ॥

जने महति महाजनसन्निधावित्यर्थः ॥ २ ॥ ३ ॥ ४ ॥

असदृशं त्वया वक्तुं मया श्रोतुञ्चायोग्यम् । रूक्षं परुषमतएव श्रोत्रदारुणं श्रवणकटु ॥ ५ ॥

न तथास्मि महाबाहो ! यथा मामवगच्छसि।
प्रत्ययं गच्छ मे स्वेन चारित्रेणैव ते शपे ॥ ६ ॥
पृथक्स्त्रीणां प्रचारेण जातिं त्वं परिशङ्कसे।
परित्यजैनां शङ्कान्तु यदि तेऽहं परीक्षिता ॥ ७ ॥
यदहं गात्रसंस्पर्शं गतास्मि विवशा प्रभो ! ।
कामकारो न मे तत्र दैवं तत्रापराध्यति ॥ ८ ॥
मदधीनन्तु यत्तन्मे हृदयं त्वयि वर्त्तते।
पराधीनेषु गात्रेषु किं करिष्याम्यनीश्वरी ॥ ९ ॥

यथा त्वमवगच्छसि दुष्टेयमिति तथा नास्मि। स्वेन चारित्रेण पातिव्रत्यसच्छयेन ते शपे शपथेन तव प्रत्ययं सम्पादयिष्ये। ततो मे प्रत्ययं गच्छ ॥ ६ ॥

पृथक्स्त्रीणां प्रचारेण चारित्रदर्शनेन हेतुना जातिं स्त्रीजातिं परिशङ्कसे दुष्टां मन्यसे। इदमनुचितमिति शेषः। यदि ते त्वयाहं परीक्षिता तदेमां शङ्कां त्यज ॥ ७ ॥

ननु का ते परीक्षा रक्षोऽङ्गस्पृष्टायास्तत्राह,—यदहमिति। विवशाऽस्वाधीना सती गात्रसंस्पर्शं गतास्मि प्राप्तास्मि। तत्र मे कामकारो न इच्छापूर्वकता न। तत्र बलात् स्पर्शे दैवमेवापराध्यति अपराधं कारितवत्। दैवमेवात्र कारणं न मेऽपराध इति भावः ॥ ८ ॥

स्वतो दोषजनकं कर्म तु मे नास्तीत्याह,—मदधीनमिति। परैर्ग्रहीतुमशक्यमित्यर्थः। पराधीनेषु परैर्ग्रहीतुं शक्येषु दैवाधीनेषु

सहसंवृद्धभावेन संसर्गेण च मानद ! ।
यदि तेऽहं न विज्ञाता हता तेनास्मि शाश्वतम् ॥ १० ॥
प्रेषितस्ते महावीरो हनुमानवलोकक: ।
लङ्कास्थाहं त्वया राजन् ! किं तदा न विसर्जिता ॥ ११ ॥
प्रत्यक्षं वानरस्यास्य तद्वाक्यसमनन्तरम् ।
त्वया सन्त्यक्तया वीर ! त्यक्तं स्याज्जीवितं मया ॥ १२ ॥
न वृथा ते श्रमोऽयं स्यात् संशयेत् यस्य जीवितम् ।
सुहृज्जनपरिक्लेशो न चायं विफलस्तव ॥ १३ ॥

च । यस्याश्चायाक्षि तदधीनानि गात्राणि । तयैतदर्थमेवैषां निर्मा-
णात् । हृदयन्तु तदीयमेवाप्नोति भावः ॥ ६ ॥

सह युगपत् संवृद्धो भावः परस्परानुरागलक्षणस्तेन संसर्गेण
चिरकालसहवासेन च यद्यहं ते त्वया गुणवत्त्वेन न विज्ञाता तेन त्वद्-
त्यागेन हेतुनाहं शाश्वतं हता चिरकालं दुःखमग्ना जाता ॥ १० ॥

अवलोककः अवलोकितुमन्वेष्टुमित्यर्थः । तदा किं न त्वया विस-
र्जिता पुनरङ्गीकाराभावं किमिति न ज्ञापिता ॥ ११ ॥

तदोक्तौ को विशेषस्तत्राह,—प्रत्यक्षमिति । एवञ्च तदैव जीव-
त्यागे एतावत्पर्य्यन्तं महती त्वद्वियोगव्यथा न स्यादिति भावः ॥ १२ ॥

जीवितं संशयेत् यस्य युद्धे जयस्य सन्दिग्धत्वात् संशये प्रतिष्ठाप्य
योद्धव्यं तथा श्रमः क्लेशः स न कर्त्तव्यः स्यात् । तथा विफलः सुहृज्जन-
परिक्लेशश्च न कर्त्तव्यो भवेत् ॥ १३ ॥

त्वया तु नृपशार्दूल! रोषमेवानुवर्त्तता।
लघुनेव मनुष्येण स्त्रीत्वमेव पुरस्कृतम्॥ १४॥
अपदेशो मे जनकान्नोत्पत्तिर्वसुधातलात्।
मम वृत्तञ्च वृत्तज्ञ! बहु ते न पुरस्कृतम्॥ १५॥
न प्रमाणीकृतः पाणिर्बाल्ये मम निपीडितः।
मम भक्तिश्च शीलञ्च सर्वं ते पृष्ठतः कृतम्॥ १६॥
इति ब्रुवन्ती रुदती बाष्पगद्गदभाषिणी।
उवाच लक्ष्मणं सीता दीनं ध्यानपरायणम्॥ १७॥
चितां मे कुरु सौमित्रे! व्यसनस्यास्य भेषजम्।
मिथ्यापवादोपहता नाहं जीवितुमुत्सहे॥ १८॥
अप्रीतेन गुणैर्भर्त्रा त्यक्ताया जनसंसदि।
या क्षमा मे गतिर्गन्तुं प्रवेक्ष्ये हव्यवाहनम्॥ १९॥

स्त्रीत्वमेव प्राकृतसाधारणस्त्रीजातिरेव पुरस्कृतं चिन्तिता॥ १४॥

मेऽपदेशो वैदेहीत्यादिव्यवहारो जनकाज्जनकयज्ञभूमिसम्बन्धमात्रात्। नोत्पत्तिर्जनकादित्यनुकर्षः। कुतस्तर्हि सा तत्राह,—वसुधातलात्। एवं मनुष्ययोन्यनुत्पत्तिरप्राकृतस्त्रीत्वमपपादितात्मा। तथा मे बहुमानार्हं वृत्तचारित्रञ्च ते त्वया न पुरस्कृतम् अपरित्यागे हेतुत्वेन न विचारितम्॥ १५॥

किञ्च बाल्ये कृतं धर्मप्रयोजकं पाणिग्रहणमपि त्वया परित्यागे न प्रमाणीकृतम्॥ १६॥ १७॥ १८॥

एवमुक्तस्तु वैदेह्या लक्ष्मणः परवीरहा।
अमर्षवशमापन्नो राघवं समुदैक्षत॥ २०॥
स विज्ञाय मनश्छन्दं रामस्याकारसूचितम्।
चिताञ्चकार सौमित्रिर्मते रामस्य वीर्य्यवान्॥ २१॥
न हि रामं तदा कश्चित् कालान्तकयमोपमम्।
अनुनेतुमथो वक्तुं द्रष्टुं वाप्यशकत्सुहृत्॥ २२॥
अधोमुखं स्थितं रामं ततः कृत्वा प्रदक्षिणम्।
उपावर्त्तत वैदेही दीप्यमानं हुताशनम्॥ २३॥
प्रणम्य दैवतेभ्यश्च ब्राह्मणेभ्यश्च मैथिली।
बद्धाञ्जलिपुटा चेदमुवाचाग्निसमीपतः॥ २४॥
यथा मे हृदयं नित्यन्नापसर्पति राघवात्।
तथा लोकस्य साक्षी मां सर्वतः पातु पावकः॥ २५॥
यथा मां शुद्धचारित्रां दुष्टां जानाति राघवः।
तथा लोकस्य साक्षी मां सर्वतः पातु पावकः॥ २६॥

गुणैरप्रीतेन भर्त्रा जनसंसदि त्यक्ताया या गतिः क्षमा तां गतिं गन्तुं हव्यवाहनं प्रवेक्ष्ये। अप्रीतस्य गुणैर्भर्त्तुरिति पाठान्तरम्। तत्रापि शेषे षष्ठी॥ १९॥ २०॥

मनश्छन्दं मनोभिप्रायम्। आकारसूचितं भ्रूभङ्गाद्याकारसूचितम्॥ २१॥ २२॥ २३॥ २४॥ २५॥

एवमुक्त्वा तु वैदेही परिक्रम्य हुताशनम्।
विवेश ज्वलनं दीप्तं निःशङ्केनान्तरात्मना ॥ २७ ॥
जनश्च सुमहांस्तत्र बालवृद्धः समाकुलः।
ददर्श मैथिलीं दीप्तां प्रविशन्तीं हुताशनम् ॥ २८ ॥
सा तप्तनवहेमाभा तप्तकाञ्चनभूषणा।
पपात ज्वलनं दीप्तं सर्वलोकस्य सन्निधौ ॥ २९ ॥
ददृशुस्तां विशालाक्षीं पतन्तीं हव्यवाहनम्।
सीतां सर्वाणि रूपाणि रुक्मवेदिनिभान्तदा ॥ ३० ॥
ददृशुस्तां महाभागां प्रविशन्तीं हुताशनम्।
ऋषयो देवगन्धर्वा यज्ञे पूर्णाहुतीमिव ॥ ३१ ॥
प्रचुक्रुशुः स्त्रियः सर्वास्तां दृष्ट्वा हव्यवाहने।
पतन्तीं संस्कृतां मन्त्रैर्वसोर्धारामिवाध्वरे ॥ ३२ ॥

राघवः शुद्धचारित्रामदुष्टामेव मां यदि दुष्टां जानाति। अहं तथा चेत् अदुष्टा चेत्पावको मां सर्वतः पातु। केशाम्बरादिकमपि मा धाक्षीदित्यर्थः ॥ २६ ॥ २७ ॥ २८ ॥

सा तप्तेत्यादि। एतदर्थमेव स्नाताया अलङ्कारयुताया आनयनं कारितम् ॥ २९ ॥

सर्वाणि रूपाणि सर्वाणि भूतानि। सर्वाणि रूपाणि विचित्य धीरः इत्यादौ तद्बोधकतया प्रसिद्धो रूपशब्दः ॥ ३० ॥ ३१ ॥

वसोर्धारां सन्ततां घृतधाराम् ॥ ३२ ॥

दहशुस्तां ततो लोका देवगन्धर्वदानवाः ।
भ्रष्टां पतन्तीं निरये त्रिदिवाद्देवतामिव ॥ ३३ ॥
तस्यामग्निं विशन्त्यान्तु हाहेति विपुलः स्वनः ।
रक्षसां वानराणाञ्च बभूवाद्भुतोपमः ॥ ३४ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे अष्ट-
दशाधिकशततमः सर्गः ॥ ११८ ॥

भ्रष्टां शापं प्राप्तामतएव त्रिदिवान्निरये मनुष्ययोन्यादौ पत-
न्तीम् ॥ ३३ ॥

अद्भुतोपमः आश्चर्यमित्युपमाख्यानं यत्रवक्तौ सः ॥ ३४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्ध-
काण्डे अष्टदशाधिकशततमः सर्गः ॥ ११८ ॥

---

## एकोनविंशाधिकशततमः सर्गः ।



ततो हि दुर्मना रामः श्रुत्वैवं वदतां गिरः ।
दध्यौ मुहूर्त्तं धर्मात्मा बाष्पव्याकुललोचनः ॥ १ ॥
ततो वैश्रवणो राजा यमश्च पितृभिः सह ।
सहस्राक्षश्च देवेशो वरुणश्च जलेश्वरः ॥ २ ॥
षड़र्धनयनः श्रीमान् महादेवो वृषध्वजः ।
कर्त्ता सर्वस्य लोकस्य ब्रह्मा ब्रह्मविदाम्बरः ॥ ३ ॥

ततो हीति । एवं वदतां हाहेति वदतां सर्वेषां मार्त्ता गिरः श्रुत्वा ततो हि तत एव दुर्मनाः खिन्नचित्तो रामो बाष्पव्याकुललोचनः प्राकृतस्त्रीवत्सीता एतदनर्हेति तद्वियोगतो बाष्पव्याकुललोचनो भूत्वा मुहूर्त्तं दध्यौ किमुक्तं किं कृतं किञ्चातः परं कर्त्तव्यमिति चिन्तापरो बभूव ॥१॥

अत्रावसरे दिक्पालसहितो रुद्रो हिरण्यगर्भश्च रामानुग्रहाय समागता इत्याह,—तत इत्यादि ॥ २ ॥

षड़र्धनयनः श्रीमान् । षड़र्धनयनस्त्रिनेत्र इत्यर्थः । सर्वलोकस्य ब्रह्मलोकपर्य्यन्तं सर्वलोकवर्त्तिपदार्थानां स्रष्टा । ब्रह्मविदां चतुर्मुखप्रजापतिविष्णुदेवराजादिदिक्पालवसिष्ठाद्यृषितत्सन्तानजब्राह्मणा ब्रह्मविदस्तेषाम्बरो ज्येष्ठो हिरण्यगर्भः । यो वै ब्रह्माणं विदधाति पूर्वं

एते सर्वे समागम्य विमानैः सूर्यसन्निभैः ।
आगम्य नगरीं लङ्कामभिजग्मुश्च राघवम् ॥ ४ ॥
ततः सहस्ताभरणान् प्रगृह्य विपुलान् भुजान् ।
अब्रुवं स्त्रिदशश्रेष्ठा राघवं प्राञ्जलिं स्थितम् ॥ ५ ॥
कर्त्ता सर्वस्य लोकस्य श्रेष्ठो ज्ञानविदां विभुः ।
उपेक्षसे कथं सीतां पतन्तीं हव्यवाहने ।
कथं देवगणश्रेष्ठमात्मानन्नावबुध्यसे ॥ ६ ॥
ऋतधामा वसुः पूर्वं वसूनाञ्च प्रजापतिः ।
त्रयाणामपि लोकानामादिकर्त्ता स्वयं प्रभुः ॥ ७ ॥

यो वै वेदांश्च प्रहिणोति तस्मै इति श्रुतेर्हिरण्यगर्भः समवर्त्तताग्रे इति श्रुतेश्च । ३ ।

एते सर्वे विमानैर्लङ्कामागम्य राघवमभिजग्मुः ॥ ४ ॥

प्रगृह्य उद्यम्य । भारते त्वग्निप्रवेशं सीताया अनुज्ञा रामस्य चारित्र्यसन्देहे सीतादुःखं दृष्ट्वा वायुप्रभृतय आहुरित्येव सीताङ्गीकार उक्तस्तथानुक्ताप्यग्निप्रवेशो मध्ये द्रष्टव्य इत्याहुः । पाद्मे तु । सा तेन गर्हिता साध्वी विवेश ज्वलनन्तदेत्युक्तम् ॥ ५ ॥

कर्त्ता सर्वस्येति । मनुष्यदेहे राघवे सर्वलोककर्तृत्वायुक्तिमूलकल्पाभिप्रायेण । ज्ञानविदाम् औपनिषद्ज्ञानवताम् । देवगणा इन्द्रादयस्तेषां श्रेष्ठम् । विष्णुमुखा वै देवा इति श्रुतेः । ६ ।

ऋतधामेत्यादि श्लोकत्रयं कतकासम्मतम् । तीर्थस्त्वेवं व्याचष्टे । पूर्वं पूर्वस्मिन् कल्पे स्रष्टः पूर्वं वा वसूनां मध्ये ऋतधामा नाम वसुः ।

रुद्राणामष्टमो रुद्रः साध्यानामपि पञ्चमः।
अश्विनौ चापि कर्णौ ते सूर्य्याचन्द्रमसौ दृशौ॥ ८॥
अन्ते चादौ च मध्ये च दृश्यसे च परन्तप!।
उपेक्षसे च वैदेहीं मानुषः प्राकृतो यथा॥ ९॥
इत्युक्तो लोकपालैस्तैः स्वामी लोकस्य राघवः।
अब्रवीत् त्रिदशश्रेष्ठान् रामो धर्मभृताम्वरः॥ १०॥
आत्मानं मानुषं मन्ये रामं दशरथात्मजम्।
सोऽहं यश्च यतश्चाहं भगवांस्तत् ब्रवीतु मे॥ ११॥

आदिकर्त्ता ब्रह्माण्डाधिपतिरूपादिसृष्टिकर्त्ता। स्वयम्प्रभुः इतरा-नियम्यः॥ ७॥

अष्टमो रुद्रो महादेवः। साध्यानामपि पञ्चमः वीर्य्यवान्नामा। विराड्रूपं वर्णयति। अश्विनौ चेत्यादि॥ ८॥

अन्ते चादौ चेत्यनेन सर्वभूततत्त्वं त्वमेवेति सूचितम्॥ ९॥

लोकपालैरिन्द्रादिब्रह्मान्तैः पूर्वोक्तैः। लोकस्य भूलोकस्येदानीं साक्षात् स्वामीराघवो रघुकुलजः॥ १०॥

अथ ब्रह्मानुग्रहादेव ब्रह्मविद्योन्मुखस्य भुक्त्यादिसिद्धतया तदोन्मुख्यस्यात्मानन्नावबुध्यसे इति ब्रह्मणैव ज्ञातत्वात् तज्जिज्ञासुरिव स्वीयानां स्वस्वरूपबोधनाय ब्रह्माणमनुवमन्य इवोपासदित्याहात्मानमिति। अहमात्मानमात्मस्वरूपं सामान्यतोऽहन्त्वेन प्रतीयमानं दशरथपुत्रं रामनामकं मनुष्यजातीयपिण्डमेवमन्ये न तु ततोऽतिरिक्तं किञ्चिद्वेद्मि। भवद्भिरप्युक्तं स्वात्मानन्नावबुध्यसे इति। एवञ्च सोऽहमेवम्भूताह

इति ब्रुवाणं काकुत्स्थं ब्रह्मा ब्रह्मविदाम्बरः।
अब्रवीत् शृणु मे वाक्यं सत्यं सत्यपराक्रम ! ॥ १२ ॥
भवान्नारायणो देवः श्रीमांश्चक्रायुधः प्रभुः।
एकशृङ्गो वराहस्त्वं भूतभव्यसपत्नजित् ॥ १३ ॥
अक्षरं ब्रह्म सत्यञ्च मध्ये चान्ते च राघव !।
लोकानान्त्वं परो धर्मो विष्वक्सेनश्चतुर्भुजः ॥ १४ ॥

बुद्धिमान् यश्च परमार्थतो यत् तत्त्वो यतश्च यत्प्रकृतिकश्च तत्सर्वं भगवान् सर्वज्ञः परमगुरुर्मे मह्यमनाय जिज्ञासवे ब्रवीतूपदिशतु। अयमेव ब्रह्मविद्योपदेशमार्गः सर्वत्र श्रुतिस्मृतिषु प्रसिद्धः ॥ ११ ॥

इति ब्रुवाणं जिज्ञासवेमह्यं ब्रवीत्विति ब्रुवाणम्। वाक्यं देहदेहितत्त्वोपदेशरूपम् ॥ १२ ॥

नारञ्जीवसमूहात्मकं स्थानं यस्य स विराड्रूपो नारायणपदवाच्यो यः सत्वमसि। देवः स्वप्रकाशः। विराट्चिह्नान्याह,—चक्रेति। इदं शङ्खगदादेरप्युपलक्षणम्। एकशृङ्गो वराह एकदंष्ट्रोधरणीवराहः। अयं विराट्विष्णुमूर्त्तिभेदः। भूतभव्यसपत्नजिद्भूतभव्यकालरूपो यः सपत्नो अनिष्टतिहेतुत्वात् तं जयति सः। नित्य इति यावत् ॥ १३ ॥

तदेवाह,—अक्षरमिति। यदक्षरं मध्ये चान्तेचादादौ च। सत्यमप्रच्युतस्वरूपं तत्त्वम्। यत् ब्रह्मतदेवत्वमसीति शेषः। लोकानां धर्माधिष्ठातप्राणिनां त्वमेव परमो धर्मः। यज्ञो वै विष्णुरित्यादि श्रुतेरश्वमेधात्मधर्मस्त्वमेव। विष्वचः सर्वगताः सेनानि यामकगणा यस्य। चतुर्भुजः शङ्खगिरसनदसभुजचतुष्टयवान् ॥ १४ ॥

शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः ।
अजितः खड्गधृग्विष्णुः कृष्णश्चैव बृहद्बलः ॥ १५ ॥
सेनानीर्ग्रामणीः सर्वं त्वं बुद्धिस्त्वं क्षमा दमः ।
प्रभवश्चाप्ययश्च त्वमुपेन्द्रो मधुसूदनः ॥ १६ ॥
इन्द्रकर्मा महेन्द्रस्त्वं पद्मनाभो रणान्तकृत् ।
शरण्यं शरणञ्च त्वामाहुर्दिव्या महर्षयः ॥ १७ ॥

शार्ङ्गधन्वा कालरूपं शार्ङ्गं धनुर्यस्य । हृषीकेश इति । हृषीकाणामिन्द्रियाणामीशो नियन्ता । पुरुष इति । पुरूणि फलानि सनोति ददाति स पुरुषः । पुरु हृदयपुण्डरीके शेतइति वा पूर्णत्वात् वा पुरुषः । तेनेदं पूर्णं पुरुषेण सर्वमिति श्रुतेः । पुरुषोत्तमः यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम इति स्मृतेः । अजितः पाप्मनाऽरिभिश्चाजितः । खड्गधृक् विद्याख्यनन्दकखड्गधृक् । विष्णुः सर्वव्यापकः । कृष्णाःसदर्थः । बृहद्बल इति । अशेषब्रह्माण्डस्य लीलाकन्दुकवद्धारणक्षमबृहद्बलः ॥ १५ ॥

सेनानी राजसेनापतिश्च । ग्रामणी मन्त्री । सर्वं जगत्त्वमेव । बुद्धिर्निश्चयात्मिका । क्षमा भक्तापराधसहिष्णुता । दम इन्द्रियनिग्रहः । तद्धर्मकत्वात् तदात्मत्वव्यपदेशः । प्रभवाप्ययौ सृष्टिप्रलयौ तत्कारणत्वात् तद्व्यपदेशः । उपेन्द्रादयस्तवैव मूर्तिभेदाः ॥ १६ ॥

प्रजापतिरिन्द्रमसृजतेत्युक्तेरिन्द्रः कर्मकृद्यस्य स इन्द्रकर्मा । महेन्द्रः सकलेशिता । पद्मं वैराजनाभौ यस्य सः । रणान्तकृत् रणे शत्रूणां नाशकर्त्ता । शरण्यं शरणत्वेन प्राप्यम् । शरणं रक्षकत्वामेवाहुः । परित्राणाय साधूनामित्युक्तेः ॥ १७ ॥

सहस्रशृङ्गो वेदात्मा शतशीर्षो महर्षभः ।
त्वं त्रयाणां हि लोकानामादिकर्त्ता स्वयम्प्रभुः ॥ १८ ॥
सिद्धानामपि साध्यानामाश्रयश्चासि पूर्वजः ।
त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारः परात्परः ॥ १९ ॥
प्रभवं निधनञ्चापि नो विदुः को भवानिति ।
दृश्यसे सर्वभूतेषु गोषु च ब्राह्मणेषु च ॥ २० ॥
दिक्षु सर्वासु गगने पर्वतेषु नदीषु च ।
सहस्रचरणः श्रीमान् शतशीर्षः सहस्रदृक् ॥ २१ ॥
त्वं धारयसि भूतानि पृथिवीं सर्वपर्वतान् ।
अन्ते पृथिव्याः सलिले दृश्यसे त्वं महोरगः ॥ २२ ॥

सहस्रशृङ्गोऽनेकशाखामयशृङ्गवान् । वेदात्मा वेदस्वरूपः शतशीर्षोऽनेकविधिमयशिरोयुक्तः । महर्षभः श्रेष्ठतमः । शिशुमार प्रजापतिरूप इत्यर्थ इति कतकः । त्रयाणां लोकानाम् । सर्वप्रजानामित्यर्थः । स्वयं प्रभुः अनन्यप्रेर्य्यः ॥ १८ ॥

सिद्धानामारूढानां साध्यानामारुरुक्षूणामाश्रयः प्राप्यः पूर्वजश्चासि । अहमस्मि प्रथमजा ऋतस्येत्यादि श्रुतेः ॥ १९ ॥

तव प्रभावाद्यपि न जानन्ति को भवानिति चेदन्यथा न जानन्ति । सार्वात्म्येन त्वाति । दृश्यस इति । सर्वभूतेषु गोष्वित्यादि । उत्तमचेतनेष्वपीत्यर्थः । दृश्यसेऽन्तर्य्यामितया श्रूयसे ॥ २० ॥

अत्यन्तमचेतनेष्वपि त्वमन्तर्य्यामीत्याह,—दिक्ष्विति ॥ २१ ॥

त्रीन् लोकान् धारयन् राम ! देवगन्धर्वदानवान्।
अहं ते हृदयं राम ! जिह्वा देवी सरस्वती ॥ २३ ॥
देवा रोमाणि गात्रेषु ब्रह्मणा निर्मिताः प्रभो ! ।
निमेषस्ते स्मृता रात्रिरुन्मेषो दिवसस्तथा ॥ २४ ॥
संस्कारास्त्वभवन् वेदा नैतदस्ति त्वया विना ।
जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधातलम् ॥ २५ ॥

त्वमेव सहस्रचरणत्वादिविशिष्टानन्तरूपो भूत्वा पृथिव्यादीं-स्तद्वर्त्तिभूतानि च धारयसि। तथान्ते प्रलयान्ते पृथिव्या उपरिवर्त्तिनि सलिले त्वं महोरगशयनो दृश्यसे। एवञ्च पृथिव्या अध उपरि च प्रतिष्ठितस्सर्वशक्तिस्त्वमित्युक्तम् ॥ २२ ॥

हे राम त्रीन् लोकान् धारयन् त्वं विराट् नारायणोऽसीत्यर्थः। एतेन यतस्त्वाहमुत्पन्न इति प्रश्नस्योत्तरं दत्तम्। एवं देहत्वमुपदिश्य देहित्वमुपदिशति। अहं ते हृदयमिति। हे राम ते शरीरोपचयस्य तव हृदयं सर्वाधारभूतमान्तरं त्वदात्मतत्त्वमहमेव आत्मस्वरूपः। महाकाश इव घटाकाशस्य। तव जिह्वा मन्निर्मिता वाग्देवी सरस्वती ॥ २३ ॥

देवा इन्द्रियदेवा दिग्वातार्कादयश्च गात्रेषु श्रोत्रादिषु ब्रह्मणा मया निर्मिताः। रोमाणि च निर्मितान्योषधिवनस्पत्यादिनेति शेषः। निमेषोन्मेषौ च रात्रिदिवसत्वेन प्रसिद्धौ ॥ २४ ॥

संस्काराः संस्क्रियन्ते बोध्यन्त एभिर्वाक्या इति संस्काराः प्रवृत्ति-निवृत्तिबोधकाः। नैतदस्तीति। त्वया विना यदस्ति तत्किमपि नेत्यर्थः।

अग्निः कोपः प्रसादस्ते सोमः श्रीवत्सलक्षणः।
त्वया लोकास्त्रयः क्रान्ताः पुरा स्वैर्विक्रमैस्त्रिभिः॥ २६॥
महेन्द्रश्च कृतो राजा बलिं बद्ध्वा सुदारुणम्।
सीता लक्ष्मीर्भवान् विष्णुर्देवः कृष्णः प्रजापतिः॥ २७॥
वधार्थं रावणस्येह प्रविष्टो मानुषीं तनुम्।
तदिदं नस्त्वया कार्य्यं कृतं धर्मभृतां वर !॥ २८॥
निहतो रावणो राम ! प्रहृष्टो दिवमाक्रम।
अमोघं देववीर्य्यं ते न ते मोघाः पराक्रमाः॥ २९॥

कार्य्यकारणरूपं सर्वं जगत्ते शरीरम्। स्थैर्य्यमर्थिषप्रजानित्यधारणसामर्थ्यम्। वसुधातलं भूतत्त्वमेव॥ २५॥

ते कोपोऽग्निः। ते प्रसादः सोमः। त्वया वामनात्मनावतीर्णेन पुरा पूर्वं त्रिभिर्विक्रमैस्त्रयो लोका भूर्भुवः स्वः स्वरूपाः क्रान्ताः॥ २६॥

बलिं बद्ध्वा महेन्द्रश्च राजा कृतः। सीता लक्ष्मीः प्रसिद्धविष्णुपत्न्यभिन्नतत्त्ववत्त्वात्। यो विष्णुः स भवान् देवः प्रकाशरूपः। कृष्णः कृष्णवर्णः। प्रजापतिस्तदभिन्नतत्त्वः॥ २७॥

स एव त्वं रावणस्य वधाय मानुषीं तनुं प्रविष्टोऽसि। माययेति शेषः। एवं तत्त्वेन त्वया तदिदं रावणवधरूपं नः सर्वेषां देवानां कार्य्यम् कृतम्॥ २८॥

अथ कृतानुष्ठानानुवादपूर्वं वर्त्तिष्यमाणकर्त्तव्यमाह,—निहत इति। रावणो निहतः। एवञ्चावतारकार्य्यं निष्पन्नमतःपरं महाराज्येन किञ्चि

अमोघं दर्शनं राम ! अमोघस्तव संस्तवः।
अमोघास्ते भविष्यन्ति भक्तिमन्तो नरा भुवि ॥ ३० ॥
ये त्वां देवं ध्रुवं भक्ताः पुराणं पुरुषोत्तमम्।
प्राप्नुवन्ति तथाकामानिह लोके परत्र च ॥ ३१ ॥
इममार्षस्तवं दिव्यमितिहासं पुरातनम्।

त्वालं प्रहृष्टः सन् दिवं परमाकाख्यं ब्रह्मलोकमाक्रम प्राप्नुहि। एवं सिद्धकार्य्यत्वात्ते वीर्य्यं बलममोघं तन्मूलाः पराक्रमाश्च न मोघा न निष्फला अपि तु सफला एवेत्यर्थः ॥ २९ ॥

अथ रामस्य सर्वोपास्यत्वं सर्वाभीष्टसिद्धिप्रदत्वञ्चाहामोघमिति। हे राम ते दर्शनं सुग्रीवादीनाममोघम्। एवं कालान्तरे श्रुत्वा चित्ततद्दृष्टृणामप्यमोघम् ऐहिकामुष्मिकसकलफलसाधनम्। तव संस्तवो रामनारायणेत्येवंरूपोऽमोघः सकलेष्टदः। ये च त्वयि भक्तिमन्तः सोऽहमेवेति गौणवृत्त्या त्वदुपासकास्तवाहमिति वोपासकास्तेऽप्यमोघं संसारमार्गमतिक्रान्ताः सत्यसङ्कल्पत्वादिमन्तः सन्तो मल्लोकप्राप्तिरूपामोघफला भविष्यन्ति किं पुनर्ये सर्वात्मना त्वदभेदध्यानवन्त इत्यर्थः ॥ ३० ॥

उक्तमर्थमुपसंहरति दार्ढ्याय। ये त्वामिति ॥ ३१ ॥

इदानीं तत्परैतत्स्तोत्रपाठफलमुपदिशति। इममिति। ऋषिर्वेदस्तदुक्तसगुणनिर्गुणब्रह्मविद्याप्रतिपादकत्वादार्षः स चासौ स्तवश्चेत्यार्षस्तव स्तम्। अतएव दिव्यम्। पुरातनं पुराणवृत्तप्रतिपादकम्। इतिहासम् अनादिसिद्धपुरातनब्रह्मविद्याप्रतिपादकत्वात्। एवम्भूतं ब्रह्म-

ये नराः कीर्त्तयिष्यन्ति नास्ति तेषां पराभवः ॥ ३२ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे एकोन-
दशाधिकशततमः सर्गः ॥ ११९ ॥

विद्यास्तवं ये कीर्त्तयिष्यन्ति तेषां पराभवः परैरिहामुत्रलोकशत्रुभिः पुत्रदारादिभिः पापैश्चाभिभव आक्रमणं नास्ति न भविष्यति च । ३२ ।

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्ध-
काण्डे एकोनदशाधिकशततमः सर्गः ॥ ११९ ॥

---

## विंशोत्तरशततमः सर्गः।



एतच्छ्रुत्वा शुभं वाक्यं पितामहसमीरितम्।

अङ्केनादाय वैदेहीमुत्पपात विभावसुः॥ १॥

विधूयाथ चितां तान्तु वैदेहीं हव्यवाहनः।

उत्तस्थौ मूर्त्तिमानाशु गृहीत्वा जनकात्मजाम्॥ २॥

तरुणादित्यसङ्काशां तप्तकाञ्चनभूषणाम्।

रक्ताम्बरधरां बालां नीलकुञ्चितमूर्द्धजाम्॥ ३॥

अक्लिष्टमाल्याभरणां तथारूपामनिन्दिताम्।

ददौ रामाय वैदेहीमङ्के कृत्वा विभावसुः॥ ४॥

अब्रवीत्तु तदा रामं साक्षी लोकस्य पावकः।

एतदिति। पितामहसमीरितं शुभं परमशोभनं निजब्रह्मत्वप्रतिपादकं वाक्यं श्रुत्वा ध्यात्वा च प्रसन्नतयावस्थानकाले इति शेषः। अङ्केनादाय। दयितस्य पुर्खाश्चाददमिमंस्यमिति श्रुत्यर्थमपरोक्षमेव सम्पादयन्नित्यर्थः॥ १॥

मूर्त्तिमान् स्रुक्स्रुवादिचिह्ननिजमूर्त्तियुक्तः॥ २॥ ३॥

अक्लिष्टेति। अग्निसम्बन्धेऽपीति शेषः। तथारूपा पूर्वानुभूतशोभायुक्ताम्॥ ४॥

एषा ते राम वैदेही पापमस्यां न विद्यते ॥ ५ ॥
नैव वाचा न मनसा नैव बुद्ध्या न चक्षुषा ।
सुवृत्ता वृत्तशौटीर्यं न त्वामत्यचरच्छुभा ॥ ६ ॥
रावणेनापनीतैषा वीर्य्योत्सिक्तेन रक्षसा ।
त्वया विरहिता दीना विवशा निर्जने सती ॥ ७ ॥
रुद्धा चान्तःपुरे गुप्ता त्वच्चित्ता त्वत्परायणा ।
रक्षिता राक्षसीभिश्च घोराभिर्घोरबुद्धिभिः ॥ ८ ॥
प्रलोभ्यमाना विविधं तर्ज्यमाना च मैथिली ।
नाचिन्तयत तद्रक्षस्त्वद्गतेनान्तरात्मना ॥ ९ ॥

तदा रामसमये। लोकस्य मनोवाक्कायैर्लोककृतपुण्यपापकर्मणः साक्षी साक्षाद्द्रष्टा। सर्वदेहान्तर्वर्तिना नरात्मनानित्यप्रतिष्ठितत्वादिति भावः। एषा या मयि रावणहरणकाले प्रविष्टा सैव। एवं हि कूर्म-पुराणानुसारेण व्याख्यातम्। तच्च प्राङ्निरूपितम्। पापं रावणस्पर्श-रूपमपि। ५॥

सुवृत्ता वृत्तशौटीर्य्यं त्वां मन आदिभिः प्रत्येकं समुदितैश्च नात्य-चरत्। ६॥

एषा या इदानीं मयि प्रविष्टा। ७॥

रुद्धा निरुद्धस्वच्छन्दगमनादिव्यवहारा। गुप्ता परिहृतस्वजन-दर्शना। त्वच्चित्ता त्वयि चित्तं यस्याः सा। अतएव त्वत्परायणा त्वद्गतिः॥ ८॥

विशुद्धभावां निष्पापां प्रतिगृह्णीष्व मैथिलीम्।
न किञ्चिदभिधातव्या अहमाज्ञापयामि ते॥ १०॥
ततः प्रीतमना रामः श्रुत्वैवं वदतां वरः।
दध्यौ मुहूर्त्तं धर्मात्मा हर्षव्याकुललोचनः॥ ११॥
एवमुक्तो महातेजा धृतिमानुरुविक्रमः।
उवाच त्रिदशश्रेष्ठं रामो धर्मभृतां वरः॥ १२॥
अवश्यञ्चापि लोकेषु सीता पावनमर्हति।
दीर्घकालोषिता हीयं रावणान्तःपुरे शुभा॥ १३॥
बालिशो बत कामात्मा रामो दशरथात्मजः।
इति वक्ष्यति मां लोको जानकीमविशोध्य हि॥ १४॥

तद्भक्तो माचिन्तयत नाशशयत। तत्र हेतुरन्तरात्मनस्तद्गतत्वम्। एवञ्च यत्प्रतिबिम्बस्याप्येवं व्यवस्था तद्बिम्बस्य शुद्धत्वं किं वक्तव्यमिति ध्वनिः॥ ९॥

विशुद्धभावां विशुद्धान्तराम्। अतएव निष्पापाम्। न किञ्चिदिति। मन्नियोगानन्तरं प्रतिग्राह्या न वेति सन्देहो न स्यादिति निषेधश्च न कर्त्तव्य इत्यर्थः। कुत एवं तत्राह आज्ञापयामि ते इति। एवमुक्तिस्तु रामेण स्वस्वरूपाच्छादननटनात्तदनुसारेण ब्रह्ममूर्त्तेर्भगवतोऽपरेपीति मन्तव्यम्॥ १०॥

दध्यौ किमिहोचितं वक्तव्यमिति ध्यातवानिति शेषः॥ ११॥ १२॥

पावनम्। स्वार्थण्यन्ताद्भावे ल्युट्। शुद्धिमित्यर्थः। जानकी-

अनन्यहृदयां सीतां मच्चित्तपरिरक्षिणीम्।
अहमप्यवगच्छामि मैथिलीं जनकात्मजाम् ॥ १५ ॥
इमामपि विशालाक्षीं रक्षितां स्वेन तेजसा।
रावणो नातिवर्त्तेत वेलामिव महोदधिः ॥ १६ ॥
न च शक्तः सुदुष्टात्मा मनसापि हि मैथिलीम्।
प्रधर्षयितुमप्राप्यां दीप्तामग्निशिखामिव ॥ १७ ॥
नेयमर्हति वैक्लव्यं रावणान्तःपुरे सती।
अनन्या हि मया सीता भास्करस्य प्रभा यथा ॥ १८ ॥
विशुद्धा त्रिषु लोकेषु मैथिली जनकात्मजा।
न विहातुं मया शक्या कीर्त्तिरात्मवता यथा ॥ १९ ॥

मविशोध्यग्राहिणं माम्। रावणान्तःपुरे दीर्घकालोषितां दशरथात्मजो यद्गृहीतवान् तत् स कामात्मा कामपरतन्त्रचित्तः बालिशो भूलोकव्यवहारापरिज्ञो यतोऽत इति लोको मां वक्ष्यति। ततः शुद्ध्यर्थमग्निप्रवेशो मयानुमत इति शेषः ॥ १४ ॥

इयं शुद्धेति हृदये जानाम्येवेत्याहानन्येति। मच्चित्तपरिरक्षिणीं मद्गतचित्तत्वेनात्मनो दोषपरिरक्षणशीलाम् ॥ १५ ॥

स्वेन तेजसा पातिव्रत्येन ॥ १६ ॥

प्रधर्षयितुं न शक्तः। अतएवाप्राप्याम् अशक्यग्रहाम्। तत्र निदर्शनं दीप्तामिति ॥ १७ ॥

वैक्लव्यं कातर्य्यपीड़ाम्। अनन्याहीति। अर्ज्जा वा एष आत्मना

अवश्यञ्च मया कार्य्यं सर्वेषां वो वचो हितम्।
स्निग्धानां लोकनाथानामेवञ्च वदतां हितम्॥ २०॥
इत्येवमुक्त्वा विजयी महाबलः
प्रशस्यमानः स्वकृतेन कर्मणा।
समेत्य रामः प्रियया महायशाः
सुखं सुखार्होऽनुबभूव राघवः॥ २१॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
विंशोत्तरशततमः सर्गः॥ १२०॥

यत्पत्नीति श्रुतेः शक्तिशक्तिमतोरभेदाच। अनेनाग्निदत्ताया रावण-स्पर्शाद्यभावः स्पष्टमेवोक्तः॥ १८॥ १९॥

सर्वेषां वो वचः सीताग्रहणविषयं मे हितं मयाऽवश्यं कार्य्यं कर्त्तुं योग्यम्। स्निग्धानां मयि स्नेहवताम्। लोकमान्यानामशेषजगत्पूज्यानाम्। एवं पूर्वोक्तप्रकारेण हितं वदताम्॥ २०॥ २१॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्ध-काण्डे विंशोत्तरशततमः सर्गः॥ १२०॥

---

## एकविंशोत्तरशततमः सर्गः ।



एतच्छ्रुत्वा शुभं वाक्यं राघवेनानुभाषितम् ।
ततः शुभतरं वाक्यं व्याजहार महेश्वरः ॥ १ ॥

पुष्कराक्ष महाबाहो महावक्षः परन्तप ! ।
दिष्ट्या कृतमिदं कर्म त्वया धर्मभृतां वर ! ॥ २ ॥

दिष्ट्या सर्वस्य लोकस्य प्रवृद्धं दारुणं तमः ।
अपवृत्तं त्वया संख्ये राम ! रावणजं भयम् ॥ ३ ॥

आश्वास्य भरतं दीनं कौसल्याञ्च यशस्विनीम् ।
कैकेयीञ्च सुमित्राञ्च दृष्ट्वा लक्ष्मणमातरम् ॥ ४ ॥

प्राप्य राज्यमयोध्याञ्च नन्दयित्वा सुहृज्जनम् ।
इक्ष्वाकूणां कुले वंशं स्थापयित्वा महाबल ! ॥ ५ ॥

एतद्वाक्यं श्रुत्वा युष्मदाज्ञया सीतामङ्गीकरोम्येवेत्युक्तं वाक्यं श्रुत्वा ।
ततः सीताग्रहणनियोगानुष्ठानानन्तरम् ॥ १ ॥

महावक्षः हे महोरस्क ॥ २ ॥

तमोदुःखम् ॥ ३ ॥

आश्वास्येति । अयोध्यां गत्वेति शेषः ॥ ४ ॥

इष्ट्वा तुरगमेधेन प्राप्य चानुत्तमं यशः।
ब्राह्मणेभ्यो धनं दत्वा त्रिदिवं गन्तुमर्हसि॥ ६ ॥
एष राजा दशरथो विमानस्थः पिता तव।
काकुत्स्थ! मानुषे लोके गुरुस्तव महायशाः॥ ७ ॥
इन्द्रलोकं गतः श्रीमांस्त्वया पुत्रेण तारितः।
लक्ष्मणेन सह भ्रात्रा त्वमेनमभिवादय॥ ८ ॥
महादेववचः श्रुत्वा राघवः सहलक्ष्मणः।
विमानशिखरस्थस्य प्रणाममकरोत् पितुः॥ ९ ॥
दीप्यमानं स्वया लक्ष्म्या विरजोऽम्बरधारिणम्।
लक्ष्मणेन सह भ्रात्रा ददर्श पितरं प्रभुः॥ १० ॥

कुले कुलपरिपालननिमित्तं वंशं सन्तानम्। दशवर्षसहस्राणि दशवर्षशतानि च। वत्स्यामि मानुषे लोक इत्यवतारात् पूर्वं प्रतिज्ञातत्त्वात् प्राप्य राज्यमित्याद्युक्तम्॥ ५॥

तुरगमेधेनेष्ट्वा भगवन्तं प्रजापतिमिति शेषः। अनुत्तमं यशो महद्यश इत्यादिकं प्रजापति नाम। तस्य नाम महद्यश इति श्रुतेः। अश्वमेधफलञ्च तत्प्राप्तिरेव। प्रजापतिं वा एष ईप्सतीत्याङ्कः। योऽश्वमेधेन यजत इति श्रुतेरिति कतकः। त्रिदिवं भूस्वर्पदापेक्षया तृतीयं दिवं ब्रह्मलोकम्॥ ६ ॥

एष इति। पुरःस्थस्यापि देवपरिग्रहेणाज्ञायमानतयाङ्गुल्या निर्देशः॥ ७॥ ८॥

हर्षेण महताविष्टो विमानस्थो महीपतिः ।
प्राणैः प्रियतरं दृष्ट्वा पुत्रं दशरथस्तदा ॥ ११ ॥
आरोप्यांङ्के महाबाहुर्वरासनगतः प्रभुः ।
बाहुभ्यां सम्परिष्वज्य ततो वाक्यं समाददे ॥ १२ ॥
न मे स्वर्गो बहुमतः समानश्च सुरर्षभैः ।
त्वया राम ! विहीनस्य सत्यं प्रतिशृणोमि ते ॥ १३ ॥
कैकेय्या यानि चोक्तानि वाक्यानि वदतां वर ! ।
तव प्रव्राजनार्थानि स्थितानि हृदये मम ॥ १४ ॥
त्वान्तु दृष्ट्वा कुशलिनं परिष्वज्य सलक्ष्मणम् ।
अद्य दुःखाद्विमुक्तोऽस्मि नीहारादिव भास्करः ॥ १५ ॥
तारितोऽहं त्वया पुत्र ! सुपुत्रेण महात्मना ।
अष्टावक्रेण धर्मात्मा कहलो ब्राह्मणो यथा ॥ १६ ॥
इदानीन्तु विजानामि यथा सौम्य ! सुरेश्वरैः ।
वधार्थं रावणस्येह पिहितं पुरुषोत्तमम् ॥ १७ ॥

विमानशिखरस्थस्य विमानोपरि प्रतिष्ठितस्य ॥ ९ ॥ १० ॥ ११ ॥ ॥ १२ ॥

सुरर्षभैः समानोऽपि स्वर्गो न बहुमतः ॥ १३ ॥ १४ ॥ १५ ॥

अष्टावक्रपिताकहलोनामर्षिः पुत्रेण स्वधर्मेण तारित इति पौराणिकी कथा ॥ १६ ॥

सिद्धार्था खलु कौसल्या या त्वां राम ! गृहं गतम्।
वनान्निवृत्तं संहृष्टा द्रक्ष्यते मधुसूदनम् ॥ १८ ॥
सिद्धार्थाः खलु ते राम ! नरा ये त्वां पुरीं गतम्।
राज्ये चैवाभिषिक्तञ्च द्रक्ष्यन्ते वसुधाधिपम् ॥ १९ ॥
अनुरक्तेन बलिना शुचिना धर्मचारिणा।
इच्छेयं त्वामहं द्रष्टुं भरतेन समागतम् ॥ २० ॥
चतुर्दशसमाः सौम्य ! वने निर्य्यापितास्त्वया।
वसता सीतया सार्द्धं मत्प्रीत्या लक्ष्मणेन च ॥ २१ ॥
निवृत्तवनवासोऽसि प्रतिज्ञा पूरिता त्वया।
रावणञ्च रणे हत्वा देवताः परितोषिताः ॥ २२ ॥
कृतं कर्म यशः श्लाघ्यं प्राप्तं ते मधुसूदन !।
भ्रातृभिः सह राज्यस्थो दीर्घमायुरवाप्नुहि ॥ २३ ॥
इति ब्रुवाणं राजानं रामः प्राञ्जलिरब्रवीत्।
कुरु प्रसादं धर्मज्ञ ! कैकेय्या भरतस्य च ॥ २४ ॥
सपुत्रां त्वां त्यजामीति यदुक्ता केकयी त्वया।

पिहितं पुरुषोत्तमम्। आच्छादितं मत्पुत्रत्वेनेति शेषः ॥ १७ ॥
॥ १८ ॥ १९ ॥

द्रष्टुमिच्छेयम्। सर्वोकाक्षरत्व सन्निति शेषः ॥ २० ॥ २१ ॥
॥ २२ ॥ २३ ॥

स शापः कैकयीं घोरः सपुत्रां न स्पृशेत् प्रभो ! ॥ २५ ॥
तथेति स महाराजो राममुक्त्वा कृताञ्जलिम् ।
लक्ष्मणञ्च परिष्वज्य पुनर्वाक्यमुवाच ह ॥ २६ ॥
धर्मं प्राप्स्यसि धर्मज्ञ ! यशश्च विपुलं भुवि ।
रामे प्रसन्ने स्वर्गञ्च महिमानं तथोत्तमम् ॥ २७ ॥
रामं शुश्रूष भद्रन्ते सुमित्रानन्दवर्द्धन ! ।
रामः सर्वस्य लोकस्य हितेष्वभिरतः सदा ॥ २८ ॥
एते सेन्द्रास्त्रयो लोकाः सिद्धाश्च परमर्षयः ।
अभिवाद्य महात्मानमर्चन्ति पुरुषोत्तमम् ॥ २९ ॥
एतत्तदुक्तमव्यक्तमक्षरं ब्रह्मसम्मितम् ।
देवानां हृदयं सौम्य ! गुह्यं रामः परन्तपः ॥ ३० ॥

घोरः स शापः सपुत्रां कैकेयीं यथा न स्पृशेत्तथा प्रसादं कुरु ॥ ॥ २४ ॥ २५ ॥ २६ ॥

स्वर्गं महिमानञ्च प्राप्स्यसीत्यनुकर्षः ॥ २७ ॥ २८ ॥ २९ ॥

एतद्रामरूपं वस्तु तज्जानीहीति शेषः । यद्देवानां हृदयमुक्तम् । देवानां हृदयं ब्रह्माभ्यविन्ददिति श्रुत्या देवहृदयत्वेनोपदिष्टम् । तथा देवानां गुह्यम् । एतद्वै महोपनिषदं देवानां गुह्यमिति श्रुत्या देव गुह्यत्वेनोपदिष्टम् । ब्रह्मसम्मितं ब्रह्मणा अन्तरङ्गिन्निमे लोका इत्यादि श्रुत्या प्रतिपादितम् । अक्षरम् अप्रच्युतस्वभावतया नित्यं यद्ब्रह्मास्ति तदयमेव ॥ ३० ॥

अवाप्तं धर्माचरणं यशश्च विपुलं त्वया।
एनं शुश्रूषता व्यक्तं वैदेह्या सह सीतया॥ ३१॥
इत्युक्त्वा लक्ष्मणं राजा स्नुषां बद्धाञ्जलिं स्थिताम्।
पुत्रीत्याभाष्य मधुरं शनैरेनामुवाच ह॥ ३२॥
कर्त्तव्यो न तु वैदेहि! मन्युस्त्यागमिमम्प्रति।
रामेणेदं विशुद्ध्यर्थं कृतं वै त्वद्धितैषिणा॥ ३३॥
सुदुष्करमिदं पुत्रि! तव चारित्रलक्षणम्।
कृतं यत्तेऽन्यनारीणां यशो ह्यभिभविष्यति॥ ३४॥
न त्वं कामं समाधेया भर्तृशुश्रूषणम्प्रति।
अवश्यन्तु मया वाच्यमेष ते दैवतं परम्॥ ३५॥
इति प्रतिसमादिश्य पुत्रौ सीताञ्च राघवः।
इन्द्रलोकं विमानेन ययौ दशरथो नृपः॥ ३६॥
विमानमास्थाय महानुभावः
श्रिया च संहृष्टतनुर्नृपोत्तमः।

यत एवम्भूतो रामो ब्रह्मादिभिस्त्वन्नमत्नमेवोक्तः अत एनं शुश्रूषता त्वया सर्वधर्माचरणं प्राप्तम्। ब्रह्मधर्मं सर्वधर्मान्तर्भावस्य संवर्गविद्यायामुक्तत्वादिति भावः॥ ३१। ३२॥

इमं त्यागं प्रति यथेष्टं गम्यतामित्युक्तरूपम्॥ ३३। ३४॥

यद्यपि भर्त्तृशुश्रूषां प्रति त्वं न समाधेया न प्रार्थनापूर्वं नियोज्या।

आमन्त्र्य पुत्रौ सह सीतया च
जगाम देवप्रवरस्य लोकम् ॥ ३७ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
एकविंशोत्तरशततमः सर्गः ॥ १२१ ॥

तत्र ते स्वतः प्रवृत्तिसत्त्वात्। अथापि मया गुरुत्वादवश्यं वाच्यम्। तदेवाह,—ते दैवतं परमिति ॥ ३५ ॥ ३६ ॥ ३७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्धकाण्डे एकविंशोत्तरशततमः सर्गः ॥ १२१ ॥

---

## द्वाविंशोत्तरशततमः सर्गः ।



प्रतिप्रयाते काकुत्स्थे महेन्द्रः पाकशासनः ।
अब्रवीत् परमप्रीतो राघवं प्राञ्जलिं स्थितम् ॥ १ ॥
अमोघं दर्शनं राम ! तवास्माकं नरर्षभ ! ।
प्रीतियुक्ताः स्म तेन त्वं ब्रूहि यन्मनसेप्सितम् ॥ २ ॥
एवमुक्तो महेन्द्रेण प्रसन्नेन महात्मना ।
सुप्रसन्नमना हृष्टो वचनं प्राह राघवः ॥ ३ ॥
यदि प्रीतिः समुत्पन्ना मयि ते विबुधेश्वर ! ।

काकुत्स्थे दशरथे । महेन्द्रः तत्सहितो ब्रह्मा इत्यर्थः । सत्यसङ्कल्पत्वस्य तस्मिन्नेव प्रसिद्धेः । वानराणां सङ्कल्पमात्रेणोत्थानस्य वक्ष्यमाणत्वात् । भारतेऽपि । ततस्ते ब्रह्मणा प्रोक्ते तथेति वचने तदा । समुत्तस्थुर्महाराज वानरा लब्धचेतस इत्युक्तम् । पाद्मेऽपि । पितामहवरात्तूर्णं जीवयामास तान् नृप इति । प्राञ्जलिं स्थितं राघवं प्रतीति शेषः ॥ १ ॥

अस्माकं दर्शनं कृतोपकारस्य तवामोघं प्रत्युपकारेण चरितार्थं भवत्विति शेषः । तेन यतः प्रीतियुक्तास्तेनेत्यर्थः ॥ २ ॥ ३ ॥

वक्ष्यामि कुरु मे सत्यं वचनं वदतां वर ! ॥ ४ ॥
मम हेतोः पराक्रान्ता ये गता यमसादनम्।
ते सर्व्वे जीवितं प्राप्य समुत्तिष्ठन्तु वानराः ॥ ५ ॥
मत्कृते विप्रयुक्ता ये पुत्रैर्दारैश्च वानराः।
तान् प्रीतमनसः सर्वान् द्रष्टुमिच्छामि मानद ! ॥ ६ ॥
विक्रान्ताश्चापि शूराश्च न मृत्युं गणयन्ति च।
कृतयत्ना विपन्नाश्च जीवयैतान् पुरन्दर ! ॥ ७ ॥
मत्प्रियेष्वभिरक्ताश्च न मृत्युं गणयन्ति ये।
त्वत्प्रसादात् समेयुस्ते वरमेतमहं वृणे ॥ ८ ॥
नीरुजो निर्व्रणांश्चैव सम्पन्नबलपौरुषान्।
गोलाङ्गूलांस्तथर्क्षांश्च द्रष्टुमिच्छामि मानद ! ॥ ९ ॥
अकाले चापि पुष्पाणि मूलानि च फलानि च।
नद्यश्च विमलास्तत्र तिष्ठेयुर्यत्र वानराः ॥ १० ॥
श्रुत्वा तु वचनं तस्य राघवस्य महात्मनः।

यद्वचनं वक्ष्यामि तत् सत्यं कुरु ॥ ४ ॥

पराक्रान्ताः कृतपराक्रमाः ॥ ५ ॥

विप्रयुक्ताः। जीवितमाप्तेनेति भावः ॥ ६ । ७ ॥

मत्प्रियेषु मत्प्रियकृत्येषु। त्वत्प्रसादात्समेयुस्ते। स्वजनैरिति शेषः ॥
॥ ८ ॥ ९ ॥

महेन्द्रः प्रत्युवाचेदं वचनं प्रीतिसंयुतम् ॥ ११ ॥
महानयं वरस्तात ! यस्त्वयोक्तो रघूत्तम ! ।
द्विर्मया नोक्तपूर्वश्च तस्मादेतद्भविष्यति ॥ १२ ॥
समुत्तिष्ठन्तु ते सर्वे हता ये युधि राक्षसैः ।
ऋक्षाश्च सह गोपुच्छैर्निकृत्ताननबाहवः ॥ १३ ॥
नीरुजो निर्व्रणाश्चैव सम्पन्नबलपौरुषाः ।
समुत्थास्यन्ति हरयः सुप्ता निद्राक्षये यथा ॥ १४ ॥
सुहृद्भिर्बान्धवैश्चैव ज्ञातिभिः स्वजनेन च ।
सर्व एव समेष्यन्ति संयुक्ताः परया मुदा ॥ १५ ॥
अकाले पुष्पशबलाः फलवन्तश्च पादपाः ।
भविष्यन्ति महेष्वास ! नद्यश्च सलिलायुताः ॥ १६ ॥
सव्रणैः प्रथमं गात्रैरिदानीं निर्व्रणैः समैः ।
ततः समुत्थिताः सर्वे सुप्त्वेव हरिसत्तमाः ॥ १७ ॥
बभूवुर्वानराः सर्वे किन्त्वेतदिति विस्मिताः ।
काकुत्स्थं परिपूर्णार्थं दृष्ट्वा सर्वे सुरोत्तमाः ॥ १८ ॥

उत्थितानां सर्वदा सुखलाभाय वरान्तरम्। अकाले चापीति ॥ ॥ १० ॥ ११ ॥

महानिति। एकस्यापि मृतस्य पुनरुज्जीवनं दुष्करमपरिमितमृत-जीवनन्तु मदतिरिक्ताशक्यमिति भावः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

अब्रुवन् परमप्रीताः स्तुत्वा रामं सलक्ष्मणम् ।
गच्छायोध्यामितो राजन् ! विसर्जय च वानरान् ॥ १९ ॥
मैथिलीं सान्त्वयस्वैनामनुरक्तां यशस्विनीम् ।
भ्रातरं भरतं पश्य त्वच्छोकात् व्रतचारिणम् ॥ २० ॥
शत्रुघ्नञ्च महात्मानं मातॄः सर्वाः परन्तप ! ।
अभिषेचय चात्मानं पौरान् गत्वा प्रहर्षय ॥ २१ ॥
एवमुक्त्वा सहस्राक्षो रामं सौमित्रिणा सह ।
विमानैः सूर्य्यसङ्काशैर्ययौ हृष्टः सुरैः सह ॥ २२ ॥
अभिवाद्य च काकुत्स्थः सर्वांस्तांस्त्रिदशोत्तमान् ।
लक्ष्मणेन सह भ्रात्रा वासमाज्ञापयत्तदा ॥ २३ ॥
ततस्तु सा लक्ष्मणरामपालिता
महाचमूर्हृष्टजना यशस्विनी ।

ततः समुत्थिताः । देवराजस्यानुग्रहसङ्कल्पानन्तरम् ॥ १७ ॥
॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

वासमाज्ञापयत् । यथापूर्वमाज्ञापयदित्यर्थः ॥ २३ ॥

यद्यपि रामेणापीच्छामात्रेणैतत् सुकरं तथापि गृहीतमनुष्यदेहत्वात्तत् स्वरूपगोपनाय सेन्द्रब्रह्मद्वारा तथाकृतमिति ध्येयम् । येप्यमृतवृष्ट्या इन्द्रेण सर्वसमुत्थानं कृतमिति वदन्ति तत्पक्षेऽपि रावणसंहारदिने सर्वरक्षसां दाहादिसंस्कारपूर्वकं भस्म नः समुद्रे प्रक्षेपान्न तदुत्थानशङ्का । पूर्वं युद्धकाले एव मृतानां समुद्रे प्रक्षेप इति

श्रिया ज्वलन्तौ विरराज सर्वतो
निशा प्रणीतेव हि शीतरश्मिना ॥ २४ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
द्वाविंशोत्तरशततमः सर्गः ॥ १२२ ॥

मूल एव पूर्वमुक्तत्वाच्च। अन्ये तु स श्लोकस्त्वाधुनिकप्रक्षिप्तः। न ह्योषधिगन्धमात्रेण सर्वेषां विशल्यता किन्तु चूर्णीकृत्य तस्य दानेनेति प्रागेवोक्तम्। तथा च तदभावान्न तेषां विशल्यता। मृतानां गन्धाघ्राणाभावाच्च। रावणस्य तथाघ्राया अश्रवणाच्चेत्याहुः॥ २४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्धकाण्डे
द्वाविंशोत्तरशततमः सर्गः ॥ १२२ ॥

---

## त्रयविंशोत्तरशततमः सर्गः

तां रात्रिमुषितं रामं सुखोदितमरिन्दमम्।
अब्रवीत्प्राञ्जलिर्वाक्यं जयं पृष्ट्वा विभीषणः॥ १॥
स्नानानि चाङ्गरागाणि वस्त्राण्याभरणानि च।
चन्दनानि च माल्यानि दिव्यानि विविधानि च॥ २॥
अलङ्कारविदश्चैता नार्य्यः पद्मनिभेक्षणाः।
उपस्थितास्त्वां विधिवत् स्नापयिष्यन्ति राघव!॥ ३॥
एवमुक्तस्तु काकुत्स्थः प्रत्युवाच विभीषणम्।
हरीन् सुग्रीवमुख्यांस्त्वं स्नानेनोपनिमन्त्रय॥ ४॥
स तु ताम्यति धर्मात्मा मम हेतोः सुखोचितः।
सुकुमारो महाबाहुर्भरतः सत्यसंश्रयः॥ ५॥
तं विना कैकयीपुत्रं भरतं धर्मचारिणम्
न मे स्नानं बहुमतं वस्त्राण्याभरणानि च॥ ६॥

तां रात्रिमिति। यत्र दिने ब्रह्मादयो जग्मुस्तत्सम्बन्धिन्यां रात्रावित्यर्थः। सुखोदितं सुखप्रबुद्धम्। जयं पृष्ट्वा जयशब्दं प्रयुज्य॥ १॥

स्नानानि स्नानसाधनसुगन्धतैलादीनि॥ २॥

अलङ्कारविदः अलङ्करणक्रियासमर्थाः॥ ३॥ ४॥ ५॥ ६॥

एतत् पश्य यथा क्षिप्रं प्रतिगच्छाम तां पुरीम्।
अयोध्यां गच्छतो ह्येष पन्थाः परमदुर्गमः॥ ७॥
एवमुक्तस्तु काकुत्स्थं प्रत्युवाच विभीषणः।
अह्ना त्वां प्रापयिष्यामि तां पुरीं पार्थिवात्मज!॥ ८॥
पुष्पकं नाम भद्रन्ते विमानं सूर्य्यसन्निभम्।
मम भ्रातुः कुबेरस्य रावणेन बलीयसा॥ ९॥
हृतं निर्जित्य संग्रामे कामगं दिव्यमुत्तमम्।
त्वदर्थं पालितञ्चेदं तिष्ठत्यतुलविक्रम!॥ १०॥
तदिदं मेघसङ्काशं विमानमिह तिष्ठति।
येन यास्यसि यानेन त्वमयोध्यां गतज्वरः॥ ११॥
अहं ते यद्यनुग्राह्यो यदि स्मरसि मे गुणान्।
वस तावदिह प्राज्ञ! यद्यस्ति मयि सौहृदम्॥ १२॥
लक्ष्मणेन सह भ्रात्रा वैदेह्या भार्य्यया सह।
अर्चितः सर्वकामैस्त्वं ततो राम! गमिष्यसि॥ १३॥

प्रतिगच्छामेति लोट्॥ ७॥ ८॥ ९॥
त्वदर्थं पालितञ्चेदं तिष्ठति। हृतेपि रावणे इति शेषः॥ १०॥
तदिदमिति। लङ्कायां वर्त्तमानस्यापि पुष्पकस्याप्युन्नततया क्षितिरस्थैरपि दृश्यमानत्वादिदमिति प्रत्यक्षवन्निर्देशः। इह लङ्कायाम्॥११॥
वस तावदिहेति। एकादिवसमिति शेषः॥ १२॥ १३॥

प्रीतियुक्तस्य विहितां ससैन्यः ससुहृद्गणः।
सत्क्रियां राम ! मे तावत् गृहाण त्वं ,मयोद्यताम् ॥ १४ ॥
प्रणयाद्बहुमानाच्च सौहार्देन च राघव ! ।
प्रसादयामि प्रेष्योऽहं न खल्वाज्ञापयामि ते ॥ १५ ॥
एवमुक्तस्ततो रामः प्रत्युवाच विभीषणम् ।
रक्षसां वानराणाञ्च सर्वेषामेव शृण्वताम् ॥ १६ ॥
पूजितोऽस्मि त्वया वीर ! साचिव्येन परेण च ।
सर्वात्मना च चेष्टाभिः सौहार्देन परेण च ॥ १७ ॥
न खल्वेतन्न कुर्य्यान्ते वचनं राक्षसेश्वर ! ।
तन्तु मे भ्रातरं द्रष्टुं भरतं त्वरते मनः ॥ १८ ॥
मां निवर्त्तयितुं योऽसौ चित्रकूटमुपागतः ।
शिरसा याचतो यस्य वचनं न कृतं मया ॥ १९ ॥

विहितां शास्त्रविहिताम् । मयोद्यतां मयोपक्लृप्ताम् । मे मत्तः ॥१४॥ न खल्वाज्ञापयामि ते । अत्र हेतुः । प्रेष्योऽहमिति ॥ १५ ॥ १६ ॥ साचिव्यं मन्त्रसाहाय्यम् । सर्वात्मना च चेष्टाभिरिति । कायवाङ्मनोभिः कृतयुद्धचेष्टाभिः । परेणोत्तमेन । सौहार्देनोत्तमेन चेत्येव क्वचित्पाठः ॥ १७ ॥

अथाप्येतत् अत्र स्थित्वा त्वत्सत्कारस्वीकारं न कुर्य्यामिति न । विशिष्य कार्य्यमेव । परन्त्वस्वीकारे हेतुमाह,—तन्त्विति । यस्य वचनं मया न कृतं तन्त्विति योजना ॥ १८ ॥ १९ ॥

कौशल्याञ्च सुमित्राञ्च कैकेयीञ्च यशस्विनीम्।
गुहञ्च सुहृदश्चैव पौरान् जानपदैः सह ॥ २० ॥
अनुजानीहि मां सौम्य ! पूजितोऽस्मि विभीषण !।
मन्युर्न खलु कर्त्तव्यः सखे ! त्वाञ्चानुमानये ॥ २१ ॥
उपस्थापय मे शीघ्रं विमानं राक्षसेश्वर !।
कृतकार्य्यस्य मे वासः कथं स्यादिह सम्मतः ॥ २२ ॥
एवमुक्तस्तु रामेण राक्षसेन्द्रो विभीषणः।
विमानं सूर्य्यसङ्काशमाजुहाव त्वरान्वितः ॥ २३ ॥
ततः काञ्चनचित्राङ्गं वैदूर्य्यमणिवेदिकम्।
कूटागारैः परिक्षिप्तं सर्वतो रजतप्रभम् ॥ २४ ॥
पाण्डुराभिः पताकाभिर्ध्वजैश्च समलङ्कृतम्।
काञ्चनं काञ्चनैर्हर्म्यैर्हेमपद्मविभूषितैः ॥ २५ ॥

सह द्रष्टुं त्वरते मन इत्यनुषङ्गः ॥ २० ॥

अनुमानये। कृतानुमतिको यथा भवसि तथा प्रार्थये इत्यर्थः ॥ २१ ॥ २२ ॥

एवमुक्त इति। राघवस्य वचः श्रुत्वा राक्षसेन्द्रो विभीषणः। तद्विमानं समादाय तूर्णं प्रतिनिवर्त्ततेति क्वचित्पाठः ॥ २३ ॥

कूटागारैः शालाग्रहैः ॥ २४ ॥

पताकाः सूक्ष्मध्वजाः। हेमकृतपद्मभूषितैः काञ्चनैर्हर्म्यैः। काञ्चनं काञ्चनमयमिव ॥ २५ ॥

प्रकीर्णं किङ्किणीजालैर्मुक्तामणिगवाक्षकम् ।
घण्टाजालैः परिक्षिप्तं सर्वतो मधुरस्वनम् ॥ २६ ॥
तं मेरुशिखराकारं निर्मितं विश्वकर्मणा ।
बृहद्भिर्भूषितं हर्म्यैर्मुक्तारजतशोभितैः ॥ २७ ॥
तलैः स्फटिकचित्राङ्गैर्वैदूर्यैश्च वरासनैः ।
महार्हास्तरणोपेतैरुपपन्नं महाधनैः ॥ २८ ॥
उपस्थितमनाधृष्यं तद्विमानं मनोजवम् ।
निवेदयित्वा रामाय तस्थौ तत्र विभीषणः ॥ २९ ॥

तत् पुष्पकं कामगमं विमान-
मुपस्थितं भूधरसन्निकाशम् ।
दृष्ट्वा तदा विस्मयमाजगाम
रामः ससौमित्रिरुदारसत्त्वः ॥ ३० ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
त्रयोविंशोत्तरशततमः सर्गः ॥ १२३ ॥

मुक्तामणिभिः कृता गवाक्षा यस्मिंस्तत् ॥ २६ ॥ २७ ॥ २८ ॥
उपस्थितं विमानं निवेदयित्वा विज्ञाप्य ॥ २९ ॥ ३० ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्ध-
काण्डे त्रयोविंशोत्तरशततमः सर्गः ॥ १२३ ॥

---

## चतुर्विंशोत्तरशततमः सर्गः ।



उपस्थितन्तु तं ज्ञात्वा पुष्पकं पुष्पभूषितम् ।
अविदूरे स्थितो राममित्युवाच विभीषणः ॥ १ ॥
स तु बद्धाञ्जलिपुटो विनीतो राक्षसेश्वरः ।
अब्रवीत्त्वरयोपेतः किं करोमीति राघवम् ॥ २ ॥
तमब्रवीन्महातेजा लक्ष्मणस्योपशृण्वतः ।
विमृश्य राघवो वाक्यमिदं स्नेहपुरस्कृतम् ॥ ३ ॥
कृतप्रयत्नकर्माणः सर्वे एव वनौकसः ।
रत्नैरर्थैश्च विविधैः सम्पूज्यन्तां विभीषण ! ॥ ४ ॥
सहामीभिस्त्वया लङ्का निर्जिता राक्षसेश्वर ! ।
हृष्टैः प्राणभयं त्यक्त्वा संग्रामेष्वनिवर्त्तिभिः ॥ ५ ॥

अविदूरे स्थितत्वादिविशेषणो विभीषणः पुष्पकमुपस्थितमासन्नं ज्ञात्वा राममित्युवाच ॥ १ ॥

कथमुवाचेत्यतः अब्रवीदिति ॥ २ ॥

तं किं करोमीत्युक्तवन्तम् । उपशृण्वतो लक्ष्मणस्याग्रे इति शेषः ॥ ३ ॥

कृतं प्रयत्नेन कर्म युद्धकर्म यैस्ते । अर्थैः विचित्रान्नपानवस्त्रादिभिः ॥ ४ ॥

त इमे कृतकर्माणः सर्वं एव वनौकसः ।
धनरत्नप्रदानैश्च कर्मैषां सफलं कुरु ॥ ६ ॥
एवं सम्मानितास्चैते नन्द्यमाना यथा त्वया ।
भविष्यन्ति कृतज्ञेन निर्वृता हरियूथपाः ॥ ७ ॥
त्यागिनं संग्रहीतारं सानुक्रोशं जितेन्द्रियम् ।
सर्वं त्वामधिगच्छन्ति ततः सम्बोधयामि ते ॥ ८ ॥
हीनं रतिगुणैः सर्वैरभिहन्तारमाहवे ।
सेना त्यजति संविग्ना नृपतिं तं नरेश्वर ! ॥ ९ ॥
एवमुक्तस्तु रामेण वानरांस्तान् विभीषणः ।
रत्नार्थसंविभागेन सर्वानेवाभ्यपूजयत् ॥ १० ॥

अमीभिः सह लङ्का निर्जितेत्यनेन तव लङ्काप्राप्तिर्वानरपराक्रमादेवेत्युक्तम् । प्राणभयं त्यक्त्वा हृष्टैरुद्योत्साहवद्भिः ॥ ५ ॥ ६ ॥

यथा यथान्यायम् । त्वया कृतज्ञेन नन्द्यमाना निर्वृताः सुखिनो भविष्यन्ति ॥ ७ ॥

त्वां तत्सत्कारसमर्थम् । तेवाद्य सत्कारप्रियत्वं ज्ञात्वैव त्वां तत्सत्कारे नियुङ्क्त इत्याह,—त्यागिनमिति । उचितविषये इति शेषः । संग्रहीतारं यथाकालं यथान्यायम् । रत्नादेरिति शेषः ॥ ८ ॥

सर्वैः रतिगुणैर्दानमानादिलक्षणसेनारमणगुणैर्हीनं तथैवाहवेऽभिहन्तारं घातयन्तं नृपतिं संविग्ना सेना हे नरेश्वर त्यजति त्यजत्येव । अतो दानादिनैते सत्कार्या एवेति भावः ॥ ९ ॥

रत्नार्थैः रत्नैरर्थैर्धनैश्च संविभागेन यथार्हसंग्रहकल्पनयेत्यर्थः ।

ततस्तान् पूजितान् दृष्ट्वा रत्नार्थैर्हरियूथपान्।
आरुरोह तदा रामस्तद्विमानमनुत्तमम्॥ ११॥
अङ्केनादाय वैदेहीं लज्जमानां मनस्विनीम्।
लक्ष्मणेन सह भ्रात्रा विक्रान्तेन धनुष्मता॥ १२॥
अब्रवीत् स विमानस्थः पूजयन् सर्ववानरान्।
सुग्रीवञ्च महावीर्य्यं काकुत्स्थः स विभीषणम्॥ १३॥
मित्रकार्य्यं कृतमिदं भवद्भिर्वानरर्षभाः!।
अनुज्ञाता मया सर्वे यथेष्टं प्रतिगच्छत॥ १४॥
यत्तु कार्य्यं वयस्येन स्निग्धेन च हितेन च।
कृतं सुग्रीव! तत्सर्वं भवताऽधर्मभीरुणा॥ १५॥
किष्किन्धां प्रति याह्याशु स्वसैन्येनाभिसंवृतः।
स्वराज्ये वस लङ्कायां मया दत्ते विभीषण!।
न त्वां धर्षयितुं शक्ताः सेन्द्रा अपि दिवौकसः॥ १६॥
अयोध्यां प्रतियास्यामि राजधानीं पितुर्मम।
अभ्यनुज्ञातुमिच्छामि सर्वानामन्त्रयामि वः॥ १७॥

सर्ववानरपूजार्थं दिनद्वयं वासः। भारतेऽपि। ततस्तीरे समुद्रस्य यत्र शिश्ये स पार्थिवः। तत्रैवोवास धर्मात्मा सहितस्तत्र वानरैः। अथैतान् वानरान् दृष्ट्वा ससंमान्याभिपूज्य च। विसर्जयामास तदा रत्नैः सन्तोष्य सर्वयत्युत्तम्॥ १०॥ ११॥ १२॥ १३॥ १४॥

अधर्मभीरुणेति च्छेदः॥ १५॥

एवमुक्तास्तु रामेण हरीन्द्रा हरयस्तथा।
ऊचुः प्राञ्जलयः सर्वे राक्षसश्च विभीषणः ॥ १८ ॥
अयोध्यां गन्तुमिच्छामः सर्वान्नयतु नो भवान्।
मुद्युक्ता विचरिष्यामो वनान्युपवनानि च ॥ १९ ॥
दृष्ट्वा त्वामभिषेकार्द्रं कौसल्यामभिवाद्य च।
अचिरादागमिष्यामः स्वगृहान् नृपसत्तम! ॥ २० ॥
एवमुक्तस्तु धर्मात्मा वानरैः सविभीषणैः।
अब्रवीद्वानरान् रामः ससुग्रीवविभीषणान् ॥ २१ ॥
प्रियात् प्रियतरं लब्धं यदहं ससुहृज्जनः।
सर्वैर्भवद्भिः सहितः प्रीतिं लप्स्ये पुरीं गतः ॥ २२ ॥
क्षिप्रमारोह सुग्रीव! विमानं सह वानरैः।
त्वमप्यारोह सामात्यो राक्षसेन्द्र विभीषण! ॥ २३ ॥
ततः स पुष्पकं दिव्यं सुग्रीवः सह वानरैः।
आरुरोह मुदा युक्तः सामात्यश्च विभीषणः ॥ २४ ॥

सेन्द्रा दिवाकसोऽपि न त्वां धर्षयितुं शक्ता मत्प्रसादादिति भावः। न तेभ्य एव किल राक्षसानां भयम् ॥ १६ ॥ १७ ॥ १८ ॥

मुद्युक्ताः हर्षयुक्ताः ॥ १९ ॥

अभिषेकार्द्रं त्वां दृष्ट्वा तवैव सर्वेषामस्माकं मातरं कौशल्यामभिवाद्य च ॥ २० ॥ २१ ॥

प्रियात् प्रियतरम्। प्रथमतः कृतकृत्यस्यायोध्याप्रवेशनमेव प्रियम्।

तेष्वारूढेषु सर्वेषु कौबेरं परममासनम्।
राघवेणाभ्यनुज्ञातमुत्पपात विहायसम्॥ २५॥
खगतेन विमानेन हंसयुक्तेन भास्वता।
प्रहृष्टश्च प्रतीतश्च बभौ रामः कुबेरवत्॥ २६॥
ते सर्वे वानरर्क्षाश्च राक्षसाश्च महाबलाः।
यथासुखमसम्बाधं दिव्ये तस्मिन्नुपाविशन्॥ २७॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
चतुर्विंशोत्तरशततमः सर्गः॥ १२४॥

तत्रापि सुहृद्भिर्भवद्भिः सहितो भरतादिभिः सह प्रीतिं लप्स्ये राज्याभिषेकसन्तोषं लप्स्येत्यर्थः॥ २२॥ २३॥ २४॥

परमासनमुत्तमयानम्॥ २५॥

हंसयुक्तेनेति। हंसशब्देन वाहकत्वाकारेण निर्मितहंसप्रतिम उच्यत इति व्याख्यातारः। प्रहृष्टो हृष्टरोमा। प्रतीतो प्रहृष्टचित्तः॥ २६॥

असम्बाधमित्यनेन विमानस्य वैपुल्यमुक्तम्॥ २७॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्धकाण्डे चतुर्विंशोत्तरशततमः सर्गः॥ १२४॥

---

## पञ्चविंशोत्तरशततमः सर्गः

अनुज्ञातन्तु रामेण तद्विमानमनुत्तमम् ।
हंसयुक्तं महानादमुत्पपात विहायसम् ॥ १ ॥
पातयित्वा ततश्चक्षुः सर्वतो रघुनन्दनः ।
अब्रवीत् मैथिलीं सीतां रामः शशिनिभाननाम् ॥ २ ॥
कैलासशिखराकारे त्रिकूटशिखरे स्थिताम् ।
लङ्कामीक्षस्व वैदेहि ! निर्मितां विश्वकर्मणा ॥ ३ ॥
एतदायोधनं पश्य मांसशोणितकर्दमम् ।
हरीणां राक्षसानाञ्च सीते ! विशसनं महत् ॥ ४ ॥
एष दत्तवरः शेते प्रमाथी राक्षसेश्वरः ।
तव हेतोर्विशालाक्षि ! निहतो रावणो मया ॥ ५ ॥
कुम्भकर्णोऽत्र निहतः प्रहस्तश्च निशाचरः ।
धूम्राक्षश्चात्र निहतो वानरेण हनूमता ॥ ६ ॥

अनुज्ञातमिति ॥ १ ॥
पातयित्वा सञ्चार्य्य ॥ २ ॥ ३ ॥
आयोधनं युद्धभूमिम् । महद्विशसनं वधसाधनभूतम् ॥ ४ ॥

विद्युन्माली हतश्चात्र सुषेणेन महात्मना।
लक्ष्मणेनेन्द्रजिच्चात्र रावणिर्निहतो रणे॥ ७॥
अङ्गदेनात्र निहतो विकटो नाम राक्षसः।
विरूपाक्षश्च दुष्प्रेक्षो महापार्श्वमहोदरौ॥ ८॥
अकम्पनश्च निहतो बलिनोऽन्ये च राक्षसाः।
त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ॥ ९॥
युद्धोन्मत्तश्च मत्तश्च राक्षसप्रवरावुभौ।
निकुम्भश्चैव कुम्भश्च कुम्भकर्णात्मजौ बली॥ १०॥
वज्रदंष्ट्रश्च दंष्ट्रश्च बहवो राक्षसा हताः।
मकराक्षश्च दुर्धर्षो मया युधि निपातितः॥ ११॥
अकम्पनश्च निहतः शोणिताक्षश्च वीर्य्यवान्।
यूपाक्षश्च प्रजङ्घश्च निहतौ तु महाहवे॥ १२॥
विद्युज्जिह्वोऽत्र निहतो राक्षसो भीमदर्शनः।
यज्ञशत्रुश्च निहतः सुप्तघ्नश्च महाबलः॥ १३॥

प्रमाथी प्रमथनशीलः। एष इति तद्युद्धभूमिप्रदर्शनम्। अग्रेऽपि सर्वत्र तत्तद्युद्धभूमिप्रदर्शनमेव। अत्युच्चस्थत्वाद्विमानस्य सर्वयुद्धभूमि प्रत्यक्षं युगपत्॥ ५॥ ६॥ ७॥

अङ्गदेन विकटो हत इत्यनुवादात्तदपि जातमिति बोध्यम्॥ ८॥ ९॥

बली बलिना॥ १०॥

सूर्य्यशत्रुश्च निहतो ब्रह्मशत्रुस्तथापरः ।
अत्र मन्दोदरी नाम भार्य्या तं पर्य्यदेवयत ॥ १४ ॥
सपत्नीनां सहस्रेण साग्रेण परिवारिता ।
एतत्तु दृश्यते तीर्थं समुद्रस्य वरानने ! ॥ १५ ॥
यत्र सागरमुत्तीर्य्य तां रात्रिमुषिता वयम् ।
एष सेतुर्मया बद्धः सागरे लवणार्णवे ॥ १६ ॥
तव हेतोर्विशालाक्षि ! नलसेतुः सुदुष्करः ।
पश्य सागरमक्षोभ्यं वैदेहि ! वरुणालयम् ॥ १७ ॥
अपारमिव गर्जन्तं शङ्खशुक्तिसमाकुलम् ।
हिरण्यनाभं शैलेन्द्रं काञ्चनं पश्य मैथिलि ! ॥ १८ ॥
विश्रमार्थं हनुमतो भित्त्वा सागरमुत्थितम् ।
एतत् कुक्षौ समुद्रस्य स्कन्धावारनिवेशनम् ॥ १९ ॥

दंष्ट्रनामा कश्चित् । अनुवादात् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥
साग्रेण सहस्रादप्यधिकयुक्तेन । तीर्थमवतारः ॥ १५ ॥
यत्रावतारे तां रात्रिं समुद्रोत्तरणदिवसरात्रिम् ॥ १६ ॥
नलसेतुर्मन्नियुक्तनलकृतः सेतुर्नलसेतुः सुदुष्करस्तदितरेणेति भावः । अथ वरुणालयत्वादिविशेषणं सागरं पश्य ॥ १७ ॥
अथ सागरमध्यप्रदेशागमनकाले मैनाकं दर्शयति । हिरण्यनाभमिति । काञ्चनं काञ्चनप्रचुरं तद्वर्णञ्च ॥ १८ ॥
एतन्मैनाकपर्वतस्वरूपम् । समुद्रस्य कुक्षौ वर्त्तते इति शेषः ।

अत्र पूर्वं महादेवः प्रसादमकरोद्विभुः।
एतत्तु दृश्यते तीर्थं सागरस्य महात्मनः॥ २०॥
सेतुबन्ध इति ख्यातं त्रैलोक्येन च पूजितम्।
एतत्पवित्रं परमं महापातकनाशनम्॥ २१॥
अत्र राक्षसराजोऽयमाजगाम विभीषणः।
एषा सा दृश्यते सीते! किष्किन्धा चित्रकानना॥ २२॥
सुग्रीवस्य पुरी रम्या यत्र वाली मया हतः।

एतदित्यावर्त्तते। एतत् स्कन्धावारनिवेशनं सेनानिवेशनम्। समुद्रोत्तरतीरस्थमिति शेषः॥ १९॥

अत्र पूर्वमिति। अत्र सेतुमूले। पूर्वं सेतुबन्धनात् पूर्वम्। विभुर्महादेवो मम रामस्य प्रसादमकरोत् मत्स्थापितत्वेनात्रस्थितोऽभूत् सेतोर्निर्विघ्नतासिद्धेश्च। समुद्रप्रसादानन्तरं शिवस्थापनं रामेण कृतमिति गम्यते। अत्र स्थले महात्मनः सागरस्य तीर्थम्। सेतुनिर्माणमूलप्रदेशत्वात् सेतुबन्ध इति ख्यातं भविष्यतीति शेषः। तथा त्रैलोक्येन पूजितञ्च भविष्यति॥ २०॥

एतत्पवित्रं दर्शनात् सर्वपापविशोधनं विशिष्य महापातकस्यापि नाशनम्। सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहतीति स्मृतेः। कूर्मपुराणे रामचरिते तु। अत्र स्थाने स्पष्टमेव लिङ्गस्थापनमुक्तम्। त्वत्स्थापितलिङ्गदर्शनेन ब्रह्महत्यादिपापक्षयो भविष्यतीति महादेववरदानञ्च स्पष्टमेवोक्तम्। तत एवावधार्य्यं पूर्वं महादेवः प्रसादमकरोत् ततः सेतुबन्धनं जातमित्यक्षरार्थः॥ २१॥

अथ दृष्ट्वा पुरीं सीता किष्किन्धां वालिपालिताम् ॥ २३ ॥
अब्रवीत् प्रश्रितं वाक्यं रामं प्रणयसाध्वसा।
सुग्रीवप्रियभार्य्याभिस्ताराप्रमुखतो नृप ! ॥ २४ ॥
अन्येषां वानरेन्द्राणां स्त्रीभिः परिवृता ह्यहम्।
गन्तुमिच्छे सहायोध्यां राजधानीं त्वया सह ॥ २५ ॥
एवमुक्तोऽथ वैदेह्या राघवः प्रत्युवाच ताम्।
एवमस्त्विति किष्किन्धां प्राप्य संस्थाप्य राघवः ॥ २६ ॥
विमानं प्रेक्ष्य सुग्रीवं वाक्यमेतदुवाच ह।
ब्रूहि वानरशार्दूल ! सर्वान् वानरपुङ्गवान् ॥ २७ ॥
स्त्रीभिः परिवृताः सर्वे ह्ययोध्यां यान्तु सीतया।
तथा त्वमेभिः सर्वाभिः स्त्रीभिः सह महाबल ! ॥ २८ ॥

अत्र राक्षसराज आजगाम। अत्र सेतुबन्धतीर्थं। चित्रकाननामधुवनादिदिव्यकाननोपेता या दृश्यते एषा सुग्रीवस्य पुरी किष्किन्धा ॥ ॥ २२ ॥ २३ ॥

प्रणयसाध्वसा प्रणयः साध्वसञ्च भर्त्तुः स्नेहे प्रवर्त्तननिमित्तं यस्याः सा। ताराप्रमुखतः ताराप्रमुखाभिः सुग्रीवस्य प्रियाभिर्भार्य्याभिः परिवृता गन्तुमिच्छे इच्छामि। अत्रेदर्थमेकादिनवासः। अतएव भारतेऽङ्गदस्य यौवराज्याभिषेकोऽप्येतद्दिने उक्तः ॥ २४ ॥ २५ ॥

एवमस्त्विति तामुक्त्वा किष्किन्धां प्राप्य तत्र विमानं संस्थाप्य सुग्रीवं प्रेक्ष्य एतद्वक्ष्यमाणमुवाच। तदेवाह,—ब्रूहीति ॥ २६ ॥ २७ ॥ २८ ॥

अभित्वरय सुग्रीव! गच्छामः प्लवगाधिप!।
एवमुक्तस्तु सुग्रीवो रामेणामिततेजसा॥ २९॥
वानराधिपतिः श्रीमांस्तैश्च सर्वैः समावृतः।
प्रविश्यान्तःपुरं शीघ्रं तारामुद्वीक्ष्य सोऽब्रवीत्॥ ३०॥
प्रिये! त्वं सह नारीणां वानराणां महात्मनाम्।
राघवेणाभ्यनुज्ञाता मैथिलीप्रियकाम्यया॥ ३१॥
त्वर त्वमभिगच्छामो गृह्य वानरयोषितः।
अयोध्यां दर्शयिष्यामः सर्वा दशरथस्त्रियः॥ ३२॥
सुग्रीवस्य वचः श्रुत्वा तारा सर्वाङ्गशोभना।
आहूय चाब्रवीत् सर्वा वानराणान्तु योषितः॥ ३३॥
सुग्रीवेणाभ्यनुज्ञाता गन्तुं सर्वैश्च वानरैः।
मम चापि प्रियं कार्य्यमयोध्यादर्शनेन च॥ ३४॥
प्रवेशश्चैव रामस्य पौरजानपदैः सह।

अभित्वरय। गन्तुमिति शेषः॥ २९॥ ३०॥

वानराणां नारीणां सह। ताभिः सहेत्यर्थः। षष्ठी आर्षी॥ ३१॥

वानरयोषितो गृह्य गृहीत्वा गन्तुं त्वरां कुरु। सर्वाभिः सह गच्छामः। तासामयोध्यां दर्शयिष्यामः॥ ३२॥ ३३॥

सुग्रीवेणाभ्यनुज्ञाता यूयं सर्वैर्वानरैः स्व स्व भर्तृभिः सह गन्तुं त्वरयतेति शेषः। किञ्च भवतीभिरयोध्यादर्शनेन ममापि प्रियं कार्य्यम्। तद्दर्शनं ममापि प्रियमिति भावः॥ ३४॥

विभूतिश्चैव सर्वासां स्त्रीणां दशरथस्य च ॥ ३५ ॥
तारया चाभ्यनुज्ञाताः सर्वा वानरयोषितः ।
नेपथ्यविधिपूर्वन्तु कृत्वा चापि प्रदक्षिणम् ॥ ३६ ॥
अध्यारोहन् विमानं तत्सीतादर्शनकाङ्क्षया ।
ताभिः सहोत्थितं शीघ्रं विमानं प्रेक्ष्य राघवः ॥ ३७ ॥
ऋष्यमूकसमीपे तु वैदेहीं पुनरब्रवीत् ।
दृश्यतेऽसौ महान् सीते ! सविद्युदिव तोयदः ॥ ३८ ॥
ऋष्यमूको गिरिवरः काञ्चनैर्धातुभिर्वृतः ।
अत्राहं वानरेन्द्रेण सुग्रीवेण समागतः ॥ ३९ ॥
समयश्च कृतः सीते ! वधार्थं वालिनो मया ।
एषा सा दृश्यते पम्पा नलिनी चित्रकानना ॥ ४० ॥
त्वया विहीनो यत्राहं विललाप सुदुःखितः ।
अस्यास्तीरे मया दृष्टा शबरी धर्मचारिणी ॥ ४१ ॥

प्रवेशश्चेति । पश्याम इति शेषः । दशरथस्त्रीणां विभूतिमैश्वर्यञ्च पश्यामः ॥ ३५ ॥

नेपथ्यविधिरलङ्कारविधिः । प्रदक्षिणकरणं विमानस्य ॥ ३६ ॥

अत्र ताभिः सहोत्थितमित्यनेनाश्विनचतुर्थ्यां किष्किन्धायामुषित्वा पञ्चम्यां ततः प्रस्थानमिति गम्यते । उपरि पञ्चम्यां भरद्वाजाश्रमप्रवेशस्य वक्ष्यमाणत्वात् ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

अस्यास्तीरे पम्पायास्तीरे ॥ ४१ ॥

अत्र योजनबाहुश्च कबन्धो निहतो मया।
दृश्यतेऽसौ जनस्थाने श्रीमान् सीते! वनस्पतिः॥ ४२॥
जटायुश्च महातेजास्तव हेतोर्विलासिनि!।
रावणेन हतो यत्र पक्षिणां प्रवरो बली॥ ४३॥
एतत्तदाश्रमपदमस्माकं वरवर्णिनि!।
पर्णशाला तथा चित्रा दृश्यते शुभदर्शने!॥ ४४॥
यत्र त्वं राक्षसेन्द्रेण रावणेन हृता बलात्।
एषा गोदावरी रम्या प्रसन्नसलिला शुभा॥ ४५॥
अगस्त्यस्याश्रमश्चैव दृश्यते कदलीवृतः।
दृश्यते चैव वैदेहि! शरभङ्गाश्रमो महान्॥ ४६॥
उपायतः सहस्राक्षो यत्र शक्रः पुरन्दरः।
एते ते तापसा देवि! दृश्यन्ते तनुमध्यमे!॥ ४७॥
अत्रिः कुलपतिर्यत्र सूर्य्यवैश्वानरोपमः।
अस्मिन् देशे महाकायो विराधो निहतो मया॥ ४८॥

अत्र पम्पोत्तरदेशे वनस्पतिर्जटायोरावासन्यग्रोधः॥ ४२॥ ४३॥
एतत्तदाश्रमपदम्। पञ्चवट्याश्रमस्थानमित्यर्थः॥ ४४॥
यत्र यस्यां पर्णशालायाम्॥ ४५॥
अगस्त्याश्रमो दृश्यते। एतत्समीप एव प्रागुपदिष्टः स्वाश्रमः॥ ४६॥
एते ते तापसाः पूर्वानुभूता इत्यर्थः॥ ४७॥

अत्र सीते ! त्वया दृष्टा तापसी धर्मचारिणी ।
असौ सुतनु ! शैलेन्द्रश्चित्रकूटः प्रकाशते ॥ ४९ ॥
अत्र मां कैकयीपुत्रः प्रसादयितुमागतः ।
एषा सा यमुना रम्या दृश्यते चित्रकानना ॥ ५० ॥
भरद्वाजाश्रमः श्रीमान् दृश्यते चैष मैथिलि ! ।
इयञ्च दृश्यते गङ्गा पुण्या त्रिपथगा नदी ॥ ५१ ॥
शृङ्गवेरपुरञ्चैतत् गुहो यत्र सखा मम ।
एषा सा दृश्यते सीते ! राजधानी पितुर्मम ।
अयोध्यां कुरु वैदेहि ! प्रणामं पुनरागता ॥ ५२ ॥
ततस्ते वानराः सर्वे राक्षसाः सविभीषणाः ।
उत्पत्योत्पत्य संहृष्टा स्तां पुरीं ददृशुस्तदा ॥ ५३ ॥
ततस्तु तां पाण्डुरहर्म्यमालिनीं
विशालकक्ष्यां गजवाजिभिर्वृताम् ।

कुलपतिराश्रमस्वामी । कुलमन्वयसङ्घातगृहोत्पत्त्याश्रमेषु चेत्य-मरः ॥ ४८ ॥

तापसी अत्रिपत्नी ॥ ४९ ॥ ५० ॥ ५१ ॥

यत्र मम सखागुहस्तत् शृङ्गवेरपुरमेतत् दृश्यते इति शेषः । एषा सा मम पितुः राजधानी अयोध्या दृश्यते । गङ्गातीरवर्त्तिभरद्वाजाश्रमप्रदेशे विमाने तस्यात्युन्नतव्योमप्रदेशवृत्तित्वादयोध्यादिदर्शनम् । अयोध्यायाम्प्रति प्रणामं कुरु ॥ ५२ ॥ ५३ ॥

पुरीमपश्यन् प्लवगाः सराक्षसाः
पुरीं महेन्द्रस्य यथामरावतीम् ॥ ५४ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे पञ्च
विंशोत्तरशततमः सर्गः ॥ १२५ ॥

विशालकक्ष्यां विशालरथ्याम् ॥ ५४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्ध-
काण्डे पञ्चविंशोत्तरशततमः सर्गः ॥ १२५ ॥

---

# षड्विंशोत्तरशततमः सर्गः ।



पूर्णे चतुर्दशे वर्षे पञ्चम्यां लक्ष्मणाग्रजः ।
भरद्वाजाश्रमं प्राप्य ववन्दे नियतो मुनिम् ॥ १ ॥
सोऽपृच्छदभिवाद्यैनं भरद्वाजं तपोधनम् ।
शृणोषि कच्चिद्भगवन् ! सुभिक्षानामयं पुरे ॥ २ ॥
कच्चित् स युक्तो भरतो जीवन्त्यपि च मातरः ।
एवमुक्तस्तु रामेण भरद्वाजो महामुनिः ।
प्रत्युवाच रघुश्रेष्ठं स्मितपूर्वं प्रहृष्टवत् ॥ ३ ॥
आज्ञावशस्ते भरतो जटिलस्त्वां प्रतीक्षते ।
पादुके ते पुरस्कृत्य सर्वञ्च कुशलं गृहे ॥ ४ ॥

पूर्णे इति । पञ्चम्यां चतुर्दशे वर्षे पूर्णे सति तद्दिने भरद्वाजाश्रमं प्राप्य मुनिं भरद्वाजं ववन्दे ॥ १ ॥

पुरेऽयोध्यायाम् । सुभिक्षञ्चानामयञ्च सुभिक्षानामयम् । सुभिक्ष-मन्नसमृद्धिः । अनामयं स्यादारोग्यम् । शृणोषि कच्चित् । शिष्यादि-मुखेनेति शेषः ॥ २ ॥

स भरतो युक्तः । प्रजापालने समाहित इत्यर्थः । स्मितपूर्वम् । सर्वज्ञोऽपि भगवानजानन्निव मां पृच्छतीति स्मितकारणम् प्रहृष्टवत् प्रहृष्टाहम् ॥ ३ ॥

त्वां पुरा चीरवसनं प्रविशन्तं महावनम्।
स्त्रीतृतीयं च्युतं राज्याद्धर्मकामस्य केवलम्॥ ५॥
पदातिं त्यक्तसर्वस्वं पितृनिर्देशकारिणम्।
सर्वभोगैः परित्यक्तं स्वर्गच्युतमिवामरम्॥ ६॥
दृष्ट्वा तु करुणा पूर्वं ममासीत् समितिञ्जय!।
कैकयीवचने युक्तं वन्यमूलफलाशिनम्॥ ७॥
साम्प्रतन्तु समृद्धार्थं समित्रगणबान्धवम्।
समीक्ष्य विजितारिञ्च ममाभूत् प्रीतिरुत्तमा॥ ८॥
सर्वञ्च सुखदुःखं ते विदितं मम राघव!।
यत्त्वया विपुलं प्राप्तं जनस्थाननिवासिना॥ ९॥
ब्राह्मणार्थे नियुक्तस्य रक्षतः सर्वतापसान्।
रावणेन हृता भार्य्या बभूवेयमनिन्दिता॥ १०॥

ते पादुके पुरस्कृत्य सर्वं कुशलं गृहे च पुरे च सम्पादयन् भरतस्त्वां प्रतीक्षते॥ ४॥ ५॥ ६॥

उच्यमानविशेषणं त्वां दृष्ट्वा मम पुरा करुणा दैन्यमासीत्॥ ७॥

साम्प्रतन्तु समृद्धत्वादिगुणं समीक्ष्य मम उत्तमा प्रीतिरभूज्जातेत्यर्थः॥ ८॥

सर्वं ते सुखं दुःखञ्च विदितमित्येतत् प्रकाशयति। यत्त्वयेति। जनस्थाननिवासिना त्वया यद्विपुलं खरवधादिना दुःखं प्राप्तं तन्मया विदितम्॥ ९॥

मारीचदर्शनञ्चैव सीतोन्मथनमेव च।
कबन्धदर्शनञ्चैव पम्पाभिगमनं तथा॥ ११॥
सुग्रीवेण च ते सख्यं यच्च वाली हतस्त्वया।
मार्गणञ्चैव वैदेह्याः कर्म वातात्मजस्य च॥ १२॥
विदितायाञ्च वैदेह्यां नलसेतुर्यथा कृतः।
यथा चादीपिता लङ्का प्रहृष्टैर्हरियूथपैः॥ १३॥
सपुत्रबान्धवामात्यः सबलः सहवाहनः।
यथा च निहतः संख्ये रावणो बलदर्पितः॥ १४॥
यथा च निहते तस्मिन् रावणे देवकण्टके
समागमश्च त्रिदशैर्यथा दत्तश्च ते वरः॥ १५॥
सर्वं ममैतद्विदितं तपसा धर्मवत्सल!।
सम्पतन्ति च मे शिष्याः प्रवृत्त्याख्याः पुरीमितः॥ १६॥

तदनन्तरं ब्राह्मणार्थे ब्रह्मविदां ब्रह्मर्षीणां प्रयोजने नियुक्तस्यात-एव सर्वतापसान् रक्षतस्तव भार्य्येयं हृता बभूवेत्येतच्च मे विदितम्॥ १०॥

मारीचदर्शनम्। रावणस्य सीतापहारार्थमिति शेषः। सीतोन्मथनं सीताया राक्षसीभिर्लङ्कायां क्षोभनम्॥ ११॥

वातात्मजस्य कर्म समुद्रलङ्घनादिलङ्कादहनम्॥ १२॥

प्रहृष्टैर्हरियूथपैर्लङ्कादीपितेति यत् इन्द्रजिद्वधानन्तरं कृतं तच्च विदितम्॥ १३॥ १४॥ १५॥

अहमप्यत्र ते दद्मि वरं शस्त्रभृतां वर !।
अर्घ्यं प्रतिगृहाणेदमयोध्यां श्वो गमिष्यसि ॥ १७ ॥
तस्य तच्छिरसा वाक्यं प्रतिगृह्य नृपात्मजः।
बाढ़मित्येव संहृष्टः श्रीमान् वरमयाचत ॥ १८ ॥
अकालफलिनो वृक्षाः सर्वे चापि मधुस्रवाः।
फलान्यमृतगन्धीनि बहूनि विविधानि च ॥ १९ ॥
भवन्तु मार्गे भगवन्नयोध्यां प्रति गच्छतः।
तथेति च प्रतिज्ञाते वचनात् समनन्तरम् ॥ २० ॥
अभवन् पादपास्तत्र स्वर्गपादपसन्निभाः।
निष्फलाः फलिनस्चासन् विपुष्पाः पुष्पशालिनः ॥ २१ ॥
शुष्काः समग्रपत्रास्ते नगाश्चैव मधुस्रवाः।
सर्वतो योजनास्तिस्रो गच्छतामभवंस्तदा ॥ २२ ॥

इतो मदाश्रमान्मे शिष्याः। प्रवृत्त्याख्याः तव प्रवृत्तिमुदन्तमाचक्षते प्रवृत्त्याख्यास्तथाभूताःसन्तस्तव पुरीमयोध्यां सम्पतन्ति अतस्तत् पुरीवृत्तान्तोऽपि ज्ञायत इति शेषः। २६ ॥

अहमपीति। त्रिदशा इवेति भावः। दद्मि ददामि। अर्घ्यं प्रतिगृहाण मया दातुं प्रतिज्ञातस्य वरस्य वरणात् पूर्वमिति शेषः॥ १७ ॥

बाढ़मित्येव प्रतिगृह्येति शेषः ॥ १८ ॥

वरमाह्व कालेति ॥ १९ ॥

यतः प्रहृष्टाः प्लवगर्षभास्ते
बहूनि दिव्यानि फलानि चैव ।
कामादुपाश्नन्ति सहस्रशस्ते-
मुदान्विताः स्वर्गजितो मुदेव ॥ २२ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
षड्विंशोत्तरशततमः सर्गः ॥ १२६ ॥

अयोध्यां प्रतिगच्छतो मम मार्ग एवं वृक्षादयो भवन्तु । वानराणां विश्रामार्थमिति शेषः ॥ २० ॥ २१ ॥ २२ ॥

जयन्तीति जितः स्वर्गस्य जितः स्वर्गजित इव मुदान्वितास्ते प्रसिद्धा वानराः कामाद्यथेच्छमुपाश्नन्ति स्म ॥ २२ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्धकाण्डे षड्विंशोत्तरशततमः सर्गः ॥ १२६ ॥

## सप्तविंशोत्तरशततमः सर्गः ।



अयोध्यान्तु समालोक्य चिन्तयामास राघवः ।
प्रियकामः प्रियं रामस्ततस्त्वरितविक्रमः ॥ १ ॥
चिन्तयित्वा ततो दृष्टिं वानरेषु न्यपातयत् ।
उवाच धीमांस्तेजस्वी हनूमन्तं प्लवङ्गमम् ॥ २ ॥
अयोध्यां त्वरितो गत्वा शीघ्रं प्लवंगसत्तम ! ।
जानीहि कच्चित् कुशली जनो नृपतिमन्दिरे ॥ ३ ॥

पञ्चम्यां चतुर्दशवर्षस्य पूर्णत्वात्तद्दिने भरद्वाजाश्रमे विलम्बस्य प्राप्तत्वात् चतुर्दशसमाप्तौ यदि त्वां न पश्यामि तदा हुताशनं प्रवेक्ष्यामीति भरतोक्तेर्भरतस्य स्वागमननिवेदनाय हनूमत्प्रेषणं स्तवानित्याह,—अयोध्यान्त्विति। समालोक्य। भरद्वाजाश्रमे विमानादवतरणसमये इति भावः। सुग्रीवादीनां सम्यक् शिष्टाचारकरणाय सुहृत्कृत्य तदाकारणानाय च पूर्वं हनूमत्प्रेषणम्। अतएव पाद्मे पञ्चम्यामेव विष्टहनूमत्प्रवेशसमये भरतवर्णनमेवं स्तवम्। अग्निप्रवेश सोद्योगकाले भ्रातुरनागमात्। न्यवेदयत्तदा तस्मै श्रीरामागमनोत्सवमिति। किञ्च। प्रियकाम इति। सुग्रीवादीनां प्रियकामः अयोध्यायां सर्वं तत्प्रियपूरणकामास्तेषां प्रियं यथा भवति तथा चिन्तयामास। कर्त्तव्यजातमिति शेषः॥ १॥ २।

शृङ्गवेरपुरं प्राप्य गुहं गहनगोचरम्।
निषादाधिपतिं ब्रूहि कुशलं वचनान्मम ॥ ४ ॥
श्रुत्वा तु मां कुशलिनमरोगं विगतज्वरम्।
भविष्यति गुहः प्रीतः स ममात्मसमः सखा ॥ ५ ॥
अयोध्यायाश्च ते मार्गं प्रवृत्तिं भरतस्य च।
निवेदयिष्यति प्रीतो निषादाधिपतिर्गुहः ॥ ६ ॥
भरतस्तु त्वया वाच्यः कुशलं वचनान्मम।
सिद्धार्थं शंस मां तस्मै सभार्यं सहलक्ष्मणम् ॥ ७ ॥
हरणञ्चापि वैदेह्या रावणेन बलीयसा।
सुग्रीवेण च संवादं वालिनश्च वधं रणे ॥ ८ ॥
मैथिल्यन्वेषणञ्चैव यथा चाधिगता त्वया।
लङ्घयित्वा महातोयमापगापतिमव्ययम् ॥ ९ ॥
उपयानं समुद्रस्य सागरस्य च दर्शनम्।

यथा क्षिप्रमयोध्या प्राप्यते तथा त्वरितः सन्नयोध्यां गच्छ। नृपति-मन्दिरे वर्त्तमानः सर्वोऽपि जनः कुशलीति जानीहि ॥ ३ ॥

गहनं काननं गोचरो देशो यस्य तम्। मम कुशलं मद्वचनात् ब्रूहि ॥ ४ ॥

आत्मसमः स्वसदृशस्तत्त्वज्ञानित्वात् ॥ ५ ॥ ६ ॥

सिद्धार्थं निर्व्यूढपितृवचनपरिपालनरूपप्रयोजनम् ॥ ७ ॥ ८ ॥

यथा त्वयाधिगता। अस्खलितगता यथा दृष्टेत्यर्थः ॥ ९ ॥

यथा च कारितः सेतू रावणश्च यथा हतः ॥ १० ॥
वरदानं महेन्द्रेण ब्रह्मणा वरुणेन च ।
महादेवप्रसादाच्च पित्रा मम समागमम् ॥ ११ ॥
उपयातञ्च मां सौम्य ! भरताय निवेदय ।
सह राक्षसराजेन हरीणामीश्वरेण च ॥ १२ ॥
जित्वा शत्रुगणान् रामः प्राप्य चानुत्तमं यशः ।
उपायाति समृद्धार्थः सह मित्रैर्महाबलैः ॥ १३ ॥
एतत् श्रुत्वा यमाकारं भजते भरतस्ततः ।
स च ते वेदितव्यः स्यात्सर्वं यच्चापि मां प्रति ॥ १४ ॥
ज्ञेयाः सर्वे च वृत्तान्ता भरतस्येङ्गितानि च ।
तत्त्वेन मुखवर्णेन दृष्ट्या व्याभाषितेन च ॥ १५ ॥

उपयानं पुनः स्वयमस्मत्समीपागमनम्। वानरसेनया सह समुद्रतीरगमनं वा। सागरस्य स्वरूपेण प्रत्यक्षतो दर्शनं दर्शनदानम् ॥ १० ॥

महेन्द्रादिकर्तृकं वरदानं वानरसमुत्थानरूपम्। अत्र ब्रह्मवरुणयोरपि वरदानम्। कर्तृत्वोक्तिः। पूर्वं महेन्द्रसहितो ब्रह्मेति व्याख्यातम् ॥ ११ ॥

उपयातं नगरसमीपमागतम् ॥ १२ ॥ १३ ॥

एतत् श्रुत्वा एतन्मत्कर्तृकं मदागमनं श्रुत्वा यमाकारं खेदानन्दसूचकमाकारम्। स आकारो यच्चापि भरतस्य मां प्रति कर्तव्यं तच्च वेदितव्यम् ॥ १४ ॥

सर्वकामसमृद्धं हि हस्त्यश्वरथसङ्कुलम् ।
पितृपैतामहं राज्यं कस्य नावर्त्तयेन्मनः ॥ १६ ॥
सङ्गत्या भरतः श्रीमान् राज्येनार्थी स्वयं भवेत् ।
प्रशास्तु वसुधां सर्वामखिलां रघुनन्दनः ॥ १७ ॥
तस्य बुद्धिञ्च विज्ञाय व्यवसायञ्च वानर ! ।
यावन्न दूरं याताः स्मः क्षिप्रमागन्तुमर्हसि ॥ १८ ॥
इति प्रतिसमादिष्टो हनूमान्मारुतात्मजः ।

तदेवाह,—ज्ञेया इति । मुखवर्णेन । प्रीतिखेदोचितविकाससङ्कोचाद्याकारेणेत्यर्थः । तत्त्वेन याथार्थ्येन वृत्तान्ता ज्ञेया इत्यन्वयः ॥ १५ ॥

ननु तादृशसौहृदवति कोऽन्यथाशङ्कायाः प्रसङ्गोऽत आह,—सर्वकामेत्यादि । पितृपैतामहं तत्क्रमेणागतम् । नावर्त्तयेत् । अनेन भ्रातर एवं शङ्क्या इति लोकान् बोधयति ॥ १६ ॥

तस्य राज्याकाङ्क्षा चेत् किं करिष्यतीत्याशङ्क्य स एव राज्यं प्रशास्त्वित्याह,—सङ्गत्येति । सङ्गत्या चिरकालपरिचयेन कैकयीसङ्गत्या वा । यदि कैकयीवत् स्वयमपि राज्येनार्थी भवेत् तर्हि स एव वसुधां शास्तु । वयं यत्र क्वापि तपसा कालं नेष्याम इति शेषः ॥ १७ ॥

यावत् अस्मादाश्रमाद्दूरं याता न स्मः । अयोध्याया अतिसमीपं न प्राप्ताः स्म इति यावत् । क्षिप्रमागन्तुमर्हसि । तावदिति शेषः ॥ १८ ॥

मानुषं धारयन् रूपमयोध्यां त्वरितो ययौ ॥ १९ ॥
अथोत्पपात वेगेन हनूमान्मारुतात्मजः।
गरुत्मानिव वेगेन जिघृक्षन्नुरगोत्तमम् ॥ २० ॥
लङ्घयित्वा पितृपथं विहगेन्द्रालयं शुभम्।
गङ्गायमुनयोर्भीमं सम्पातीत्य समागमम् ॥ २१ ॥
शृङ्गवेरपुरं प्राप्य गुहमासाद्य वीर्य्यवान्।
स वाचा शुभया हृष्टो हनूमानिदमब्रवीत् ॥ २२ ॥
सखा तु तव काकुत्स्थो रामः सत्यपराक्रमः।
ससीतः सहसौमित्रिः स त्वां कुशलमब्रवीत् ॥ २३ ॥
पञ्चमीमद्य रजनीमुषित्वा वचनान्मुनेः।
भरद्वाजाभ्यनुज्ञातं द्रक्ष्यस्यद्यैव राघवम् ॥ २४ ॥
एवमुक्त्वा महातेजाः संप्रहृष्टतनूरुहः।
उत्पपात महावेगाद्वेगवानविचारयन् ॥ २५ ॥

मानुषमित्यर्धं संक्षेपः। १९।
तस्यैव प्रपञ्च उत्पपातेत्यादि। २०॥
पितृपथम्: वायुमार्गमन्तरिक्षमित्यर्थः। तद्विशेषं विहगेन्द्रालयं श्रेष्ठविहगानां सञ्चारस्थानम्। २१ ॥ २२ । २३ ।
अद्य पञ्चमीं पञ्चमीसम्बन्धिनीं रजनीमुषित्वा अद्य स्थित्वा श्वो ऽभिष्यसीति भरद्वाजानुज्ञातं राघवं श्वः प्रातरेव द्रक्ष्यसि। २४ ॥

सोऽपश्यद्रामतीर्थञ्च नदीं वालुकिनीं तथा।
वरूथीं गोमतीञ्चैव भीमं शालवनं तथा॥ २६॥

प्रजाश्च बहुसाहस्रीः स्फीतान् जनपदानपि।
स गत्वा दूरमध्वानं त्वरितः कपिकुञ्जरः॥ २७॥

आससाद द्रुमान् फुल्लान्नन्दिग्रामसमीपगान्।
सुराधिपस्योपवने यथा चैत्ररथे द्रुमान्॥ २८॥

स्त्रीभिः सपुत्रैः पौत्रैश्च रममाणैः स्वलङ्कृतैः।
क्रोशमात्रे त्वयोध्यायाश्चीरकृष्णाजिनाम्बरम्॥ २९॥

ददर्श भरतं दीनं कृशमाश्रमवासिनम्।
जटिलं मलदिग्धाङ्गं भ्रातृव्यसनकर्शितम्॥ ३०॥

फलमूलाशिनं दान्तं तापसं धर्मचारिणम्।
समुन्नतजटाभारं वल्कलाजिनवाससम्॥ ३१॥

सम्प्रहृष्टतनूरुहः। जगदानन्दरामसेवकत्वलाभेनेति भावः। अ-विचारयन् अध्वश्रममिति शेषः॥ २५॥

रामतीर्थं परशुरामतीर्थम्। वालुकिनीं तदाख्याम्। शालवनं शालवृक्षवनम्॥ २६॥ २७॥

सुराधिपस्योपवने नन्दनाख्ये। चैत्ररथं कुबेरोद्यानञ्चाच द्रष्ट-व्यम्॥ २८॥

स्वलङ्कृतैरममाणैः पुत्रपौत्रैः सहिताभिः स्त्रीभिरुपलक्षितान् पुष्पा-निति द्रुमविशेषणम्॥ २९॥ ३०॥ ३१॥

नियतं भावितात्मानं ब्रह्मर्षिसमतेजसम्।
पादुके ते पुरस्कृत्य प्रशासन्तं वसुन्धराम्॥ २२॥
चातुर्वर्ण्यस्य लोकस्य त्रातारं सर्वतो भयात्।
उपस्थितममात्यैश्च शुचिभिश्च पुरोहितैः॥ २३॥
बलमुख्यैश्च युक्तैश्च काषायाम्बरधारिभिः।
न हि ते राजपुत्रन्तं चीरकृष्णाजिनाम्बरम्॥ २४॥
परिभोक्तुं व्यवस्यन्ति पौरा वै धर्मवत्सलाः।
तं धर्ममिव धर्मज्ञं देहबन्धमिवापरम्॥ २५॥
उवाच प्राञ्जलिर्वाक्यं हनूमान् मारुतात्मजः।
वसन्तं दण्डकारण्ये यं त्वं चीरजटाधरम्॥ २६॥
अनुशोचसि काकुत्स्थ स त्वां कौशलमब्रवीत्।
प्रियमाख्यामि ते देव! शोकं त्यज सुदारुणम्॥ २७॥

भावितात्मानं ध्यातपरमात्मानम्। अतएव ब्रह्मर्षिसमतेजसम्॥ २२॥

चातुर्वर्ण्यस्य लोकस्य। स्वार्थेष्यञ्। चतुर्वर्णरूपस्य॥ २३॥

बलमुख्यैर्बलाध्यक्षैः युक्तैः काषायाम्बरधारिभिः। यथा राजा तथा प्रजेति न्यायात्। तदेवाह,—न हि ते इति॥ २४॥

परिभोक्तुं परित्यज्य भोक्तुम्। द्वितीय इव शब्दो वाक्यालङ्कारे। इवेति वैकल्पपाठः। देहबन्धं मनुष्यदेहसम्बन्धवन्तम्॥ २५॥ २६॥

अस्मिन् मुहूर्त्ते भ्रात्रा त्वं रामेण सह सङ्गतः।
निहत्य रावणं रामः प्रतिलभ्य च मैथिलीम्॥ ३८॥
उपयाति समृद्धार्थः सह मित्रैर्महाबलैः।
लक्ष्मणश्च महातेजा वैदेही च यशस्विनी।
सीता समग्रा रामेण महेन्द्रेण शची यथा॥ ३९॥
एवमुक्तो हनुमता भरतः कैकयीसुतः।
पपात सहसा हृष्टो हर्षान्मोहमुपागमत्॥ ४०॥
ततो मुहूर्त्तादुत्थाय प्रत्याश्वस्य च राघवः।
हनूमन्तमुवाचेदं भरतः प्रियवादिनम्॥ ४१॥
अशोकजैः प्रीतिमयैः कपिमालिङ्ग्य सम्भ्रमात्।
सिषेच भरतः श्रीमान् विपुलैरश्रुबिन्दुभिः॥ ४२॥
देवो वा मानुषो वा त्वमनुक्रोशादिहागतः।
प्रियाख्यानस्य ते सौम्य! ददामि ब्रुवतः प्रियम्॥ ४३॥

शोकं त्यज सुदारुणमित्यनेनास्य पाशात्तोऽभिप्रवेशोद्यमः सूचित इति बोध्यम्॥ ३७॥

अस्मिन् मुहूर्त्ते। अचिरादित्यर्थः। सङ्गतो भविष्यसीति शेषः॥ ॥ ३८॥ ३९॥

उत्कटहर्षोऽपि चित्तवैवश्यहेतुरिति ज्ञात्वा पपातेत्यादि॥ ४०॥ ॥ ४१॥

अशोकजैर्हर्षजैरित्यश्रुबिन्दुभिरित्यनेनान्वितम्॥ ४२॥

गवां शतसहस्रञ्च ग्रामाणाञ्च शतं परम्।
सकुण्डला: शुभाचारा भार्य्या: कन्यास्तु षोड़श ॥ ४४ ॥
हेमवर्णा: सुनासोरू: शशिसौम्यानना: स्त्रिय:।
सर्वाभरणसम्पन्ना: सम्पन्ना: कुलजातिभि: ॥ ४५ ॥

निशम्य रामागमनं नृपात्मज:
कपिप्रवीरस्य तदाद्भुतोपमम्।
प्रहर्षितो रामदिदृक्षयाभवत्
पुनश्च हर्षादिदमब्रवीद्वच: ॥ ४६ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे
सप्तविंशोत्तरशततमः सर्गः ॥ १२७ ॥

अनुक्रोशात् कृपया। प्रियाख्यानस्य। कर्त्तरि ल्युट्। प्रियाख्यान-कर्त्तु: किं प्रियं ददामि एतत्प्रियाख्यानसमं न किञ्चित् पश्यामीति भाव: ॥ ४३ । ४४ । ४५ ॥

निशम्य प्रहर्षितो रामदिदृक्षया। अत्र युक्तोभवदिति शेषः ॥ ४६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्ध-काण्डे सप्तविंशोत्तरशततमः सर्गः ॥ १२७ ॥

## अष्टाविंशोत्तरशततमः सर्गः ।



बहूनि नाम वर्षाणि गतस्य सुमहद्वनम् ।
शृणोम्यहं प्रीतिकरं मम नाथस्य कीर्त्तनम् ॥ १ ॥
कल्याणी बत गाथेयं लौकिकी प्रतिभाति माम् ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ २ ॥
राघवस्य हरीणाञ्च कथमासीत्समागमः ।
कस्मिन् देशे किमाश्रित्य तत्त्वमाख्याहि पृच्छतः ॥ ३ ॥
स पृष्टो राजपुत्रेण बृस्यां समुपवेशितः ।
आचचक्षे ततः सर्वं रामस्य चरितं वने ॥ ४ ॥

बहूनि वर्षाणि सुमहद्वनं गतस्य मम नाथस्य कीर्त्तनं शृणोम्यहम् ॥ १ ॥

बत इयं लौकिकी गाथा कल्याणीति मां प्रतिभाति । बतेति हर्षे । तां गाथामाह,—एतीति ॥ २ ॥

सह मित्रैरित्यस्य सुग्रीवादिमित्रसहितैरित्यर्थं तन्मुखादवगत्य पृच्छति । राघवस्येति । किमाश्रित्य । किन्निमित्तमाश्रित्येत्यर्थः ॥ ३ ॥

बृस्यां तापसासने ॥ ४ ॥

यथा प्रव्राजितो रामो मातुर्दत्तौ वरौ तव।
यथा च पुत्रशोकेन राजा दशरथो मृतः॥ ५॥
यथा दूतैस्त्वमानीतस्तूर्णं राजगृहात्प्रभो!।
त्वयायोध्यां प्रविष्टेन यथा राज्यं न चेप्सितम्॥ ६॥
चित्रकूटगिरिं गत्वा राज्येनामित्रकर्शनः।
निमन्त्रितस्त्वया भ्राता धर्ममाचरता सताम्॥ ७॥
स्थितेन राज्ञो वचने यथा राज्यं विसर्जितम्।
आर्य्यस्य पादुके गृह्य यथासि पुनरागतः॥ ८॥
सर्वमेतन्महाबाहो! यथावद्विदितं तव।
त्वयि प्रतिप्रयाते तु यद् वृत्तं तन्निबोध मे॥ ९॥
अपयाते त्वयि तदा समुद्भ्रान्तमृगद्विजम्।
परिद्यूनमिवात्यर्थं तद्वनं समपद्यत॥ १०॥
तद्धस्तिमृदितं घोरं सिंहव्याघ्रमृगाकुलम्।

यथाशब्दानां तवानुभवसिद्ध इत्यर्थः। मातूराज्ञा वरौ दत्तौ। तत एव राज्ञा रामः प्रव्राजित इति यथा तवानुभवसिद्धमित्यर्थः॥ ५॥

एवमग्रेऽपि। राजगृहात्तदाख्यात् केकयपुरात्॥ ६॥ ७॥

विसर्जितं रामायेति शेषः॥ ८॥ ९॥

परिद्यूनं परिक्षीणं पीड़ितमिति यावत्॥ १०॥

प्रविवेशाथ विजनं स महद्दण्डकावनम् ॥ ११ ॥
तेषां पुरस्ताद्बलवान् गच्छतां गहने वने ।
विनदन् सुमहानादं विराधः प्रत्यदृश्यत ॥ १२ ॥
तमुत्क्षिप्य महानादमूर्द्ध्वबाहुमधोमुखम् ।
निखाते प्रक्षिपन्ति स्म नदन्तमिव कुञ्जरम् ॥ १३ ॥
तत् कृत्वा दुष्करं कर्म्म भ्रातरौ रामलक्ष्मणौ ।
सायाह्ने शरभङ्गस्य रम्यमाश्रममीयतुः ॥ १४ ॥
शरभङ्गे दिवं प्राप्ते रामः सत्यपराक्रमः ।
अभिवाद्य मुनीन् सर्व्वान् जनस्थानमुपागमत् ॥ १५ ॥
चतुर्द्दशसहस्राणि जनस्थाननिवासिनाम् ।
हतानि वसता तत्र राघवेण महात्मना ॥ १६ ॥
एकेन सह सङ्गम्य रामेण रणमूर्द्धनि ।
अह्नश्चतुर्थभागेन निःशेषा राक्षसाः कृताः ॥ १७ ॥
महाबला महावीर्य्यास्तपसोविघ्नकारिणः ।
निहता राघवेणाजौ दण्डकारण्यवासिनः ॥ १८ ॥
राक्षसाश्च विनिर्ष्पिष्टाः खरश्च निहतो रणे ।

तत्तदनन्तरम् ॥ ११ ॥ १२ ॥
निखाते गर्त्ते । प्रक्षिपन्ति स्म । प्रक्षिप्तवन्तावित्यर्थः ॥ १३ ॥
॥ १४ ॥ १५ ॥ १६ ॥

दूषणञ्चायतो; हत्वा त्रिशिराञ्च दुरासदम् ॥ १९ ॥
पश्चाच्छूर्पणखा नाम रामपार्श्वमुपागता ।
ततो रामेण सन्दिष्टो लक्ष्मणः सहसोत्थितः ॥ २० ॥
प्रगृह्य खड्गं चिच्छेद कर्णनासे महाबलः ।
ततस्तेनार्दिता बाला रावणं समुपागता ॥ २१ ॥
रावणानुचरो; घोरो मारीचो नाम राक्षसः ।
लोभयामास वैदेहीं भूत्वा रत्नमयो मृगः ॥ २२ ॥
सा राममब्रवीद् दृष्ट्वा वैदेही गृह्यतामिति ।
अयं मनोहरः कान्त आश्रमो नो भविष्यति ॥ २३ ॥
ततो रामो धनुष्पाणिर्मृगन्तमनुधावति ।

अह्नश्चतुर्थभागेन । इदञ्च राक्षसार्दनयुद्धसन्नाहसीताग्रहाप्रेष-ण्यादिसर्वव्यापारापेक्षया । युद्धकालस्त्वर्धाधिकमुहूर्त्तमेतावानेवाह्नो उक्तः ॥ १७ ॥ १८ ॥ १९ ॥

ननु रक्षसां बधे को हेतुस्तत्राह,—पश्चादिति । जनस्थानोपा-गमानन्तरमित्यर्थः ॥ २० ॥

कर्णनासे चिच्छेद । ततस्तत्प्रेरितचतुर्दशसहस्रराक्षसां बध इति शेषः । ततः खरादिबधानन्तरम् । तेन लक्ष्मणेन पूर्वमर्दिता सा बाला मूर्खा रावणमुपागमत् ॥ २१ ॥ २२ ॥

मृगमिति शेषः । दृष्ट्वा राममब्रवीत् । यदेवाह,—अयं मृगो गृह्यताम् । गृहीतेनानेन आश्रमो मनोहरो भविष्यति ॥ २३ ॥

स तं जघान धावन्तं शरेणानतपर्वणा ॥ २४ ॥
अथ सौम्य ! दशग्रीवो मृगयां याति राघवे ।
लक्ष्मणे चापि निष्क्रान्ते प्रविवेशाश्रमं तदा ॥ २५ ॥
जग्राह तरसा सीतां ग्रहः खे रोहिणीमिव ।
त्रातुकामं ततो युद्धे हत्वा गृध्रं जटायुषम् ॥ २६ ॥
प्रगृह्य सहसा सीतां जगामाशु स राक्षसः ।
ततस्त्वद्भुतसङ्काशाः स्थिताः पर्वतमूर्द्धनि ॥ २७ ॥
सीतां गृहीत्वा गच्छन्तं वानराः पर्वतोपमाः ।
ददृशुर्विस्मिताकारा रावणं राक्षसाधिपम् ॥ २८ ॥
ततः शीघ्रतरं गत्वा तद्विमानं मनोजवम् ।
आरुह्य सह वैदेह्या पुष्पकं स महाबलः ॥ २९ ॥
प्रविवेश तदा लङ्कां रावणो राक्षसेश्वरः ।
तां सुवर्णपरिष्कारे शुभे महति वेश्मनि ॥ ३० ॥
प्रवेश्य मैथिलीं वाक्यैः सान्त्वयामास रावणः ।

अनुधावति अनुधावति स्म ॥ २४ ॥ २५ ॥ २६ ॥
सहसा बलात्कारेण ॥ २७ ॥
विस्मिता ददृशुः । सुग्रीवादय इति भावः ॥ २८ ॥
तत इति । अनेन मार्गे क्वचित् स्थापितं शुभे देशे आसीत्
स्वतिमाणेन वा तदुपस्थानं बोध्यम् ॥ २९ ॥

तृणवच्छादितं तस्य तस्य नैर्ऋतपुङ्गवम् ॥ २१ ॥
अचिन्तयन्ती वैदेही ह्यशोकवनिकां गता।
न्यवर्त्तत तदा रामो मृगं हत्वा तदा वने ॥ २२ ॥
निवर्त्तमानः काकुत्स्थो दृष्ट्वा गृध्रं स विव्यथे।
गृध्रं हतं तदा दृष्ट्वा रामः प्रियतरं पितुः ॥ २३ ॥
मार्गमाणस्तु वैदेहीं राघवः सहलक्ष्मणः।
गोदावरीमनुचरन् वनोद्देशांश्च पुष्पितान् ॥ २४ ॥
आसेदतुर्महारण्ये कबन्धं नाम राक्षसम्।
ततः कबन्धवचनाद्रामः सत्यपराक्रमः ॥ २५ ॥
ऋष्यमूकगिरिं गत्वा सुग्रीवेण समागतः।
ततः समागमः पूर्वं प्रीत्या हार्दो व्यजायत ॥ २६ ॥
भ्रात्रा निरस्तः क्रुद्धेन सुग्रीवो वालिना पुरा।
इतरेतरसंवादात् प्रगाढ़ः प्रणयस्तयोः ॥ २७ ॥
रामः स्वबाहुवीर्य्येण स्वराज्यं प्रत्यपादयत्।

तदा तत इत्यर्थः। सुवर्णपरिस्कारे सुवर्णप्राकारे ॥ २० । २१ ।
तृणवदचिन्तयन्ती अगणयन्ती । २२ । २३ । २४ ।
कबन्धवचनान्निहत दग्धकबन्धवचनादित्यर्थः ॥ २५ ॥
तयोः पूर्वं परस्परसान्निध्यात् पूर्वं रामस्य श्रवणेन सुग्रीवस्य दूरादर्शनेन हार्दः समागमो मानसं सख्यं जातमित्यर्थः । २६ ॥

वालिनं समरे हत्वा महाकायं महाबलम् ॥ ३८ ॥
सुग्रीवः स्थापितो राज्ये सहितः सर्ववानरैः ।
रामाय प्रतिजानीते राजपुत्र्यास्तु मार्गणम् ॥ ३९ ॥
आदिष्टा वानरेन्द्रेण सुग्रीवेण महात्मना ।
दशकोट्यः प्लवङ्गानां सर्वाः प्रस्थापिता दिशः ॥ ४० ॥
तेषां नो विप्रनष्टानां विन्ध्ये पर्वतसत्तमे ।
भृशं शोकाभितप्तानां महान् कालोऽत्यवर्त्तत ॥ ४१ ॥
भ्राता तु गृध्रराजस्य सम्पातिर्नाम वीर्य्यवान् ।
समाख्याति स्म वसतीं सीतां रावणमन्दिरे ॥ ४२ ॥
सोऽहं दुःखपरीतानां दुःखं तज्ज्ञातिनां नुदन् ।
आत्मवीर्य्यं समास्थाय योजनानां शतं प्लुतः ।
तत्राहमेकामद्राक्षमशोकवनिकां गताम् ॥ ४३ ॥
कौशेयवस्त्रां मलिनां निरानन्दां दृढ़व्रताम् ।
तया समेत्य विधिवत् पृष्ट्वा सर्वमनिन्दिताम् ॥ ४४ ॥

तत्र हेतुमाह,—भ्रातेति। अतस्तयोः परस्परसंवादात् प्रगाढ़ः प्रणय आसीत् ॥ ३७ । ३८ ॥

रामायेति । अत्र क्रमो न विवक्षितः ॥ ३९ ॥

आदिष्टा नियुक्ताः ॥ ४० ॥

विप्रनष्टानां बिलप्रवेशानन्तरं निर्गममार्गमजानताम् । विप्रणष्टानामिति पाठेऽतीतकालानामित्यर्थः ॥ ४१ ॥ ४२ ॥

अभिज्ञानं मया दत्तं रामनामाङ्गुलीयकम्।
अभिज्ञानं मणिं लब्ध्वा चरितार्थोऽहमागतः ॥ ४५ ॥
मया च पुनरागम्य रामस्याक्लिष्टकर्मणः।
अभिज्ञानं मया दत्तमर्चिष्मान् स महामणिः ॥ ४६ ॥
श्रुत्वा तां मैथिलीं रामस्त्वाशशंसे च जीवितम्।
जीवितान्तमनुप्राप्तः पीत्वामृतमिवातुरः ॥ ४७ ॥
उद्योजयिष्यन्नुद्योगं दध्रे लङ्कावधे मनः।
जिघांसुरिव लोकान्ते सर्वान् लोकान् विभावसुः ॥ ४८ ॥
ततः समुद्रमासाद्य नलं सेतुमकारयत्।
अतरत् कपिवीराणां वाहिनी तेन सेतुना ॥ ४९ ॥
प्रहस्तमवधीन्नीलः कुम्भकर्णन्तु राघवः।
लक्ष्मणो रावणसुतं स्वयं रामस्तु रावणम् ॥ ५० ॥
स शक्रेण समागम्य यमेन वरुणेन च।
महेश्वरस्वयम्भूभ्यां तथा दशरथेन च ॥ ५१ ॥
तैश्च दत्तवरः श्रीमानृषिभिश्च समागतैः।
सुरर्षिभिश्च काकुत्स्थो वरान् लेभे परन्तपः ॥ ५२ ॥
स तु दत्तवरः प्रीत्या वानरैश्च समागतः।

स्रातिनामित्यत्र दीर्घाभाव आर्षः ॥ ४१ ॥ ४४ ॥
मणिं सीताशकाशाच्चूडामणिं लब्ध्वेत्यर्थः ॥ ४५ ॥ ४६ ॥ ४७ ॥

पुष्पकेण विमानेन किष्किन्धामभ्युपागमत् ॥ ५३ ॥

तां गङ्गां पुनरासाद्य वसन्तं मुनिसन्निधौ ।

अविघ्नं पुष्ययोगेन श्वो रामं द्रष्टुमर्हसि ॥ ५४ ॥

ततः स वाक्यैर्मधुरैर्हनूमतो

निशम्य हृष्टो भरतः कृताञ्जलिः ।

उवाच वाणीं मनसः प्रहर्षिणीं

चिरस्य पूर्णः खलु मे मनोरथः ॥ ५५ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे

अष्टाविंशोत्तरशततमः सर्गः ॥ १२८ ॥

उद्युज्यते अनेनेति उद्योगं बलं तद्योजयिष्यन् प्रोत्साहयिष्यन् ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥

मुनिसन्निधावद्य वसन्तं श्वो द्रष्टुमर्हसि । आश्विनशुक्लचतुर्दश्यामश्विनी तदृक्षं इति मघायां पुष्यस्य सम्भवः । पूर्णिमायामश्विन्यामपि एकत्वंप्रत्ययेन वा ॥ ५४ ॥

कृताञ्जलिः । रामं प्रत्येति शेषः । मे मनोरथः पूर्णः खल्विति उवाच ॥ ५५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्धकाण्डे अष्टाविंशोत्तरशततमः सर्गः ॥ १२८ ॥

---

## एकोनत्रिंशोत्तरशततमः सर्गः ।



श्रुत्वा तु परमानन्दं भरतः सत्यविक्रमः ।
हृष्टमाज्ञापयामास शत्रुघ्नं परवीरहा ॥ १ ॥

दैवतानि च सर्वाणि चैत्यानि नगरस्य च ।
सुगन्धमाल्यैर्वादित्रैरर्चन्तु शुचयो नराः ॥ २ ॥

सूताः स्तुतिपुराणज्ञाः सर्वे वैतालिकास्तथा ।
सर्वे वादित्रकुशला गणिकाश्चैव सर्वशः ॥ ३ ॥

राजदारास्तथामात्याः सैन्याः सेनाङ्गनागणाः ।
ब्राह्मणाश्च सराजन्याः श्रेणीमुख्यास्तथा गणाः ॥ ४ ॥

अभिनिर्यान्तु रामस्य द्रष्टुं शशिनिभं मुखम् ।
भरतस्य वचः श्रुत्वा शत्रुघ्नः परवीरहा ॥ ५ ॥

परमानन्दं तत्करं वच इति शेषः ॥ १ ॥

दैवतानि कुलदैवतानि । नगरस्य चैत्यानि साधारणदेवतायतनानि अर्चन्तु अर्चयन्तु ॥ २ ॥

स्तुतिपुराणज्ञा इति स्तवनसाधनरूपं स्तवविशेषणम् । वैतालिकाः वंशावलीकीर्तकाः ॥ ३ ॥

विष्टीरनेकसाहस्रीश्चोदयामास भागशः ।
समीकुरुत निम्नानि विषमाणि समानि च ॥ ६ ॥
स्थानानि च निरस्यन्तां नन्दिग्रामादितः परम् ।
सिञ्चन्तु पृथिवीं कृत्स्नां हिमशीतेन वारिणा ॥ ७ ॥
ततोऽभ्यवकिरन्त्वन्ये लाजैः पुष्पैश्च सर्वतः ।
समुच्छ्रितपताकास्तु रथ्याः पुरवरोत्तमे ॥ ८ ॥
शोभयन्तु च वेश्मानि सूर्य्यस्योदयनं प्रति ।
स्रग्दाममुक्तपुष्पैश्च सुवर्णैः पञ्चवर्णकैः ॥ ९ ॥
राजमार्गमसम्बाधं किरन्तु शतशो नराः ।
ततस्तच्छासनं श्रुत्वा शत्रुघ्नस्य मुदान्विताः ॥ १० ॥

राजदारा मातरः । सैन्याः राजभवनात् भृतिमन्तोऽभ्यन्तराः सेनागणा आटविकान्तसेनाभेदास्तथाङ्गनागणाः । श्रेणी नानाजातीयसङ्घः ॥ ४ ॥ ५ ॥

विष्टीर्भृतिकरान् भागशो विभज्येति शेषः । विषमाणि स्थलानि अत्युन्नतदेशाः । समानि च स्थानानि । निरस्यन्ताम् अयं भेदो निराक्रियताम् । सर्वं समं क्रियतामिति यावत् ॥ ६ ॥

इतो नन्दिग्रामात् परं यावदयोध्याम् । तावत्तत्र गन्तव्यदेशत्वादिति भावः ॥ ७ ॥

समुच्छ्रितपताका रथ्याः कार्य्याः ॥ ८ ॥

सूर्य्यस्योदयनम्प्रति । श्वः सूर्य्योदयकाले यथा सर्वं सम्पन्नं भवति

वसिष्ठर्जयन्तो विजयः सिद्धार्थश्चार्थसाधकः।
अशोको मन्त्रपालश्च सुमन्त्रश्चापि निर्ययुः॥ ११॥
मत्तैर्नागसहस्रैश्च सध्वजैः सुविभूषितैः।
अपरे हेमकक्षाभिः सगजाभिः करेणुभिः॥ १२॥
निर्ययुस्तुरगाक्रान्ता रथैश्च सुमहारथाः।
शक्तृरष्टिपाशहस्तानां सध्वजानां पताकिनाम्॥ १३॥
तुरगाणां सहस्रैश्च मुख्यैर्मुख्यतरान्वितैः।
पदातीनां सहस्रैश्च वीराः परिवृता ययुः॥ १४॥
ततो यानान्युपारूढाः सर्वा दशरथस्त्रियः।
कौशल्यां प्रमुखे कृत्वा सुमित्राञ्चापि निर्ययुः॥ १५॥
द्विजातिमुख्यैर्धर्मात्मा श्रेणीमुख्यैः सनैगमैः।
माल्यमोदकहस्तैश्च मन्त्रिभिर्भरतो वृतः॥ १६॥
शङ्खभेरीनिनादैश्च बन्दिभिश्चाभिनन्दितः।

तथा कुसुमैरित्यर्थः। विरलपुष्पबन्धाः स्रजः। निबिड़पुष्पबन्धं दाम। मुक्तपर्णानि बन्धरहितानि पुष्पाणि। पुष्पविशेषणं सुवर्णैरिति। पञ्चवर्णैः पञ्चवर्णकल्पितैरलङ्कारैः॥ ९॥ १०॥

वसिष्ठादयोऽष्टमन्त्रिणो निर्ययुः। उदयात् पूर्वं यथोक्तराजमार्गसत्कारं कृत्वा प्रातर्निर्ययुरित्यर्थः॥ ११॥ १२॥ १३॥ १४॥ १५॥

नैगमा वणिजः। वैदेहकः सार्थवाहो नैगमो वणिजो वणिगित्यमरः॥ १६॥

आर्य्यपादौ गृहीत्वा तु शिरसा धर्मकोविदः ॥ १७ ॥
पाण्डरं छत्रमादाय शुक्लमाल्योपशोभितम्।
शुक्ले च वालव्यजने राजार्हे हेमभूषिते ॥ १८ ॥
उपवासकृशो दीनश्चीरकृष्णाजिनाम्बरः।
भ्रातुरागमनं श्रुत्वा तत्पूर्वं हर्षमागतः ॥ १९ ॥
प्रत्युद्ययौ तदा रामं महात्मा सचिवैः सह।
अश्वानां खुरशब्दैश्च रथनेमिस्वनेन च ॥ २० ॥
शङ्खदुन्दुभिनादेन सञ्चचालेव मेदिनी।
गजानां बृंहितैश्चापि शङ्खदुन्दुभिनिःस्वनैः ॥ २१ ॥
कृत्स्नन्तु नगरं तत्तु नन्दिग्राममुपागमत्।
समीक्ष्य भरतो वाक्यमुवाच पवनात्मजम् ॥ २२ ॥
कच्चिन्न खलु कापेयी सेव्यते चलचित्तता।
न हि पश्यामि काकुत्स्थं राममार्य्यं परन्तपम् ॥ २३ ॥
कच्चिन्न चानुदृश्यन्ते कपयः कामरूपिणः।
अथैवमुक्ते वचने हनूमानिदमब्रवीत् ॥ २४ ॥

आर्य्यपादौ श्रीरामपादुके ॥ १७ ॥ १८ ॥

उपवासकृश इत्यनेन रामादेरपि किञ्चित्कालमुपवासोऽनुमेयः। तत्पूर्वम् आगमनश्रवणपूर्वकम् ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

यावन्न दूरं यातोऽसि क्षिप्रमागन्तुमर्हसीति हनूमन्तम्प्रति रामो-

अर्थ्यं विज्ञापयन्नेव भरतं सत्यविक्रमम् ।
सदाफलान् कुसुमितान् वृक्षान् प्राप्य मधुस्रवान् ॥ २५ ॥
भरद्वाजप्रसादेन मत्तभ्रमरनादितान् ।
तस्य चैव वरो दत्तो वासवेन परन्तप ! ॥ २६ ॥
ससैन्यस्य तदातिथ्यं कृतं सर्वगुणान्वितम् ।
निःस्वनः श्रूयते भीमः प्रहृष्टानां वनौकसाम् ॥ २७ ॥
मन्ये वानरसेना सा नदीं तरति गोमतीम् ।
रजोवर्षं समुद्भूतं पश्य सालवनम्प्रति ॥ २८ ॥

ततोऽभरते सर्वां कथामुक्त्वा पुनरामसमीपं गत्वा रामम्प्रति भरतवृत्तान्तं निवेद्य पुनर्नन्दिग्राममम्प्रति रामाज्ञया गते एतद्भरतवचनम्प्रतीति बोध्यम् । कापेयी कपिस्वभावप्रयुक्ता चलचित्तता न सेव्यते नानुष्ठीयते कश्चित् । मिथ्या नोच्यते कश्चिदित्यर्थः । कुत एवं प्रज्ञा तत्राह,—न ह्येति ॥ २३ ॥ २४ ॥

एवं मिथ्यावादित्वप्रज्ञायां तन्निवृत्तयेऽर्थ्यमर्थादनपेतं विज्ञापयन्निदमब्रवीत् । सदाफलत्वादिविशिष्टान् वृक्षान् प्राप्य प्रहृष्टानां वनौकसां भूमौ निःस्वनः श्रूयतेऽतस्त्वं प्रयाहीति शेषः ॥ २५ ॥

वृक्षाणां तथाविधत्वं कुतस्तत्राह,—भरद्वाजप्रसादेनेति । तेनापि कथमेवं शक्यं तत्राह,—तस्य चेति । भरद्वाजस्य चेत्यर्थः । वासवेनेति । तत्तप प्रसादितेनेत्यर्थः ॥ २६ ॥

यदेवमतः ससैन्यस्य तव रामस्य च भरद्वाजेन सर्वगुणान्वितमातिथ्यं कृतम् ॥ २७ ॥

मन्ये वासवनं रम्यं लोलयन्ति प्लवङ्गमाः।
तदेतत् दृश्यते दूराद्विमानं चन्द्रसन्निभम् ॥ २९ ॥
विमानं पुष्पकं दिव्यं मनसा ब्रह्मनिर्मितम्।
रावणं बान्धवैः सार्धं हत्वा लब्धं महात्मना ॥ ३० ॥
तरुणादित्यसङ्काशं विमानं रामवाहनम्।
धनदस्य प्रसादेन दिव्यमेतन्मनोजवम् ॥ ३१ ॥
एतस्मिन् भ्रातरौ वीरौ वैदेह्या सह राघवौ।
सुग्रीवश्च महातेजा राक्षसश्च विभीषणः ॥ ३२ ॥
ततो हर्षसमुद्भूतो निःस्वनो दिवमस्पृशत्।
स्त्रीबालयुववृद्धानां रामोऽयमिति कीर्त्तिते ॥ ३३ ॥

यतो ध्वनिः श्रूयतेऽतः सा सेना गोमतीं तरतीति मन्ये। वालुकीति पाठान्तरम्। तच्छ्रवणानन्तरमाह,—रजोवर्षमिति। २८ ॥

वाक्यान्तरमाह,—तदेतदिति। २९।

मनसा ब्रह्मनिर्मितम्। ब्रह्मणा सङ्कल्पसाध्यादिस्यकर्मणा निर्मितम्। ३०।

एतद्दिव्यं मनोजवं विमानं प्रसादेन ब्रह्मणः प्रसादेन धनदस्य भवतीति शेषः। परेण तपसा लेभे यत् कुबेरः पितामहादिति सुन्दरकाण्डोक्तेः। ३१ ॥

एतस्मिन् विमाने राघवौ सुग्रीवो विभीषणश्च तिष्ठतीति शेषः।
॥ ३२। ३३।

रथकुञ्जरवाजिभ्यस्तेऽवतीर्य्य मही गताः।
ददृशुस्तं विमानस्थं नराः सोममिवाम्बरे ॥ ३४ ॥
प्राञ्जलिर्भरतो भूत्वा प्रहृष्टो राघवोन्मुखः।
यथार्थेनार्घ्यपाद्याद्यैस्ततो राममपूजयत् ॥ ३५ ॥
मनसा ब्रह्मणा सृष्टे विमाने भरताग्रजः।
रराज पृथुदीर्घाक्षो वज्रपाणिरिवामरः ॥ ३६ ॥
ततो विमानाग्रगतं भरतो भ्रातरन्तदा।
ववन्दे प्रणतो रामं मेरुस्थमिव भास्करम् ॥ ३७ ॥
ततो रामाभ्यनुज्ञातं तद्विमानमनुत्तमम्।
हंसयुक्तं महावेगं निपपात महीतलम् ॥ ३८ ॥
आरोपितो विमानन्तद्भरतः सत्यविक्रमः।
राममासाद्यमुदितः पुनरेवाभ्यवादयत् ॥ ३९ ॥
तं समुत्थाय काकुत्स्थश्चिरस्याक्षिपथं गतम्।
अङ्के भरतमारोप्य मुदितः परिषस्वजे ॥ ४० ॥
ततो लक्ष्मणमासाद्य वैदेहीञ्च परन्तपः।

तत आसन्ने भरतादयस्तं ददृशुरित्याह,—ददृशुरिति। ३४।
यथार्थेन स्वागतेन। अन्वर्थेन स्वागतेनेत्यर्थः। यस्यागमनं परमकल्याणं
तत् स्वागतमित्यर्थानुगतिमतेत्यर्थः॥ ३५। ३६। ३७। ३८।
अभ्यवादयत। अभ्यवन्ददित्यर्थः। ३९। ४०।

अथाभ्यवादयत् प्रीतो भरतो नाम चाब्रवीत् ॥ ४१ ॥
सुग्रीवं कैकयीपुत्रो जाम्बवन्तमथाङ्गदम् ।
मैन्दञ्च द्विविदं नीलमृषभञ्चैव सस्वजे ॥ ४२ ॥
सुषेणञ्च नलञ्चैव गवाक्षं गन्धमादनम् ।
शरभं पनसञ्चैव परितः परिषस्वजे ॥ ४३ ॥
ते कृत्वा मानुषं रूपं वानराः कामरूपिणः ।
कुशलं पर्य्यपृच्छंस्ते प्रहृष्टा भरतन्तदा ॥ ४४ ॥
अथाब्रवीद्राजपुत्रः सुग्रीवं वानरर्षभम् ।
परिष्वज्य महातेजा भरतो धर्मिणां वरः ॥ ४५ ॥

लक्ष्मणमासाद्य वन्दमानं लक्ष्मणं परिष्वङ्गादिना सम्भाव्य । अन्वयः पाञ्चजन्यात्मा कैकेय्यां भरतोऽभवत् । तदन्वयः सुमित्रायामनन्तात्मा च लक्ष्मणः । सुदर्शनात्मा शत्रुघ्नो द्वौ जातौ युगपत् प्रिये इति पाद्मे शिवोक्तेः । वैदेहीमभ्यवादयत् । अभ्यवन्दत् । परं तु । यद्यपि लक्ष्मणो भरतात् कनिष्ठो वयसा । स्पष्टञ्चेदं जन्मप्रकरणे । तथापि ज्येष्ठानुवर्त्तनेन स्वापेक्षयाधिकगुणत्वेन स्वव्यवहारेण ज्येष्ठानुवृत्तिरेवं कर्त्तव्येति भरतं प्रत्युपदेशप्रदानेन च गुरुत्वबुद्ध्या तस्य नतिरुचितैव । किञ्च कौशल्यायै प्रथमं दत्तपायसांशजत्वाल्लक्ष्मणस्य ज्येष्ठत्वम् । ततो हि कैकेय्यै पायसार्धदानं तदंशजश्च शत्रुघ्न इति स एव भरतात् कनिष्ठः । अतएव वैदेहीञ्चेति चकारः स्वरसतः सङ्गच्छते । अतएव च शत्रुघ्नकृतो लक्ष्मणनमस्कार उपपद्यते । तयोर्युगपदुत्पन्नत्वादित्याहुः ॥ ४१ ॥
॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

त्वमस्माकञ्चतुर्णां वै भ्राता सुग्रीव ! पञ्चमः ।
सौहृदाज्जायते मित्रमपकारोऽरिलक्षणम् ॥ ४६ ॥
विभीषणञ्च भरतः सान्त्ववाक्यमथाब्रवीत् ।
दिष्ट्या त्वया सहायेन कृतं कर्म सुदुष्करम् ॥ ४७ ॥
शत्रुघ्नश्च तदा राममभिवाद्य सलक्ष्मणम् ।
सीतायाश्चरणौ वीरो विनयादभ्यवादयत् ॥ ४८ ॥
रामो मातरमासाद्य विवर्णां शोककर्शिताम् ।
जग्राह प्रणतः पादौ मनो मातुः प्रहर्षयन् ॥ ४९ ॥
अभिवाद्य सुमित्राञ्च कैकेयीञ्च यशस्विनीम् ।
समातृंश्च ततः सर्वाः पुरोहितमुपागमत् ॥ ५० ॥
स्वागतं ते महाबाहो कौशल्यानन्दवर्धन ! ।
इति प्राञ्जलयः सर्वे नागरा राममब्रुवन् ॥ ५१ ॥
तान्यञ्जलिसहस्राणि प्रगृहीतानि नागरैः ।
व्याकोशानीव पद्मानि ददर्श भरताग्रजः ॥ ५२ ॥
पादुके ते तु रामस्य गृहीत्वा भरतः स्वयम् ।

पञ्चमो भ्राता भ्रातृविषयकपञ्चत्वसंख्यापूरणः । सौहृदात्तत्पूर्वकोपकारात् ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

कैकेयीञ्च यशस्विनीम् । अस्या मनोदार्ढ्येन राजा नरकात्तारितो देवा अन्धर्वयञ्च परमं सुखं प्राप्ता रामस्य च यशो जातमत एषा यशस्विन्येव ॥ ५० ॥ ५१ ॥

चरणाभ्यां नरेन्द्रस्य योजयामास धर्मवित् ॥ ५३ ॥

अब्रवीच्च तदा रामं भरतः स कृताञ्जलिः ।
एतत्ते सकलं राज्यं न्यासं निर्य्यातितं मया ॥ ५४ ॥

अद्य जन्म कृतार्थं मे संवृत्तश्च मनोरथः ।
यत्त्वां पश्यामि राजानमयोध्यां पुनरागतम् ॥ ५५ ॥

अवेक्षतां भवान् कोशं कोष्ठागारं गृहं बलम् ।
भवतस्तेजसा सर्वं कृतं दशगुणं मया ॥ ५६ ॥

तथाब्रुवाणं भरतं दृष्ट्वा तं भ्रातृवत्सलम् ।
मुमुचुर्वानरा बाष्पं राक्षसश्च विभीषणः ॥ ५७ ॥

ततः प्रहर्षाद्भरतमङ्कमारोप्य राघवः ।
ययौ तेन विमानेन ससैन्यो भरताश्रमम् ॥ ५८ ॥

भरताश्रममासाद्य ससैन्यो राघवस्तदा ।
अवतीर्य्य विमानाग्रादवतस्थे महीतले ॥ ५९ ॥

अब्रवीत्तु तदा रामस्तद्विमानमनुत्तमम् ।
वह वैश्रवणं देवमनुजानामि गम्यताम् ॥ ६० ॥

ततो रामाभ्यनुज्ञातं तद्विमानमनुत्तमम् ।

व्याकोशानि विकसितानि ॥ ५२ ॥ ५३ ॥

एतत् एतावत्कालं मया रक्षितं न्यासभूतं मयि स्थितं राज्यं मया ते निर्य्यातितं तुभ्यं निवेदितम् ॥ ५४ ॥ ५५ ॥ ५६ ॥

उत्तरां दिशमुद्दिश्य जगाम धनदालयम् ॥ ६१ ॥
विमानं पुष्पकं दिव्यं संगृहीतन्तु रक्षसा ।
अगमद्धनदं वेगाद्रामवाक्यप्रचोदितम् ॥ ६२ ॥

पुरोहितस्यात्मसखस्य राघवो
बृहस्पतेः शक्र इवामराधिपः ।
निपीड्य पादौ पृथगासने शुभे
सहैव तेनोपविवेश वीर्य्यवान् ॥ ६३ ॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे एकोन-
त्रिंशोत्तरशततमः सर्गः ॥ १२९ ॥

विभीषणस्य बाष्पं मुमोच । ईदृशा अपि भ्रातरः सन्तीत्यानन्देन अस्य तद्वैपरीत्यजशोकेन च ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥

पुरोहितस्यात्मसखस्येति । वसिष्ठपुत्रस्य सुयज्ञस्येत्यर्थः । आत्म-समस्येति पाठान्तरम् । अद्भुतत्वादिति भावः । वसिष्ठस्येत्यर्थ इति तीर्थः ॥ ६३ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्ध-
काण्डे एकोनत्रिंशोत्तरशततमः सर्गः ॥ १२९ ॥

---

## त्रिंशोत्तरशततमः सर्गः ।



शिरस्यञ्जलिमाधाय कैकेयीनन्दिवर्द्धनः ।
बभाषे भरतो ज्येष्ठं रामं सत्यपराक्रमम् ॥ १ ॥
पूजिता मामिका माता दत्तं राज्यमिदं मम ।
तद्ददामि पुनस्तुभ्यं यथा त्वमददा मम ॥ २ ॥
धुरमेकाकिना न्यस्तां वृषभेण बलीयसा ।
किशोरवद्गुरुं भारं न वोढुमहमुत्सहे ॥ ३ ॥

शिरसीति ॥ १ ॥

त्वया मामिका माता पूजिता । तदुक्तवनवासानुष्ठानात् । मया चित्रकूटे तव समर्पितमिदं राज्यं त्वं पुनश्चित्रकूट एव मम दत्तवान् । तत्पुनस्तुभ्यमहं ददामि । ननु कथं दत्तस्य पुनर्दानं तत्राह,—यथेति । यथा त्वं मद्दत्तं राज्यं मह्यमददास्तथा मयापि त्वद्दत्तं तुभ्यं दीयते इत्यर्थः ॥ २ ॥

ननु त्वद्दत्तराज्यभोगमहं करिष्यामि राज्यन्तु त्वमेव पालये-त्यत्राह,—धुरमिति । एकाकिना स्वसमानधूर्वहबलीवर्दान्तररहितेन बलीयसा वृषभेण बलीवर्देन न्यस्तां क्षिप्तां किशोरवत् पार्श्ववर्ति-वड़वा बालवत्सो यथा वोढुं नोत्सहते तथा गुरुं राज्यस्य भारं वोढुं नाहमुत्सहे ॥ ३ ॥

वारिवेगेन महता भिन्नः सेतुरिव चरन् ।
दुर्बन्धनमिदं मन्ये राज्यच्छिद्रमसंवृतम् ॥ ४ ॥
गतिं खर इवाश्वस्य हंसस्येव च वायसः ।
नान्वेतुमुत्सहे वीर ! तव मार्गमरिन्दम ! ॥ ५ ॥
यथा चारोपितो वृक्षो जातश्चान्तर्निवेशने ।
महानपि दुरारोहो महास्कन्धः प्रशाखवान् ॥ ६ ॥
शीर्य्येत पुष्पितो भूत्वा न फलानि प्रदर्शयन् ।
तस्य नानुभवेदर्थं यस्य हेतोः स रोपितः ॥ ७ ॥
एषोपमा महाबाहो ! त्वमर्थं वेत्तुमर्हसि ।
यद्यस्मान् मनुजेन्द्र ! त्वं भर्त्ता भृत्यान्न शाधि हि ॥ ८ ॥

नोत्सहे इत्यत्र हेतुमाह,—वारीति । महावारिवेगेन भिन्नः चरन् सेतुर्यथा दुर्निबन्धो बद्धुमशक्य एवमसंवृतमशक्यसंवरणं राज्यच्छिद्रचोरादिनिबन्धनं बद्धुमशक्यमित्येव मन्येऽहमिति शेषः ॥ ४ ॥

तव मार्गं रक्षणीयरक्षणचातुर्य्यम् ॥ ५ ॥

अन्तर्निवेशने गृहारामे कश्चित् वृक्ष आरोपितः स महत्त्वादिगुणाविशिष्टश्च जातस्ततः स पुष्पितो भूत्वा फलान्यदर्शयन् यदि विशीर्य्येत विशीर्णपुष्पो वा स्वल्पतो वा विशीर्णो वा भवति ततोऽस्य फलस्य हेतोर्येन रोपितः स तदा रोपणादिक्लेशस्यार्थं फलं नानुभवेदिति स यथा वृथाप्रयासः ॥ ६ । ७ ॥

एषोपमा तव हे महाबाहो । यदि त्वं भक्तान् भृत्यानस्मान्

जगदद्याभिषिक्तं त्वामनुपश्यतु राघव !।
प्रतपन्तमिवादित्यं मध्याह्ने दीप्ततेजसम् ॥ ९ ॥
तूर्य्यसङ्घातनिर्घोषैः काञ्चीनूपुरनिःस्वनैः।
मधुरैर्गीतशब्दैश्च प्रतिबुध्यस्व शेष्व च ॥ १० ॥
यावदावर्त्तते चक्रं यावती च वसुन्धरा।
तावत्त्वमिह लोकस्य स्वामित्वमनुवर्त्तय ॥ ११ ॥
भरतस्य वचः श्रुत्वा रामः परपुरञ्जयः।
तथेति प्रतिजग्राह निषसादासने शुभे॥ १२ ॥
ततः शत्रुघ्नवचनान्निपुणाः श्मश्रुवर्धनाः।
सुखहस्ताः सुशीघ्राश्च राघवं पर्य्यवारयन्। १३ ॥

शाधि तदेति शेषः। तमर्थं त्वं वेत्तुमर्हसि। अन्यापदेशवचनार्थमित्यर्थः। राज्ञा प्रजापालनार्थं महता यत्ननोत्पाद्य संवर्द्धितेन त्वया प्रजापालनं सम्पादनीयं तदकरणे तु तादृशवृक्षतुल्यस्त्वमिति भावः ॥ ८ ॥

यदेवमतो जगदद्येत्यादि ॥ ९ ॥

तूर्य्यघोषादिभीराजोपचारैः प्रतिबुद्धास्व शेष्वचेत्यर्थः ॥ १० ॥

चक्रं ज्योतिश्चक्रं यावदावर्त्तते। अनेन कालावधिरुच्यते। यावती च वसुन्धरेति देशावधिरुच्यते ॥ ११ ॥

प्रतिजग्राह। भरतस्य वच इति शेषः॥ १२ ॥

श्मश्रुवर्धनाश्छेदका नापिता इत्यर्थः। वर्धनं छेदनेऽथ वृद्धे आनन्दनसभाजन इत्यमरः ॥ १३ ॥

पूर्व्वन्तु भरते स्नाते लक्ष्मणे च महाबले।
सुग्रीवे वानरेन्द्रे च राक्षसेन्द्रे विभीषणे ॥ १४ ॥
विशोधितजटः स्नातश्चित्रमाल्यानुलेपनः।
महार्हवसनोपेतस्तस्थौ तत्र श्रिया ज्वलन् ॥ १५ ॥
प्रतिकर्म च रामस्य कारयामास वीर्य्यवान्।
लक्ष्मणस्य च लक्ष्मीवानिक्ष्वाकुकुलवर्धनः ॥ १६ ॥
प्रतिकर्म च सीतायाः सर्व्वा दशरथस्त्रियः।
आत्मनैव तदा चक्रुर्मनस्विन्यो मनोहरम् ॥ १७ ॥
ततो वानरपत्नीनां सर्व्वासामेव शोभनम्।
चकार यत्नात् कौसल्या प्रहृष्टा पुत्रवत्सला ॥ १८ ॥
ततः शत्रुघ्नवचनात् सुमन्त्रो नाम सारथिः।
योजयित्वाभिचक्राम रथं सर्व्वाङ्गशोभनम् ॥ १९ ॥
अग्न्यर्कामलसङ्काशं दिव्यं दृष्ट्वा रथं स्थितम्।
आरुरोह महाबाहू रामः परपुरञ्जयः ॥ २० ॥

पूर्वं त्विति। अत्र भरतलक्ष्मणयोः स्नानाद्यभिधानकाले शत्रुघ्नस्य तदनभिधानन्तु स्नानकारयितृत्वात्। उपलक्षणं वा ॥ १४ ॥ १५ ॥

इक्ष्वाकुकुलवर्धनः शत्रुघ्नः ॥ १६ ॥

प्रतिकर्मालङ्करणम् आत्मनैव। न सैरन्ध्रीहस्तेनेत्यर्थः ॥ १७ ॥

शोभनमलङ्करणम् ॥ १८ ॥

अभिचक्राम समीपमाजगाम ॥ १९ ॥ २० ॥

सुग्रीवो हनुमांश्चैव महेन्द्रसदृशद्युती ।
स्नातौ दिव्यनिभैर्वस्त्रैर्जग्मतुः शुभकुण्डलौ ॥ २१ ॥

सर्वाभरणजुष्टाश्च ययुस्ताः शुभकुण्डलाः ।
सुग्रीवपत्न्यः सीता च द्रष्टुं नगरमुत्सुकाः ॥ २२ ॥

अयोध्यायान्तु सचिवा राज्ञो दशरथस्य च ।
पुरोहितं पुरस्कृत्य मन्त्रयामासुरर्थवत् ॥ २३ ॥

अशोकविजयश्चैव सिद्धार्थश्च समाहिताः ।
मन्त्रयन् रामवृद्ध्यर्थं वृत्त्यर्थं नगरस्य च ॥ २४ ॥

सर्वमेवाभिषेकार्थं जयार्हस्य महात्मनः ।
कर्त्तुमर्हथ रामस्य यद्यन्मङ्गलपूर्वकम् ॥ २५ ॥

इति ते मन्त्रिणः सर्वे सन्दिश्य च पुरोहितः ।
नगरान्निर्ययुस्तूर्णं रामदर्शनबुद्धयः ॥ २६ ॥

दिव्यनिभैर्दिव्यकान्तिभिर्वस्त्रैर्युक्तौ जग्मतुः । रथस्थं राममनुजग्मतुरित्यर्थः ॥ २१ ॥ २२ ॥

अयोध्यायाञ्चेति । तस्मिन्नन्तरे इत्यादिः । पुरोहितं वसिष्ठम् । अर्थवत्प्रयोजनोत्तमवत् । रामाभिषेकोपयुक्तमशेषविचारञ्चक्रुरित्यर्थः ॥ २३ ॥

तदेवाह,—अशोक इत्यादि । अशोकादयो रामवृद्ध्यर्थं नगरस्य च वृत्त्यर्थं सङ्गताः । मन्त्रयन्नमन्त्रयन् ॥ २४ ॥

तदेवाह,— सर्वमेवेति । कर्त्तुमर्हथेति भृत्यान् प्रत्युक्तिः ॥ २५ ॥

हरियुक्तं सहस्राक्षो रथमिन्द्र इवानघः।
प्रययौ रथमास्थाय रामो नगरमुत्तमम्॥ २७॥
जग्राह भरतो रश्मीन् शत्रुघ्नश्छत्रमाददे।
लक्ष्मणो व्यजनं तस्य मूर्ध्नि संवीजयंस्तदा॥ २८॥
श्वेतञ्च वालव्यजनं जगृहे परितः स्थितः।
अपरं चन्द्रसङ्काशं राक्षसेन्द्रो विभीषणः॥ २९॥
ऋषिसङ्घैस्तदाकाशे देवैश्च समरुद्गणैः।
स्तूयमानस्य रामस्य शुश्रुवे मधुरध्वनिः॥ ३०॥
ततः शत्रुञ्जयं नाम कुञ्जरं पर्वतोपमम्।
आरुरोह महातेजाः सुग्रीवः प्लवगर्षभः॥ ३१॥
नवनागसहस्राणि ययुरास्थाय वानराः।
मानुषं विग्रहं कृत्वा सर्वाभरणभूषिताः॥ ३२॥
शङ्खशब्दप्रणादैश्च दुन्दुभीनाञ्च निःस्वनैः।
प्रययौ पुरुषव्याघ्रस्तां पुरीं हर्म्यमालिनीम्॥ ३३॥

मन्त्रिणः पुरोहितश्चैवं सन्दिश्य निर्ययुः॥ २६॥ २७॥
लक्ष्मणो व्यजनं तालवृन्तमयम्॥ २८॥
अपरं श्वेतं वालव्यजनं विभीषणो जगृहे॥ २९॥ ३०॥ ३१॥
नव न नागसहस्राणि। नवसहस्रसंख्याकगजानित्यर्थः॥ ३२॥
शङ्खशब्दप्रणादैः। शङ्खशब्दैर्जनानां हर्षप्रणादैश्चेत्यर्थः। तदुक्तं
पाद्मे। आगतो राघवो देवो कुम्भकर्णखरान्तकः। अतिक्रान्तेन्द्रजिच्छत्ता

ददृशुस्ते समायान्तं राघवं सपुरःसरम् ।
विराजमानं वपुषा रथेनातिरथं तदा ॥ ३४ ॥
ते वर्धयित्वा काकुत्स्थं रामेण प्रतिनन्दिताः ।
अनुजग्मुर्महात्मानं भ्रातृभिः परिवारितम् ॥ ३५ ॥
अमात्यैर्ब्राह्मणैश्चैव तथा प्रकृतिभिर्वृतः ।
श्रिया विरुरुचे रामो नक्षत्रैरिव चन्द्रमाः ॥ ३६ ॥
स पुरोगामिभिस्तूर्यैस्तालस्वस्तिकपाणिभिः ।
प्रव्याहरद्भिर्मुदितैर्मङ्गलानि वृतो ययौ ॥ ३७ ॥
अक्षतं जातरूपञ्च गावः कन्याः सहद्विजाः ।
नरा मोदकहस्ताश्च रामस्य पुरतो ययुः ॥ ३८ ॥
सख्यञ्च रामः सुग्रीवे प्रभावञ्चानिलात्मजे ।

महर्षिजनरक्षकः । समाप्तदेवताकार्यः सीतेशो लक्ष्मणानुजः । सत्यैकनिरतः शास्ता परदारसहोदरः । सुग्रीवराज्यदो भक्तो रावणानुजराज्यदः । शरणागतसन्त्राता धर्मस्थापनतत्परः । रामो दाशरथिः श्रीमान् भगवान् भरताग्रजः । शरण्यो राम इत्येवं शुश्रुवे काहलध्वनिरिति ॥ ३३ ॥

ते नागराः ॥ ३४ ॥

ते नागराः । वर्धयित्वा । आशीर्भिरिति शेषः ॥ ३५ ॥ ३६ ॥

तूर्यैस्तूर्यवादकैः । स्वस्तिकस्य तालवदेव करतलधार्यत्वम् । मङ्गलानि प्रव्याहरद्भिरित्यन्वयः ॥ ३७ ॥

वानराणाञ्च तत्कर्म व्याचचक्षेऽथ मन्त्रिणाम् ॥ ३९ ॥
श्रुत्वा च विस्मयं जग्मुरयोध्यापुरवासिनः ।
वानराणाञ्च तत्कर्म राक्षसानाञ्च तद्बलम् ॥ ४० ॥
द्युतिमानेतदाख्याय रामो वानरसंयुतः ।
हृष्टपुष्टजनाकीर्णामयोध्यां प्रविवेश सः ॥ ४१ ॥
ततो ह्यभ्युच्छ्रयन् पौराः पताकाश्च गृहे गृहे ।
ऐक्ष्वाकाध्युषितं रम्यमाससाद पितुर्गृहम् ॥ ४२ ॥
अथाब्रवीद्राजपुत्रो भरतं धर्मिणां वरम् ।
अर्थोपहितया वाचा मधुरं रघुनन्दनः ॥ ४३ ॥
पितुर्भवनमासाद्य प्रविश्य च महात्मनः ।
कौसल्याञ्च सुमित्राञ्च केकेयीमभिवादय ॥ ४४ ॥
तच्च मद्भवनं श्रेष्ठं साशोकवनिकं महत् ।
मुक्तावैदूर्यसङ्कीर्णं सुग्रीवाय निवेदय ॥ ४५ ॥
तस्य तद्वचनं श्रुत्वा भरतः सत्यविक्रमः ।

अक्षतादिकं मङ्गलार्थम् । जातरूपमक्षतम् । सम्पादितहरिद्रादि वर्णविशेषैर्मिश्रम्. । अक्षतादीनां पुरतो यानं तद्ग्राहिपुरुषद्वारा ॥ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥

अभ्युच्छ्रयन् अभ्युदग्रयन् ॥ ४२ ॥ ४३ ॥

पितुर्भवनमासाद्य तत्र महात्मनः सुग्रीवादीन् मुख्यान् प्रवेश्य

हस्ते गृहीत्वा सुग्रीवं प्रविवेश तमालयम् ॥ ४६ ॥
ततस्तैलप्रदीपांश्च पर्य्यङ्कास्तरणानि च।
गृहीत्वा विविशुः क्षिप्रं शत्रुघ्नेन प्रचोदिताः ॥ ४७ ॥
उवाच च महातेजाः सुग्रीवं राघवानुजः।
अभिषेकाय रामस्य दूतानाज्ञापय प्रभो ! ॥ ४८ ॥
सौवर्णान् वानरेन्द्राणां चतुर्णां चतुरो घटान्।
ददौ क्षिप्रं स सुग्रीवः सर्वरत्नविभूषितान् ॥ ४९ ॥
तथा प्रत्यूषसमये चतुर्णां सागराम्भसाम्।

कौशल्याद्या अभिवाद्य। वानरैरिति शेषः। इति भरतमब्रवीदिति सम्बन्धः। तत्र पूर्वं सुग्रीवादिप्रवेशबीजमुक्तं पाद्मे। स्वं श्रीमद्भवनं रामो भक्तपादाञ्जरेणुभिः। शुद्धीकर्त्तुमना राजा हनूमन्तमकल्मषम्। विभीषणञ्च सुग्रीवं गृहं प्रावेशयत्तदेति। आपाततस्तु कौशल्यादिप्रणामकरणं फलमिति भाति। आन्तरं मुख्यन्तु पाद्मोक्तं बोध्यम्। पूर्वन्तु रामेण एकान्त एव तद्वन्दनं कृतं न तु सर्वसमक्षमिति गम्यते॥ ॥ ४४ ॥ ४५ ॥ ४६ ॥

ततः शत्रुघ्नेन प्रचोदिता राजभवनरक्षका अभ्यन्तरप्रदेशप्रदर्शनार्थं तैलप्रदीपान् गृहीत्वा भरतसुग्रीवयोः पुरः प्रविविशुः ॥ ४७ ॥

उवाचेति। रामभवनप्रदर्शनानन्तरमिति शेषः। राघवानुजो भरतः ॥ ४८ ॥

चतुर्णां चतुःसागरगामिनां जाम्बवदादीनाम् ॥ ४९ ॥

पूर्णैर्घटैः प्रतीक्षध्वं तथा कुरुत वानराः ॥ ५० ॥
एवमुक्ता महात्मानो वानरा वारणोपमाः।
उत्पेतुर्गगनं शीघ्रं गरुडा इव शीघ्रगाः ॥ ५१ ॥
जाम्बवांश्च हनूमांश्च वेगदर्शी च वानरः।
ऋषभश्चैव कलशान् जलपूर्णानथानयन् ॥ ५२ ॥
नदीशतानां पञ्चानां जलं कुम्भैरुपाहरन्।
पूर्वात् समुद्रात् कलशं जलपूर्णमथानयत् ॥ ५३ ॥
सुषेणः सत्त्वसम्पन्नः सर्वरत्नविभूषितम्।
ऋषभो दक्षिणात्तूर्णं समुद्राज्जलमानयत् ॥ ५४ ॥
रक्तचन्दनकर्पूरैः संवृतं काञ्चनं घटम्।
गवयः पश्चिमात्तोयमाजहार महार्णवात् ॥ ५५ ॥
रत्नकुम्भेन महता शीतं मारुतविक्रमः।
उत्तराच्च जलं शीघ्रं गरुडानिलविक्रमः ॥ ५६ ॥

चतुर्णां सागराम्भसां तैः पूर्णैर्घटैः सहिताः प्रत्यूषसमये यथाऽस्मान् प्रतीक्षध्वं प्रतीक्षिष्यध्वं तथा कुरुतेति योजना ॥ ५० ॥ ५१ ॥

जाम्बवांश्चेति। अत्र चकारैः सुषेणगवयादिपञ्चशतवानरपरिग्रहः। तद्वक्ष्यति। नदीशतानां पञ्चानामिति। अतएव सुषेणगवययोः समुद्रजलाहर्तृत्वेन वक्ष्यमाणेन न विरोधः ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ॥ ५६ ॥

आजहार स धर्मात्मानिलः सर्वगुणान्वितः।
ततस्तैर्वानरश्रेष्ठैरानीतं प्रेक्ष्य तज्जलम् ॥ ५७ ॥
अभिषेकाय रामस्य शत्रुघ्नः सचिवैः सह।
पुरोहिताय श्रेष्ठाय सुहृद्भ्यश्च न्यवेदयत् ॥ ५८ ॥
ततः स प्रयतो वृद्धो वसिष्ठो ब्राह्मणैः सह।
रामं रत्नमये पीठे ससीतं संन्यवेशयत् ॥ ५९ ॥
वसिष्ठो विजयश्चैव जाबालिरथकाश्यपः।
कात्यायनो गौतमश्च वामदेवस्तथैव च ॥ ६० ॥
अभ्यषिञ्चन्नरव्याघ्रं प्रसन्नेन सुगन्धिना।
सलिलेन सहस्राक्षं वसवो वासवं यथा ॥ ६१ ॥
ऋत्विग्भिर्ब्राह्मणैः पूर्वं कन्याभिर्मन्त्रिभिस्तथा।
योधैश्चैवाभ्यषिञ्चंस्ते सम्प्रहृष्टैः सनैगमैः ॥ ६२ ॥

आनिलो हनूमान्। तत्प्रसिद्धं नदीतीर्थसागराणां जलम् ॥ ५७ ॥

श्रेष्ठाय पुरोहिताय वसिष्ठाय ॥ ५८ ॥

प्रयतः प्रयत्नवान्। रत्नमये पीठे रत्नसिंहासने। ससीतं सीतासहितम् ॥ ५९ ॥ ६० ॥

प्रसन्नेन निर्मलेन सकलवैदिकमन्त्रमन्त्रितत्वादतिपवित्रेण च सलिलेन नरव्याघ्रमभ्यषिञ्चन् ॥ ६१ ॥

ऋत्विग्भिरित्यादि। अत्र वसिष्ठादयः प्रयोजककर्तारः।

सर्वौषधिरसैश्चापि दैवतैर्नभसि स्थितैः।
चतुर्भिर्लोकपालैश्च सर्वैर्देवैश्च सङ्गतैः॥ ६३॥
ब्रह्मणा निर्मितं पूर्वं किरीटं रत्नशोभितम्।
अभिषिक्तः पुरा येन मनुस्तं दीप्ततेजसम्॥ ६४॥
तस्यान्ववाये राजानः क्रमाद्येनाभिषेचिताः।
सभायां हेमक्लृप्तायां शोभितायां महाधनैः॥ ६५॥
रत्नैर्नानाविधैश्चैव चित्रितायां सुशोभनैः।
नानारत्नमये पीठे कल्पयित्वा यथाविधि॥ ६६॥
किरीटेन ततः पश्चाद्वसिष्ठेन महात्मना।
ऋत्विग्भिर्भूषणैश्चैव समयोक्ष्यत राघवः॥ ६७॥
छत्रं तस्य च जग्राह शत्रुघ्नः पाण्डुरं शुभम्।

कन्याभिः षोड़शसंख्याभिः। अभ्यषिञ्चन् अभ्यषेचयन्। ते वसिष्ठादयः। नैगमा वणिजः॥ ६२॥

नभसि स्थितैः सर्वदेवसहितैर्लोकपालदैवतैः। सर्वौषधिरसैरभ्यषेचयन् वसिष्ठादयः॥ ६३॥

येन किरीटेन मनुरभिषिक्तो युक्तः॥ ६४॥

अन्ववायो वंशः। येन वसिष्ठेन। तद्वंशे राजान उच्यमानगुणायां सभायामभिषेचिताः॥ ६५॥

तस्यां सभायां पीठे दीप्ततेजसं रामं कल्पयित्वोपवेश्य यथाविध्यभिषिच्य॥ ६६॥

श्वेतञ्च वालव्यजनं सुग्रीवो वानरेश्वरः ॥ ६८ ॥

अपरं चन्द्रसङ्काशं राक्षसेन्द्रो विभीषणः।

मालां ज्वलन्तीं वपुषा काञ्चनीं शतपुष्करराम् ॥ ६९ ॥

राघवाय ददौ वायुर्वासवेन प्रचोदितः।

सर्वरत्नसमायुक्तं मणिभिश्च विभूषितम् ॥ ७० ॥

मुक्ताहारं नरेन्द्राय ददौ शक्रप्रचोदितः।

प्रजगुर्देवगन्धर्वा ननृतुश्चाप्सरोगणाः ॥ ७१ ॥

अभिषेके तदर्हस्य तदा रामस्य धीमतः।

भूमिः सस्यवती चैव फलवन्तश्च पादपाः ॥ ७२ ॥

गन्धवन्ति च पुष्पाणि बभूवू राघवोत्सवे।

सहस्रशतमश्वानां धेनूनाञ्च गवां तथा ॥ ७३ ॥

पश्चादभिषेकानन्तरं तेन किरीटेन तेन वसिष्ठेन राघवः समयो-च्यत संयुक्तः क्रतः। ऋत्विग्भिश्च भूषणैः संयुक्तः क्रतः। आर्षो लङ् ॥ ६७ ॥ ६८ ॥

शतपुष्करां शतपद्मनिर्मिताम् ॥ ६९ ॥ ७० ॥

शक्रप्रचोदित इति। वायुरित्यनुकृष्यते। वायुद्वारा दिव्यां स्वीयां काञ्चनमालां मुक्ताहारञ्च भगवान् महेन्द्रो ददावित्यर्थः ॥ ७१ ॥

तदर्हस्य देवगीतनृत्याद्यर्हस्य अभिषेके सतीत्यर्थः ॥ ७२ ॥

सहस्रशतं लक्षम्। धेनूनां गवाम्। नवप्रसूतगवामित्यर्थः। शतशब्दोऽनन्तवाची वा ॥ ७३ ॥

ददौ शतवृषान् पूर्वं द्विजेभ्यो मनुजर्षभः।
त्रिंशत्कोटिहिरण्यस्य ब्राह्मणेभ्यो ददौ पुनः॥ ७४॥
नानाभरणवस्त्राणि महार्हाणि च राघवः।
अर्करश्मिप्रतीकाशां काञ्चनीं मणिविग्रहाम्॥ ७५॥
सुग्रीवाय स्रजं दिव्यां प्रायच्छन् मनुजाधिपः।
वैदूर्य्यमयचित्रे च चन्द्ररश्मिविभूषिते॥ ७६॥
वालिपुत्राय धृतिमानङ्गदायाङ्गदे ददौ।
मणिप्रवरजुष्टन्तं मुक्ताहारमनुत्तमम्॥ ७७॥
सीतायै प्रददौ रामश्चन्द्ररश्मिसमप्रभम्।
अरजे वाससी दिव्ये शुभान्याभरणानि च॥ ७८॥
अवेक्षमाणा वैदेही प्रददौ वायुसूनवे।
अवमुच्यात्मनः कण्ठाद्धारं जनकनन्दिनी॥ ७९॥
अवैक्षत हरीन् सर्वान् भर्त्तारञ्च मुहुर्मुहुः।
तामिङ्गितज्ञः सम्प्रेक्ष्य बभाषे जनकात्मजाम्॥ ८०॥

एवं गवादिदानानि कृत्वा तदनन्तरं भूयस्त्वेन त्रिंशत्कोटी-हिरण्यं ददौ॥ ७४॥ ७५॥ ७६॥ ७७॥ ७८॥

अवेक्षमाणा तत्कृतमुपकारं चिन्तयन्ती प्रददौ प्रदातुमियेषेत्यर्थः। आत्मनः कण्ठाद्धारमवमुच्य दित्सया भर्त्रनुमतये भर्त्तारमवैक्षत॥ ७९॥ ८०॥

प्रदेहि सुभगे ! हारं यस्य तुष्टासि भामिनि ! ।
अथ सा वायुपुत्राय तं हारमसितेक्षणा ॥ ८१ ॥
तेजोधृतिर्यशोदाक्ष्यं सामर्थ्यं विनयोनयः ।
पौरुषं विक्रमो बुद्धिर्यस्मिन्नेतानि नित्यदा ॥ ८२ ॥
हनूमांस्तेन हारेण शुशुभे वानरर्षभः ।
चन्द्रांशुचयगौरेण श्वेताभ्रेण यथाचलः ॥ ८३ ॥
सर्वे वानरवृद्धाश्च ये चान्ये वानरोत्तमाः ।
वासोभिर्भूषणैश्चैव यथार्हं प्रतिपूजिताः ॥ ८४ ॥
विभीषणोऽथ सुग्रीवो हनूमान् जाम्बवांस्तथा ।
सर्वे वानरमुख्याश्च रामेणाक्लिष्टकर्मणा ॥ ८५ ॥
यथार्हं पूजिताः सर्वे कामै रत्नैश्च पुष्कलैः ।
प्रहृष्टमनसः सर्वे जग्मुरेव यथागतम् ॥ ८६ ॥
ततो द्विविदमैन्दाभ्यां नीलाय च परन्तपः ।
सर्वान् कामगुणान् वीक्ष्य प्रददौ वसुधाधिपः ॥ ८७ ॥
दृष्ट्वा सर्वे महात्मानस्ततस्ते वानरर्षभाः ।

अथ भर्त्रनुमत्यनन्तरम् । सा वायुपुत्राय ददाविति शेषः ॥ ८१ ॥ तत्र हेतुः । शौर्यादितेजआदि च । यत्र हनूमति । नित्यदा नित्यम् । आर्षोदाप्रत्ययः ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥

कामैः स्रक्चन्दनान्नपानाद्यैः ॥ ८६ ॥

विसृष्टाः पार्थिवेन्द्रेण किष्किन्धां समुपागमन् ॥ ८८ ॥
सुग्रीवो वानरश्रेष्ठो दृष्ट्वा रामाभिषेचनम् ।
पूजितश्चैव रामेण किष्किन्धां प्राविशत् पुरीम् ॥ ८९ ॥
विभीषणोऽपि धर्मात्मा सह तैर्नैर्ऋतर्षभैः ।
लब्ध्वा कुलधनं राजा लङ्कां प्रायान् महायशाः ॥ ९० ॥
स राज्यमखिलं शासन्निहतारिर्महायशाः ।
राघवः परमोदारः शशास परया मुदा ।
उवाच लक्ष्मणं रामो धर्मज्ञं धर्मवत्सलः ॥ ९१ ॥

आतिष्ठ धर्मज्ञ ! मया सहेमां
गां पूर्वराजाध्युषितां बलेन ।

वीक्ष्य मैन्दद्विविदनीलान् दृष्ट्वा तेभ्यः सर्वान् कामगुणान् अत्युत्तमान् रत्नादीन् ददौ ॥ ८७ ॥ ८८ ॥ ८९ ॥

लब्ध्वा कुलधनमिति । स्वकुलधनम् । लङ्काराज्यमित्यर्थः । यत्तु इक्ष्वाकुकुलदैवतं रङ्गं विमानमिति । तन्न । पाद्मे वतारसमाप्तिसमये तद्दानस्योक्तत्वात् । तथा च तत्र विभीषणं प्रति रामवचनम् । यावच्चन्द्रश्च सूर्य्यश्च यावत्तिष्ठति मेदिनी । तावद्रमस्व राज्यस्थः काले मम पदं व्रज । इत्युक्त्वा प्रददौ तस्मै स्वविश्लेषासहिष्णवे । श्रीरङ्गस्वामिनं स्वार्चामिक्ष्वाकुकुलदैवतम् । रङ्गं विमानमादाय लङ्कां प्रायाद्विभीषण इति ॥ ९० ॥

शासन् दुष्टनिग्रहं कुर्वन् शशास पालयामास ॥ ९१ ॥

तुल्यं यथा त्वं पितृभिः पुरस्तात्
तैर्यौवराज्ये धुरमुद्वहस्व ॥ ९२ ॥
सर्वात्मना पर्य्यनुनीयमानो
यदा न सौमित्रिरुपैति योगम् ।
नियुज्यमानो भुवि यौवराज्ये
ततोऽभ्यषिञ्चद्भरतं महात्मा ॥ ९३ ॥
पौण्डरिकाश्वमेधाभ्यां वाजिमेधेन चासकृत् ।
अन्यैश्च विविधैर्यज्ञैरयजत्पार्थिवात्मजः ॥ ९४ ॥

चतुरङ्गबलेन सह पूर्वराजाध्युषितामिमां गां मया सहातिष्ठ । पूर्वराजानो मन्वादयस्तैरध्युषितां पालिताम् । कीदृशमास्थानं मया भुवः कर्त्तव्यं भवता सहेत्यत्राह,—तुल्यमित्यादि । पुनस्तान् महाराज्याभिषेकात् पूर्वं पितृभिः स्वपितृभिस्तुल्यं यथा भवति तथा । तैर्य्यां यौवराज्ये धूर्धृता तां धुरमुद्वहस्व । आत्मना सह वनवासे दुःखानुभवाद्राज्ये सहसुखानुभवार्थं लक्ष्मणं प्रति यौवराज्यप्रार्थनेति भावः ॥ ९२ ॥

सर्वात्मना पर्य्यनुनीयमानः । ज्येष्ठे भरते विद्यमानेऽहं यौवराज्यानर्हं इति निषेधे क्रियमाणेऽपि पुनःपुनरनुनीयमान इत्यर्थः । नियुज्यमानोऽपि न्यायप्राप्तस्वीययौवराज्येन भरतेनानुनीयमानोऽपि योगं यौवराज्यसंसर्गं नोपैति नेच्छति स्म ततो भरतं यौवराज्येऽभ्यषेचयत् ॥ ९३ ॥

राज्यं दशसहस्राणि प्राप्य वर्षाणि राघवः।
दशाश्वमेधानाजह्रे सदश्वान् भूरिदक्षिणान् ॥ ९५ ॥
आजानुलम्बिबाहुः स महावक्षाः प्रतापवान्।
लक्ष्मणानुचरो रामः शशास पृथिवीमिमाम् ॥ ९६ ॥
राघवश्चापि धर्मात्मा प्राप्य राज्यमनुत्तमम्।
ईजे बहुविधैर्यज्ञैः ससुतभ्रातृबान्धवः ॥ ९७ ॥
न पर्य्यदेवन् विधवा न च व्यालकृतं भयम्।
न व्याधिजं भयञ्चासीद्रामे राज्यं प्रशासति ॥ ९८ ॥
निर्दस्युरभवल्लोको नानर्थं कश्चिदस्पृशत्।
न च स्म वृद्धा बालानां प्रेतकार्य्याणि कुर्वते ॥ ९९ ॥
सर्वं मुदितमेवासीत् सर्वो धर्मपरोऽभवत्।
राममेवानुपश्यन्तो नाभ्यहिंसन् परस्परम् ॥ १०० ॥
आसन् वर्षसहस्राणि तथा पुत्रसहस्रिणः।
निरामया विशोकाश्च रामे राज्यं प्रशासति ॥ १०१ ॥
नित्यमूला नित्यफलास्तरवस्तत्र पुष्पिताः।
कामवर्षी च पर्जन्यः सुखस्पर्शश्च मारुतः ॥ १०२ ॥

पौण्डरीकाश्वमेधेत्यादिरुत्तरकाण्डार्थसंक्षेपः। पौण्डरीकाश्वमेधाभ्यामिति सामान्यत उक्त्वा तत्रैव विशेषमाह,—वाजिमेधेन चासकृदिति । ९४ । ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ । १०० ॥

स्वकर्मसु प्रवर्त्तन्ते तुष्टाः स्वैरेव कर्मभिः ।
आसन् प्रजा धर्मपरा रामे शासति नानृताः ॥ १०३ ॥
सर्वे लक्षणसम्पन्नाः सर्वे धर्मपरायणाः ।
दशवर्षसहस्राणि रामो राज्यमकारयत ॥ १०४ ॥
धर्म्यं यशस्यमायुष्यं राज्ञाञ्च विजयावहम् ।
आदिकाव्यमिदञ्चार्षं पुरा वाल्मीकिना कृतम् ॥ १०५ ॥
यः शृणोति सदा लोके नरः पापात् प्रमुच्यते ।
पुत्रकामश्च पुत्रान् वै धनकामो धनानि च ॥ १०६ ॥
लभते मनुजो लोके श्रुत्वा रामाभिषेचनम् ।
महीं विजयते राजा रिपूंश्चाप्यधितिष्ठति ॥ १०७ ॥
राघवेण यथा माता सुमित्रा लक्ष्मणेन च ।
भरतेन च कैकेयी जीवपुत्रास्तथा स्त्रियः ॥ १०८ ॥
श्रुत्वा रामायणमिदं दीर्घमायुश्च विन्दति ।
रामस्य विजयञ्चेमं सर्वमक्लिष्टकर्मणः ॥ १०९ ॥
शृणोति य इदं काव्यं पुरा वाल्मीकिना कृतम् ।

वर्षसहस्राणि आसन् जना इति शेषः ॥ १०१ ॥ १०२ ॥ १०३ ॥ ॥ १०४ ॥

आर्षं ऋषिर्वेदस्तत्सम्बन्धि । वेदोपबृंहणमिति यावत् । पुरा पुरातनम् ॥ १०५ ॥ १०६ ॥

श्रद्दधानो जितक्रोधो दुर्गाण्यतितरत्यसौ ॥ ११० ॥
समागम्य प्रवासान्ते रमन्ते सह बान्धवैः ।
शृण्वन्ति य इदं काव्यं पुरा वाल्मीकिना कृतम् ॥ १११ ॥
ते प्रार्थितान् वरान् सर्वान् प्राप्नुवन्तीह राघवात् ।
श्रवणेन सुराः सर्वे प्रीयन्ते सम्प्रशृण्वताम् ॥ ११२ ॥
विनायकाश्च शाम्यन्ति गृहे तिष्ठति यस्य वै ।
विजयेत महीं राजा प्रवासी स्वस्तिमान् भवेत् ॥ ११३ ॥
स्त्रियो रजस्वलाः श्रुत्वा पुत्रान् सूयुरनुत्तमान् ।
पूजयंश्च पठंश्चैनमितिहासं पुरातनम् ॥ ११४ ॥
सर्वपापैः प्रमुच्येत दीर्घमायुरवाप्नुयात् ।
प्रणम्य शिरसा नित्यं श्रोतव्यं क्षत्रियैर्द्विजात् ॥ ११५ ॥
ऐश्वर्यं पुत्रलाभश्च भविष्यति न संशयः ।
रामायणमिदं कृत्स्नं शृण्वतः पठतः सदा ॥ ११६ ॥

रामाभिषेचनम् । तदवधिकमित्यर्थः । रिपूनधितिष्ठति । तान् विजयते इत्यर्थः ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥ १११ ॥

संप्रशृण्वतामिति पाठः ॥ ११२ ॥

विनायकाः विघ्नकारिणो देवगणविशेषाः ॥ ११३ ॥

स्त्रियो रजस्वलाः शुद्धस्नानानन्तरं षोड़शदिनावधि ॥ ११४ ॥ ॥ ११५ ॥

गीयते सततं रामः स हि विष्णुः सनातनः।
आदिदेवो महाबाहुर्हरिर्नारायणः प्रभुः ॥ ११७ ॥
एवमेतत् पुरा वृत्तमाख्यानं भद्रमस्तु वः।
प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्द्धताम् ॥ ११८ ॥
देवाश्च सर्वे तुष्यन्ति ग्रहणात् श्रवणात्तथा।
रामायणस्य श्रवणे तृप्यन्ति पितरः सदा ॥ ११९ ॥
भक्त्या रामस्य ये चेमां संहितामृषिणा कृताम्।
ये लिखन्तीह च नरास्तेषां वासस्त्रिविष्टपे ॥ १२० ॥

कुटुम्बवृद्धिं धनधान्यवृद्धिं
स्त्रियश्च मुख्याः सुखमुत्तमञ्च।
श्रुत्वा शुभं काव्यमिदं महार्थं
प्राप्नोति सर्वां भुवि चार्थसिद्धिम् ॥ १२१ ॥
आयुष्यमारोग्यकरं यशस्यं
सौभ्रात्रकं बुद्धिकरं शुभञ्च।

सदेत्यनेन कालत्रयेऽपीत्यर्थः ॥ ११६ ॥ ११७ ॥ ११८ ॥ ११९ ॥

ये ऋषिणा कृतां रामस्य संहिताम्। रामायणमित्यर्थः। लिखन्ति च चात् पूरयन्ति। त्रिविष्टपे ब्रह्मलोके पूरयन् रामायणं भक्त्यावः पादं पदमेव वा। स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदेति वच-

श्रोतव्यमेतन्नियमेन सद्भि-

राख्यानमोजस्करमृद्धिकामैः॥ १२२॥

इत्यार्षे रामायणे वाल्मीकीये युद्धकाण्डे

त्रिंशोत्तरशततमः सर्गः॥ १३०॥

भात्। अत्र फलश्रुतिश्लोकाः कतकव्याख्याने नोपलभ्यन्ते॥ १२०॥

॥ १२१॥ १२२॥

इति रामाभिरामे श्रीरामीये रामायणतिलके युद्ध-

काण्डे त्रिंशोत्तरशततमः सर्गः॥ १३०॥

इति युद्धकाण्डं समाप्तम्